

पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

*PANDIT JIBANANDA VIDYASAGARA, B A.*

*Superintendent Free Sanskrit College, Calcutta*

# सरस्वतीकण्ठाभरणम्।

## प्रथमः परिच्छेदः।

ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम्।
यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे॥ १॥

---

ग्रन्थारम्भे समुचितेष्टदेवतानमस्कारेण शिष्टाचारमनुवर्त्तते। ध्वनिरिति। वाचामधिष्ठात्री देवी द्योतमाना स्वप्रकाशशब्दब्रह्मरूपा भारती। कथमुपास्यते। सूक्ष्मादिभेदेन ध्वन्यादिभेदेन च विवक्षितो नमस्कारं शब्दब्रह्मणश्चतस्रोभिदा भवन्ति। सूक्ष्मा पश्यन्ती मध्यमा वैखरी चेति। तत्राऽविकारदशा सूक्ष्मा। साहि सर्वस्य प्राणापानान्तरालवर्त्तिनी विगतप्रादुर्भावतिरोभावा सम्यक्प्रयोगपरिशीलनात्मना कर्मयोगेन मननादिना ज्ञानयोगेन च सम्यगधिगम्यते। सेयमाकीर्य्यमाणाऽपि नित्यमागन्तुकैर्मलै। अन्त्या कला हि सोमस्य नात्यन्तमभिभूयते। तस्या विज्ञातमात्रायामधिकारो निवर्त्तते। पुरुषे षोडशकले तामाहुरमृतां कलामिति। तस्य ब्रह्मणोऽनाद्यविद्यावशादाद्यं परिणामः पश्यन्तीरूपो जायते सहि वर्णाविभागादक्रमः स्वयप्रकाशश्च। पूर्वापरे स्वावस्थे पश्यतीति पश्यन्तीत्युच्यते। ततः परमविद्योपादानादन्तःसङ्कल्परूपक्रमवान् श्रोत्रग्राह्यवर्णाभिव्यक्तिरहितस्तृतीयं परिणामो मध्यमारूपो जायते। सा किल द्वयोः परिणामयोर्मध्ये सदा तिष्ठतीति मध्यमेत्युच्यते। अनन्तर दूरप्रसृतायामविद्याया स्थानकरणप्रयत्नव्यज्यमानश्रोत्रसंवादिवीणादुन्दुभिनादपरिचयगद्गदाव्यक्ताकारादिवर्णसमुदायात्मकस्तृतीयं परिणामो वैखरीरूपो जायते। विशिष्ट खमाकाशं राति प्रयच्छतीति विखरो देहेन्द्रियसङ्घातः। तथाच श्रुतिः। "नहवै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत इति" तत्र भवा वैखरीति। तदेतासामवस्थानामाद्यास्तिस्रो नित्या अतीन्द्रियाः। तदुक्तम्। स्थानेषु विहते वायौ कृतवर्णपरिग्रहा। वैखरी वाक्प्रयोक्तृणां प्राणवृत्तिनिबन्धना। केवलं बुद्ध्युपादानक्रमरूपाऽनुपातिनी॥ प्राणवृत्तिमतिक्रम्य

निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिं च विन्दति ॥२॥

---

मध्यमा वाक् प्रवर्त्तते । अविभागात्तु पश्यन्ती सर्वतः सङ्घतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा सा चानपायिनीति" श्रुतिरप्याह । "चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहात्रीणिनिहितानेङ्गयन्तितुरीयं वाचो मनुष्या वदन्ति" इत्यादिकमागमसमुच्चयादेवावसेयम् । का पुनस्ता वाचो यासामियमधिष्ठावीत्यत उक्तम् । ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् । यस्या इति । आस्पदमधिष्ठानमवच्छेदः । ध्वन्यादिभिरवच्छिन्ना परा वाक् तद्व्यवहारहेतु । साहित्यप्रसिद्धाभिधानध्वननलक्षणव्यवहारकारित्वमेकस्मिन् वर्णे न निरूप्यते इति बहुवचनम् । पदवाक्ययोरस्ति प्रत्येकमपि तथाभाव इति ताभ्यामेकवचनमुपात्तम् । तदयमत्र तात्पर्यसङ्क्षेपः । साहित्यस्वरूपनिरूपणाय किलैष ग्रन्थारम्भः । साहित्यं च शब्दार्थयोः सम्बन्धः । तत्र शब्द एव क इत्यपेक्षायामयं विभागोध्वनिरित्यादिः । अर्थस्तु स्तम्भकुम्भादिलक्षणो लोके शास्त्रे च प्रसिद्ध. । सम्बन्धः कश्चिदनादिः । सर्वस्यायमानस्तु सम्बन्धो नान्यत्रेत्यस्मिन् नायतते । स चतुर्विधः । दोषहान गुणोपादानमलङ्कारयोगो रसाभियोगश्चेति ॥ १ ॥

प्रेक्षावत्प्रवृत्त्यङ्गसम्बन्धप्रयोजने दर्शयति निर्दोषमिति । प्रीतिं सम्पूर्णं काव्यार्थस्वादसमुत्थ आनन्दः काव्यार्थभावनादशायां कवेरपि सामाजिकत्वाङ्गीकारात् । सहृदयश्लाघया वा प्रीतिस्तदृष्टं प्रयोजनम् । कीर्त्तिरदृष्टद्वारा स्वर्गफलेत्यदृष्टम् । यदाह कीर्त्तिं स्वर्गफलामाहुरिति । अङ्गिनः काव्यस्य प्रयोजनाभिधानेनाङ्गभूतस्यास्य प्रयोजनसम्बन्ध उक्तः । यद्यपि काव्यशब्दो दोषाभावादिविशिष्टाविव शब्दार्थौ ब्रूते तथापि लक्षणया शब्दार्थमात्रे प्रयुक्तः । लक्षणाप्रयोजनं चाभिधेयानामुद्देशः । त्रिधाहि शास्त्रशरीरम् । उद्देशो लक्षणं परीक्षा चेति । उदाहरणव्याख्याग्रन्थः सर्वत्र परीक्षापर इत्यस्मद्गुरवः । प्रयोजनाभिसम्बन्धपरादेवोद्देशो लभ्यते इति न विरोधः । अतएव दोषाद्युद्देशक्रमेण परिच्छेदाः । निर्दोष दोषात्यन्ताभाववत् । अवयवैकदेशवर्त्तिना श्वित्रेणेव कामिनीशरीरस्य वर्णमात्रगतेनापि दोषेण काव्यवैरस्यनियमात् । अतएवामङ्गलप्रायाणामपि दोषाणां प्रथममुपादानम् । अयमेव हि प्राचः कवेर्व्यापारो यद्दोषहान नाम । गुणवदिति । भूम्निप्रशंसायां वा मतुप् । अलङ्कृतमित्येव वक्तव्ये अलङ्कारैरिति प्रसिद्धालङ्कारपरिग्रहार्थम् । तथालङ्कारैरित्येव वाच्ये प्रसिद्धानामपि वक्ष्यमाणानामेवोपादानार्थमलङ्कृतपदम् । रसान्वितं रसेन नित्यसम्बद्धम् । नास्त्येव तत्काव्यं यत्र

दोषाः पदानां वाक्यानां वाक्यार्थानां च षोडश ।
हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे ॥
असाधु चाप्रयुक्तं च कष्टं चानर्थकं च यत् ।
अन्यार्थकमपुष्टार्थमसमर्थं तथैव च ॥
अप्रतीतमथ क्लिष्टं गूढं नेयार्थमेव च ।
सन्दिग्धं च विरुद्धं च प्रोक्तं यच्चाऽप्रयोजकम् ॥
देश्यं ग्राम्यमिति स्पष्टाः दोषाः स्युः पदसंश्रयाः ॥ ३ ॥
अथैषां लक्षणं सम्यक् सोदाहरणमुच्यते ।
शब्दशास्त्रविरुद्धं यत् तदसाधु प्रचक्षते ॥

---

परम्परयापि विभावादिपर्य्यवसानं न भवतीति काश्मीरकाः। एतेन काव्यलक्षणमपि कटाक्षितम्। ईदृश काव्यं तत्कुर्वन् कविरिति कवेरपि लक्षणमिति ॥ २ ॥

अथोद्देशक्रमेण दोषाणां सामान्यलक्षणं विभागं चाह। दोषाः पदानामिति। हेया इत्यनेन सामान्यलक्षणम्। ये हेयास्ते दोषा इत्यभिप्रायात्। अभिमतप्रतीतिव्यवधायकतया विघ्नभूतः शश्वत्काव्ये हेयतामापादयति स एव दोषः। अयमेवार्थो मुख्यार्थहतिर्दोष इति पदेन अन्येषामभिमतः। स च पदवाक्यवाक्यार्थविषयतया पूर्वं त्रिविधः। पदपूर्वकत्वात् वाक्यस्य तत्पूर्वकत्वाद्वाक्यार्थस्य युक्तः क्रमः। वर्णमात्रदोषो नोल्लिखीत्युपेक्षितवान्। अवान्तरविभागे तु क्रियमाणे प्रत्येकं षोडशभिरुपाधिभिः सङ्कुलमित्याह। षोडशेति। काव्यप्रकाशकारादिभिरुक्तानामधिकानामिहान्तर्भावः। अनन्तर्भावे तु दोषत्वमेव नास्तीत्यभिप्रायो न तु देशीरागन्यायेन स्वमतप्रकाशनम्। प्रतीतिव्यवधायकाना सर्वदा तद्रूपत्वात्। उक्तमेवाभिसन्धाय तानेवादाविति विभागमन्तरेण विशेषलक्षणानवतारात् पददोषान् विभजते। असाध्विति। मुख्यार्थहतौ मिथोऽनपेक्षासूचनया समासः। अतएव लाघवेऽनादरः। कथं पदप्रतीकदोषा न गच्छन्त इति शङ्कामभिप्रेत्याह। स्पष्टा इति। पदसंश्रयाः पदान्वयव्यतिरेकानुविधायिनः ॥ एवं वाक्यादावपि गुणादावपीदमेवाश्रितत्वम् ॥ ३ ॥

विभागप्रयोजनमाह। अथैषां लक्षणमिति। परीक्षां प्रतिजानीते। सम्यगिति।

यथा । भूरिभारभराक्रान्त बाधति स्कन्ध एष ते ।
तथा न बाधते स्कन्धो यथा बाधति बाधते ॥

अत्र बाधतेरात्मनेपदित्वाद्बाधत इति स्यान्न पुनर्बाधतीति ।

कविभिर्न प्रयुक्तं यद् अप्रयुक्तं तदुच्यते ।

यथा । कामचीकमथाः कैमो त्वामजिह्वायकीयिषन् ।
ससस्ति किं वचन्तीमे शस्वः कस्वं घरिष्यति ॥

अत्राचीकमथा अजिह्वायकीयिषन् सस्तिवचन्ति घरिष्यति शस्वः कस्वमिति शब्दानुशासनसिद्धान्यपि कविभिर्न प्रयुज्यन्ते ॥ ४ ॥

---

लक्षणदोषशून्य लक्षणानुपपत्तिनिर्भञ्जनमेव हि परीक्षापदार्थः । कथमेतत् सम्पत्स्यत इत्यत आह । सोदाहरणमिति । शब्दस्वरूपलक्षणः प्रथमनिरस्योदोष इत्याशयेन प्रागुद्दिष्टस्यासाधोर्लक्षणमाह । शब्देति । शब्दाः शिष्यन्ते प्रकृतिप्रत्यय विभागपरिकल्पनया ज्ञाप्यन्ते येन तच्छब्दशास्त्रं त्रिमुनिव्याकरणं तेन विरुद्ध तदाम्नातप्रातिस्विकविशेषपरित्यक्तमतो न देशीयपदानामसाधुत्वम् । तथाच प्राच्यैर्नाथते कुचयुग पत्राहत मा कृथा इति अन्यकारकवैयर्थ्यमिति "सलीलपाणिद्वयलीलनालमानर्त्तिताताम्रदल दधन्तीमिति च तादृशमेवोदाहृतम् । अत्र केचिदाहुः । बाधतिधातुं संस्कारप्रच्यावनेन बाधते इति बाधतिबाधस्तस्य सम्बोधन बाधति बाधेति ते तव वचनमिति शेष इति । तदसत् । नेयार्थत्वप्रसङ्गात् । अन्येतु बाधतिर्बाधते यथेति पठन्ति । इद तत्वम् । विद्यमानस्याप्यर्थवत्त्वस्याविवक्षाया गवित्ययमाहेत्यादाविव प्रातिपदिकसञ्ज्ञा न प्रवर्त्तते । कविभिरिति । अस्ति हि किञ्चित् पद यत्राप्रयोज्यत्वेनैव हेयता । यदेव लोके प्रयुज्यमानस्य साधुतैव प्रसक्ता इत्यत उक्त कविभिरिति । काव्ये यस्य प्रयोज्यत्वमेव दुष्टत्वबीज तदित्यर्थः । तथाभूता च पदजातिरलङ्कारकारसमयादवसीयते । तथा-[ग] चैकेन पुन्देहृतशब्दोऽपरेण चीर्णशब्द उदाहृतः । एवमन्यदप्यप्रयुक्तमित्याशयवान्दिति । ~न्दाहरति । कामचीकमथा इति । उदाहरणत्वान्नैकोऽत्र श्लोको गवेष्यः । लङ्कारपरिग्रह प्रयोगस्तु त्याज्यः समयविरोधाभावादित्याराध्याः । अचीकमथा इति सेवोपादानार्थम् ~णिङ चङि द्विर्वचनसन्वद्भावदीर्घत्वह्रस्वत्वणिलोपेषु रूपम् । का:

पदं श्रुतेरसुखदं कष्टमित्यभिशब्दितम्।

यथा। वर्वर्ष्टि जलदो यत्र यत्र दर्दर्ष्टि चातकः॥

पोफुल्लतिनीपः कालोऽयं चर्कर्त्ति हृदयं मम।

अत्र वर्वर्ष्ट्यादीनि क्रियापदानि श्रुत्यसुखदानि श्रूयन्ते॥ ५॥

पादपूरणमात्रार्थमनर्थकमुदाहृतम्॥

यथा,—बिभर्त्ति यश्च देहार्द्धे प्रियामिन्दुं हि मूर्द्धनि।

---

नायिका कामितवानसीत्यर्थः। असौ च के त्वामात्मनोऽह्लायकमैषितुमिष्टवन्तः। ह्लायकशब्दात् क्यच्। ततः सन्। ततो लङि अनिह्लायकीयिषन्निति रूपम्। सः कश्चित् सस्ति। स्वपितिषसस्तिस्वप्ने इति धातोः रूपम्। कम्बः शम्बमिति। कंश शन्दौ जलवाचकौ ताभ्यां कशभ्यां वभयुस्तितुतय स इति मत्वर्थीयौ वप्रत्यय। तत्वादेन जलधरौ जलाशय सेत्स्यतीत्यर्थ.। शम्बः कम्बमिति क्वचित्पठ्यते। तत्र कल्याणवान् कपालिन सेत्स्यतीत्यर्थी बोद्धव्यः। घृसेचन इत्यस्य धातोर्घरिष्यतीति रूपम्। सङि धातुर्घृतष्टणाधर्मैभ्यो नान्यत्र युज्यत इति पूर्वाचार्य्याः। कविभिरित्यनेनासाधुशङ्का व्यावर्त्तितेत्याह। शब्दानुशासनसिद्धान्यपीति॥ ४॥

पदमित्यादि। दुर्वचकवर्णारब्धपद कष्टोच्चारणीयतया कष्टमुच्यते। श्रुतेरसुखदमिति। दूषकताबीजोद्घाटनम्। कदर्थिताहितेन श्रुतिशक्तिर्न तद्वाक्यप्रतीकपरासर्शनेति। काव्यप्रकाशकृता पदैकदेशः कष्ट उक्तः। यथा। तद्गच्छसिद्ध्यै। अपेक्षते प्रत्ययमङ्गलब्ध्यै इत्यत्र द्ध्यै ब्ध्यै इति तन्नाह। पदमिति। न हि समस्तवस्तुकटुत्व एव पद कष्टत्वमापादयति। कार्त्तार्थ्यमित्यादौ तदुदाहृते तदभावात्। एकदेशकष्टतया पदकष्टत्वमिति चात्रापि न दण्डवारितमिति भाव.। वर्वर्ष्टि। पुनः पुनर्वर्षति। वृषेर्यङ्लुगन्तस्य रूपम्। दर्दर्ष्टिपुनः पुनर्धृष्टो भवति। ञिधृषाप्रागल्भ्य इत्यस्य तत्रैव रूपम्। दर्द्रर्ष्टीतिपाठे दृशेर्यङ्लुक्यमागमे च रूपम्। पुनः पश्यति। नीपः कदम्बः। पोफुल्लति। फुल्लविकसन इत्यस्य तत्रैव रूपम्। एवम्भूतो वर्षासमयो मम विदूरकान्तस्य हृदय चर्कर्त्ति। पुनः पुनरतिशयेन वा छिनत्ति। कृतीछेदन इत्यस्य रूपम्। भूयसा कष्टपदाना समभिव्याहाराद्वाक्यदोष इति भ्रान्तिः स्यात्तदाह। क्रियापदानीति। कथमेवविभागोऽवसीयत इत्यत आह श्रूयन्त इति। श्रीत्रप्रत्यक्षेणैव पदमात्रगामितया कष्टत्वमनुभूयत इत्यर्थः॥ ५॥

स वै देवः खलु त्वान्तु पुनातु मदनान्तकः ॥

अत्र च हि वै खलु तु इत्येतानि पदानि पादानेव पूरयन्ति ॥ ६ ॥

रूढिच्युतं पदं यत्तु तदन्यार्थमिति श्रुतम् ।

यथा,—विभजन्ते न ये भूपमालभन्ते न ते श्रियम् ।

आवहन्ति न ते दुःखं प्रस्मरन्ति न ये प्रियाम् ॥

अत्र विभजतेर्वण्टने आलभतेर्मारणे आवहतेः करणे प्रस्मरतेर्विस्मरणे रूढिः । न तु विशेषसेवायामभितो लाभे समन्ताद्वहने प्रकृष्टस्मरणे चेति ।

---

पादपूरणेति द्योतनीयमर्थमन्तरेण प्रयुक्तमव्ययमनर्थकमभिमतमत एव प्राच्चै-श्चादिपदमव्ययमिति प्रयोगबीजकथनार्थं न हि निर्मूलः प्रयोग सम्भवति वृत्तनिर्वहणसमर्थः । प्रायेणाव्ययपदानि चिन्ना तत् पूरयति तदुक्तम् । कुकवि-प्रबन्ध इव श्लिष्टपदप्रचारः प्रकटतुहिनचयोजनाकीर्णश्चेति । चिभर्तीति । च समुच्चयादिषु चतुर्षु प्रसिद्धप्रयोगो न च तेषामन्यतमोऽप्यत सम्भवति । नाप्युच्चावचार्थग इति भाषणेनार्थान्तरमपि । एव हि प्रभृतिषु अवसेयम् । एते-नैतदपि अपास्तम् । यदाहुरेके । पदादिविशेषानुपादानात्पदैकदेशोऽप्यनर्थकोऽभि-मत । तथाच । श्चादावञ्जनपुञ्जलिप्तवपुषा श्वासानिलोल्लासितप्रोत्सर्पद्विरहा-नलेन च तत सन्तापितानां दृशाम् । सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतो भुवो भल्लीनामिव पानकर्म कुरुते काम कुरङ्गेक्षणा इत्यत्र दृशामिति बहुवचन-मनर्थक कुरङ्गेक्षणाया एकस्या एव उपादानात् । न चात्र व्यापारे दृक्शब्दो वर्त्तते । अञ्जनपुञ्जलिप्तादीनामनन्वयापत्तेः । तथा कुरुत इत्यात्मनेपदमनर्थकम-कर्त्रभिप्रायक्रियाफलादिति । अपि च । बहुत्वकर्त्रभिप्रायफलाभावे कथन दयो-रसाधुत्वमिति राजमार्ग एव भ्रम । न हि स्वरूपत एव किञ्चिदसाधु साधु वा सम्भवति ॥ ६ ॥

रूढिच्युतमिति । शक्तिमनपेक्ष्य प्रयुक्त रूढिच्युतम् । अतएव यदभि-सन्धाय प्रयुज्यते तेन कथञ्चन न तस्यास्यावर्थं इति अन्यार्थमिति नाम । एतदेव

यत्तु तुच्छाभिधेयं स्यादपुष्टार्थं तदुच्यते ॥

यथा,—शतार्द्धपञ्चांशभुजो द्वादशार्द्धार्द्धलोचनः ।
विंशत्यर्द्धार्द्धमूर्द्धा वः पुनातु मदनान्तकः ॥

अत्र दशबाहुस्त्रिलोचनः पञ्चवक्त्र इति तुच्छमेवाभिधेयम् अतुच्छशब्दैः उक्तमिति अपुष्टार्थम् ।

असङ्गतं पदं यत्तदसमर्थं तदुच्यते ।

यथा,—जलं जलधरे क्षारमयं वर्षति वारिधिः ।
इद हृहितमश्वाना ककुप्पानेष ह्रेषते ॥

---

धातुविशेषो वान्तरमुपसर्गविशेषयोगतो योगवानित्यादिनान्यैरुक्तम् । विभजन्त इति । भजिः सेवार्थो विरुपसर्गस्तद्गतविशेषद्योतकस्ततश्च यथा विद्योतत इति । अत्र विशिष्टधात्वनुरूपप्रयोगाभिधान तथात्वापि भविष्यतीति भसो वीजमत्र शब्दशक्तिस्वभावात् । क्वचिदुपसर्गोपसदानेन धातुरर्थान्तर एव वर्त्तते यदाहुः । उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवदिति तदाह । अत्र विभजतेरित्यादि । नन्वर्थापेक्षित्वे पदार्थदूषणमेवविधमिति वामन.। नैतत् । पदस्यैवान्वयव्यतिरेकवत्वात् । न ह्यन्वयस्यापराध कश्चित् । किन्तु शब्द एव हृत्तिस्खलितादिभिरपराध्यति । यदि चार्थापेक्षितमात्रेणार्थ-दोषत्व कथमसाधुप्रभृतीनामपि शब्ददूषणता । न हि तानि स्वरूपत एव तथाऽपि त्वयविशेषो विशेष एवाश्वगोश्वादिवदिति । अर्थदोषास्तु यथा भवन्ति तथा वक्ष्याम । यत्तु तुच्छाभिधेयमिति । स्तोकशब्दाभिलभ्येऽर्थे बहुतरशब्दबहुलमित्यर्थः । न हि तथा क्रियमाणमल्पीयसीमपि प्रकर्षता पुष्यति येन त्याज्य न स्यादित्य-पुष्टपदेन सूचितम् । शतस्यार्धं पञ्चाशत्तेषा पञ्चतमोऽशो दश । समासे पूरणप्रत्यय-लोप । असङ्गतमिति । कथ पुनरिदमन्यार्थाङ्क्रियते । अत्राराध्या । अन्यार्थे केवल योगाद्रूढिर्बलवती । असमर्थे तु केवलयोगाद्योगरूढि । तदपरे दूषयन्ति तथापि रूढिच्युति साधारण्येव तदवान्तर विशेषद्वयमन्यदिति । तन्न । भावनावबोधात् । किञ्चिदुपदमपवादकारणबलादवगम्यमानमपि योगमनपेक्ष्यैव क्वचिदर्थविशेषे वर्त्तते । यथा गौरिति । न हि गमनस्य वाक्यार्थे प्रवेशः सम्भवति । किञ्चित् पुनरसति बाधहेतौ बुध्यमानस्य त्यागायोगाद्योगविशिष्टमेवोपाधिमभिधत्ते ।

अत्र जलधरो मेघः, वारिधिः समुद्रः, बृंहितं गजानां, ह्रेषितमश्वानामिति लोकप्रसिद्धं तदिह समुद्रमेघाश्ववृषभविषयतया प्रयुज्यमानमसङ्गतार्थत्वादवाचकमित्यसमर्थम् ॥७॥

अप्रतीतं तदुद्दिष्टं प्रसिद्धं शास्त्र एव यत् ॥

यथा,—किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः ।
गुणनान्तरीयकं च प्रेमेति न तेऽस्त्युपालम्भः ॥

अत्र रूपस्कन्धनान्तरीयकशब्दयोः शास्त्र एव प्रसिद्धत्वादन्यत्राप्रतीयमानयोः प्रयोगादिदमप्रतीतम् ॥ ८ ॥

---

यथा पङ्कजमिति । तत्राद्य प्रकारे रूढिरेव सर्वस्वमिति तत्परित्यागे रूढिच्युतम् । द्वितीये तु योगमात्रे प्रयुक्तमसङ्गतं शक्तिशून्ये प्रयुक्त शक्त्यैकदेशे प्रयुक्तमिति भिन्नोऽर्थस्तदेतत्सर्वं व्याख्यानेन स्फुटयति । अत्र जलधरेति । जलधरादिपदानि जलधारणादिविशिष्टे मेघत्वादौ रूढाभिधानशक्तीनि कथमेतदवसितमिति चेत्तत्राह । लोकप्रसिद्धमिति । लोकाधीनावधारणत्वाच्छब्दार्थसम्बन्धस्येति भावः । ततश्च यद्विशिष्टस्य योगस्य शक्तिविषयतया न तेन सङ्केतः । यत्र च समुद्रादौ प्रयोगो न तदुपाधिभिः समुद्रत्वाद्यैः सम्भूय शक्त्यासङ्केतः । धारादिपदोपसन्दानेन च समुद्रादौ प्रयोग उन्नीयत इत्याह । तदिहेति । अतएव न तदवस्थस्य पद वाचकमतएव चाचमत्वादसमर्थमिति सञ्ज्ञयैव व्यवह्रियत इति सङ्क्षेपः ॥ ७ ॥

अप्रतीतमिति । शास्त्रमात्रप्रसिद्धं शास्त्रव्यवहारिभिः सङ्केतितमित्यर्थः । प्रतीताप्रतीतसमभिव्याहाररूपे हि वाक्यमशास्त्रज्ञविषये प्रयुक्तमभिमतार्थप्रतीति न जनयितुमीष्टे । तत्राप्रतीतानामेवापराधोऽतः परिस्खलनखेददायितया भवति दुष्टत्वम् । अतएवाप्रयुक्ताद्बहिर्भावः । किं भाषितेनेति । रूपस्कन्धवाचोयुक्ति सौगतसमयप्रसिद्धा । तेषां रूपं वेदनासंज्ञा संस्कारो विज्ञानमिति पञ्चस्कन्धाः । तत्रापि रूपस्कन्धपदार्थ एकादशपदार्थकः । पञ्चेन्द्रियाणि पञ्चविषया विज्ञप्तिरैकादशीति प्रक्रिया । अन्तरमिति विनार्थे गर्गादौ पठ्यते । तत्र भव इति छे स्वार्थिके च कनि नञ्समासे पृषोदरादित्वान्नलोपाभाव इति भाष्यटीका । प्रेमणो व्यापकागुणा न सन्तिमे न च व्यापकमन्तरेण व्याप्य भवतीति व्यापकानुपलब्धिप्रयुक्तत्वात् प्रेमाभावस्य तयोपालम्भं वाच्यता नास्तीति भावः । शास्त्र एवेत्यवधारणेन यद्व्यवच्छिन्नत्ते तदाह । अन्यत्रेति । लोक इत्यर्थः ॥ ८ ॥

दूरे यस्यार्थसंवित्तिः क्लिष्टं नेष्टं हि तत् मताम्।
यथा,—विजितात्मभवद्वेषि गुरुपादहतो जनः।
हिमापहामित्रधरैः व्याप्तं व्योमाऽभिनन्दति॥

अत्र विना गरुत्मता जित इन्द्रस्तस्यात्मभवोऽर्जुनस्तस्य द्वेषी कर्णस्तस्य गुरुः सूर्य्यस्तस्य पादैरभिहतो लोकः आकाशमभिनन्दति। कीदृश, हिमापहो वह्निः तस्यामित्रो जलं तद्धारयन्ति ये मेघास्तैर्व्याप्तमिति व्यवहितार्थप्रत्यय क्लिष्टमेतत्॥ ९॥

गूढार्थमप्रसिद्धार्थप्रयोगं ब्रुवते बुधाः।
यथा,—सहस्रगोरिवानीकं भवतो दुःसहं परैः।
हरेरिव तवाभान्ति नान्यतेजांसि तेजसि॥

अत्र सहस्रगुशब्देन सहस्राक्ष उक्तः। न च गोशब्दस्याक्षिण

---

दूर इति। दूर चिर विलम्ब इत्यनर्थान्तरम्। क्लिष्टोद्विविध। पदविषयो वाक्यविषयश्च। आद्य' सामान्यशब्दस्य प्रकारणादिकमनपेक्ष्य क्वचिदभिप्रेतविषये प्रयोग। तथा सति वाचकतायामपि झटिति प्रतिपत्तिर्न भवति। किन्तु परस्परान्वयपर्य्यालोचनया चिरेणेति विरसत्वम्। यदाह। नेष्ट हि ततप्रसितानामिति। अयमेवार्थो व्यवधानपदेन वामनादिभिरुक्त'। द्वितीयस्तु व्याकीर्णादिपदेनाऽन्यथा वक्ष्यते। विजितेति। विशब्देन पक्षिसामान्यवचनेन तद्विशेषो गरुडात्मा विवक्षित'। तज्जितोऽपि विशेष एव। एवमन्यत्रापि। न चाऽत्राऽपि किञ्चित् झटिति प्रतीत्यनुगुणं नियमकारणमस्तीति युक्तमेव व्यवधानम्। हिमापहो वह्निरिति। हन्तेर्डप्रत्यये रूपम्। तथाच चन्द्रगोमी डप्रकरणे हन्तेर्ड इत्येव सूत्रितवान्। हिमापहो वह्निरिति। क्विपि व्यभिचार दृष्ट्वा ब्रह्मभ्रूणेत्यादिसूत्रित चन्द्रगोमिना॥ ९॥

गूढार्थमिति। यस्य पदस्य द्वावर्थौ सिद्धश्चाप्रसिद्धश्च तच्चेदप्रसिद्धे प्रयुक्त तदा गूढार्थम्। अप्रसिद्धार्थप्रयोगमिति। अप्रसिद्धेऽर्थे प्रयोगो यस्येति गमकत्वाद् बहुव्रीहि। तव तेजसि नाऽन्यतेजांसि भान्तीति योजना। गौः शराऽक्षिपय.-

भूयसी प्रसिद्धिः। हरिशब्देन च सहस्रांशुः। सोऽपि न तेन नाम्ना बहुभिरुच्यते इति गूढत्वम् ॥ १० ॥

स्वसङ्केतप्रक्लृप्तार्थं नेयार्थमिति कथ्यते।

यथा,—सुखांशवन्तमास्थाय विमुक्तपशुपङ्क्तिना।

पङ्क्त्यनेकजनामभ्रतुका जित उलूकजित् ॥

अत्र पङ्क्तिशब्देन दशसंख्या अनेकजनामित्यनेन चक्रं लक्ष्य इत्यनेन रथः ताभ्यां दशरथः। तस्य तुक् बालको लक्ष्मणः तेन जितः उलूकजित् इन्द्रजित्। किं कृत्वा सुखांशवन्तमास्थाय हनूमन्तं किम्भूतेन विमुक्तपशुपङ्क्तिना विमुक्तेषुपङ्क्तिना। अत्र पशुशब्देन गोशब्दो लक्ष्यते तेन इषवः। तदिदं स्वसङ्केतकल्पितार्थं नेयार्थमुच्यते ॥ ११ ॥

---

स्वर्गपशुभेदवचःसु चेत्याम्नातोऽपि तथा नाऽक्षिण प्रयुज्यते यथा पशुभेदादावित्याह। न च गोशब्दस्येति। हरिः कृष्णे च सिंहे च भेकाऽर्कभुजगेषु चेति स्वसङ्केतितस्यापि हरिशब्दस्य न तथा रवौ प्रसिद्धिर्यथाऽन्यत्रेत्याह। सोऽपि नेति ॥ १० ॥

स्वसङ्केतेति। कल्पितार्थं नेयार्थमिति सूत्रयित्वा वामनेन व्याख्यातम्। अश्रौतस्यार्थस्य कल्पनाकल्पनाऽकल्पितार्थम्। अस्यार्थः। यत्पदं नानार्थस्वपर्य्यायलक्षणया विवक्षितप्रतीतिपर्य्यन्तं नीयते तत्कल्पितार्थमिति केचित्। तदयुक्तम्। स्वपर्य्यायेत्यस्य व्यर्थत्वादव्यापकत्वाच्च। तस्मात् प्रयोजनं विना लक्षणया प्रयुक्तमित्येवार्थः। यदाह काव्यप्रकाशकारः। नेयार्थं यत्नशक्तिस इति यच्चिन्निषिद्धं लाक्षणिकमिति। प्रयोजनं विना रूढ लक्षणापरिग्रहे न दोषः। तथाच द्विरेफरथाङ्गनामादिपदाना रेफद्वयानुगतभ्रमरादिशब्दलक्षणाद्वारेण षट्पदादौ वृत्तिर्वृद्धव्यवहारपरम्परानुपातिनीति तेषां प्रयोगोऽयुक्त एव। अतएव तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललासेत्यादिकमपि नेयार्थमिति काश्मीरकाः। तदेतत् स्वपदेन दर्शितवान्। सुखस्याशी हनुरनाभिमत.। पङ्क्तिरिति दशाक्षर छन्दः दशसंख्या लक्ष्यते। अनेकजनी दिनचक्रवाकस्य नामचक्र रथैकदेशस्तद्धारयतीति धारयतेर्मूलविभुजादि-

न यत् पदं निश्चयकृत् सन्दिग्धमिति तद्विदुः।
यथा,—नीलो लोहितमूर्त्तिर्यो दहत्यन्ते जगत्त्रयम्॥
स एष हि महादेवस्त्रिषु लोकेषु पूज्यते।
अत्र वह्निरर्कः शिवो वेति न निश्चीयते॥ १२॥

विरुद्धं विपरीतार्थप्रकल्पनमिहोच्यते।
यथा,—अनुत्तमानुभावस्य परैरपिहितौजसः॥
अकार्य्यसुहृदोऽस्माकमपूर्वास्तव कीर्त्तयः॥

अत्रानुत्तमा इत्यनेन यथोत्कृष्टस्तथापकृष्टोऽपि। अपिहितमित्यनेन यथा नाच्छादितं तथाच्छादितमपि। अकार्य्यसुहृदित्यनेन यथा कार्य्यमन्तरेण सुहृदेवमकार्य्ये यः सुहृत्

---

त्वात्कः। ताभ्यामिति। पङ्क्तिरनेकजनाम यस्येत्यर्थात्। तुक्तोक तोक्तमित्यपत्यनामानि। उपलक्षणतयैकदेश व्याचष्टे। अत्र पशुशब्देन गोशब्दो लक्ष्यत इति प्रकृतापेक्षया। तेनेषवः प्रत्याय्यन्त इति शेषः॥ ११॥

न यत्पदमिति। पदस्वरूपमेव सदिह्यमानमत्र। तथाहि। स एषहि महादेव इत्यत्र स किमेषहि महादेव इति छेदो विधीयताम् महादेव इति वा साधकबाधकप्रमाणाभावे सन्दिह्यते। न च विशेषणनियमहेतुः। वह्न्यर्कावपि हि भगवतो नीललोहितमूर्त्तिभूतौ हिमापहौ च न निश्चयकृदिति दूषणताबीजप्रदर्शनम्। यद्येको विवक्षितस्तदा दोषः। साधुचर इत्यत्रापि भूतपूर्वे चरडितिचरट्प्रत्यये किं पूर्वं साधुरथवा चरिष्टप्रत्यये साधुषु चरतीति पदमेव सन्दिह्यते तेन पदावयव सन्दिग्ध इति केनचिदुक्तं तदप्यपास्तम्॥ १२॥

विरुद्धमिति। विपरीत प्रकृतोपमर्दकमर्थकल्पनं यत्र। तथाहि। अनुत्तमेत्यादौ प्रकरणादिभिस्तुतिपरत्वे व्यवस्थिते उत्तमत्वाभावादिना विरुद्धेनार्थेन तत्र पर्यवसाययितुं न शक्यते। सशययुगपद्विवक्षायामपि न विरोधः। इह तु स्तुतिनिन्दयोर्यौगपद्यमसम्भावितमतएवैकस्य सम्भवे तु अपरस्य बाध एव। यथा। चिरकालपरिप्राप्तलोचनानन्ददायिनः। कान्ताकान्तस्य सहसा विदधाति गलग्रहमिति गलग्रहशब्दस्य कण्ठग्रहप्रतिद्वन्द्विन्यर्थे विवक्षिते पूर्वप्रक्रान्तानन्ददायित्वं बाध्यते। अत्रानुत्तम इति बहुव्रीहितत्पुरुषाभ्यामपिहितमिति वष्टिभागुरि-

सोऽप्युच्यते। अपूर्वाः कीर्त्तय इत्यनेन यथाद्भुताः कीर्त्तय एवमकीर्त्तयोऽप्युच्यन्ते ॥ १३ ॥

अप्रयोजकमित्याहुरविशेषविधायकम्।

यथा,—तमालश्यामलक्षारमत्यच्छमतिफेनिलम् ॥

फालेन लङ्घयामास हनूमानेष सागरम्।

अत्र तमालश्याममलमित्यादीनि सागरविशेषणानि लङ्घने न हनूमतोऽतिशयं सूचयन्ति ॥ १४ ॥

तद्देश्यमिति निर्दिष्टं यदव्युत्पत्तिमत्पदम्।

यथा,—गल्लौ लावण्यतल्लौ ते लडहौ मडहौ भुजौ।

नेत्रे वोसट्टकन्दोट्टमोट्टायितसखे सखि ॥

अत्र गल्लतल्लादयः शब्दा अव्युत्पत्तिमन्तो देश्या दृश्यन्ते ॥१५॥

---

रित्यादिना विकल्पेनाकारलोपविधानात्। अपूर्वा इति। पक्षान्तरेऽकारपूर्वा। नियामकसद्भावे तु गुण एव। यथा। अपूर्वं यद्वस्तु प्रथयति विना कारणकलामिति शब्दरूपान्तरमेव विरुद्धोपचायकमित्यन्वयव्यतिरेकाभ्यां शब्ददोषताव्यवस्थिति ॥ १३ ॥

अप्रयोजकमित्याहुरिति। तदेव हि कवीनामुपादेयं यद्वाक्यार्थे प्रकृष्टकाष्ठां पुष्णाति। अन्यथाऽनङ्गाभिधानेऽवाच्यवचनमेव स्यात्सार्थकत्वादनन्वयत्वाच्च। न वृत्तपूरणमात्रप्रयोजनता नातिशयमिति। सागरलङ्घनद्वारा हनूमतः प्रकर्षो वाच्यः। न च तमालश्यामलत्वादिविशेषणानि कथञ्चित् प्रकर्षमर्पयन्ति यानि दूरत्वादीनि तथा न तेषामुपादानम् ॥ १४ ॥

तद्देश्यमिति। अव्युत्पत्तिमत्। प्रकृतिप्रत्ययविभागशून्यं लोकमात्रप्रयुक्त पदमनादेयं भवति। तद्द्विविधम्। अभाग भागवच्चेति। आद्यं देश्यम्। द्वितीय ग्राम्यमिति विभाग। व्युत्पन्नानामन्यादृशीच्छाया देश्याना च न तादृशीति देश्यवेद्यपदसमभिव्याहारे प्रायेण इच्छाया वैरूप्य बन्धस्य भवतीति सहृदयहृदयसाक्षिक दोषवीजम्। तल्लमल्पसर लडह मनोहर मडह कृश वोसट्ट विकसित कन्दोट्ट नीलोत्पल मोट्टायित विलास. ॥ १५ ॥

अश्लीलामङ्गलघृणावदर्थं ग्राम्यमुच्यते ।
अत्राश्लीलमसभ्यार्थमसभ्यार्थान्तरञ्च यत् ॥
असभ्यस्मृतिहेतुश्च त्रिविधं परिपठ्यते ॥

तेषु असभ्यार्थं यथा,

छत्राकारशिराः शिरालसरलस्थूलप्रकाण्डो महान्
मध्ये भानुसुताभ्रसिन्धुविपुलाभोगो वटः पातु वः ।
कायैक्ये विकटप्रसारितमहाजङ्घं महीसुतयोः
यः खण्डेन्दुकिरीटकैटभजितोः काटश्रियं कर्षति ॥

तदेतच्छत्राकारशिराः काट इत्यादेरसभ्यार्थत्वादसभ्यार्थम् ॥ १६ ॥

असभ्यार्थान्तरम् । यथा,

विद्यामभ्यसतो रात्रावेति याभवतः प्रिया ।
वनिता गुह्यकेशानां कथ ते पेलवं धनम् ।

---

अश्लीलेति । देश्यातिरिक्तं लोकमात्रप्रयुक्तं ग्राम्यं तच्चिधा व्रीडाजुगुप्सातङ्कदायित्वात । तत्राद्यमश्लीलं श्रीर्यस्यास्ति तच्छ्रील सिध्मादेराकृतिगणत्वाल्लच् । कपिलकादिपाठाल्लत्वं नश्लीलमश्लील व्रीडादायित्वेनाकान्तमित्यर्थः । द्वितीय घृणावदर्थकम् । जुगुप्सादायिप्रत्याय्यमस्येति । तृतीयममङ्गलार्थमातङ्कदायिज्ञाप्यमस्येति कृत्वाऽश्लीलपर्य्यायोऽसभ्यशब्दः । सभाया साधुरित्यर्थे तेनापि शास्त्रे व्यवहार इति प्रदर्शनार्थमसत्यशब्देनाश्लीलमनूद्य व्याचष्टे । तत्रासभ्यमिति । अर्थस्यासभ्यत्वात्पदमप्यसभ्यम् । स चार्थ क्वचित् प्रकृतोऽप्रकृतोऽपि श्लेषोपस्थित एकदेशात् स्मृतिमात्रारूढो वा । तत्र यथाक्रममसभ्यादयस्त्रयः । एवममङ्गलादयोऽपि । सूर्य्यसुता यमुना । अभ्रसिन्धुर्गङ्गा । तयोर्मध्ये पारेमध्येषष्ठ्यावेति अव्ययीभावः । अर्द्धं हरेरर्द्धं हरस्येति शरीरैक्ये । काटशब्दस्यासभ्यार्थत्वे तद्विशेषणानामप्यसभ्यत्वमिति तान्यादाय व्याचष्टे । अत्रच्छत्राकारेति ॥ १६ ॥

विद्यामिति । या रात्रौ विद्यामभ्यसतो मन्त्रमावर्त्तयतस्तव प्रिया समायाति सा यक्षिणी । अतः कथं ते धनं पेलवं कोमलं स्वल्पमिति यावत् । किं तु

तदेतद् याभवतः प्रिया वनिता गुह्यकेशानां पेलवं धम्मशब्दानामसभ्यार्थान्तरत्वादसभ्यार्थान्तरम्॥ १७॥

असभ्यस्मृतिहेतुर्यथा,

> उत्कम्पयसि मां चूत पिकवाक् काटवेन किम्।
> क्षतः ककाटिकायां ते पादः प्राणेन यास्यता॥

तदिदं काटवककाटिकापदयोरसभ्यस्मृतिहेतुत्वादसभ्यस्मृतिहेतुता।

> लोकेषु यदशस्तार्थमशस्तार्थान्तरञ्च यत्।
> अशस्तस्मृतिहेतुश्चामङ्गलार्थं त्रिधैव तत्॥ १८॥

तेषु अशस्तार्थं यथा।

> खेटके भक्तसूपस्य वलभ्याः पत्तनस्य च।
> अतृप्तोऽहं मरिष्यामि हे हले भाषितस्य च॥

अत्र मरिष्यामीति पदमशस्तार्थम्॥ १९॥

---

र्यक्षिणीप्रसादाद्बहुधनं तवोचितमित्यर्थः। प्रकृतपदानि तु असभ्यर्थान्तराणि तान्युद्धृत्य व्याचष्टे। तदेतत् या भवत प्रियेति। असभ्यार्थप्रकाशनमेव षष्ठ्या आक्रोश इत्यर्थः। किं याभवतः प्रियेति। एकं पदं याभो मैथुनं तद्वतः प्रियेत्यर्थात्। योनिर्वनितायाः गुह्यस्तस्य केशाः। पेलशब्दोमुष्कयो प्रसिद्धः। तत्र वन्धनमिति॥ १७॥

उत्कम्पयसीति। हे चूतवृक्ष कोकिलस्य वाचा कटुत्वेन दुःखदायित्वात् किं मां भापयसि। ननु तव ककाटिकाया ग्रीवायां पादं दत्त्वा चलिता मम प्राणास्तेन मया जितम्। व्यर्थस्तवायं परिश्रम इति वाक्यार्थो विवक्षितः। काटवशब्दे काट एकदेशः ककाटिकाशब्दे काटिकेति लोपः। काट काटिका॥१८॥

खेटक इति। अतृप्तः सुखस्य इयत्तापरिच्छेदाभावात् खेटके ग्रामे यद्भक्तसूपश्चोत्पद्यते तस्य पत्तनस्य नगरस्य या वलभी तस्या सुहितार्थयोगे षष्ठी निषेधाल्लिङ्गादनुमीयते तृप्त्यर्थयोगे षष्ठी भवति। अन्ये तु व्याचक्षते। भक्तसूपपद-

अशस्तार्थान्तरं यथा ।

प्रवासयति या कान्तं वसन्ते गृहसंस्थितम् ।
विना शपथदानेन पिशाची सा न चाङ्गना ॥

अत्र प्रवासयति संस्थितं विना शपथदानेन पिशाचीपदानामशस्तार्थान्तरत्वम् ॥ २० ॥

अशस्तस्मृतिहेतुर्यथा,

मारीचोऽयं मुनिर्यस्य कृत्याः कालान्तकालये ।
पत्न्यां संक्रन्दनादीनां सुतानामाप्तयेऽभवन् ॥

अत्र मारीच कृत्या कालान्तक संक्रन्दन पदानामशस्तार्थस्मृतिहेतुत्वम् ।

पदमर्थं घृणावन्तं यदाहार्थान्तरस्य यत् ।
घृणावत् स्मृतिहेतुर्यत् तद्घृणावदिह त्रिधा ॥

तेषु घृणावदर्थं यथा,

पर्दते रुदते स्तन्यं वमत्येष स्तनन्धयः ॥ २१ ॥

---

नाम्ना दक्षिणापथे विषयस्तत्सम्भनि खेटके वलभीनामकस्य चिद्विद्रूपाद्याधिष्ठानस्य तत्रैव पत्तनस्य हैहले स्त्रीणामव्याजमन्योन्यप्रेमातिशयगर्भस्य भाषितस्येति ॥ १९ ॥

प्रवासयतीति । शपथदानेन विना प्रवासयति । अन्यत्र प्रक्षिणोति गृह सम्यक् स्थित प्रिय साङ्गना न किन्तु पिशाचीवदनुचितकारिणीत्यर्थोऽभिमत । अन्यत्र प्रवासनमुच्चाटन सस्थान विनाश' विनाशस्य पन्यासस्य दानम् । पिशितमश्नातीति पिशाची । पृषोदरादित्वात् । तदेतद्व्याचष्टे । अत्र प्रवासयतीति ॥ २० ॥

मारीचोऽयमिति । मरीचेरपत्य मारीच काश्यपः सक्रन्दनादीन् इन्द्रादीन् द्वादशपुत्रान् आदित्यान् उत्पादितवान् । तत्र कालान्तकस्य भगवतो महादेवस्य आलये या. कृत्या. क्रियाः भगवदाराधनरूपास्तासा फलमित्यर्थः । मारीचशब्दे

मुहुरुल्कौति निष्ठीवत्याप्तगर्भा पुनर्बधूः ।

अत्र पर्दते हदते वमति निष्ठीवति इति शब्दानां घृणावदर्थत्वम् ॥ २२ ॥

घृणावदर्थान्तरं यथा ।

वाष्पक्लिन्नाविमौ गण्डौ विपूयापाण्डुरौ तव ।
प्रियोऽग्रे विष्ठितः पुष्टि स्मितवर्चोभिरर्चति ॥

अत्र क्लिन्न गण्ड विपूय विष्ठित वर्चः पदानां घृणावदर्थान्तरत्वम् ॥ २३ ॥

घृणावत् स्मृतिहेतुर्यथा ।

प्रत्यार्द्रयन्तो रूढानि मदनेषुव्रणानि नः ।
हृदयं क्लेदयन्त्येते पुरीषण्डमहाद्रुमाः ॥

अत्र रूढव्रणपुरीषण्डपदानां घृणावत्स्मृतिहेतुत्वम् ॥२४॥

---

मारकदेशः कत्या इति सुबन्तपदे कत्येत्येकदेश कालान्तकालय इत्यत्र अन्तकेति सक्रन्दने शब्दः क्रन्दनेति ॥ २१ ॥

उल्कौति । उल्कार करोति । निष्ठीवति थूत्करोति । आप्तगर्भा पुनर्बधूरिति । बालस्य स्तन्यवमनादिनिदानसूचनम् । अतएव न गर्भिण्याः पिबेत् क्षीर पारगर्भिकक्षत्तु तदिति वैद्यकम् ॥ २२ ॥

वाष्पेति । विपूयो सुञ्ज. विशेषेण स्थितो विष्ठितः । स्मितवर्चो हास्यतेज । तव कपोलौ दृष्ट्वा पुरःस्थितस्तवप्रिय ईषद्धास्य' कुर्वन् कपोलयोर्हास्यज्योत्स्नया पूजा करोतीत्यर्थः । अन्यत्र वाष्पेणोष्मणा क्लिन्नो मृदूभूतः । गण्डो व्रणः । विशिष्ट पूयोविपूयस्तेन पाण्डुरः विष्ठितो विष्ठा सञ्जाता अस्य । वर्च' पुरीषम् । यत्स्मरणात् वाष्पादीना घृणावति वृत्तिस्तदेव पृथक्कृत्याह । अत्र क्लिन्नेति ॥ २३ ॥

प्रत्यार्द्रयन्त इति । अन्योन्यलग्नो वृक्षसमूह षण्ड' । रूढानीत्यनेन मदनेषु व्रणाना विशेषितत्वात् । मदनेषुभागमपहाय व्रणभागमात्रेण रूढव्रणस्मृतिर्भवन्ती पदादेवेति विवक्षितवान् । पुरीषण्डशब्दे पुरीषेत्येकदेश. ॥ २४ ॥

शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत्।
व्याकीर्णं वाक्यसङ्कीर्णमपदं वाक्यगर्भितम्॥
द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे।
भग्नच्छन्दोयती च द्वे अशरीरमरीतिमत्॥
वाक्यस्यैते महादोषाः षोडशैव प्रकीर्त्तिताः।
अथैषां लक्ष्म संक्षेपात् सनिदर्शनमुच्यते॥
उच्यते शब्दहीनं तद्वाक्यं यदपशब्दवत्।

यथा,—नीरन्ध्रं गमितवति क्षयं पृषत्कैः
भूतानामधिपतिना शिलाविताने।
गाण्डीवी कनकशिलानिभं भुजाभ्याम्
आजघ्ने विषमविलोचनस्य वक्षः॥

अत्र गमितवतीति क्तवतोः कर्मणि, आजघ्न इति आत्मने-

---

तदेव पददोषान् संचयित्वा क्रमप्राप्तवाक्यदोषा लक्षणीया इति तान् विभजते। शब्दहीनमिति। उक्तेनैव प्रयोजनेनासमासद्वन्द्वगर्भबहुव्रीहिसमासौ। एवं गुणादिविभागवाक्येष्वपि प्रयोजनमवसेयम्। भिन्नलिङ्गवचनेत्यादौ तु द्वन्द्व-लक्षणस्य समासस्य पूर्ववर्त्तिना भिन्नादिपदाना प्रत्येकमन्वयः। यमन यतिरिति भग्नच्छन्दो भग्नयतिरिति केचित। तथाच व्यतिकीर्णोऽर्थं स्यात्। अरीति-मदिति। रीतिरस्यास्तीति नित्ययोगे मतुप्। नित्ययोगप्रतिपादनं हि दूष-कताबीजोद्घाटनाय उपपद्यते। अतएव बहुव्रीहौ लाघवं तत्रनादरः। असाधु-वदसाधुमत्वस्य प्राथम्याल्लक्षणमाह। उच्यत इति। अपशब्दत्वं पद एव नियतं वाक्ये संस्कारप्रसक्तेरभावादपशब्दत्वं न वाक्यदूषणम्। तथाहि। कर्त्तरि-कृदिति नियमात्कर्मणि क्तवतुरसाधु। अकर्मकाच्चेत्यनुवृत्त्या आङो यमहन इत्यात्मनेपदमकर्मक एव प्राप्तं स्वाङ्गकर्मकाच्चेति वाक्यैकवाक्यतापर्य्यालोचनया अस्वाङ्गकर्मणि असाधु कथं वाक्यदूषणता। न हि वाक्यान्तःपातितामात्रेण सा युज्यतेऽतिप्रसङ्गादित्याशङ्क्योक्तम्। तौ च इति। न हि यथा वाष्टवातु परस्मैपदान्त इत्येवासाधुत्वं तथात्र पदान्तरसन्निधानापेक्षत्वेऽध्यवसीयते। भूता-

पदस्य अस्वाङ्गकर्मणि प्रयोगादपशब्दौ। तौ च शिलाविताननत्रच्चवच्चःसम्बन्धाद्वाक्यदोषौ जायमानौ असाधुनाम्नः पददोषाद्भिद्येते ॥ २५ ॥

क्रमभ्रष्टं भवेदार्थो शाब्दो वा यत्र न क्रमः ॥

यथा,—तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम्।
कान्तिप्रतापौ भवतः सूर्य्याचन्द्रमसोः समौ ॥

अत्र मातङ्गमथ तुरङ्गमिति वक्तव्ये तुरङ्गमथ मातङ्गमित्यार्थः, कान्तिप्रतापौ चोक्ता सूर्य्याचन्द्रमसोः समाविति शाब्दः क्रमभङ्गो लच्यते ॥ २६ ॥

विसंहितो विरूपो वा यस्य सन्धिर्विसन्धि तत् ॥

यथा,—मेघानिलेन अमुना एतस्मिन्नद्रिकानने।

---

नामधिपतिना शिलावितान इति यावन्नानुसन्धीयते तावद्द गमितवतीति किकार्त्तरिकर्मणि वेति सन्देहानिवृत्तिः। तथा गण्डीवी विषमविलोचनस्य वच्च इत्येतावत् प्रतीत्य कथमाजघ्न इति अस्वाङ्गकर्मणि आत्मनेपदमध्यवसानयोग्यमियमेव हि वाक्यदोषता यदनेकपदनिरूप्यता नाम बाधतीत्यत्रापि किं बाधशब्दात् क्विवन्तात्तिप्। उत बाधृधातुरिति सन्देह इति कुदृश्यम्। स्कन्धादिपदसन्निधानेऽपि तस्या निवृत्ति.। तेन त्वामनुनाथते कुचयुगमित्यादिकमत्रत्यमुदाहरण प्रमादात् काव्यप्रकाशकृता पददोषेषु लिखितम्। यथाच। उदपूतितः को न हीयत इति रुद्रटेन। तत्र हि अपादाने चाहीयरुहोरिति तसि प्रत्ययनिषेधः। स स पदान्तरसन्निधानेनैवेति स्वयमालोचनीयम्। शिलाविताननत्रच्चवच्च इत्युपलचणम्। अधिपतिगाण्डीविशब्दावपि बोद्धव्याविति ॥ २५ ॥

क्रमभ्रष्टमिति। अर्थादागतः क्रम आर्थ। शब्दादागत शाब्दः। अर्थक्रमभ्रंश कथ शब्ददूषणमत आह। इति वक्तव्य इति। मातङ्गो दीयतामथ तद्दानसामर्थ्यं नास्ति तदा तुरङ्ग इति वक्तव्ये रचनावैपरीत्यमात्रमत्रापराध्यति। नार्थ इति युक्ता शब्ददोषता ॥ २६ ॥

विसंहितमिति। विशब्दो विगम वैपरीत्य च द्योतयति। तेनार्थद्वय

मञ्जर्य्युद्गमगर्भासौ तर्वाल्युर्वीं विधूयते ॥

अत्र मेघानिलेन अमुना एतस्मिन्न संहितया विवक्षामीत्यभिसन्धानं विसन्धिः। मञ्जर्य्युद्गमगर्भासौ इत्यादौ तु विरूपसन्धानं विसन्धिः ॥ २७ ॥

पद पदार्थश्चाभिन्नौ यत्र तत् पुनरुक्तिमत्।

यथा,—उत्कामुन्मनयन्त्येते वालां तदलकत्विषः।

अम्भोधरास्तडिद्वन्तो गम्भीराः स्तनयित्नवः ॥

---

सम्पद्यते। पर सन्निकर्ष, संहिता। तया तत्कार्य्यं लक्ष्यते। सन्धान सन्धि'। अर्द्धमात्राकालव्यवधान तथा च संहिता कार्य्यशून्य सन्धान यत्रेत्यर्थ। संहितैकपदे नित्येतिसमयादन्यत्र विकल्पः। ततो नासाधावन्तर्भाव.। वैरूप्य द्विविधम्। दुर्वचकत्वमश्लीलत्व च। तत्राद्यमुपलक्षणतया उदाहृतम्। द्वितीय यथा उड्डीय गगने दूर चलन् डामरचेष्टित.। अयमुत्पतते पत्नी ततोऽत्रैव रुचि कुरु। ननु यदि सन्धिकार्य्यं वैकल्पिक कथमत्र दोष इत्यत आह। न संहितामिति। यदि संहिताप्रतिषेध स्यात्तदा सक्तद्विसन्धिकरणेन तथा वैरूप्य भवतीति कवेरपराधो न सम्भाव्यते यदितु प्रतिषेधो नास्ति असक्तदोपादान तदा व्यक्तवैरूप्यप्रतिभासात्कथ न दोष इत्यथ। न विवक्षामीत्युपलक्षणम्। विवक्षायामप्यसक्तत्प्रयोगो विरस एव। यथा। तत उदित उदारहावहारीति। विशेष वैशेषिके वक्ष्यामः ॥ २७ ॥

पद पदार्थश्चाभिन्न इति। पदमभिन्नतात्पर्य्याभिधेयमिति विशेषः। तेन तात्पर्य्यभेदे लाटानुप्रासोऽभिधेयभेदे यमकस्य न दोष'। पदार्थोऽभिन्नपर्य्यायशब्दोपात्त इति शेष। तेन पूर्वस्याविशेष स्वाभिधेयतात्पर्य्यकपदावृत्तिः पर्य्यायोपादान च द्वयमपि शब्दपुनरुक्तमिष्यते तथाच परमार्ष सूत्र "शब्दयो पुनर्वचन पुनरुक्तमन्यत्रानुवादादिति" ॥ युक्त चैतत्। एकस्याभिधेयस्य द्विरभिधान दोष। तत्राभिधान तेनैव पदेन पर्य्यायेण वा सम्भवतीति शब्दस्यादावेव तस्य व्यवस्था पुनरुक्तिरत्रैव पदे भवति तत्कोऽत्र मत्वर्थ इत्यत उक्तम्। यत्र तदिति। यत्र समुदायेऽवयव पुनरुक्तरूप. स मतुवर्थ.। अतएव नानापदनिरूपणीयतया वाक्यदूषणमिति स्फुटोऽर्थ'। विकल्पित चेद लक्षणमेकस्यैव दूषणधुरारोहणक्षमत्वात्। सक्षेपार्थं त्वेकमुदाहरणम्। अयमादावेव पुनरभिधान पुनरुक्तमिति

अत्र उल्काम् उन्मनयन्ति इति अर्थपुनरुक्तम्। गम्भीराः स्तनयित्नव इति शब्दपुनरुक्तम् ॥ २८ ॥

व्याकीर्णं तन्मिथो यस्मिन् विभक्तीनामसङ्गतिः।

यथा,—दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके।
मुखं वल्गुरवं कुर्वन् तुण्डेनाङ्गानि घट्टयन् ॥

अत्र कर्कशकण्टके दण्डेऽङ्गानि घट्टयन् हंसः पद्मिन्या मुखं चुम्बतीति वक्तव्ये यथानिर्दिष्टरूपे विघट्टितविभक्तिक-युक्तित्वाद् व्याकीर्णम् ॥ २९ ॥

वाक्यान्तरपदैर्मिश्रं सङ्कीर्णमिति तद्विदुः ॥

---

विभावयितुं लक्षणक्रमवैपरीत्येन प्रथममर्थपुनरुक्तमुदाहृतमित्याशयवान् व्याख्यानेऽपि तमेव क्रममाद्रियमाण आह। अत्रोल्कामिति उल्का उन्मना'। उन्मनयन्तीति। उन्मनसं कुर्वन्तीति णिचि इष्ठवद्भा वेटिलोपे च रूपम्। अम्भोधरा इति विशेष्यपदम्। शेषाणि विशेषणानि। गम्भीरा मांसला स्तनयित्नव शब्दायमाना। तडित्वन्तः प्रकृष्टतद्युक्ताः ॥ २८ ॥

व्याकीर्णं तदिति। पदानामक्लेशेऽप्यर्थप्रतीतिहेतुभूताकाङ्क्षावद्विभक्तिव्यवधानादनाकाङ्क्षितविभक्तिसन्निधानाच्च। नाहत्यपदानि विशिष्टार्थज्ञानजनन-समर्थानि भवन्ति विलक्षणलक्षणक्लेशपदानि भ्रमकराणीति वदतामाराध्यानामयमेवाभिप्रायो बोद्धव्यः। विभक्तिव्यवधानसावकाशतस्तु क्लेश प्रायेण पदैकवाक्यतायामुत्पद्यते। दण्ड इति। आधारविभक्तिराधेयविभक्तिमपेक्षते न तु चुम्बतीति क्रिया विभक्तिम्। सापि कारकविभक्तिमाकाङ्क्षति। पद्मिन्या इति सम्बन्धविभक्तिकमेव तत्र बोद्धव्यम्। क्लेशेन योऽत्रावगम्यते तमभिमतमर्थमावेदयति। अत्र कर्कशेति। अतएव नापार्थकत्वेन सङ्करः समुदायार्थस्य प्रतीयमानत्वात्। अस्ति कश्चिदुच्चारणयोर्विशेषो येन वाक्यार्थप्रतीतिः क्वचिदाहत्य भवति। क्वचित्तु नेति स एव विशेषः। सन्निधान व्यवधानमिति व्याख्यायते। कार्य्यदर्शनादर्शनाभ्यां चोन्नीयत इत्याशयवानाह। यथोक्तरूपेणेति ॥ २९ ॥

यथा,—काअं खाअइ खुहिओ कूरं फेल्लेइ णिब्भरं रुट्ठो।
सुणअं गेण्हइ कण्ठे हक्केइ अ णत्तिअ ठेरो॥

अत्र काकं क्षिपति क्रूरं खादति कण्ठे नप्तारं गृह्णाति श्वानं भीषयते इत्यादौ वक्तव्ये यथोक्तपदविन्यासः सङ्कीर्ण्यते॥ ३०॥

विभिन्नप्रकृतिस्थादि पदयुक्त्यपदं विदुः॥

यथा,—आउज्झिअ पिट्ठिअए जह कुक्कुलिणा ममज्झ भत्तालो।
पेक्खन्त हलाउत्तकलणिआ ह हा कस्स कन्देमि॥

---

वाक्यान्तरपदैर्मिश्रमिति। वाक्यैरसंवलितानि पदानि वाक्यान्तरमनुप्रविश्य तथा प्रतीति विघ्नयन्ति यथा समुदाय एव दूषितो भवति। क्रूर भक्त क्षुधितः खादति। काक च निर्भर रुष्ट सन् क्षिपति श्वान च निवारयति नप्तार च कण्ठे गृह्णाति स्थविरनाति'। आकाङ्क्षाक्रमेण किञ्चित्पद कस्यचिद्वाक्यस्य सम्बद्धमिति ज्ञायत एव तदाह। अत्र काक क्षिपतीति। शब्ददोषत्वं प्रकाशयति। इति वक्तव्य इति। यथोक्तपदविन्यास इत्यनेन सङ्कीर्ण्यत इत्यस्यार्थो विवक्षितः। एव प्रकारः सङ्कर इत्यर्थः। विजातीयसम्वलने लोके सङ्करव्यवहार'॥ ३०॥

विभिन्नेति। पीडा पद भवति। प्रकृतिस्थ कोमलं कठोरं ग्राम्य नागर सुपनागर च तत्रानेकदीर्घ स्वरकृतगौरवमेकसयोगकृतगौरवं पदं प्रकृतिस्थम्। यथा नीहारतारानीकाश्मसारसीत्यादि। हस्तपल्लवकङ्कणकर्पूरादि च। यथा च। पाडिव आमाणं सिणिवे आलगोलेत्यादि त्यज्भतुल्भ उत्ताविलविहत्यति भच्छेत्यादि च। एकस्वरकृतगौरव गुरुशून्य वा कोमलम्। करेणुतारकसरोजनिकरादि। मधुरमसृणमरसरसलेत्यादि च। यथा नीहारवाण इवाणवेणीत्यादि। परकुसलडहतलिणेत्यादि च सानुस्वारविसर्गदीर्घस्वरकृतगौरव सयोगबहुल वाक्कठोरम्। यथाशुद्ध पय' पाययाम्बभूव ताः पिव। आह्निषाताभित्यत्र। धक्काच्छ तत्रस्थ्यूढीरस्तप्रच्छन्नेत्यादि च। तथाच भाईइए इत्यादि उप्पिच्छउप्पुपएक्कमेक्कमित्यादि च प्रसिद्धमादाय ग्राम्यादि त्रय भवति। प्रसिद्धिस्त्रिधा। सार्वलौकिकी पण्डितजनगामिनी तदुपजीविविचतुरलौकिकगामिनी

तदेतत् प्रकृतिस्थकोमलकठोराणां नागरोपनागराणां ग्राम्याणां वा पदानामयुक्तेरपदम् ॥ २१ ॥

---

चेति। तत्र सर्वलोकप्रसिद्धं ग्राम्यम्। देशीपदानि सर्वाणि अपसंस्कृतेषु हसविवाहभगिनीहारकङ्कणादिकं तुम्भं अम्भहलिद्दासाइज्जादिकं च। एतदपभ्रंशसमानप्रसिद्धिकमतिप्रसिद्धं चेति गीयते। ग्राम्यवैपरीत्येन नातिप्रसिद्धं नागरं नगरेणोपमितमिति कृत्वा अतिप्रसिद्धाभावेनोपमा। इदमेव नात्यप्रसिद्धमुपनागरमित्युच्यते। यथा। आद्याश्वकिशोरखुरलीलातङ्केत्यादि। सुन्देवअच्छेव गुप्पन्तीविवत्ताआइत्यादि च। शृङ्गारप्रकाशे तु भाषाणामपि भेदो पदमित्युक्तम्। इह तु शब्दजात्यौचित्याविवेचनेन गतमिति ग्रन्थकर्तुराशयः। तदेवं स्थिते प्रतिपदं कवीना कोऽपि क्रमो निर्वाह्यो नलकद्मादिवालूनविशीर्णभावो विधेयः। तदिदमाह विभिन्नेत्यादि। युक्तिरुचिता योजना सा प्रकृतिस्थादीना विभिन्नाऽन्यथानीताऽयुक्तिरिति यावत्। एतद्वच्यत्ययुक्तेरिति। आउज्झिअ इति। आवर्ज्य केशेषु नमयित्वा। आउज्भिए इति पाठे निर्भर्त्स्य। पिट्टिअए ताड्यते। जह कुक्कूलि। यथा कुक्कुरी नाम शब्दः प्राकाश्ये प्रकाशमेव ताडितमित्यर्थः। मज्भ भत्तालो मम भर्तापेक्खन्तहला उलकणि आह। अनादरे षष्ठी। राजकुलनियुक्तान् प्रेक्षमाणान् अनादृत्येत्यर्थः। हा शब्द. खेदे। कस्य क्रन्दामि कस्य फूत्करोमीत्यर्थ। अत्र प्रथमे पादे आउज्भिय इत्युपनागरं प्रकृतिस्थं च। आउज्भीति पाठे ग्राम्यं प्रकृतिस्थं च। भत्ताल इत्यपि तथा तृतीयपादे पेक्खन्त हेति कठोरमुपनागरं च। राउलकलणि आहेति ग्राम्यं प्रकृतिस्थं च हति ग्राम्यं कोमलं च। कस्सेति प्रकृतिस्थमुपनागरं च। कन्देमीति ग्राम्यं प्रकृतिस्थं च तदिहैकरूप एवकर्मकरवधूलक्षणे ग्राम्ये वक्तरि एकरूप एववाक्यार्थे सर्वदोषतिरोधायकरसदीप्तप्रभावे च यथा भाषाणां व्यतिकरो दूषणं तथा ग्राम्यादीनामिति। सहृदयमात्रवेद्यश्चाय पन्था इत्यवहितैर्भवितव्यम्। एतेषां च स्वरूपं स्वयमेव गुणीभावप्रस्तावे लेशत. प्रकाशयिष्यति तेनेह सूचितवान्। नैवंविध. कदापि व्यतिकरो महाकविगिरामाजानिकः प्रवर्त्तते। तथाहि। त्यजती मङ्गलक्षौमे दधानस्य च वल्कले। ददृशुर्विस्मितास्तस्य मुखराग समं जनाः॥ अत्र प्रथमादिषु पादेषु क्षौमचीरविस्मितरागपदानि उपनागराणि शेषाणि ग्राम्याणि। प्रतिपादं च प्रकृतिस्थकोमलाभ्यामेव निर्वाहः। एवमन्यत्रापि प्रत्येकं द्वन्द्वसमुदायैः प्रतिपादमुपक्रमोपसंहारनिर्वाहक्रमः स्वयमुपलक्षणीय इत्यास्तां तावत् ॥ २१ ॥

वाक्यान्तरसगर्भं यत्तदाहुर्वाक्यगर्भितम् ॥

यथा,—योग्यो यस्ते पुत्रः सोऽयं दशवदन लक्ष्मणेन मया।
रक्षैनं यदि शक्तिर्मृत्युवशं नीयते विवशः ॥

अत्र योग्यो यस्ते पुत्रो लक्ष्मणेन मया मृत्युवशं नीयते इति वाक्यस्य रक्षैनं यदि शक्तिरिति वाक्यान्तरेण सगर्भत्वात् गर्भितत्वम्।

यत्रोपमा भिन्नलिङ्गा भिन्नलिङ्गं तदुच्यते।
भवेत्तद्भिन्नवचनं यद्भिन्नवचनोपमम् ॥

यथा,—अविगाह्योऽसि नारीणामनन्यवचसामपि।
विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षतः ॥

अत्रापगेव त्वमविगाह्योऽसीति लिङ्गभेदः। नारीणामुत्तितीर्षत इति लिङ्गभेदो वचनभेदश्च। तदिदं द्वयोरेकमेवोदाहरणम्॥ ३२ ॥

---

वाक्यान्तरेति। मध्यप्रविष्ट वाक्य पूर्वोत्तरभागाभ्यामेकीभूतस्य गर्भायमाण मेकस्वरसप्रसूता प्रतीति विघ्नयदात्मना सहैव समुदाय विरसकचामारोहयति। वाक्यान्तर वाक्यस्य विशेषो विवचित. प्रतीतिव्यवधायक इति यावत्। योग्य इति। मयेति। कारकविभक्ति. क्रियाकाङ्क्षणशीलायास्तामसङ्गमय्य मध्ये रक्षैन शक्तिरित्येतावता गर्भस्थानीयेन विरसीकरणमित्याह। अत्र योग्यो य इति। एव वाक्यरूपताभङ्गहेतून् दोषानभिधाय तत्रैव काव्यभावप्रत्यूहहेतवोऽभिधातव्यास्ते च गुणभङ्गद्वारका अलङ्कारभङ्गद्वारकाश्छन्दोभङ्गद्वारका यतिभङ्गद्वारकाश्चेति चतुर्धा विप्रथन्ते। ततश्च यद्यपि प्रथम गुणभङ्गद्वारका वक्तुमुचितास्तथापि तेषा बहुत्वाद्दुरूहत्वाच्च सूचीकटाहन्यायेन पश्चात्करणमलङ्कारभेदादिषु च मध्ये प्रति योगिद्वाराऽलङ्कारभङ्गस्य प्राधान्यमिति तद्द्वारा दोषान् लक्षयति। यत्रोपमेति। उपमाग्रहणमुपलक्षणमित्यग्रे वक्ष्याम। उपमा उपमितिः सादृश्यभिन्नोपमानवाचिन उपमेयवाचिनश्च लिङ्ग स्त्रीपुन्नपुंसक यस्य सा तथोक्ता। एव भिन्न वचनोपममित्यत्रापि व्याख्येयम्। अविगाह्योऽसीति। अविगाह्यतामात्मन

अथ भिन्नलिङ्गस्यैव यथा,

वापीव विमलं व्योम हंसीव धवलः शशी ।
शशिलेखेव हंसोऽयं हंसालिरिव ते यशः ॥

भिन्नवचनस्यैव यथा,

सरांसीवामलं व्योम काशा इव सितः शशी ।
शशीव धवला हंसी हंसीव धवला दिशः ॥ २३ ॥

न्यूनोपममिह न्यूनमुपमानविशेषणैः ।

यथा,—सहृदचक्कवाअजुआ विअसिअकमल मुणालसंच्छ्ण्णा ।
वावी वहुव्व रोअणविलित्तथणआ सुहावेइ ।

अत्र नेत्रबाहूपमापदानां वधूविशेषणत्वेनानुक्तत्वादिदं न्यूनोपमम् ॥ २४ ॥

---

साहश्य विवक्षितमेतदुपयुक्तमेव विशेषणमुपमानोपमेययोरुपादानयोग्यमित्य कस्मादेव विकृतवचनभेदनिबन्धनः प्रयोजनमाकाङ्क्षति । तथा तदनुसन्धानप्रवणस्य प्रकृतप्रतीतिराच्छाद्यत इति दूषणसिद्धिः । एतेन दूषणता व्याख्याता । विभाग-वाक्ये सहितावस्थयोरुद्देशादिह च मिलितयोरुदाहरणात्तथा भावो दोषत्वमिति भ्रान्तिं निरस्यति । तदिदमिति । एकमुदाहरणं न तु एकः सम्भिन्न उपाधिः प्रत्येकमेवत्वस्ति समर्थत्वादित्यर्थः । एतदेवानुसन्धाय विभागवाक्ये द्वे पदम् ॥ २२ ॥

तत्किमुदाहरणस्य सङ्कीर्णत्वमेव नेत्याह । अथ भिन्नलिङ्गस्यैवेति । द्वयमपि निगदव्याख्यातम् ॥ २३ ॥

जातिप्रमाणधर्मतो न्यूनता उपमानस्य न्यूनोपमत्वम् । तत्र जातिप्रमाण-न्यूनतार्थदोषः । धर्मन्यूनता तु धर्माभिधायकपदन्यूनतालक्षणाशब्ददोष एव । एतेनाधिकत्वं व्याख्यातमित्याशयवानाह । न्यूनोपममिहेति । इहशब्दो येषु मध्येषु उपमानस्य स्तोकविशेषणतया उपमेयन्यूनेत्युक्तं तथाधिकोपममिति वक्ष्यति । सहृतचक्रवाकयुगा विकसितकमलमृणालसञ्छन्ना । वापीवधूरिव रोचनाविलिप्त-स्तनी सुखयति । अत्र चक्रवाकयुगोपमानमपदमेव परमुपात्तम् । रोचनाविलिप्त-स्तनीत्यनेन कनकस्योपमानं नेत्रपदं मृणालस्योपमानं बाहुपदं च नोपात्तं तदपि च सविशेषणमुपादेयं भवति । येन विकासादिसमभिव्याहारसामञ्जस्यम्

अधिकं यत् पुनस्तैः स्यात्तदाहुरधिकोपमम् ॥

यथा,

अहिणवमणहरविरइअवलअविहूसा विहाइ णववहुआ ।

कुन्दलएव्व समुप्फुल्लगुच्छपरिणित्तभमरगणा ॥

इदं भ्रमरगणस्योपमानविशेषणस्याधिक्यादधिकोपमम् ॥३५॥

भग्नच्छन्द इति प्राहुर्यच्छन्दोभङ्गवद्वचः ।

यथा,—यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥

अत्र पञ्चमवर्णस्य लघोः स्थाने गुरोः करणाच्छन्दोभङ्गः ॥ ३६ ॥

---

स्यादिति । पदानामिति बहुवचनाभिप्रायः । अतएव धर्माणामेकनिर्देशेऽन्यमवित्साहचर्य्यादिति नावतरति व्यभिचारात् । किमथ तस्योपमानमनुसन्धेयमित्यपिन वाच्यम् । सावापि नानर्थिका कविनोपादेयेति साहित्यविदाम्नाय व्यवस्थितावुपमेयविशेषणस्योपमानविशेषणतया प्रयोजनचिन्ताया पूर्ववदेव प्रतीतिप्रत्यूहस्य मलभत्वादनुक्तत्वादिति शब्दप्रधानकतामाचष्टे । एवमुत्तरत्र ॥ ३४ ॥

अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूः । कुन्दलतेव समुत्फुल्लगुच्छपरिनिर्यद्भ्रमरगणा ॥ यद्यप्येकस्य विशेषणाधिक्ये विशेषणन्यूनत्वे वाऽन्यविशेषणस्य न्यूनाधिकभावौ नियतमथाप्युपमानगतस्यैव द्वय निरूप्यते । तत्र हि दृष्टमुपमेये प्रतिबिम्बकल्पमुपम्याप्यते तेनान्तो नोपमेये तयोर्निरूपणमिति ॥ ३५ ॥

भग्नच्छन्द इति । वाचा अव्यवच्छेदच्छन्दस्तस्यैवोपमानयुक्तादयस्तेनैव गुरुलघुनिवेशक्रमेण श्रव्यता भवतीत्याशयात् । तस्य विपर्य्यासच्छन्दोभङ्गो व्यक्त एव वैरस्यहेतु । आहुरिति । पद्योदाहरणत्वावच्छेदविपर्य्यासत्वे च भग्नवृत्तव्यवहारादिदमेव निमित्तमत्रावधार्य्यत इत्यर्थः । पञ्चेति । पञ्चजना पुरुषाः देवपितृगन्धर्वराक्षसासुरभेदात्पञ्च । अथवा निषादपञ्चमब्राह्मणादि चतुष्टयभेदात् । तमेवात्मानं ब्रह्मपरपर्य्याय विज्ञाय श्रवणमनननिदिध्यासनैरुपास्य प्रज्ञां प्रकृष्ट ज्ञानं साक्षात् कुर्वीत । अत्र पञ्चमवर्ण इति । "पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरुं विजानीयाच्छेषास्त्वनियता मताः" इत्यनुष्टुप्छन्दसो लक्षणम् ॥ ३६ ॥

अस्थाने विरतिर्यस्य तत्तु भग्नयतीष्यते ॥

यथा,

ब्रह्मेन्द्रोपेन्द्रादिगीर्वाणवन्द्यो भक्तानां भूयाच्छ्रिये चन्द्रचूडः ।
स्त्रीणां सङ्गीतं समाकर्णयन् केतूदस्ताम्भोदं सदोऽध्यास्त ईशः ॥

अत्र चतुर्थस्थाने यतौ कर्त्तव्यायां तदन्यत्र यतिकरणाद् भग्नयतीदम् ॥ ३७ ॥

क्रियापदविहीनं यदशरीरं तदुच्यते ।

यथा,—सेलसुआरुद्धद्धं मुद्धाणा बद्धमुद्धससिलेहम् ।
सीसपरिट्ठिअगङ्गं सञ्झापणअं पमहणाहम् ॥

क्रियापदाभावादशरीरमिदम् ॥ ३८ ॥

---

अस्थान इति । अव्य पठितिविच्छेदा यतिर्विच्छिद्य विच्छिद्य पव्यमाना भारती स्वदते । अव्यतीपलचणार्थञ्च द्विमुनिवेदादिसञ्ज्ञया तत्र तत्र विविच्यते । तथा चास्ति कश्चिद्विशेषो येन क्रियमाणापि विरतिर्न सौभाग्यपद पुष्यति स च विशेषो नाम भागभेदोऽस्वरसन्धिक्रतश्च प्रायेण एतेषा स्वभावविशेषादेव स्थाने क्रियमाणापि विरतिरत्यन्तैव परं प्रकाशते । न तत्र कथञ्चन सौभाग्यमुन्मीलयति । स्थानपरिभाषया व्यावर्त्तितत्वात् । तदिदमुक्तमस्थान इति । वामनोऽप्याह ॥ विरसविराम कष्टमिति । सदोऽटहरूपा सभा केतूदस्ताम्भोद ध्वजदण्डोत्च्छितजलधरमित्युच्चैस्त्वम् । वेदच्छेदा शालिनीमोऽथ तौ गौ इत्युपलचण अव्यविरतेः । अत्र द्वितीयपादे धातुभागभेद शेषपादत्रये नामभागभेदाः । न चात्र स्वरसन्धानमस्तीति ॥ ३७ ॥

क्रियापदेति । क्रियेत्युपलचणम् । प्रधानपदनहीनमिति बोद्धव्यम् । प्रधानाविमर्शे हि वाक्यशरीरमेव न निष्पन्न स्यात् । शैलेति । शैलसुतारुद्धार्द्धं मूर्द्धावद्धमुग्धशशिलेखम् । शीर्षपरिष्ठितगङ्ग सन्ध्याप्रणत प्रमथनाथम् ॥ वाक्ये क्रिया प्रधानमिति दर्शने तत्पदानुपादानादत्र प्रधानाविमर्शः । शैलसुतयाऽवरुद्धमर्द्धं यस्य तम् मूर्द्धाया आवद्धा मुग्धा शशिलेखा येन तम् शीर्षे प्रतिष्ठिता गङ्गा येन तम् यश्च सन्ध्यायै प्रणतस्त प्रमथनाथ प्रमथा गणास्तेषा नाथम् । कर्मविभक्तौ क्रियाम

गुणानां दृश्यते यत्र श्लेषादीनां विपर्य्ययः ॥
अरीतिमदिति प्राहुस्तत्त्रिधैव प्रचक्षते ।
शब्दार्थोभययोगस्य प्राधान्यात् प्रथमं त्रिधा ॥
भूत्वा श्लेषादियोगेन पुनस्त्रेधोपजायते ।
अत्र यः श्लेषसमता सौकुमार्य्यविपर्य्ययः ॥
शब्दप्रधानमाहुस्तमरीतिमतिदूषणम् ।
तत्र । विपर्य्ययेण श्लेषस्य सन्दर्भः शिथिलो भवेत् ॥
यथा,—आलीयं मालतीमाला लोलालिकलिला मनः ।

---

नरेणाचरितार्थत्वात् क्रियाया नमस्काररूपाया व्यभिचारेणार्थापत्तिविषयतानुपपत्तेरिति । अस्यां च गाथायां मौनव्यापाररूपता भगवतः प्रतीयते इति रहस्यकाराख्या मन्यन्ते ॥ २८ ॥

गुणभङ्गकारकदोषनिरूपणावसरोऽयमित्याशयवानाह । गुणानामिति । रसाद्यादिभङ्गेऽपि तर्हि दोषः स्यादित्यत आह । श्लेषादीनामिति । श्लेषप्रसादसमतासौकुमार्यार्थव्यक्तिमाधुर्यकान्त्युदारत्वौजसाम् । एतद्योगाद्वाक्यं वक्ररूपतामासाद्य काव्यव्यपदेशं लभते तेषां गुणानां भङ्गः काव्याभासत्वपर्यवसायी दोषः । ते च श्लेषादयो गुणा एव । तेषामन्यतमाभावे काव्यस्याभासत्वात् । तेषां हि विपर्यये रीतिरेवास्य भज्यते । तस्या गुणवत्पदरचनारूपत्वात्तत एव पानकरसन्यायेन सम्भूय चित्रास्वादपर्यवसानक्षमं गुणसम्बलनमेव रीतिरिति लोचनकारः । रीतिः सारूपतया काव्यस्यात्मेत्युच्यते । यथा चित्रस्य लेखा ऋजुकुत्वाद्वलावल्योन्मीलनवना तथा रीतिरिति द्वितीये विस्तरः । तत्त्रिधेति । तदिति काकाक्षिगोलकन्यायेन पूर्वापराभ्यामभिसम्बध्यते । यत्र गुणानां विपर्ययस्तदरीतिमत् । तत्त्रिधेत्यर्थः । त्रिधाभूतं भूयस्त्रिधा प्रचक्षते तेन नवभेदा तदेतद्विवृणोति । शब्दार्थेति । योगशब्दः प्रत्येकमन्वीयते । शब्दप्रधानत्वमर्थानपेक्षशब्दनिरूप्यत्वम् । वाग्गुणस्य श्लेषादित्रयस्य । एवं शब्दानपेक्षार्थनिरूपणीयत्वं तादृशस्य कान्त्यादित्रयस्य । एतेन श्लेषसमतेति विकल्प उभयप्रधानता व्याख्याता । तेनायमर्थः, शब्दार्थोभयप्रधानतया सामान्यतस्त्रिधाभूता श्लेषादित्रिकविवक्षया प्रत्येकं त्रिधा भवतीति । तेषु शब्दस्य प्राबल्यात् प्रधानकगुणभङ्गः प्रथमं विविच्य इत्याह ।

यस्यानत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥

अत्र शब्दानामनतिप्रसिद्धार्थत्वादप्रसन्नत्वमिति सोऽयमर्थप्रधानः प्रसादविपर्य्ययो दोषः ॥ ४२ ॥

वाक्यं भवति नेयार्थमर्थव्यक्तेर्विपर्य्ययात् ॥

यथा,—मही महावराहेण लोहितादुद्धृतोदधेः।

इतीयत्येव निर्दिष्टे नेया लौहित्यहेतवः ॥

तदिदं निगदेनैव व्याख्यातमित्यर्थप्रधानोऽयमर्थव्यक्तिविपर्य्ययः ॥ ४३ ॥

---

लिका हसी। अलक्षकी शोभितवती। ननु हस्या गमनपथालङ्करणकाले रात्रिस्तस्यां च तुषारकिरण एव तदलङ्कारकारी किमनया वराक्या इत्यत आह। यस्येति। यदत्यर्जुन न भवति अब्जन्म तोयभवं नीलोत्पलमिति यावत्। तत्सदृशलाञ्छनो वलक्षगुः वलक्षी गौ किरणो यस्य शुभांशु चन्द्रस्तेन असौ सकलङ्कतया न तथालङ्काराय यथेयमित्यर्थः। पश्येति। वाक्यार्थकर्मकमेके पठन्ति। तन्न युक्तम्। चक्र इति परीक्षताखरसभङ्गापत्तेः। उक्तयुक्त्या वाक्यदोषत्वमाह। अत्र शब्दानामिति। न च नयमानादीनां श्लिष्टता। तल्लक्षणविरहात्। नापि गूढार्थत्वं तत एव ॥ ४२ ॥

वाक्यमिति। सम्पूर्णं वाक्यत्वमर्थव्यक्तिं करोतीति वक्ष्यति। सर्वस्य वाक्यस्य विशेषणविशेष्यभावबोधकत्वनियमे यावता विशेषणविशेष्यभावोऽभिमतस्तावत्प्रतिपादकपदोपादानं सम्पूर्णता। सा च विशेषणविशेष्यभावानुरूपार्थनिरूपणीयतयार्थप्रधानेति तद्विपर्य्ययोऽपि तत्प्रधान इति पूर्ववत् नेयम्। अतएव विवक्षितवाक्यान्यथानुपपत्त्या नेयः कल्पनीयोऽर्थो यस्येति नेयार्थमित्यर्थोऽपि घटते। महीति। पूर्वार्द्ध एव काव्यं निर्वर्त्तितम्। न च तावता विवक्षितार्थलाभः। तथाहि। समुद्रमध्यात् पृथिव्यामुद्ध्रियमाणायां महासुरविमर्दे तेषां दंष्ट्रया पाटनेन रुधिरशवलतया लौहित्यमुदधेरिति वाक्यार्थोऽभिप्रेतः। लक्षणाया अभावात् न नेयार्थत्वं पददूषणमत्र सम्भावनामारोहति। दूषणताबीजं चात्र स्फुटमेव। अशरीरं तु क्रियापदशून्यमित्युक्तं तदेतत्सर्वमभिप्रेत्याह। तदिदं निगदेनैवेति ॥ ४३ ॥

कान्तेर्विपर्य्ययाद्वाक्यं ग्राम्यमित्यपदिश्यते।
यथा,—विरहे ते विषीदन्तं निषीदन्तं तवान्तिके।
कन्ये कामयमानं मां त्वं न कामयसे कथम्॥
इदमुक्तेर्ग्राम्यतया कान्तिहीनमित्यर्थप्रधानोऽयं कान्ति-
विपर्य्ययो दोषः।

ओजो माधुर्य्यमौदार्य्यं न प्रकर्षाय जायते॥
यस्मिंस्तमाहुरुभयप्रधानं तद् विपर्य्ययात्॥ ४४॥

वाक्ये यः खण्डयन् रीतिं भवत्योजोविपर्य्ययः।
असमस्तमिति प्राहुर्दोषं तमिह तद्विदः॥
यथा, स्मरः खरः खलः कान्तः कायः कोपधनः कृशः।
च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः॥

---

कान्तेरिति। रसस्य दीप्तिं कान्तिरग्रे विवरिष्यते तेनार्थप्रधानता व्यक्ता। तस्यामस्ति वाक्यवाच्ययोर्व्यापारः। वाक्यं विदग्धोक्तिकं व्याप्रियते। अतथा-भूतस्य रसाव्यञ्जकत्वनियमात्। तथाहि। कन्येति सम्बोधनेन रसविरोधिनी विलक्षिताचमता प्रतीयते। कामयमानमित्यनेन अनावरणमुच्यमानोऽर्थः कथं न वैरस्यम् आवहतीत्यादिकमुन्नेयम्। तदिदमाह। इदमुक्तेर्ग्राम्यतयेति॥४४॥

वाक्ये य इति। ननु समासभूयस्त्वमोजोऽभिधास्यते तत्कथमस्याभावोऽर्थ-प्रधानोऽपि कथञ्च दोष इत्यत आह। खण्डयन् रीतिमिति। रीतिर्भङ्गपर्य्यव-सायी तस्याभावो दूषणं न तु तन्मात्रमित्यर्थः। एतदुक्तम्भवति। शब्दार्थयो-रुचिता प्रौढिरोज। यदाह "रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्त्तिनः। तद्व्यक्तिहेतु शब्दार्थावाश्रित्यौजोव्यवस्थितमिति। तत्रार्थव्यक्तिमर्थगुणेषु विवे-चयिष्यामः। शब्दस्य तु पारुष्यशैथिल्यव्यतिकरलक्षणा सा च क्वचित् समास-दीर्घतया व्यज्यते। यथा। चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्येति। क्वचिदन्यथापि प्रकाशते। यथा। यो यः शस्त्रं बिभर्त्तीत्यादि। तदेवं तत्त्वव्यवस्थितौ पूर्वाचार्य्यव्यवस्थित्या गुणकाण्डे समासभूयस्त्वमोजोलक्षणं व्यभिचरितगुणमध्ये समासरचनासौष्ठवं वक्तृवशतया गुण इत्यभिप्रायाद्विशेषं तत्र

अत्र सत्यसमस्तपदाभिधाने सत्यपि च अर्थस्य सौकुमार्य्ये श्लेषादिगुणसामग्रभावान्न वैदर्भीरीतिः। नापि यथोक्तलक्षणाभावात् गौडीयादय इति। खण्डितरीतित्वादयमोजोविपर्य्ययः शब्दार्थप्रधानो गुणविपर्य्ययो दोषो भवति। यदाह।

इत्यादिबन्धपारुष्यं शैथिल्यञ्च नियच्छति।
अतो नैनमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ४५ ॥

माधुर्य्यव्यत्ययो यस्तु जायते रीतिखण्डनात्।
तदनिर्व्यूढमित्युक्तं काव्यसर्वस्ववेदिभिः ॥

यथा, नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥

---

वक्ष्यामः। तदिदमिति। रीतिं खण्डयतीति। न हि प्रौढेरभावे गुणसम्बन्धात्मिका रीतिर्नामेति विपर्य्ययपदेन साधारणेन पारुष्यशैथिल्ये दर्शयति। अत इति। एतदेवाचार्य्यमतेन द्रढयति। यदाहेति। यद्यप्यत्रानुप्रासोऽस्ति तथापि रीतिमन्तरेण मृतशरीर इव काव्येनालङ्करणतामभ्यास्ते। ततश्च न प्रकृतः कोऽपि चमत्काराविर्भाव इति नास्त्येव काव्यता प्रयोजयतीत्यर्थः। दाक्षिणात्या वैदर्भीमाहुः। पारावरीणास्ते हि विशिष्टरीतिस्वरूपमवधारयितुं क्षमा इति ॥ ४५ ॥

माधुर्य्यव्यत्यय इति। शब्दार्थयोश्चित्तद्रुतिविधायित्वं माधुर्य्यम्। निचुलितत्वमिवार्द्रतापदाभिधेया चेतसोऽवस्था तत्कारिता माधुर्य्यम्। सा च शृङ्गारकरुणान्यतरप्रकाशानुगुणव्यापारावेशेन भवति। यदाह। शृङ्गार एव मधुरः परः प्रह्लादनो रसः। तन्मयं काव्यमाश्रित्य माधुर्य्यं प्रतितिष्ठति। शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्। माधुर्य्यमार्द्रतां याति यतस्तत्राधिकं मन इति। तत्र शब्दस्य माधुर्य्यं पृथक्पदतया व्यज्यते। दीर्घसमासस्य यत्नान्तरसाध्यतया सुकुमाररसप्रकाशसामग्रीवहिर्भावात्। ततश्च शब्ददूषणप्रस्तावे पृथक्पदतामात्रप्रत्ययो यदि उच्यते गौडीया दुष्टा स्यादिति रीतिखण्डनपर्य्यवसायितयाऽभिधानम्। भवति हि कदाचित्कवेः शक्तिवशात्सोल्लेखेऽपि समासे रसव्यक्तिः। यथा। याते द्वारवतीं तदा मधुरिपौ तद्दत्तसङ्गानतां कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य

अत्र नखिनां नदीनाञ्चेति षष्ठ्यन्ताच्चकारेण रीतेरुपक्रमे शृङ्गिणां शस्त्रपाणीनामिति चकारानिर्वाहात् स्त्रीषु राजकुलेषु चेति षष्ठीपरित्यागादमधुरार्थत्वाच्च माधुर्य्यविपर्य्ययनामायं शब्दार्थप्रधानो गुणविपर्य्ययो दोषः॥ यदाहुः।

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥
यया कयाचिच्छ्रुत्या यत् समानमनुभूयते।
तद्रूपा हि पदासत्तिः सानुप्रासा रसावहा॥ ४६॥

यस्तु रीतेरनिर्वाहादौदार्य्यस्य विपर्य्ययः।
वाक्यं तदनलङ्कारमलङ्कारविदो विदुः॥

यथा, दीर्घपुच्छश्चतुष्पादः ककुद्मान् लम्बकम्बलः।

---

सोत्कण्ठया। उद्गीतङ्गुरवाष्पगद्गदगलत्तारस्वरं राधया येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम्॥ एवञ्चास्खलितप्रतीतिविषयस्यैव सन्दर्भस्य रसस्य पदघटनारूपस्य च सन्दर्भस्यानिर्वाहादेव प्रतीतिः स्खलतीत्याह। तदनिर्व्यूढ़मिति। काव्यसर्वस्व रसप्रकाशसंवेदिभिस्तदुपायभूतघटनास्वरूपवेदिभिः। एतदेवव्याख्यानेन स्फुटयति। अत्रेति। नखिना नदीनाञ्चेति चकारेणोत्तरत्र तत्परित्यागेऽनुपपत्तिर्जागर्त्ति नदेव प्रतीतेः स्खलनमेवमुत्तरत्रापि। अस्तु तर्हि वस्तुसत्त्वेऽप्येकदिङ्माधुर्य्यसम्पत्तौ काव्यताप्रतिलम्भ इत्यत आह। अमधुरार्थत्वाच्चेति। स्पष्टमेतच्छब्दार्थप्रधानतामाधुर्य्यस्य पूर्वाचार्य्यसमत्या दृढयति। यदाहुरिति। माद्यन्ति आर्द्रचित्ता भवन्ति। मधुरसादृश्यादयं व्यवहार इत्यत आह। मधुनेति। इदञ्च घटनाया माधुर्य्यं परमं रहस्यमित्याह। यया कयाचिदिति। ओष्ठ्यकण्ठ्यादिकं वा तद्रूपसमानश्रुतिकमादौ यस्य यथाभूतस्य पदस्य प्रत्यासत्तिस्तद्रूपाहीति पाठे व्यक्त एवार्थः। अतएव सानुप्रासा ततश्च रसावहेत्यर्थः। यदाह कङ्कणादिविमुक्तापि कान्ता किमपि शोभते। कुङ्कुमेनाङ्गरागश्चेत्सर्वाङ्गीणः प्रवर्त्तत इति॥ ४६॥

विकटतामात्रभावस्यादोषत्वाद्विशेषयन्नाह यस्तु रीतेरिति। काव्यरूपताप्रयो-

गौरपत्यं बलीवर्दस्तृणमत्ति मुखेन सः ॥

तदिदमपुष्टार्थत्वादनुत्कृष्टविशेषणमनुदारं निरलङ्कार-माचक्षते सोऽयमौदार्य्यविपर्य्ययो नाम शब्दार्थप्रधानो गुण-विपर्य्ययो दोषः ॥ यदाह ।

श्लाघ्यैर्विशेषणैर्युक्तमुदारं वाक्यमिष्यते ।
यथा लीलाम्बुजक्रीड़ासरोहेमाङ्गदादयः ॥
उत्कर्षवान् गुणः कश्चिदुक्तेर्यस्मिन् प्रतीयते ।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥ ४७ ॥
अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
खिन्नं चैवातिमात्रञ्च परुषं विरसं तथा ॥
हीनोपमं भवेच्चान्यदधिकोपममेव च ।
असदृक्षोपमं चान्यदप्रसिद्धोपमं तथा ॥
निरलङ्कारमश्लीलं विरुद्धमिति षोड़श ।
उक्ता वाक्यार्थजा दोषास्तेषां वक्ष्यामि लक्षणम् ॥
समुदायार्थशून्यं यत्तदपार्थं वचः स्मृतम् ।

---

जक शब्दार्थयोर्वक्रता उदारता न हि वक्रतामन्तरेण काव्यपदवीप्राप्तिस्तदाह । यत्तु वक्र वच. शास्त्रे लोके च वच एव तत् । वक्र यदनुरागादौ तत्र काव्यमिति श्रुतिरिति । तदेतदलङ्कारसामान्यमस्याभावे निरलङ्कारता भवतीत्याह । अनल-ङ्कारमिति । दीर्घपुच्छ इत्यादौ प्रक्रतोदाहरणे द्वयोरवक्रत्व स्फुटयति । यथेति । विविच्य गुणप्रस्तावे कथयिष्याम । अर्थपोषमाह । उत्कर्षवानिति । उभय-प्रधानतामुपसहरति । काव्येति ॥ ४७ ॥

तदेव वाक्यदोषान् लक्षयित्वा क्रमप्राप्ता वाक्यार्थदोषा लक्षणीया इति तान् विभजते । अपार्थमिति । उद्देशे दोषाणा व्यासेनोक्ति' । पूर्वोक्तप्रयो-जनानुरोधेनेति । समुदायिपदाना ,विशेषणविशेष्यभाव. समुदायार्थ. । तेन शून्य पदजातमपार्थक पदार्थानामसंसर्गेण पदानामसंसर्गोऽभिधीयते । तेनार्थ-

यथा,

जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि ।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः ॥

अत्र समुदायार्थः कोऽपि नास्तीत्यपार्थमिदम् ॥ ४८ ॥

व्यर्थमाहुर्गतार्थं यद् यच्च स्यान्निष्प्रयोजकम् ॥

यथा, आञ्हिषाता रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
स्वासहौषीत्तनु वह्नौ दृष्ट्वा तौ रामलक्ष्मणौ ॥

अत्राञ्हिषाता दृष्ट्वेत्येताभ्यामेव ताविति, रघुव्याघ्रावित्यनेनैव रामलक्ष्मणाविति, तनुमित्यनेनैव स्वामिति, अहौषी-

---

दोषत्वम् । जरद्गव इति । कम्बलपादुकाभ्यामिति लक्षणे तृतीया । न च ताभ्यां द्वारोचस्य सम्बन्धः । कथञ्च तस्य मङ्गलानां धवलादीनाम् । मद्रकाणामिति पाठे गीतकविशेषाणां वा सङ्गतिः कथं वा पुत्रकामायास्तत्प्रश्नसंसर्गं कथं च राजन्निति सम्बोधनं घटते पुत्रकामायाश्च रुमालवणार्घप्रश्नः । रुमा-लवणाकरः । तथाच प्रयोगः । रुमाघासकान्तादिलवणात्मवदिति ॥ ४८ ॥

व्यर्थमिति । विज्ञातौ वाविगतौ वाऽर्थोऽभिधेयम् प्रयोजनं यस्य तद्व्यर्थं स्वतन्त्रञ्च दूषणमिति वैशेषिके वक्तव्यम् । तथाहि । आञ्हिषातामिति । अहेर्गतिकर्मणो लुङि रूपम् । स च प्राचुर्य्यप्रयोगः प्राप्त्यवच्छिन्नव्यापारप्रचय-मभिधत्ते । तथाचार्थसिद्धायां प्राप्तौ शब्देनोपादानमनुचितं लोकानुसारेण काव्ये दृशिश्चाक्षुष एव ज्ञाने प्रयुज्यते । यथा । मया तावद्दृष्टो न खलु कलिकन्दर्पनृपतेर्गुणैस्तुल्यः कोऽपि क्वचिदपि किमश्रावि भवता । इति प्रश्नं श्रुत्वा क्वणितमिव कर्णान्तिकगतानृमृगाक्षीणां चक्षुश्चटुलभवतां चान्ततरलम् । यथा वा नैवादर्शि न चाश्रावि । फलं मलयभूरुहः । चक्षुश्च प्राप्तमेव गृह्णाती-त्यर्थलब्धायां प्राप्तौ कथं शब्देन उपादानम् । तदिदमुक्तमेताभ्यामेवेति । रघुव्याघ्रादिप्रकरणादिकमासाद्य विशेषपर्य्यवसायि यौगिकत्वात् न तु विशेषे एव शक्तम् । “उपगम्य रघुव्याघ्रं कच्छभूभागचारिणीम् । लुलुभे सुनिधिं नु तां वेलामिव महार्णवः ॥” इति महर्षिप्रयोगात् । एतेन पुष्पवदादिपदवदुचनभेदोऽप्यपास्तः । एवञ्च प्रकरणादिना रघुव्याघ्रपदं रामलक्ष्मणपरमेवेति पूर्वार्द्धे

दित्यनेनैव वज्राविति गम्यत इति गतार्थत्वम्। न च शर-भङ्गाश्रमगमनं तनुहोमो वा अग्रतः कथाशरीरोपयोगीति निष्प्रयोजकत्वम्। अतोऽयं व्यर्थनामा वाक्यस्य महावाक्यस्य च दोषो भवति। आर्थ्या च वृत्त्या लब्धस्य शास्त्रेतिहासादौ शब्दवृत्त्या भणनमपौनरुक्त्याय इत्यर्थपुनरुक्तेर्भिद्यते॥ ४९॥

उक्त्यभिन्नार्थमेकार्थं

यथा,

प्रसाधितस्याथ मुरद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत्।

---

तयोरेव प्रक्रान्तत्वादुत्तरार्द्धे सर्वनाम्ना परामर्शो युज्यते न तु स्वशब्देन। तनु-प्रभृतिशब्दाना सम्बन्धिशब्दत्वात् समभिव्याहृतशब्दार्थसम्बन्धकत्व लोके व्युत्-पन्नम्। यथा "करौ धुनाना नवपल्लवाकृतीवृथा कृथा मानिनि मा परिश्रम मिति। शब्दान्तरसन्निधाने तु क्वचित्ताद्रूप्यावगमो भवति। यथा। उमा-स्तनोद्भेदमनुप्रवृद्धो मनोरथो य प्रथमम्बभूव। तमेन मेना दुहितु कथञ्चि-द्विवाहदीक्षातिलकच्चकार। तदिहान्यस्यानुपादानाच्छरभङ्गसम्बन्धिन्येव तनुः प्रतीयते जुहोतिश्च वज्राधारकमेव हविर्द्रव्यत्यागमभिधत्ते तेन वज्रावित्यपि न वाच्यम्। गतार्थशब्द व्याचष्टे। गम्यत इति। अस्मिन्नेवोदाहरणे निष्प्रयो-जनत्वमाह। न चेति। शरभङ्गाश्रमगमनं तनुहोमश्चात्र वाक्यार्थद्वय न प्रयो-जनवत्। अस्य वाक्यस्य चरितार्थत्वात्। किं प्रयोजनान्तरगवेषणयेत्यत आह। अत इति। यद्वाक्यपोषणाद्यनौपयिकपदमप्रयोजकवचसा प्रागुक्तं तथाच प्रबन्धाद्यर्थपोषपर्यवसायि वाक्यमेव। इहापि अवाच्यवचनस्य स्फुटत्वात्। न चाश्रमगमनतनुहोमौ करिष्यमाणवीररसोचितकथा शरीरे कामपि शोभा-मानामर्पयत इति वाक्यस्य महावाक्यस्य चेति यथासङ्ख्यमन्वयः। कथ पुन-र्गतार्थं प्रसाधितस्येत्यादेरर्थपुनरुक्ताद्भिद्यत इत्यत आह। आर्थ्या चेति। शब्दवृत्त्यैवावगतस्य शब्दवृत्त्या पुनरुक्तम्। अर्थतो लब्धस्य शब्दवृत्त्या भणनमित्येक प्रकार। अर्थतो लाभ व्युत्पादयति। शास्त्रेति। अस्य रघुकुलभुव शर-भङ्गाश्रमगमनमितिहासावचुषः प्राप्तस्यैव ज्ञानजनकत्व शास्त्रात्। शरभङ्ग-सम्बन्धिन्येव तनुर्लौकिकव्युत्पत्तेस्तेन नियमेन ह्यर्थत प्राप्तिर्भवतीत्यभिप्रायः॥ ४९॥

उक्ताभिन्नेति। वाक्यान्तरोक्ताभिन्नतात्पर्यार्थो यस्य तत्तथोक्तम्। तथाहि।

वपुष्यशेषेऽखिललोककान्ता साऽनन्यकान्ता ह्युरसीतरा तु॥

इत्युक्तैकार्थमेवाह।

कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य।
आलिङ्गिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरेव लक्ष्मीः॥

अनयोः श्लोकयोरभिन्नार्थमेकं वाक्यं महावाक्ये दुष्यति॥५०॥

सन्दिग्धार्थं ससंशयम्।

यथा, मनोरथप्रियालोकरसलोलेक्षणे! सखि!।
आराद्वृत्तिरियं माता न क्षमा द्रष्टुमीदृशम्॥

अत्रारात् प्रभृतिशब्दानामुभयार्थत्वात् माता द्रक्ष्यति न वेति सन्दिग्धम्। ॥५१॥

---

प्रसाधितस्येत्यादि श्लोके श्लेषोपहितेन व्यतिरेकेण कापि अपूर्वा क्षणम्य लक्ष्मीस्तत्काले बभूवेति तात्पर्य्यार्थः। तेनैव प्रकारेण कपाटेत्यग्रिमश्लोके स एवास्ति तुल्यार्थत्व उपादान भिन्नार्थत्वेऽपि तदिदमाह। अनयोः श्लोकयोरिति। महावाक्ये श्लोकद्वयरूपे एकमन्यतरद् दुष्यति हेय भवतीत्यर्थः॥५०॥

सन्दिग्धार्थमिति। शब्दस्वरूपनिश्चयपि वाक्यार्थो दोषायते इति अर्थदोषत्वम्। तथाहि। मनोरथेत्यादौ मनोरथे यः प्रियो वल्लभस्तदालोकरसेन लोलेक्षणे हे हे चपललोचने तव मातेयमाराद्वृत्तिर्दूरवर्त्तिनी। अतो नैतादृशं सानुरागाङ्गनाजनयोग्य द्रष्टु क्षमा इति व्यवस्थापनात् न अवलोकयितुं शक्ता ततो निःशङ्कमालोकस्वेति वाक्यार्थ उतेयमाराद्वृत्तिः समीपदेशवर्त्तिनी। आराद्दूरसमीपयोः। तथाचेदृश कुलाङ्गनानुचित चारित्रखण्डन द्रष्टु न क्षमा न सहिष्णु अतो सा नयनचापल कार्षीरिति। नानार्थपदप्रक्षेपात् साधकबाधकप्रमाणाभावाच्च सन्दिह्यत इत्याह। अत्रारात् प्रभृतिशब्दानामिति। न च मियो विरोधिनोरेकत्र विवक्षा सम्भवति। न चास्ति प्रकरणादिकमेकनियामक न च मातुः प्रकोपशङ्कया प्रियविलोकनरसोत्काया मनोरथभङ्गो न भवतीत्यर्थः॥५१॥

वाक्यं यत्तु क्रमभ्रष्टं तदपक्रममुच्यते ॥

यथा, काराविऊण खउरं गामउलो मज्जिओ जिमिओअ।
णक्खत्ततिहिवारे जोइसिअं पुच्छिउं चलिओ ॥ (क)

अत्र क्षुरकर्मणोऽनन्तरं नक्षत्रादिप्रश्नादिदम् अपक्रमम् ॥५२॥

जात्याद्युक्तावनिर्व्यूढं खिन्नमाहुर्महाधियः।

यथा, विवाहिऊ णवबहुआ सासुरअं दोलिआइ णिज्जन्ती।
रोअइ दिअरो तां सण्ठवेइ पासेण वजन्तो ॥ (ख)

---

(क) कारयित्वा चौरं ग्रामप्रधानं मज्जित्वा जिमितश्च।
नक्षत्रवारान् ज्योतिष्कं प्रष्टुं चलितं ॥

(ख) विवाह्य नववधूं श्वाशुरकं (श्वशुरगृहं) दोलिकया नीयमाना।
रोदिति देवरस्तां संस्थापयति पार्श्वेन व्रजन् ॥

---

वाक्यं यत्त्विति। कारयित्वा चौरं ग्रामउलो ग्रामप्रधानपुरुष इति देशीया। ग्रामेऽपि वा यः कुटोऽव्युत्पन्नं मज्जिओ सुस्नातश्च जिमिओञ्च भुक्तवांश्च ततो नक्षत्र तिथिवारौ च ज्यौतिषिकं प्रष्टुं चलितं। तिथिवार-ज्ञानानन्तरं क्षुरकर्म ततः स्नानभोजने इति लौकिकः क्रमः तस्य विपर्यासो व्यक्त एव स्मार्त्तश्रुतिवचनात्। क्रियमाणेऽपि रचनावैपरीत्येन क्रमभंग-मनाधीयत इति नासौ शब्ददोषः। अत्र पूर्वार्द्धोपात्तानां क्रमो न विपर्यस्तः किन्तु चौरोत्तरार्द्धोक्तयोरित्याह। अत्र क्षुरकर्मण इति ॥ ५२ ॥

जातीत्यादि वाक्यार्थो द्विविधः। स्वतःसम्भवी कविप्रौढोक्तिनिर्मितश्च। तत्र असति विशेषहेतौ यज्जातीयमर्थं बुद्ध्या व्यवस्थाप्य वचनोपक्रमस्तज्जातीयस्यैव समस्तवाक्यनिर्वाहो युक्तो न तु अन्तरेण परित्यागेन भेदः। उपक्रान्तनिर्वाहा-शक्तो लोके खिन्न इत्युच्यते। तदिदमुक्तं जात्यादीति। आदिपदेन स्वतः-सम्भविविशेषाणामुपमादीनां कविप्रौढिनिर्मितानाञ्च रूपकादीनां परिग्रहः। स्वतःसम्भवी नवपरिणीतास्वभावलक्षणार्थः तावदुपक्रान्तः तथा सति यो जन्मा-

अत्र प्रक्रान्तस्य नवपरिणयवतीस्वरूपभणनस्यानिर्व्यूढ-त्वात् खिन्नत्वम् ॥ ५३ ॥

यत् सर्वलोकातीतार्थमतिमात्रं तदुच्यते ॥

यथा, भृङ्गेण कलिकाकोषस्तथा भृशमपीड्यत ।

ववर्ष विपिनोत्सङ्गे गोष्पदप्रं यथा मधु ॥

अत्र कलिकाकोषे गोष्पदप्रमधुवर्षस्यासम्भवादतिमात्र-त्वम् ॥ ५४ ॥

यत्तु क्रूरार्थमत्यर्थं परुषन्तु तदुच्यते ।

यथा, खाहि विसं पिअ मुत्तं णिज्जसु मारीअ पडउ दे वज्जम् ।

दन्तखण्डिअथणआ खिविऊण सुअं सवइ माआ ॥ (ग)

अत्र खाद विषमित्यादीनां क्रूरार्थानामभिधानात् पारुष्यम् ॥ ५५ ॥

---

(ग) खाद विष पिब मूत्र नीयसे मार्य्या पततु ते वज्रम् ।
दन्तखण्डितस्तनी क्षिप्त्वा सुत शपति माता ॥

---

भ्यस्तपितृगृहवियोगवेदनादूनमानसाया अत्यन्तापरिशीलितेन देवरेण सस्थापन-प्रकारः स न जातौ निविशते। परिशीलितभर्त्तृकुलाया अकुलाया वा तदौ-चित्यात् तस्या एव हि किञ्च न वक्तव्य भवतीत्याह। अत्र प्रक्रान्तस्येति ॥ ५३ ॥

यत् सर्वलोकेति। गोष्पदप्रमिति पूरेर्णिजन्ताद्दर्षप्रमाण ऊलोपश्चास्य अन्यत-रस्यामिति णमुल्। ऊलोपश्च। कलिकामकरन्दपरिणामस्य एतावती लोके न प्रसिद्धिः। न चैतत् खिन्नमेव कलिकाकुसुमस्यानुपक्रमात् किन्तु स्वरूपभ्रमात् लोकमर्य्यादातिरिक्तावृत्तमुपात्तमिति पृथगेव दोषः ॥ ५४ ॥

यत्त्विति। खाद विषमित्यत्र इत्थं माता पुत्रमाक्रोशति किं कृत्वा क्षिप्त्वा भूमौ निरस्य। कुतो दन्तखण्डितस्तनी यतो बालो दन्तैर्मातुस्तन दशतीति

अप्रस्तुतरसं यत् स्याद्विरसं तन्निगद्यते ॥

यथा, तव वनवासोऽनुचितः पितृमरणशुचं जहीहि किं तपसा ।
सफलय यौवनमेतत् सममनुरक्तेन सुतनु मया ॥

अत्र पितृमरणसन्तप्तायाः सम्भोगप्रवर्त्तनमप्रकृतरसत्वाद्विरसम् ॥ ५६ ॥

हीनं यत्रोपमानं स्यात्तत्तु हीनोपमं स्मृतम् ।

यथा, क्वचिदग्रे प्रसरता क्वचिदायत्यनिघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषत्कुलम् ॥

---

ज्ञातिसख्याः पुनरेवंविध परुषाभिधायित्वमनुचितम् । अतिपारुष्यमेव चात्र विरसताहेतुः । तेनातिमात्राङ्गदः ॥ ५५ ॥

अप्रस्तुतेति । अप्रस्तुतः प्रस्तावमन्तरेण सूचितो रसो यत्र तत्तथा । एकरसप्रक्रमे हि विरोधिरसान्तरप्रस्ताव एव क्रियमाणोऽनौचित्यवान् । नह्यौचित्यमन्तरेण रसस्य प्रबन्धसम्बन्धः सम्भवति । यदाह । अनौचित्यादृते नास्ति रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परेति । तव वनवास इत्यादौ पितृमरणानुभवप्राप्तशोकप्रकर्षाया' शृङ्गारप्रस्तावना विरसायते । सा हि स्वभावत एव करुणेन सह एकवाक्यसमावेशविरोधिनी । न चैवास्य बाध्यत्वमङ्गभावो वा अवगम्यते । नाप्युभयोरप्य गुणीभावोऽवगम्यते । येनाय विरोधः समाधीयते । युक्तिरत्र विदग्धैव । अर्थस्तु रसात्माविरोधेन पदस्वधाति तत' कान्तिविपर्य्ययाङ्गदः । न च करुणोक्ति' उपक्रान्ता यतस्तदनिर्वाहे खेदसम्भावना स्यात् । किन्तु पितृमरणशुच जहीहीत्यनेन शोकाविष्टाया शृङ्गारप्रस्तावना । तथाच भिन्नमेव दुष्टताबीज तदेतत् सर्वमपि सम्भाय व्याचष्टे । अत्रेति ॥ ५६ ॥

इदानीमनौचित्यरूपदूषणप्रस्ताव. । अर्थालङ्कारेषु उपमाप्रधानमिति प्रसिद्धा तस्यामेवोपलक्षणतयाऽनौचित्य प्रपञ्चयति । हीनमित्यादि । हीनमपकृष्टमसज्जातीयमुपमानमित्युपमानप्रसिद्धा विशेषा उपमेये प्रतिबिम्बकल्पनाश्च प्रतीयन्त इत्युक्तम् । उत्कृष्टजातीयस्य उपमेयस्य हीनजातीयेन सामान्यमभिधीयमानं शाब्दन्यायेन बोधयदनुचितमेव भवति । यथा । रणाश्वमेधे पशुतामुपागता

अत्र शौर्य्यशालिनः शुनोपमितत्वाद्धीनोपममिदम् ॥ ५७ ॥

तदेव यस्मिन्नधिकं तद्भवेदधिकोपमम् ॥

यथा, अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥

अत्र चक्रवाकस्य जगत्स्रष्ट्रा ब्रह्मणा उपमितत्वादधिकोपममिदम् ॥ ५८ ॥

यत्त्वतुल्योपमानं तद्भदन्यसदृशोपमम् ।

यथा, णमह हरं रोसाणलणिद्दड्ढमुद्धमम्महसरीरम् ।
वित्थअणिअम्बणिग्गअगङ्गासोत्तं व हिमवन्तम् ॥ (घ)

अत्र कोपानलनिर्दग्धमुग्धमन्मथशरीरस्य हरस्य नितम्ब-

---

(घ) नमत हरं रोषानलनिर्दग्धमुग्धमन्मथशरीरम् ।
विस्तृतनितम्बनिर्गतगङ्गास्रोतसमिव हिमवन्तम् ॥

---

इति । ननु अत्र रूपकबलेन वर्णनीयस्य पशुतावगम्यत इति युक्तमनौचित्यम् । क्वचिदग्र इत्यादौ प्रकृतोदाहरणे तु कथम् । न हि अत्र प्रस्तुतोपश्लोक्यस्य सारमेयता अवगम्यते । अग्रे प्रसरणमायत्यनिह्ननञ्च सादृश्यमुपात्तमुचितमेवेति नैतत् । तत्प्रतिबिम्बे सादृश्यप्रतीतिरपि शब्देन क्रियमाणा लोके कान्तिं परिपुष्णाति न हि कदापि हीनेन सादृश्योक्तौ वर्णना सजीवा प्रतीयते । प्रतीतिमात्रपरमायत्तं काव्यदर्शनमिति ॥ ५७ ॥

तदेवेति । हीनेनोत्कृष्ट यथा नोपमीयत इति लोकमर्य्यादा तथा उत्कृष्टेन हीनम् । तथाहि । चक्रवाकोपमितिम् अनुसन्दधता विशेषावगतिविधुराणाञ्च सहृदयानां प्रतीतिः स्खलन्ती जनयत्येव वैरस्यमिति ॥ ५८ ॥

इदमपरमायातमनौचित्यं यत्सादृश्यबुद्ध्या निबन्धेऽप्यसादृश्यपर्य्यवसानमित्याह । यत्त्वतुल्येति । यद्यपि बलवत्त्वादिना प्रतीयमानं हिमवद्भगवतोरस्ति सादृश्यं तथापि वाच्योपमामभ्रेणाय निबन्धः सा च न सम्पन्ना न हि रोषेण निर्दग्धमन्मथ-

निर्गतस्रोतसा हिमवद्गिरिणा सह असादृश्यादिदमसदृशोपमम् ॥ ५९ ॥

अप्रसिद्धोपमानं यदप्रसिद्धोपमं हि तत् ॥

यथा,

कुमुदमिव मुखं तस्या गौरिव महिषः शशीव काव्यमिदम् ।
शरदिव विभाति तरुणी विकसितपुलकोत्करा सेयम् ॥

अत्र कुमुदमुखयोर्गोमहिषयोः काव्यशशिनोश्च प्रतीयमाने शरत्तरुण्योश्च अभिधीयमाने सादृश्ये उपमानोपमेयभावस्य अप्रसिद्धत्वादप्रसिद्धोपममिदम् ॥ ६० ॥

यदलङ्कारहीनं तन्निरलङ्कारमुच्यते ।

---

शरीरदाहो विस्तृतनितम्बनिर्गतगङ्गास्रोतः प्रविविम्बभूतः धातुरङ्गरञ्जितो गङ्गाप्रवाहोऽभिमतश्च भवति । ललाटनेत्राग्निज्वालाप्रतिविम्बमित्यपि न वाच्यम् । येनान्धत्वप्रसङ्गात् । नितम्बसम्बन्धोक्तिश्च न सङ्गता स्यात् । कथञ्च मन्मथशरीरदाहः प्रतिविम्बायत इत्याशयेन व्याचष्टे । अत्रेति । विशेषणयोर्बिम्बप्रतिविम्बभावाभावे विशिष्टयोरुपमा न सम्भवतीति मत्वा विशेषणद्वयमदोषायैवेति व्याख्यातवान् ॥ ५९ ॥

इदानीं कविसमयबहिर्भूतत्वेनोपमानौचितीमाह । अप्रसिद्धेति । कमलमुखयोरिव कुमुदमुखयोर्गोगवययोरिव गोमहिषयोः काव्यशब्दयोरिव काव्यशशिनोरस्ति सादृश्य सौरभादिकमेव अनुपात्तमपि प्रसिद्धतया प्रतीयमानम् । शरत्तरुण्योस्तु न तथा प्रसिद्धमिति विकसितपुलकाङ्कुरभातीत्येताभ्यामुपात्तम् । पुलक इवाङ्कुरा इति तत्राश्रयात् । विशिष्टभानस्य च द्वयानुगतत्वेनैव प्रतीयमानत्वात्तथापि पद इवालङ्कारेऽपि कविभिः अप्रयुज्यमानत्वमेव दोष इति व्याचष्टे । अत्रेति । प्रतीयमान इति । इव शब्दस्य द्योतकमात्रत्वात् । अभिधीयमानं व्याख्यातम् ॥ ६० ॥

वक्रताविशेषविशिष्टस्यैव अर्थस्य काव्यकोटिनिवेशादवक्रो हेय इत्याह ।

यथा, कोला खणन्ति मोत्थ गिद्धा खाअन्ति मडअमंसाइम् ।
उलुआ हणन्ति काए काआ उलुए वि वाअन्ति ॥ (ङ)

अत्र कोलादेः स्वरूपाद्यनभिधानाज्जात्याद्यलङ्कारासम्भवे निरलङ्कारनामायं वाक्यार्थदोषः । सविशेषणाद् गोरपत्यमित्यादेर्वाक्यदोषाद् भिद्यते ॥ ६१ ॥

अश्लीलमिति निर्दिष्टमश्लीलार्थप्रतीतिकृत् ॥

यथा, उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥

अत्र उद्यतस्य परं हन्तुमिति सम्भोगारम्भविषया, स्तब्धस्य विवरैषिण इति वराङ्गविषया, पतनं जायतेऽवश्यमिति रेतो-

---

(ङ) कोला खनन्ति मुस्ता गृध्रा खादन्ति मृतकमांसानि ।
उलूका घ्नन्ति काकान् काका उलूकानपि वायन्ति (क्षिपन्ति) ॥

---

यदिति । वक्रताव्यतिरेकेऽलङ्कारसामान्यमेव न स्यादिति निरलङ्कारमित्युक्तम् । वीगतिव्याप्तिप्रजनकान्त्यसनखादनेष्विति धात्वनुसारात् । नन्वस्ति कोलादिस्वरूपमेव । ततो जात्यलङ्कारेण वक्रत्वमाक्षिप्यते । विशेषस्य च सामान्याविनाभावित्वात्कथमुच्यते निरलङ्कारमित्यत आह । अत्रेति । स्वरूपञ्च चमत्कारकारि कविप्रतिभामात्रप्रकाशनीयं रूपं तदेवालङ्कारकत्वामभिधीयते । न चात्र तथा किञ्चिदभिहितमतो न जात्यलङ्कारः । एवमन्योऽप्यलङ्कारो नास्ति । कथं तर्हि वक्रताऽभावरूपं दीर्घपुच्छ इत्यादेः शब्ददोषाद्भिद्यते तदाह । सविशेषणादिति । तत्र विशेषणप्रयोगे शब्दानामेव वक्रता व्यतिरेकेण अपवाद इति शब्ददूषणमिह तु न तथा । किन्तु उक्तमेव स्वरूपं न वक्रमिति वाक्यार्थ एव दुष्टः ॥ ६१ ॥

अश्लीलमिति । उद्यतस्येति । परमन्यं हन्तुमुद्यतस्य विवरैषिण इति प्रमादच्छिद्रान्वेषिणः स्तब्धस्य आत्मनि उत्कर्षाभिधानेन अन्यानवधीरयतः पतन-

विसर्गविषया, कृच्छ्रेण पुनरुन्नतिरिति नष्टरागप्रत्यानयनविषया अश्लीलवाक्यार्थविषया प्रतीतिर्भवति ॥ ६२ ॥

विरुद्धं नाम तद् यत्र विरोधस्त्रिविधो भवेत्।
प्रत्यक्षेणानुमानेन तद्वदागमवर्त्मना ॥
यो देशकाललोकादिप्रतीपः कोऽपि दृश्यते।
तमामनन्ति प्रत्यक्षविरोधं शुद्धबुद्धयः ॥

तत्र देशविरोधो यथा,

सुराष्ट्रेष्वस्ति नगरी मथुरा नाम विश्रुता।
अक्षोटनारिकेलाढ्या यदुपान्ताद्रिभूमयः ॥

अत्र सुराष्ट्रेषु मथुरा नाम नास्ति तत्पर्य्यन्ताद्रिभूमिषु च अक्षोटनारिकेराणामभावात्। देशोऽद्रिवनराष्ट्रादिरित्ययं देशकृतः प्रत्यक्षविरोधः ॥ ६३ ॥

कालविरोधो यथा,

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती।
मधुरुत्फुल्लनिचुलो निदाघो मेघनिस्वनः ॥

अत्र पद्मिन्या नक्तं, कुमुद्वत्या अह्नि, मधौ निचुलाना-

---

लावश्यकमुन्नमः कृच्छ्रादिति ससर्गोऽभिमतः। एषामेव पदार्थानां संसर्गान्तरमश्लीलमेवेत्याह। अत्र उद्यतस्येति। एतेन पददोषाद्भेद उक्तः ॥ ६२ ॥

देशकालादेः काव्याङ्गत्वात्तद्विरोधेन अर्थो दुष्टः। विरोधश्च बाधः। सप्रमाणेनैव ततो लोकादिविरोधस्य अलङ्कारसमयसिद्धस्य प्रमाणविरोधपर्य्यवसायित्वं विवक्षन्नाह। विरुद्धमिति। तत्र देशकालादौ प्रत्यक्षत एव वर्ण्यमानस्य अभावो निश्चीयत इति देशादिविरोधः प्रत्यक्षविरोधः। शूरसेनेषु मथुरा न सुराष्ट्रेषु। तत्पर्य्यन्तभूमिषु अक्षोटा नारिकेला वा न सम्भवन्ति। अद्रीणां कथं देशत्वमित्यत आह। देशोऽद्रिवनराष्ट्रादिरिति ॥ ६३ ॥

पद्मिनीति। नक्तं रात्रौ मधुर्वसन्तः निचूलः इज्जलः। ते वर्षासु पुष्प्यन्ति

मुन्निद्रत्वाद्यभावात् निदाघस्य चामेघदुर्दिनत्वात् कालो नक्तन्दिनत्त्वेव इति कालकृतोऽयं प्रत्यक्षविरोधः ॥ ६४ ॥

लोकविरोधो यथा,—

आधूतकेशरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः ।
गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥

अत्र हस्तिहयैरण्डखदिराणां केशरादिसद्भावस्य प्रत्यक्षेण अनुपलम्भात् । जङ्गमः स्थावरो लोक इति लोककृतोऽयं प्रत्यक्षविरोधः ॥ ६५ ॥

युक्त्यौचित्यप्रतिज्ञादिकृतो यस्त्विह कथन ।
अनुमानविरोधः स कविमुख्यैर्निगद्यते ॥

तत्र युक्तिविरुद्ध यथा ।

सुरहिमहुपाणलम्पडभमरगणावद्धमण्डलीवन्धम् ।
कस्स मणं णाणन्दइ कुम्मीपुठ्ठट्ठिअं कमलम् ॥ (च)

---

(च) सुरभिमधुपानलम्पटभ्रमरगणावद्धमण्डलीबन्धम् ।
कस्य मनो नानन्दयति कूर्मपृष्ठस्थित कमलम् ॥

---

न वसन्ते । यद्यपि कालस्वरूपमप्रत्यक्ष तथापि तदुपाधीना व्यवहाराद्गतेव प्रत्यक्षता चेत्याह कलानक्तन्दिनत्त्वेव इति ॥ ६४ ॥

अन्ते प्रत्यक्षविरोधशब्दार्थ व्याचष्टे । प्रत्यक्षेण अनुपलम्भादिति । कथमय लौकिकविरोध इत्यत आह । जङ्गमेति । जङ्गमस्थावर जीवच्छरीर लोक. । तत्र जङ्गम गवाश्वादि स्थावर लतावृक्षादि राष्ट्रादावेव देशपरिभाषा इद प्रकारान्तरेण देशशब्देनाभिधीयते ॥ ६५ ॥

युक्तीति । सामान्यतस्तादवनुमानविरोधो यत्प्रमाणाभाव' न हि प्रमेयाभावे प्रसिद्धम् । तदयमर्थो युक्ति. प्रमाणम् । आधूतकेसरेत्यादौ उदाहरणे

अत्र कूर्मपृष्ठे कमलोद्गतेः अयुक्तियुक्तत्वाद् युक्तिविरुद्ध-मिदम् ॥ ६६ ॥

औचित्यविरुद्धं यथा ।

पट्टंसुउत्तरिज्जेण पामरो पामरोए परिपुसइ ।
अइगरुअकूरकुम्भीभरेण सेउल्लिअं वअणम् ॥ (क)

अत्र पामरस्य पट्टांशुकोत्तरीयावरणानौचित्याद् औचित्य-विरुद्धमिदम् ॥ ६७ ॥

प्रतिज्ञाविरुद्धं यथा,

यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता ।

---

(क) पट्टांशुकोत्तरीयेण पामरं पामर्य्याः प्रोञ्छति ।
अतिगुरुककूरकुम्भीभरेण खेदार्द्रितं वदनम् ॥

---

क्वचिदेव व्यक्तिविशेषे केसरादिसम्बन्धप्रतिपादनं कथमन्यथा तेषामेरण्डन्निर्दि-शति । ततो भवति प्रत्यक्षेणैव विरोध इह तु न तथा । न हि विशेषत कापि कूर्मपृष्ठव्यक्तिरस्तीति सामान्याकारेण विवक्षितम् । ततश्च कमलजाते. पङ्कजप्रभवाया एव निश्चयात् कूर्मपृष्ठादुद्गमे न कश्चित्प्रमाणं कदापि कस्याप्य-वतरतीति आशयवान् व्याचष्टे । अत्रेति । अयुक्तियुक्तत्वादिति । युक्तिं प्रमा-णत्वेनासम्बद्धत्वादित्यर्थः ॥ ६६ ॥

औचित्यविरुद्धमिति । औचित्य योग्यता तस्य विरुद्धं परामृश्यमानस्य विव-क्षितविपरीतपर्य्यवसानम् । एषोऽपि अनुमानविरोधः । तथाहि । पट्टांशुकमित्यत्र अपूर्ववत् सम्बन्धग्राहकप्रमाणाभावः । कदाचिद्राजप्रसादादिना तथा सम्भवात् । किन्तु पामरौचित्यप्रतिसन्धाने पट्टांशुकावगुण्ठनमनुचितम् । विदग्धनेपथ्यपरिग्रहा-दिनागरवृत्तापरिचय एव पामरत्वम् । ततश्चायमर्थो भवति पट्टांशुकसम्बन्धा-योग्येयं पामरत्वादिति । कूरं भक्तम् । कुम्भी कलशी ॥ ६७ ॥

माता च मम वन्ध्यासीत् स्मराभोऽनुपमो भवान्॥

अत्र स्वयं वक्तुरेव यावज्जीवमहं मौनीत्यादिपदानामुक्त्या प्रतिज्ञाविरोधात् प्रतिज्ञाविरुद्धमिदम्॥ ६८॥

धर्मार्थकामशास्त्रादिविरोधः कोऽपि यो भवेत्।
तमागमविरोधाख्यं दोषमाचक्षते बुधाः॥

तेषु धर्मशास्त्रविरोधो यथा,—

असावनुपनीतोऽपि वेदानधिजगे गुरोः।
स्वभावशुद्धस्फटिको न संस्कारमपेक्षते॥

अत्रानुपनीतस्य वेदाध्ययनानधिकारात् धर्मशास्त्रविरोधः॥ ६९॥

अर्थशास्त्रविरोधो यथा।

कामोपभोगसाकल्यफलो राज्ञां महीजयः।

---

प्रतिज्ञाविरुद्धमिति। अभ्युपगमवाक्य प्रतिज्ञा। यथा। यद्यदादिशति स्वामी तत्करोम्यविचारयन्निति। साध्यनिर्देशश्च। अथ स रसनोत्कर्षी पीनस्तनविमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रसनं कर इति। इयमपि प्रतिज्ञापदेनाभिमतम्। तत्राद्ये यावज्जीवमहम्मौनी इत्युदाहरणम्। अव्याहारो मौनम्। तदभ्युपगमवाक्येनैव बोध्यते। तथाहि। नाय मौनी वचनवत्त्वादित्यभ्युपगम्य मौनाभावपर्य्यवसन्नमिति तृतीयोऽयमनुमानविरोध। द्वितीयपक्षकक्षीकरणेन चतुर्थोदाहरणे ब्रह्मचारी च मे पिता माता च मम वन्ध्येति वक्ता यस्यौरसः सुतः। स पितृपदेनाभिमतो न च ब्रह्मचारित्व सम्भवति। माता जननी एव अभिधीयते न च तस्या वन्ध्यात्व सम्भवति। परस्परव्याघातो विरोध। अयञ्च पञ्चमप्रकारो यद्व्यापकद्वारा विरोधः। यथा। स्मराभोऽनुपम इति। न हि स्मराभत्वं लोके प्रसिद्ध किन्तु स्मरतुल्यता वदन् सोपमानत्वमभ्युपगच्छति। तच्चानुपमत्वेन विरुद्धम्। ततो व्यापकविरोधोऽयम्। यथा वह्निरनुष्ण इति। आदिग्रहणाद्दृष्टान्तद्वारकोऽनुमानविरोधः सङ्गृहीतः॥ ६८॥

वेदाध्ययनानधिकारादिति। अकृतव्रतबन्धे तु गुरावुपरते सति। नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृत इति धर्मशास्त्रम्॥ ६९॥

अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया ॥

अत्र महीजयस्य फलत्वेन कामोपभोगानामर्थशास्त्रकारैः अननुमतत्वात् शत्रुविजये च अहङ्कारस्य अहेतुत्वादर्थशास्त्रविरोधः। कामशास्त्रविरोधो यथा,—

तवोत्तरोष्ठे बिम्बोष्ठि! दशनाङ्को विराजते।
पूर्णः सप्तस्वरः सोऽयं भिन्नग्रामः प्रवर्त्तते ॥ ७० ॥

अत्र उत्तरोष्ठे दशनाङ्कस्य कामशास्त्रकारैः अननुज्ञातात् कामशास्त्रविरोधः। भिन्नग्रामाणां च पूर्णसप्तस्वरत्वानुपपत्तेः। कलाविरोधेऽपि तदङ्गत्वात् कामशास्त्रविरोध एव ॥ ७१ ॥

एवं पदानां वाक्यानां वाक्यार्थानाञ्च यः कविः।

---

अत्र महीजयस्येति। महीजयस्य धर्मः फलमिति नीतिशास्त्रे स्थितम्। अहङ्कारो मानः स नः शत्रुविजये साधनम्। अरिषड्वर्गत्यागे हि इन्द्रियजय.। तथा विजिगीषुता। तया च शत्रुपरिभव इति। यदाह। स रघुराज्ञो विललास इत्युपक्रम्य कौटिल्याचार्यैः मानाद्रावणः परदारानप्रयच्छन् दुर्योधनो राज्याश्च चेति ॥ ७० ॥

अत्र उत्तरोष्ठ इति। उपरितन ओष्ठ उत्तरोष्ठमन्तर्मुखं नयनान्तञ्च मुक्त्वा चुम्बनवद्दशनच्छेद्यस्थानानीति कामसूत्रम्। भिन्नग्रामरागाणामिति। भिन्नमार्गेषु सप्तस्वराणा समवायो नोपनिबद्धस्तथा सुप्रांशुस्तु धैवतन्यास. पञ्चमर्षभवर्जितः षड्जो दीव्यता जाती भिन्नषड्ज उदाहृतः। तमङ्गोऽप्याह। षाड्वौडविके जाती भिन्नग्राम उदाहृतः। ततश्च षड्वा पञ्चवा स्वरा भवन्ति भिन्नग्रामे न तु सप्त। कामशास्त्रविरोधप्रस्तावे कथं कलाविरोध उदाह्रियत इत्यत आह। तदङ्गत्वादिति। गीतादिकला चतुःषष्टिः कामाङ्गतया कामसूत्रकारैरुपदिश्यन्ते इति तद्विरोधे कामशास्त्रविरोध इत्यर्थः। आदिग्रहणाद्देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसम्पदित्यादिक मोक्षादिशास्त्रविरुद्धमुदाहरणीयम् ॥ ७१ ॥

दोषाणा प्रथममुद्देशो यमभिसन्धाय कृतः त विशेषसंहारव्याजेन स्फुटयति।

दोषान् हेयतया वेत्ति स काव्यं कर्त्तुमर्हति ॥
अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितम् ।
गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः ॥
त्रिविधाश्च गुणाः काव्ये भवन्ति कविसम्मताः ।
बाह्याश्चाभ्यन्तराश्चैव ये च वैशेषिका इति ॥
बाह्याः शब्दगुणास्तेषु चान्तरास्त्वर्थसंश्रयाः ।
वैशेषिकास्तु ते नूनं दोषत्वेऽपि हि ये गुणाः ॥
चतुर्विंशतिराख्यातास्तेषु ये शब्दसंश्रयाः ।

---

एवमिति । तदेव दोषलक्षणे वृत्ते क्रमप्राप्ता गुणा लक्षयितव्याः । तदेवमोजः-प्रसादादयो गुणाः । यमकादयस्त्वलङ्कारा इति पूर्वप्रसिद्धौ सत्यां विचार्य्यते । किमेषां मिथोभेदनिबन्धनं कथञ्चालङ्कारेभ्यो गुणानां पूर्वनिपातः । रसस्य हि दोषाभावादिवयसंस्कृत एव पदलाभ इत्यस्ति पश्चाद्भावे निबन्धनमिति तत्राह । अलङ्कृतमपीति । रसाविर्भाविनो गुणाः, शब्दार्थावलम्बिनस्तु अलङ्कारा इति काश्मीरकाः । तदगमकम् । तथाहि । यदि काव्यस्य रसप्रधानात्मकतामाश्रित्यायं विभागः । अलङ्कारा अपि तर्हि तत्प्रवणा एव । अथ नायन्नियमो यत्सर्वत्र रस प्रधानमिति तदा अत्र गुणेषु अपि कथं तदालम्बननियमः । किञ्चात्र प्रसादादिवत् श्लेषादयोऽपि शब्दार्थगता एव प्रत्यभिज्ञायन्ते तत्कथमयं विभागः । यद्यपि शब्दार्थौ ज्ञायन्ते तथापि रसप्रवणा इति चेत् । किमिदं रसप्रवणत्वं रसाश्रितत्वं तावन्न सम्भवत्येव । रसप्रतीतिपर्य्यवसानञ्च यथाकथञ्चिदलङ्कारेष्वपि तुल्यमिति अविचारितरमणीयोऽयं मार्गः । लोकशास्त्रवचनातिगामी कश्चित् विशेषः शोभापदाभिलप्यो भवन्नभिव्यञ्ज्यशब्दः शब्दार्थौ विषयीकरोति । ततश्च तथाभूतशोभानिष्पत्तिहेतवो गुणास्तदुत्कर्षहेतवस्तु अलङ्काराः । यदाह । काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्तु अलङ्कारा इत्यन्ये । तदपि न । यमकादिवदव्याप्तेः । न हि तेषां रीतिशरीरान्तर्निवेशः कैश्चिदभ्युपगम्यते तस्मादलङ्कारकसमयानुपाती श्लेषाद्यन्यतमो गुणः । जात्याद्यन्यतमश्च अलङ्कार इति विभागः । तत एव च शोभाकारित्वेन गुणानामप्यलङ्कारपक्ष-निक्षेपं करिष्यति । ईदृग्भूतगुणन्तु स्फुटालङ्कारहीनमपि चमत्कारमावहत्येव ।

ते तावदभिधीयन्ते नामलक्षणयोगतः ॥
श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता ।
अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥
ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता ।
तद्वत् समाधिः सौक्ष्म्यञ्च गाम्भीर्य्यमथ विस्तरः ॥
संक्षेपः संमितत्वञ्च भाविकत्वं गतिस्तथा ।
रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे ॥

तत्र, गुणः सुश्लिष्टपदता श्लेष इत्यभिधीयते ।

यथा,

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।

---

यथा । का त्व शुभे, कस्य परिग्रहो वा, किं वा मदभ्यागमकारण ते । आचक्ष्व मत्वा वशिना रघूणा मन' परस्त्रीविमुखप्रवृत्ति । यतो गुणयोगी मुख्यस्तत. प्रथममुद्दिष्टो लक्षितश्लेषः सामान्यगुणस्थितौ गुणान् विभजते । त्रिविधाश्चेति । शब्द' शरीरस्थानीयोऽधिष्ठेयतया प्रथमप्रतिसन्धेयतया च वाह्यः । ततस्तदाश्रिता गुणा अपि वाह्या. । अर्थस्त्वात्मतुल्योऽधिष्ठायकतया पश्चाद्ग्राह्यतया चाऽन्तर स्तेन तदाश्रिता गुणा अभ्यान्तराः । अथेदानीं येषामग्रे दोषत्व ततो गुण-भाव' । केचिद्विशिष्टमासाद्यते वैशेषिकाः । पूर्वं दोषा अपि विशेषयोगेन गुणीभवन्तीत्यभिप्रायात् । माधुर्य्यौज' प्रसादास्त्रय एव गुणा इति ध्वनिकारस्य मतन्निरस्यति । चतुर्विंशतिरिति । परस्परसङ्कीर्णत्वादुपाधीनामिति भाव' । न चैतदस्माकन्मनीषामात्रेण कल्पनमित्याह । आख्याता इति । निष्ठाप्रत्यये-नेद प्रथमतो द्योत्यते । उक्तविशेषादेव शब्दगुणाना पूर्वभाव इत्याह । तेष्विति । अभिधान द्विविध विभागतो लक्षणतश्चेत्याह । नामलक्षणयोगत इति । पद घटनव्यवस्थितौ गुणान्तरगवेषणमत प्रथम श्लेषलक्षणमाह । तत्रेति । श्लिष्टानि घटितानि पदानि यत्र तस्य भावस्तत्ता । न च घटनामात्रस्य गुणभाव इत्या-शङ्क्यम् । सुपद शोभना घटनेत्यर्थ । शोभनत्व घटनाया मसृणत्वमेकताप्रति-भानसामर्थ्य यदत्राह्म सूत्रसूत्र.स्थूल इति । बीजञ्चात्र श्रुत्यनुप्रासवत्त्वमल-

तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

अत्र भिन्नानामपि पदानामेकपदताप्रतिभासहेतुत्वेन सन्दर्भस्य सुश्लिष्टत्वादयं श्लेषो नाम शब्दगुणः ॥ ७२ ॥

प्रसिद्धार्थपदत्वं यत् स प्रसादो निगद्यते ॥

यथा, गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले।

---

चितमश्लिता च। तथाहि प्रकृतोदाहरणे उभावित्युकारभकारावोष्ठ्यौ। यदिव्य इत्याद्यन्तौ यकारौ तालव्यौ। न चायं वर्णानुप्रासः। ईषत् स्पृष्टत्वादिभेदात्। मध्ये दकारवकारौ दन्त्योष्ठ्यौ। कीत्यत्र मकारो भकारेण नकारो दकारेण समानश्रुतिक इत्यादि बोद्धव्यम्। तथा पृथक्प्रवाहाविति ककारस्य पवर्गगमनेकता प्रतिभासते। प्रवाहावाकाशेत्यौकारस्यावादेशेन वर्णान्तरनिष्पत्त्या॥ एव पयसः पतेतामित्यादावुन्नेयम्। पृथगिति पार्श्वद्वये। तेन वक्षःस्थलदक्षिणवामभागयोर्लम्बमानौ द्विसरौ हार इति लभ्यते। अस्य वक्ष इति। अत्रास्येति पदेन नान्यस्य हार इत्थमनुपमो न चान्यस्य वक्षःस्थलमाकाशवदुन्नतविस्तीर्णमिति भगवतः सकलजगद्विलक्षणत्वध्वनिरित्याराध्याः॥७२॥

प्रसिद्धार्थेति। अस्यार्थः प्रागेव विवृतः। प्रसादो द्विधा वाक्यविषयः, प्रतीयमानविषयश्च। तत्र प्रतीयमानविषयो यथा। एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास पार्वती। अत्र श्रुतावगतादेव वाक्याल्लज्जादयो हस्तदत्ता इव प्रकाशन्ते। वाक्यविषयो द्विधा भवति। ग्राम्यैरेव ग्राम्य उपनागरैर्वा पदैः सन्दर्भनिर्वाहे। आद्यो यथा। चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला॥ सुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम्। द्वितीयमुदाहरति। गाहन्तामिति। अत्र प्रथमपादे गाहन्ता महिषा इति ग्राम्यम्। निपानसलिलमित्युपनागरम्। शृङ्गैरिति ग्राम्यम्। मुहुरित्युपनागरम्। ताडितमिति ग्राम्यम्। द्वितीयपादे कदम्बकरोमन्थशब्दावुपनागरौ शेषाणि ग्राम्याणि। एवञ्च चरमयोरपि स्वतो विवेचनीयम्। गाहन विलोडन तन्निःशङ्कमेव भवतीति विश्रम्भध्वनिः। अत-

विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र गाहन्तां महिषा निपानसलिलमित्यादिप्रसिद्धार्थपदोपादानात् प्रसादः ॥ ७२ ॥

यन्मृदुप्रस्फुटोन्मिश्रवर्णबन्धविधिं प्रति ।
अवैषम्येण भणनं समता साऽभिधीयते ॥

यथा,—यच्चन्द्रकोटिकरकोरकभारभाजि
बभ्राम बभ्रुणि जटापटले हरस्य ।

---

एव त्रासाऽभावात् प्रकृतिप्रत्यापत्तौ । शृङ्गाभ्यां पर्य्यायेण जलताडनं महिषजातेः । छायाश्रयण यूथबन्धश्च मृगजातेः । चिरपरस्परवार्त्तानभिज्ञाना दिवानिशं पलायनेन गोमन्योऽपरिचित इवासीत्तस्येदानीं शिक्षाक्रमेण यदि परिचयः स्यादित्यभ्यस्यतु इति ध्वनिः । वराहपतिभिरिति । न यादृशतादृशानामस्मन्मृगयासरम्भगोचरत्वमिति प्रकाश्यते । ननु चात्र कर्त्तृप्रक्रमभेदो दूषणं कस्मान्न भवति । नैतत् । आपातशौण्डेषु परिणतिभीरुषु च महिषेषु स्वभावभीतेषु मृगेषु न तथायं सरम्भते यथा पुनरावृत्तिचतुरेषु प्रकारकोविदेषु च वराहेषु । ततश्च तेषामुचितक्रियासु कर्त्तृतामात्रमेव न सोढवानिति साम्प्रतं कर्त्तृताभ्यनुज्ञानेन व्यज्यते । ततस्तृतीयायामौचित्यनिवेशिन्या प्रक्रमभेदोऽप्युचित एवेति व्यक्तिविवेककारादीनामपि सम्मतः पन्थाः । इदञ्चेति चकारेण चेदस्मद्धनुरारूढमवतीर्णं वा तदेव सरम्भगोचराणां भयविस्रम्भाविति कोपप्रकर्षः । अत एवास्मदिति बहुवचनं सजीवम् ॥ ७२ ॥

यदिति । प्रतीत्यन्तेन मार्गो व्याख्यातः । अवैषम्येण भणनमित्यनेन वाम्भेदः स्वरेषु ह्रस्वान्त्याः व्यञ्जनेषु वर्गान्त्या दन्त्याश्च मृदवः कोमलावर्णाः । दीर्घाः स्वराः व्यञ्जनेषु णकारवर्जं टवर्गरेफशषहा अदन्त्यसंयोगाश्च प्रस्फुटाः । शेषाणि व्यञ्जनानि दन्त्यसंयोगाश्चोन्मिश्रम गमा वर्णास्तेषामन्यतमैर्वर्णैर्यो बन्धनविधिस्तं प्रति यदवैषम्येण उपक्रमनिर्वाहादिना करणेन भणनमुक्तिः सिद्धिः सा समता । न चेयं दोषाभावमात्रमेकजातीयवर्णपरिचयप्रबन्धप्रवेशनिर्वाहाणां शक्तिव्युत्पत्तिरूपतया प्रधानोत्कर्षपर्यवसानात् । न च दोषाभावस्यैव रूपता केनचित् प्रतिषिद्धा । अत एव श्लेषप्रसादयोरपि गुणभावः सिद्धः । ननु रक्ताशोककृशो-

तद्वः पुनातु हिमशैलशिलानिकुञ्ज-
झाङ्कारडम्बरविरावि सुरापगाम्भः ॥

अत्रोपक्रमादासमाप्तिस्फुटबन्धस्य निर्वाहात् समत्वम् ॥७४॥

या पृथक्पदता वाक्ये तन्माधुर्य्यमिति स्मृतम्।

यथा,—स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।

---

दरी क्व नु गता त्वक्कानुरक्तं जननी हन्तेति मुधैव चालयसि किं वाताभिभूतं शिरः। उत्कण्ठावटमानषट्पदघटासङ्घट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः। इत्यत्र वैषम्यं दोष एव स्यात्। न ह्यत्र मुक्तस्थाने स्फुटता। तथा-प्यल्किञ्चिदेतत्। तदेतन्निर्वाह्य वैचित्र्यात् समता त्रिरूपा भवति। ग्राम्या परुषा उपनागरिका च। तत्रोन्मिश्रप्रायसन्दर्भनिर्वाहे ग्राम्या यथा। पुरः पाण्डु-च्छाय तदनु कपिलिम्ना कृतपदस्ततः पाकोद्रेकादरुणगुणसंवर्द्धितवपुः। शनैः कोशारम्भे स्फुटनिर्जाविष्कम्भविषमे वने पीतामोदं बदरमरसत्वं कलयति। परुषा यथा। यच्चन्द्रेति। बालेन्दुमयूखमुकुलजालनिचुलितासु परमेश्वरजटावल्लरीषु समणाऽध्यासादिव अद्यापि हिमाद्रिकुञ्जेषु झाङ्कारिगङ्गाम्भ इति प्रतीयमानोत्-प्रेक्षा। उपनागरिका यथा। वसने परिधूसरे वसाना नियमक्षाममुखी धृतैक-वेणिः। अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति। अत्र अस्मत्-सहाध्यायिनः पूर्वार्द्धमेव उपनागरिकोदाहरणं मन्यन्ते। उत्तरार्द्धे हि निष्केत्यादि-वर्णनिवेशनादुन्मिश्रत्वमेव। इयमपरा उन्मिश्रा सन्दर्भजातिर्यत्कोमलकठोरवर्ण-तुल्यतया निर्वहणमिति ॥ ७४ ॥

पृथगिव पदानि यत्र भासन्ते स पृथक्पदः सन्दर्भ इत्युपमागर्भो बहु-व्रीहिश्च। तस्य भावस्तत्ता। माधुर्य्यमुक्तस्वरूपं तच्छब्दगतं पृथक्पदतया विच्छि-द्यत इति। तदेव माधुर्य्ययुक्तमौचित्येन हि समासव्यतिरेक आक्षिप्यते कदा-चिदनुद्धतो वा समासः। अनुद्धतिरनुल्लेखः। तदुक्तम्। अवृत्तिर्मध्यवृत्तिर्वा माधुर्य्ये घटना तथेति। अतएव समासनिवृत्तिपरमेतदिति वामनः। कश्चित् समासो रसौचित्येनाक्लिष्टः परिभाव्यमानो मनीषिभिश्चमत्कारकारणं भवति। यथा। तेषां गोपवधूविलाससुहृदां राधा रहःसाक्षिणां क्षेमं तत्र कलिन्दशैल-

वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥

अत्र पदेषु संहिताभावात् पृथक्पदत्वेन माधुर्य्यम् ॥ ७५ ॥

अनिष्ठुराक्षरप्रायं सुकुमारमिति स्मृतम् ॥

यथा,—मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।

---

तनयातीरे लतावेश्मनाम् । विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना ते नूनं जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः' । अत्र तच्छब्दो येषां विलाससम्पत्तिस्वभावलब्धप्रकर्षाणामनुभव एव साक्षीति विशेषप्राधान्यविवक्षया न समासेनाभिगमनात । न या कापि वधूरपि तु गोपसम्बन्धिनी कृतगोपाचारचातुरीपराधीना नान्यत्र नीरसप्राये क्वचन सौहार्दं किन्तु विलास एव । सोऽपि न यः कश्चिदपितु गोपवधूसम्बन्धीत्येव बहूनां पिण्डीभावविवक्षया समास एवोचित । एतावतैव छेदोऽप्युचित एव स्पर्धस्थायमानत्वात् । तत्सम्बन्धजनितस्य विशेषस्य पृथगेवोक्तिः उचिता । राधारहः साक्षिणामित्यत्रापि समास पूर्ववत् । यद्यपि राधासम्बन्धस्य दैवचिक प्राधान्यमिति न समासः प्रतिभासते तथापि यदन्यस्य राधारहांश्च निवेशं क्षम इति भावयन् सुहृदामित्यपहाय साक्षिणामित्युक्तवान् । साक्षी हि तटस्थ एव व्याप्रियते । तेनावश्यकर्त्तव्यसाक्षिताप्राधान्यविवक्षया सम्भवति विरोधादित्यवसेयम् । स्थिता इति । पक्ष्मावस्थानेऽधरताडने स्तनतटनिपाते वलिभङ्गस्खलने नाभिनिम्नप्राप्तौ जलबिन्दूनां कर्तृतानिर्देशात् स्वाच्छन्द्यमुन्मीलितम् । तथाच गौर्य्या बाह्यसंवेदनाभावस्तेन भगवन्तोऽनुरागप्रकर्ष प्रथमपादेन । निदाघतापच्छिदा रजोहरणेन वसुन्धरा सौरभोन्मीलनेन मयूरकेकायितादिना त्रिभुवनस्यापि ये चमत्कारास्पदमिति ध्वनितम् । तथाभूतानामथ संवेदने पूर्वं एवाभिप्राय । ताडितेत्याकारेण छेदोन्मेष पयोधरेत्यादावोकारः ॥ ७५ ॥

अनिष्ठुरेति । समस्त एव गुम्फे द्वित्राणि त्रिचतुराणि प्रस्फुटानि अक्षराणि निवेश्यन्ते स विलासान्तरान्तरोपदर्शन्यायेन चित्रास्वादपर्य्यवसायी सुकुमार इति आचार्यमतम् । अतएव समताया भेदः । मृद्वीकापाकः पुनरन्यादृशो वक्ष्यते । अनिष्ठुरे सुकुमारव्यवहारो लोके दृष्टः । मण्डलीकृत्येत्यादौ प्रथमपादे मण्डेति, कृत्येति, बर्हेति । अत्र संयोगत्रयम् । द्वितीयपादे ण्ठेति र्मेति, च संयोगद्वय-

कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥

अत्र सर्वकोमलत्वे सति श्लेषविपर्य्ययदोषशैथिल्याभावात् बाहुल्येन वर्णानामनैष्ठुर्य्यात् सौकुमार्य्यम् ॥ ७६ ॥

यत्र सम्पूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम्।

यथा,—वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ॥
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।

अत्र वाक्यपरिपूर्णतयार्थसमर्थकत्वादर्थव्यक्तिः ॥ ७७ ॥

यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते ॥

यथा,—निरानन्दः कौन्दे मधुनि विधुरो बालबकुले।

---

सुपन्यस्य गीतिदीर्घस्वरनिवेशी रूपान्तरमादाय विशेषशोभाहेतुः। तृतीयपादे केति न इति प्रतिनृत्यन्तीति च दीर्घविसर्गसंयोगा इति व्यन्तरम्। चतुर्थपादे दीर्घस्वरा एवान्तरान्तरेति सैव वासना। ननु अनिष्ठुराक्षरमयत्व सुकुमारतेति वक्तव्ये प्रायशब्द केन प्रयोजनेनेत्यत आह। अत्रेति। न चायमर्थगुण' स हि वाक्यार्थे धर्मिणि निरूप्यते अयन्तु पदसमुदाय इति युक्त शब्दगुणेषु परिगणनम्। सम्मितत्वमन्यथा भविष्यति ॥ ७६ ॥

'वागर्थौ विवेति। अत्र वन्दे इत्युत्तमपुरुषवचनेनैवाहमिति प्राप्तमस्मद्युत्तम इत्यत्र स्थानिनीत्यभिधानात्। किमिति कर्मापेक्षाया पार्वतीपरमेश्वराविति। तावपि किम्भूतावित्यतो जगत पितराविति। तेन लक्ष्मीनारायणादिवैधर्म्येण नमस्कार्य्यत्वम्। एकशेषशब्देनैव मातृशब्दाय। स्त्रीपुंसयोरित्यौचित्याद्वागर्थौ विवेति। किमर्थं नमस्कुरुत इत्यत्र वागर्थप्रतिपत्तये इति। तदेव यादृशो यावांश्च विशेषणविशेष्यप्रकारोऽभिमत. स सर्व एव वागित्याद्युपात्तशब्दसमुदायमात्रेण निष्प्रत्यूहमवगम्यत इत्यर्थव्यक्तिशब्दार्थव्याख्यानेन स्फुटयति। अत्रेति। अर्थसमर्पकत्वमित्यनेन शब्दगुणता व्यक्तीकृता ॥ ७७ ॥

यदुज्ज्वलत्वमिति। किम्पुनरिदमुज्ज्वलत्व नाम। केचिदाहुरनुप्रासबहुलत्वमिति। तदसत्। तस्या सुस्राव नेत्राभ्या वारि प्रणयकोपजम्। कुशेशय पत्राभ्यामवश्यायजल यथेत्यादावनुप्रासबहुलता सम्भवति एवंविध हि पुराण-

न साले सालम्बो लवमपि लवङ्गे न रमते।
प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
स्मरन् लक्ष्मीलीलाकमलमधुपानं मधुकरः॥

अत्र बन्धस्य छायावत्त्वेन औज्ज्वल्यं तदेव च कान्ति-रुच्यते॥ ७८॥

विकटाक्षरबन्धत्वमार्य्यैरौदार्य्यमुच्यते॥

यथा,—आरोहत्यवनीरुहं प्रविशति श्वभ्रं नगैः स्पर्द्धते।

---

च्छायमामनन्ति। कान्तिविपर्य्ययः पुराणी छाया। यथा। व्रजति गगनभल्ला सक्या दवेन सहोपमामिति। अतएवाह। पुराणचित्रस्थानीय तेन बन्ध्य कवे-र्वच इति। तस्मादप्रहतपदैरारम्भः सन्दर्भस्यैव कान्तिः। तद्यथा। कुसुमस्य धनुरिति प्रहतम्। कौसुममित्यप्रहतम्। जलनिधाविति प्रहतम्। पयि-जलधौत्यप्रहतम्। गुरुत्वमिति प्रहतम्। गौरवमित्यप्रहतमित्यादि। अतएव प्रहतशङ्का। चमत्कारित्वन्तु सहृदा ह्लादकत्वमस्ति हि तुल्येऽपि वाचकत्वे पदानां कश्चिदवान्तरो विशेषो यमधिकृत्य किञ्चिदेव प्रयुञ्जते महाकवयो न तु सर्वं यथा पल्लव इति वक्तव्ये किसलयमिति। स्त्रीति वक्तव्ये कान्तेति कमलमिति वक्तव्ये राजीवमित्यादि। एतदेव महाकविभिरूपेयते। कत्तिमणाम इस सुचड्डविए सम समग्गेसु। सीमठे उण सुस्मितग्गिसचणवच्छेश। कान्तवर्णानु-प्रासोऽपि कान्त एव भवतीति मत्वाऽनुप्रासोत्कटमुदाहरति। निरायन्द इति। अस्ति कुन्दे मधुपरं न कमलसजातीयमित्यासक्तो नानन्दमलभत। कुन्दस्येति प्रहत कौन्दमित्यप्रहतम्। बालत्वे वकुलकुसुमानां न मधुप्रादुर्भाव इति एतत्काले रतिं न प्राप्तवानिति विधुर इत्यनेन व्यज्यते। कालान्तरेऽपि शाले मधुनोऽसम्भवा-दालम्बः प्रत्याशामात्रमन्त्रोऽपि न तस्यासीत्। आमोदप्रकर्षादन्त चण निपत्य रसमनासादयल्लवङ्गमनुसरतीति लवमित्यनेन ध्वन्यते। एमसुत्तरार्द्धेऽपि पद स्वरसो गवेषणीयः। उक्तमेव विशेषमभिसन्धाय व्याचष्टे। अत्रेति। छायौज्ज्वल्य रूढिकाष्ठतया लोके प्रसिद्धं तदिह यथा शब्देषु सङ्गच्छते तथा पूर्वाचार्य्यै-र्विवेचनीयमित्यभिप्रायः॥ ७८॥

। विकटैरक्षरैर्बन्धो यस्य तस्य भावस्तत्त्वम्। अस्ति तावत् नृत्य-

खं व्यालेढि विचेष्टते क्षितितले कुञ्जोदरे लीयते ॥
अन्तर्भ्राम्यति कोटरस्य विरसत्यालम्बते वीरुधः ।
किं तद् यन्न करोति मारुतवशं यातः कृशानुर्वने ॥

अत्र विकटाक्षरबन्धत्वेन नृत्यद्भिरिव पदैः यद्वाक्यरचना सा उदारता ॥ ७९ ॥

श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता ॥

---

न्तीव पदानीति सहृदयानां क्वचिदर्थे व्यवहारः । स च न निर्विषयो माधुर्यस्य विशेष इति ततप्रमाणकमेव गुणान्तरमवस्थितमिति कश्चिदाचष्टे । तथा तु न कथञ्चित् स्वरूपमुद्भिद्य दर्शितं भवति । अन्ये तु विसर्गानुप्रासादिशून्यत्वमनेनाभिमतमित्याहुः । तदपि न । ओजित्याऽवहिर्भावप्रसङ्गात् । तस्मादिदमत्र वाच्यम् । विकटानि विशालानि प्रभूतानीति यावत् । तथाभूतानि अक्षराणि दीर्घानुस्वारादिरूपाणि सहृदयसंवेदनीयानि । अतएव नृत्यतुल्यता । यथाहि नृत्ये अङ्गानामङ्गुल्यादीनामाकुञ्चनप्रसारणक्रमेण रञ्जकत्वं तथात्रापि । तथाहि आरोहतीत्यादौ प्रथमपादे आकारौकाराभ्यां प्रसारः । हन्येवेति सङ्कोचः । नीरुह इतीकारविसर्गाभ्यां प्रसारणम् । नगैः स्पर्द्धत इति विसर्गसंयुक्ताक्षरैर्विकाशः । द्वितीयपादेऽपि प्रसारणेनोपक्रम्यत इति नैव निर्वहणमन्तरान्तरावरोहक्रमो भवति । न चात्र यतीनां सन्निवेशोऽभिमतः । मारुतवशं यात इत्यनेनोन्मादरोगगृहीत इति शब्दमूलानुसन्धानबलेन अवगम्यते । उन्मादगृहीतोऽपि वृक्षारोहणादिकमसमञ्जसमव्यवस्थितञ्च करोति । नव इत्यनेन यत्र सर्वथैव प्रतीकारासम्भव इति निरङ्कुशोन्मादचेष्टितमेव उपहस्यति । नगैः स्पर्द्धते पर्वतोच्छ्रायमनुकरोतीति दूरप्रसृत उन्मादः । खं व्यालेढीत्यत्रापि तथैवाभिप्रायः । किन्तद्यदिति न शक्यते गणयितुम् उन्मादचेष्टितानीति प्रकाशन्ते इति ग्रन्थिलाविच्छेदात् । प्रसारणस्य पर्य्यवसानं वनेत्यनेन प्रविशतीति सङ्कोचः । अतएव परस्परपदयोर्निरन्तरमावापः कान्तिविशेषकरत्वादुपादेय एव भवतीति ॥ ७९ ॥

श्लाघ्यैरिति । उत्कर्षवानुदात्तो लोके प्रसिद्धो बहूनां मध्ये यः श्लाघते स उत्कर्षवांस्तेन श्लाघ्यत्वमुदात्तलक्षणं तदिह काव्ये वाक्यार्थपोषाधायकतया सहृदय-

यथा,—श्रुत्वायं सहसागतं निजपुरात् त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दतिम्यत्पुटाः।
शुभ्रे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च सशाद्वले विवलितग्रीवैर्विमुक्ता दृशः॥

अत्र शुभ्रे पल्लविनि नवाम्भोरुहि इत्यादिश्लाघ्यविशेषणोपादानात् उदात्तता॥ ८०॥

---

हृदयावर्जनक्षमत्वेन श्लाघाविषयत्वे विशिष्यतस्य वाक्यार्थोऽतस्तद्विशेषणपदेषु यथोक्तरूप उत्कर्षोऽभिमतोऽनुदारश्चायङ्गुण इति स्वरूपविशेषकतात्कान्तिशरीरान्तर्गतात् चमत्कारित्वात् भिद्यते न चात्र सुहृतिरभिमतेति नैकमपि कान्तिरूपमस्ति। अतएव पुराणच्छायमुदाहरति। श्रुत्वेति। श्रुतिमात्रेणैवेयं दशा दर्शनेतु न ज्ञायते कथ भविष्यतीति। यमिति। न हि अन्यस्य श्रुतमात्रस्य तादृशप्रभावसम्भावना। सहसेति। यावत् क्रीडासहचराणां धवलगृहादीनामपि च प्रेमानुरूपमापृच्छ्यते तावानपि समयो न लब्ध इति ध्वन्यते। आगतमिति। निष्ठाप्रत्ययेन चेदिच्छति सिद्धमेवागमनमिति द्योतयति। निजेति। यस्यान्येन धर्षणं स्वप्नेऽपि न बुद्धिविषय आसीत्। सोपद्रवस्यापि यस्य न त्यागः कदापि कथञ्चिदभूदिति व्यज्यते। निर्गच्छतामिति। हृदयवैमुख्येन पुनः पुनरवतिष्ठमानानामसम्भवद्रूप निर्गमनमिति द्योत्यते शत्रूणामिति बहुवचनेन यदेकावस्कन्दमुद्दिश्य अयं प्रचलति तदा सर्वेषामिय दशा भवतीति प्रत्याय्यते। अतएव असमासः सजीवः। वियोगवेदनादूनमानसानामुद्गतोऽपि वाष्पस्रावाटन्तरैव विच्छिद्यत इति लवपदेन ध्वन्यते। पुनः समागमाशंसनशीलानाममङ्गलभिया वाष्पस्तम्भो लवपदरहस्यमित्येके मन्यन्ते। अन्यस्य वाष्पस्य निर्गमनानुपपत्तौ पुटयोरार्द्रभावमात्रम्। शुभ्र इति। यत्र चन्द्रातपेन पल्लविताः कान्तयः चण्डाविलासविहारेषु कामपि रसमात्राम् उत्कर्षयन्तीति व्यनक्ति। तदनन्तरमेव वाप्यामित्याह। नवाम्भोरुहीति। पूर्ववत्सम्भोगोद्गार सशाद्वल इत्यनेन रतिकुतूहलोत्कण्ठितानामद्रिशृङ्गारोहणश्रान्तानां तदेवास्तरणमिति प्रकटीक्रियते। विवलितग्रीवतया च पद्भ्यां पलायनमेव न तु शरीरवलनमपीति। शृङ्गाराद् भयानक एव रसःस्थायीति ध्वनितम्। तदेतत् सर्वमभिप्रेत्याह। अत्रेति॥८०॥

ओजः समासभूयस्त्वम् ।

यथा,—जयति भुजगरज्जुग्रन्थिनिष्पीड़ितेन्दु-
स्रवदमृतनिवृत्तप्रेतभावैः कपालैः ।
विरचितनुतिबन्धो मूर्द्ध्नि सद्यः पुरारेः
परिणतबहुकल्पब्रह्मणा ब्रह्मघोषः ॥

अत्र भुजगरज्जुग्रन्थीत्यादिना समासभूयस्त्वात् ओजः ॥८१॥

और्ज्जित्य गाढ़बन्धता ।

यथा,—अस्मिन्नीषद्दलितविततस्तोकविच्छिन्नभुग्नः
किञ्चिल्लीलोपचितविततः पुञ्जितश्चोत्थितश्च ।

---

अरीतिमत्करणोक्तमभिप्रेत्यौजोलक्षणमाह । ओज इति । वैपुल्यवृत्तेर्बहु-शब्देयसुनि भूय इति रूपम् । तथाच समासस्य भूयस्त्वं वैपुल्यविकटत्वमिति यावत् । न चैव गौडीया रीतिरेवेयमिति वाच्यम्। क्वचित् समासभूयस्त्वाभावस्यैवौचितीवशेन विशेषशोभावहत्वात् । यथा । वाद्यन्ति दिग्गण्डकपणैर्भग्नसत्ता इति । न च समासाभावो नौचित्य । तद् यदि एक एव समासो रूपभेदमादाय गुणत्वमनपरारत्वस्य प्रयोजयतीति किमनुपपन्नम् । एव प्रकृतोदाहरणेऽपि । तथाहि । परिणता परिणामं गताः । बहूनां कल्पानां ब्रह्माण इति चतुर्णां पदार्थानां मिलित्वे चत्वारि पदानि समबहुव्रीहिरूढिभिः भुजगरज्जुभिरिति ग्रन्थिदृढताबोधनाय रूपकम् अतएव निरित्युपसर्गः तात्पर्य्यवान् । सद्यो विरचितनुतीत्यनेन कपालानामसाधारणो व्यापारो बन्धो हि बाह्यरूपकाल्वादिकमन्तरेण न निष्पद्यते मोक्षानन्तरमेव तासामेवात् स्तुतिरूप एव ब्रह्मघोष उदचरदिति भगवतस्त्रिपुरदर्पे निरङ्कुशप्रभाव सद्य पदेन सूच्यते । अथवा वेदागमानामागमाभावानन्तरमेव परमेश्वरस्तुतिरूपतात्पर्य्यावसानमिति सर्वस्या अपि श्रुतेः परमेश्वरस्तवत्वमनन्यसाधारणमभिप्रायतया कविरभिप्रैति । पुरारेरित्यनेन [illegible] प्रकृतपोषानुगुणा प्रकाशिता । ८१ ।

[illegible] ऊर्जितो [illegible] भाव और्ज्जित्यं तत्र बन्धस्य [illegible] विश्लिष्टनयडि प्रयोगे [illegible] दृढत्वम् । गुणमाह [illegible]

धूमोत्पीडस्तरुणमहिषस्कन्धनीलो दवाग्नेः
स्वैरं सर्पन् सृजति गगने गत्वरानभ्रभङ्गान् ॥

अत्र गाढबन्धस्य स्पष्टमेव प्रतिभानात् और्जित्यम् ॥ ८२ ॥

प्रेयः प्रियतराख्यानं चाटूक्तौ यद्विधीयते ॥

यथा,—सौजन्याम्बुनिधे बुधप्रियगुणप्राकार धर्म्मद्रुम-
प्रारोह प्रतिपन्नवत्सल महात्यागिन् विवेकाश्रय ।

---

लक्षणात् अतिप्रसङ्गो नास्ति । तथाहि । प्रकृतोदाहरणे प्रथमपादे विच्छिन्न-भुग्न इत्यत्र तालव्यद्वयम् । कण्ठ्यदन्त्यसंयोगौ प्रस्फुटोन्मिश्रौ । अन्ये मृदवः । द्वितीयपादे औष्ठ्योपध्मानीयतालव्यचतुष्कसंयोगाः प्रस्फुटाः, स्वरव्यञ्जनमध्ये विसर्गपाठ उभयसंज्ञाभिप्रायेणेति दुर्गसिंहः । तेन तदादेशस्यापि व्यञ्जनत्वमन्ये मृदवः । तृतीयपादे दन्त्योष्ठ्यदन्त्यकण्ठ्यसंयोगा उन्मिश्राः अन्ये मृदवः । चतुर्थपादे रेफान्तसंयोगा मृदवो य इति न क्वापि कठोरता प्रतिभासते । तथाच प्रथमतृतीयाभ्याम् अत्र द्वितीयचतुर्थयोर्गाढत्वम् । तथा । हस्ते लीला-कमलमलके बालकुन्दानुविद्धमित्यादेः अगाढप्रथमतृतीययोरप्यस्ति धारणी मध्या प्राणता व्यक्तेत्याह । अत्रेति ॥ ८२ ॥

प्रेय इति । परप्रियाख्यानं चाटूक्तिः तत्र यद्विधीयते स प्रेयो नाम गुणः, किन्तु क्रियत इत्याह । प्रियतराख्यानमिति । प्रत्ययार्थे तात्पर्यं लोके साधारण एव प्रिय इत्युच्यमाने यत्तत्र असाधारणः प्रकर्षोऽवगम्यते स इत्यर्थो भवति । एतेन लक्षणपदे द्वयमुक्तं व्याख्यातः । उक्तिखण्डे उपचितोऽर्थः सन्नसन् वा भवतु कविप्रतिकृष्टा सूक्तिरेक एव त्रिभुवने भूयसीनामपामधिष्ठानमेव भवानपि तत्स्थानीयस्य सौजन्यस्येति प्रतीयते । बुधप्रियेति बहुव्रीहितत्पुरुषाभ्यामर्थद्वयमुपात्तम् । सूक्ष्मगुणप्रतिबिम्बभासितया यावदभिमतदायितया च प्रीति-ध्वनितया च प्रकर्षमर्पयति । गुणप्राकारेति । यथा प्राकारे उपर्युपरि शिलादीनामवस्थितिरेवम् अहमहमिकया त्वयि गुणानाम् अथवा यथा प्राकारः कलत्रावेक्षणस्थानमेव भवानपि गुणानामेव प्रोच्यते । धर्मद्रुमप्ररोहेति । प्ररोहः प्ररोहोऽङ्कुरः । तेनातिजरतो भग्नानेकविक्रमादित्यादिशाखस्य धर्म-तरोस्त्वमभिनवसन्तानोऽवलम्बः । यदि वा अधोमुखो लम्बमानलताप्ररोहः । यथाच धर्मतरोः उपरि ब्रह्मलोकादि बहुविस्तारस्य भगवद्रूप प्ररोहो भूपृष्ठ

लक्ष्म्यावास मनस्विनीमनसिजव्यापारदीक्षागुरो
श्रीमन्मुञ्ज किमित्यमुं जनमुपस्रष्टुं दृशा नार्हसि ॥

अत्र सौजन्याम्बुनिधे इत्यादीनां प्रियार्थानां पदानामुपा-
दानं प्रेयः ॥ ८३ ॥

व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दता ॥

यथा,—तस्याजीवनिरस्तु मातरवमा जीवस्य माजीवतो
भूयाद्वाजननिः किमम्ब जनिना जन्तोर्वृथाजन्मनः।

---

मधितिष्ठतीति कोऽपि प्रीतौ प्रकर्ष। प्रतिपन्नवत्सलेत्युपकर्त्तव्यतया प्रतिपन्नः स्वीकृतस्तत्र वत्सलो झटिति स्नेहार्द्रान्तःकरणस्तेनाङ्गीकृतभङ्गभीरुतामाविश्य पुरुहूतादिवन्नापि श्लेषाविश्लेषान्विततया वलिकर्णादिवत् किन्तु भवान् सिन्धुरिव वाञ्छितादिकमुपकारं करोतीति समान पूर्वेण। महात्यागिन्निति। त्यागिनामपि य पूज्यः स महात्यागी तेन नून दधीचिप्रभृतयो विश्राणितार्था अपि न तव तुल्यतामारोढुमीशते इति पूर्ववत्। विवेकाश्रय इति। यथा कर्त्तव्यताज्ञान विवेकः। तस्याश्रयो विश्रान्तिस्थान यदि त्व मूलस्तम्भो नाभूस्तदा कमाश्रित्य विवेकप्रासाद. पदमारोपयेत् इत्यादिक स्वयमूहनीयमिति तदेतत् सर्वं सूचयन्नाह। प्रियार्थाना पदानामिति। प्रियार्थाना प्रीतिप्रकर्षार्थानाम् ॥ ८३ ॥

व्युत्पत्तिरिति। विशिष्टा उत्पत्तिर्व्युत्पत्ति सुबन्ताना तिङन्ताना च बहू-नामपि चकारादिमन्तरेण घटनासौष्ठवार्पकतया चमत्कारकारित्वमित्यर्थ। आक्रोशे नञ्यनिः। किमर्थमिदमाशास्ते इत्यत आह। जीवतोऽवमान इति। जीवतोऽवमानन माभून्मरणमपि तदपेक्षया वरमित्यर्थः। आयु' कर्मवशात् तथा मृतोऽपि जीविष्यतीति यदि तदा अजननि. अनुत्पत्तिरेव भूयात् कुत इत्यत आह। किमिति। जनिनेति पुंलिङ्गनिर्देशश्चिन्त्य इक. स्त्रीप्रकरणे विधानात्। जनिरुत्पत्तिरिति साहचर्याच्च। जनुषा इति पाठान्तरम्। कस्येद सर्वमाशास्यत इत्यत आह। यस्यामेवेति। त्वदन्यदेवताप्रवणस्य जन्मादिक विफलमिति वदतः कोऽपि भगवतीविषये भक्तिप्रकर्षोऽवसीयते। अन्ये तु व्याचक्षते कवे. पद-परिचयान्तरी व्युत्पत्तिः। पद च सुप्तिङन्ततया द्विविधं तयोरेकमुभय वा यत्र

यस्त्वामेव न वन्दते न यजते नोपैति नालोकते
नोपस्तौति न मन्यते न मनुते नाध्येति न ध्यायति ॥

अत्र अजीवनिः अजननिः इत्यादीनां सुबन्तानां वन्दते यजत इत्यादीनां तिङन्तानां च व्युत्पत्तिः सुशब्दता ॥ ८४ ॥

समाधिः सोऽन्यधर्माणां यदन्यत्राधिरोपणम् ॥

यथा,—प्रतीच्छत्याशोकीं किशलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति तालीपरिणतिम् ।

---

निवेश्यमान व्युत्पत्तिमभिव्यनक्ति तत्र सौशब्द्यमिति लक्षणार्थः । तथाहि अजीवनिरिति सोपाधिसिद्धकृदन्तं जीवितमुपन्यस्य तदेव जीवस्य जीवत इति निरुपाधिसिद्धसाध्यार्थोऽभिधायि कृदन्तमुपन्यस्तवान् । मातरवमेति । मातृत्वमुभयथा उत्प्रेक्षितवान् । द्वितीयपादे जनिजीवमिवोपक्षिप्य जनिना जन्मेति तमेवप्रकारद्वयेन उपात्तवान् । एकैकधातुप्रपञ्चाना सुबन्ताना दुर्घटमेकसन्दर्भप्रवेश तत्तदुचितक्रियासङ्गमनेन विहितवानिति सुबन्तव्युत्पत्तिरिति दिक् । अवमेति अस्त्वित्यनुपज्यते । वृथादि वा पूर्वेणापि सबध्यते । अथ उत्तरार्द्धे तिङन्तव्युत्पत्ति । तत्र पूर्वप्रकारभेदो न घटते अत साभिप्रायाणामेवोत्प्रेक्षण सा वाच्या । तथाहि वन्दत इति जायमानमात्राऽभिवाद्यतया त्रिभुवनमातृता । यजत इति समस्तदेवताद्रूपत्वम् । उपैतीति । सर्वोपगम्यतया जगच्छरण्यत्वम् । आलोकत इति । विश्ववर्त्ति यावन्मनोहरत्वम् । स्तौतीति । समस्ताभिमतदायिता । मन्यत इति । निखिलज्ञेयस्वरूपता । मनुत इत्यवधारणीयतया तत्त्वात्मकता । अध्येतीति । कान्तारादिस्मर्तव्यतया दुर्गादिभेदेन प्रपञ्च्यमानत्वम् । ध्यायतीति । निदिध्यासनविषयतया प्रत्यग्ज्योतीरूपतेति परापरभेदभिन्ना भगवती स्तुता भवति । मन्यते मनुते इति यथा सामान्यविशेषाभिधायिनी तथाऽध्येति ध्यायती अपि । तिङन्तानां च दुर्घटोऽपि परस्परमन्वय. केनापि प्रकारेण घटित इति पूर्ववत् बोद्धव्यः । तदेतदाह । अत्रेत्यादिपदमुभाभ्या सम्बध्यते तेन जीवितवर्गो जनिवर्गश्चाभिमतः । मति. सकृदेवाह्व इति नोक्त भूयसाहि लोके व्यपदेशो दृश्यत इति ॥ ८४ ॥

समाधिरिति । सम्यगाधानमारोपण समाधि' । सम्यक् त्वञ्च वक्रतालोकातिगत्व च तदधिकभाव: । तदिद लक्षणे स्फुटम् । कमलानि निमीलन्ति

परिम्लानप्रायामनुवदति दृष्टिः कमलिनी-
मितीयं माधुर्य्यं स्पृशति च तनुत्वञ्च भजते ॥

अत्र प्रतीच्छति अवतरति अनुवदति इत्यादिचेतन-क्रियाधर्माणाम् अचेतनेषु अधरादिषु उपचारेण अध्यारोपणं समाधिः ॥ ८५ ॥

अन्तःसंजल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते ।

यथा, केवलं दधति कर्त्तृवाचिनः प्रत्ययानिह न जातु कर्मणि ।
धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः ॥

---

कुसुदानि उन्मिषन्ति चेत्यादौ व्यभिचाराच्च । तेन सम्बन्धिता न धर्मविशेषण-मत्र अभिमता । अलङ्कारात् भेदश्चतुर्थे वक्ष्यते । प्रतीच्छतीति । प्रत्यर्पण दीय-मानस्य ग्रहण चेतनधर्मः स विरहवत्या अचेतनेऽधरे समारोपित' । किसलय-कान्तिमितो मन्दीभूतामवगमयति । देयस्य दातुरपसरणेऽन्यत्र सङ्क्रान्तौ च प्रत्यर्पणनिर्वाहाच्च । तथाचाऽशोककिसलयेभ्योऽपि कोमलपाटलत्वमधरस्येति माधुर्य्यपोष. । तदभिमुखप्रवर्त्तनमवतरणमपि चेतनधर्मः सोऽचेतने कपोले समारोपितः किञ्चित् पाण्डुतामवद्योतयति । न च प्रत्यर्पणवत्सामस्त्येन ग्रहणम् अपि तु सम्मुखीभावमात्रमित्याशयात् । तथाच पूर्ववन्माधुर्य्यं पुष्णाति अनुवादोऽपि चेतनधर्म एव सोऽचेतनाया दृष्टौ आरोपित. पर्य्युषितकमलच्छाया-मखण्डम् एव अत्र बोधयति । परप्रकर्षाभिमुखेऽपि विप्रलम्भे कदाचित् सङ्कल्पो-पस्थितप्राणनाथाया दृष्टौ कान्तीभवतीति प्राय पदेन सूचितम् । स्पर्शस्य माधुर्य्य-विषयेऽसम्भवात् स्पृशति इति अपि आरोप । प्रथमविग्रहशोभाविर्भावमभिव्य-नक्ति । चेतनक्रियेति । प्रकृतापेक्षया क्रियाक्रियावतोः सादृश्याभावान्नेय गौणी किन्तु उपचरितैव शुद्धेत्याह । उपचारेणेति । एतेन रूपकादिभ्यो भेदः समर्थितः ॥ ८५ ॥

अन्तरिति । यथा करितुरगादिरूपकाणा पाषाणशिलादौ अभिव्यक्तमवस्थितौ सूक्ष्मरूपता तथा शब्दाना श्रूयमाणानामपि कथमन्यथा वाक्यार्थभावनदशाया शेष-निधनेन उन्मेषः । केवलमित्यादौ सृजतिसंहरति शास्तयोधातवः कर्त्तर्य्येव अत्र-

अत्र श्रुतावगतवाक्यार्थस्य सृजति संहरति शास्ति स्तूयत इति शब्दानामन्तः संजल्परूपेण सूक्ष्मतया सूक्ष्मत्वम् ॥ ८६ ॥

ध्वनिमत्ता तु गाम्भीर्य्यम् ।

यथा,—मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमम्
चक्राङ्कं वह पादयुग्ममवनीं दोष्णा समभ्युद्धर ।
लक्ष्मीं भ्रू निकटे निवेशय भव ज्यायान् दिवौकस्पते-
र्विश्रान्तःकरणैकचौर तदपि स्मातं हरिः खल्वसि ॥

---

यद्विषये प्रयुज्यमानाः प्रत्ययान् प्रयोजयन्ति न कर्मणीति वाक्यार्थो यदा भाव्यते तदैवायं सृजति संहरति शास्ति न तु सृज्यते संह्रियते शिष्यत इति शब्दाः प्रकाशन्ते । एवं स्तौतिर्विपरीतकारकः । अत्र स्तौतिः कर्मण्येव प्रयोजको न कर्त्तरीति वाक्यार्थभावनासमय एव नायं किञ्चित् स्तौति किन्तु सर्वैः स्तूयत एवेति शब्दा उन्मिषन्ति तदेतदाह । अत्र श्रुतावगतस्येति । यावदेव वाक्यं श्रूयमाण-मवगम्यते तस्यैव भावनापल्लवः पश्चादवसीयत इति वटबीजन्यायमुपोद्बलयति । सोऽयं सहृदयप्रतीतिसाक्षिकोऽर्थः ॥ ८६ ॥

ध्वनिमत्तेति । ध्वननं ध्वनिर्व्यञ्जनात्मा व्यापारः । स द्विविधः शब्दध्वनिः अर्थध्वनिश्च । येन शब्द एव ध्वन्यते स शब्दध्वनिः अभिमत इति केचित् तन्न । शब्दस्यैव ध्वन्यतानङ्गीकारात् । नाभ्या पुण्डरीकधारणमित्यादिव्याख्या ग्रन्थभङ्गप्रस-ङ्गाच्च । तस्मात् शब्दाश्रितं ध्वननं शब्दध्वनिः अर्थाश्रितश्च अर्थध्वनिरिति वक्तव्यम् । प्रभूतध्वनिसम्बन्धपदकदम्बकस्य गाम्भीर्य्यम् । अथवा ध्वनयतीति ध्वनिः शब्दा-त्मको यत्रास्ति पदसमुदायः तद्गाम्भीर्य्यम् तथाहि पुण्डरीकपदप्रस्तावात् सितच्छत्रे नियताभिधानशक्तिकं कांस्यतालानुस्वानस्थानीया सिताम्भोजव्यक्तिम् उपजनयन्ती पलभ्यते । अनेकार्थनियताभिधानशक्तिकत्वाच्च । तदाह । अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति । एवं विक्रमा-दिषु । तथापि विक्रमः पौरुषं परिश्लिष्टः पादविक्षेपश्च । चक्रं चक्रवर्त्तिचिह्नं रेखासन्निवेशलक्षणम् आयुधविशेषश्च । अभ्युद्धरणं सम्यग्लाभपालनप्रापणमुत्था-पनञ्च । लक्ष्मी सम्पत् देवताविशेषश्च । ज्यायान् प्रशस्ततरो वयोज्येष्ठश्च । इद-

अत्र नाभ्यां पुण्डरीकधारणं परिमितविक्रमत्वं चक्राङ्कितकरत्वं दंष्ट्रया वसुधोद्धरणं वक्षःस्थलनिवेशितलक्ष्मीकत्वमिन्द्रावरजत्वञ्च ध्वनयतीति गाम्भीर्य्यम् ॥ ८७ ॥

व्यासेनोक्तिस्तु विस्तरः ॥

यथा,—जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचः
तथावस्थं चैनं निदधतु शुभैः शुक्तिवदनैः।

---

मेवाभिसन्धाय दिवौकसपतेरित्यन्तं व्याचष्टे। अत्रेति। तदपीति अपिशब्देन विरोधद्योतिना हरिभावमाचरन्निति प्रतीयते पुण्डरीकधारणादेरुभयतुल्यत्वात् मौलावित्यादिविरुद्धमतः तद्विपरीतस्थानीय विष्णौ ध्वनयत् प्रसिद्धिबलात् नाभ्यादिकमेव ध्वनयति। प्रसिद्धिरपि हि विशिष्टार्थप्रतिपत्तौ कारणमेवेत्यभिप्रेत्य शब्दध्वनिप्रस्तावेऽप्यन्यत व्याख्यातवान्। अन्यथा तु प्रकृतासङ्गतिशङ्कया न वाच्यार्थपुष्टिः स्यात्। सोऽयं विरोधरूपमूलः प्रतीयमानव्यतिरेकी वाक्यार्थं शब्दध्वनिश्चात्र जीवभूतं। विश्रान्तकरणैकचोर इत्यनेन त्रिभुवनमनोहरता। दिवानिशमन्तःकरणानि चोरयन्नभ्यासकौशलादिवा अत्यन्तप्रसिद्धानि नारायणचिह्नानि गोपायतीति प्रतीयमानोत्प्रेक्षा। ननु वस्तुध्वनिं शब्दशक्तिमूलमेके न मन्यन्ते कथं तर्हि "पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे। उण्णअपओहरं पेक्खिअ उण जइ वससि ता वससु" इत्यादौ वस्तुवर्णनं न हि अत्र श्लेषन्यायो न वा समासोक्तिन्यायः सम्भवति। किं चालङ्कारध्वनावपि शब्दशक्तिरेवोपयुक्तेत्युक्तलक्षणः शब्दध्वनिः। ये तु वदन्ति शब्दस्याभिधाव्यतिरिक्ता वृत्तिरेव नास्तीति, लक्षणापि तैः अनङ्गीकरणीया स्यात्। न च अनङ्गीकर्त्तव्येति वाच्यम्। गङ्गायां घोष इत्यत्र सप्तम्यनन्वयापत्तेः। प्रकृत्यनुगतस्वार्थोऽभिधानं हि विभक्तीनां व्युत्पन्नमिति घोषप्रतियोगिकाधिकरणभावयोग्यः कश्चिदर्थो गङ्गापदस्य वक्तव्यः। तथा च का अन्या नाम लक्षणा। एवं पुण्यत्वादिप्रतीतिस्तत एव भवन्ती ध्वननमुपस्थापयति इत्यादिकमस्माभिः काव्यप्रकाशविवरणे प्रपञ्चितम् इह तु ग्रन्थगौरवभिया विरम्यते ॥ ८७ ॥

व्यासेनेति यत्र लोकेऽपि वाच्ये वचनपल्लवः चमत्कारकारी तत्र स एव गुणकथाधिरोहणक्षम इति शब्दगुणेषु युक्तौ विविक्तमत एवोक्तिं विशेष्य तया निर्दि-

ततस्त्वां श्रेयोभिः परिणतिमसौ विन्दतु यथा
रुचिं तन्वन् पीनस्तनि हृदि तवायं विलुठति ॥

अत्र कथमहं त्वत्कुचतटे विलुठामीत्यभिप्रायस्य विस्त-
रेण प्रकाशितत्वादयं विस्तरः ॥ ८८ ॥

समासेनाभिधानं यत् स संक्षेप उदाहृतः ।

यथा,—स मारुतिसमानीतमहौषधिहृतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः ॥

---

स्तरेणेति। जनः पुण्यैरित्यादौ कथमहमित्यादौ निर्दिष्टोऽपि वक्त्राभिप्रायरूपोऽर्थः
उक्तिपल्लवेन प्रकर्षमानीयते। तथाहि जन इति तटस्थोक्त्या न ममेदृशानि
भागधेयानि। पुण्यैरिति। बहुवचनेन अनेकजन्मोपात्तानामेवेदं फलम्। यायाः
दिति सम्भावनाऽभिप्रायेण लिङा मुक्ताफलपरिणतियोग्यजलधिजलप्राप्तिसम्भाव-
नापि कस्यचिदेव धन्यजन्मन इति प्रकाशिते कोऽपि कारणप्रकर्षः। जल-
मुच इत्यनेन येषां न जलदानमेव व्यापारोऽपि तु विश्वसन्तापच्छिदुराशा-
मन्योपकारप्रवणतया शुक्तिमुखपर्य्यन्तमपि तु नयनमुपपद्यत इति। तथा-
नस्यामित्यनेन यदैव स्वरावस्था तदैव जलधरैः पानमात्रसामात्रगोचरो न तु
पूर्ववत् सम्भावनामात्रगोचरोऽत एव शुभैरिति। समयविलम्बनस्य प्राक्तन-
पुण्यमानहेतुकत्वादित्यादिस्वयमवसेयम्। एतेन पदार्थे वाक्यरचनमिति यदन्यै-
र्गुणान्तरमभिहितं तद्विस्तारमेकमेव। घटनासौष्ठवमात्रोपयुक्तस्तु पञ्चवीविशेष-
गुणेषु अस्माभिरभिधास्यते। त्वत् कुचतटे लुण्ठनमत्यल्पपुण्यस्य न सम्पद्यत इत्येता-
वानेव अर्थो विवक्षाविषय इति कार्य्यनिकाशस्यैव चमत्कारार्पणे प्रागल्भ्यमिति
शब्दप्रधानकतया युक्तमेव परिसंख्यानमिति ॥ ८८ ॥

संक्षेपेणेति। अस्ति कश्चिद्विशेषो यत्र वाक्यसङ्कोच प्रकृतौचितीवशेन
चमत्कारकारणं तथाहि स मारुतीत्यादौ मारुतिना यदौषधेरानयनं यच्च तया
व्यथाहरणं तदुभयमपि इतिहासकथाविस्तरेण प्रतिपादितमिह तु श्लोकार्द्धमात्रे-
णेति शब्ददम्भर एवायं गुणो यद्यपि भवति तथापि यावद्विवक्षितोपादानकाव्य-

अत्र कथाविस्तरप्रतिपाद्यस्यार्थस्य प्रकृतसंग्रामरसविच्छेदा-
शङ्कया श्लोकार्द्धमात्रेणोक्तत्वात् संक्षेपः॥ ८९॥

यावदर्थपदत्वञ्च समितत्वमुदाहृतम्॥

यथा,—केचिद्वस्तुनि नो वाचि केचिद्वाचि न वस्तुनि।
वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि॥

अत्रार्थस्य पदाना च तुलाविधृतवत्तुल्यत्वेन समितत्वम्॥ ९०॥

भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतम्।

यथा,—एह्येहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्द्धनि चिरञ्च परिष्वजे त्वाम्।

---

रूपेण अर्थसङ्कोचो वक्तव्य स च तथाविधवक्रोक्तिसङ्कोच एव भवतीत्युक्तावेव सङ्कोच उल्लिखति। कथमत्र सङ्कोच, प्राशीचितभाव इत्याह। प्रकृतेति। अतएवोपचितमपि इतिहासार्थमपहाय त्वराविष्टेन कविना प्रकृतमुत्तरार्द्ध एवासहित पूर्वोत्तरार्द्धसामञ्जस्याय सङ्क्षिप्यैव प्रकृतमप्युक्तम्॥ ८९॥

यावदिति। यावन्ति वर्णानि विना प्रकृतमनुसर्तुमेव न शक्यन्ते तावन्मात्रमयत्व वाक्यस्य सम्मितत्वम्। अत सङ्क्षेपाद्भेद.। कवे. शक्तिव्युत्पत्तिभ्याम् असत्यपि पल्लवे कदाचिद् घटनालावण्यमुन्मिषत्येव। यथा पूर्वमुदाहृतम्। का त्व शुभे कस्य परिग्रहो वेत्यादि। अर्थव्यक्तिसङ्करशङ्कापि अतएव निराकृता। अस्ति उत्तरस्यान्दिशि देवतात्मेति केचिदुदाहरन्ति तदयुक्तम्। अनेन नामपदयो पल्लवरूपत्वात् सम्मितत्वाभावे कथमाभासत्व भवतीति विस्मृतव्यभिचारिगुणप्रकरणस्य भाषितमुपेक्षणीयम्। केचिदिति सर्वनाम्न एव अभिमतकविविशेषे पर्यवसान सामर्थ्येन सम्भवतीति न अध्याहारशङ्का। सन्ति इत्यादिक्रियाऽपि सामर्थ्येन अवसीयते तदेतत् सर्वमभिप्रेत्याह तुलाविधृतवदिति॥ ९०॥

भावत इति। भावनादशापन्ना 'चित्तवृत्तिर्भाव। भावनावासनाव्याप्तिरिति अनर्थान्तरम्। तथाहि उच्यते अनेन गन्धेन रसेन वा सर्वं भावितमिति

आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथवा चरणपुष्करकद्वयं ते॥

अत्र हर्षवशादनौचित्येनापि वन्देऽथवा चरणपुष्करकद्वयमित्यादीनामुक्तत्वाद् भाविकत्वम्॥ ९१॥

गतिर्नाम क्रमो यः स्यादिहारोहावरोहयोः॥

यथा,—वराहः कल्याणं वितरतु स वो यस्य शशभृत्
कलाकोटीकान्तं क्रमविगलदभ्युद्धृतिभिया।

---

हर्षादिभावितचेतसो हि वीचिप्राया उक्तिभेदाः प्रादुर्भवन्ति ये' अप्रत्यूहमेव भावोऽभिव्यज्यते तदिदमुक्तं या भावतो वाचः काव्यरूपाया' प्रवृत्तिनिष्पत्तिः सैव-भाविकम्। भावप्रधानो निर्देशः। तथाहि प्रकृतोदाहरणे एहीत्येकेनैव युष्मदर्थो विना भाविनाऽभिमुखीकरणे वृत्ते द्वितीयस्य यदुपादानम्। पूर्णचन्द्रेति यदग्रिमक्रियास्वनुपयुक्तस्यैव अभिधानम्। चुम्बामीति करिष्यमाणस्यापि यो वर्त्तमानोपदेशश्चुम्बामीत्यत्र विशेषणमनुपादाय परिष्वज इत्यत्र चिरमिति यद्विशेषणोपादान त्वमिति योग्यार्थस्यापि प्रयोगः पूर्वोपात्तवदुत्तरक्रियास्पर्द्धितया यदेकस्यैव तद्वचनस्य भाषणमेव समस्तसमकक्षतयैव यद्वचनाभिधानम्। वत्सेत्यभिधाय चरणौ वन्दे इति या विरुद्धोक्तिर्यच्च ते इत्यस्य अवगतार्थस्यापि वचन तत्सर्वमधर्मसिद्धमेवेति भावार्थस्य निष्पादितया स्वादहेतुर्भवति। प्रवर्त्तन्ते हि लौकिकानां स्नेहार्थानाम् उत्कलिकाप्राया वाच खदन्ते च। यथा। इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः इति। तदेतदभिप्रेत्य व्याचष्टे। अत्रेति। अनौचित्येनापि वन्दे इति॥ ९१॥

गतिरिति। केचित् व्याचक्षते। यतीनामारोहावरोहौ विवक्षितौ क्वचित् कविशक्तिवशादध्यारूढा अवरूढा इव प्रकाशन्ते। यथा। भुवो नीचैर्नीचैरवटपरिपाटीषु पतता स्फुरत्यर्वागर्वागखिलभुवने भोगितिलक'। क्रमादुच्चैरुच्चैर्गिरिशिखरभाजामपि नृणामयं दूरे दूरे भवति भगवानम्बरमणिः॥ अत्र यतीनामारोहावरोहौ तिलतण्डुलवत् प्रकाशेते। इयं द्वयौचिती वक्ष्यते।

मिथः संमूर्च्छद्भिश्चतुरुदधिकल्लोलपटलै-

रनामृष्टं दंष्ट्राशिखरमधिशेते वसुमती ॥

अत्र पूर्वार्द्धे स्वरस्यारोहात् उत्तरार्द्धे चावरोहाद् गतिः ॥८२॥

उपक्रमस्य निर्वाहो रीतिरित्यभिधीयते।

यथा,—

ग्राव्णा नासि गिरेः च्युता, न, पयसा नार्त्तासि, न, स्नापिता

न श्वासैः फणिनोऽसि, न, त्वदनुगा नायासिता क्वापि, न।

---

तथाच द्वितीये सङ्गता स्यात्। तस्मादयमर्थः। स्वराणामकारादीनामुपर्य्युपरितया बोधः सन्निकृष्टानामिव प्रकाशन गतिरिति। तथाच व्याख्यास्यति। स्वरस्येति। तथाहि प्रकृतोदाहरणे वराह' कल्याणमित्यत्राकारद्वय तुल्यजातीय निर्दिश्य सवो इत्यत्रौकारेण तुङ्गत्वमिव विधाय द्वितीयपादोपक्रमे कणाकोटीकान्तमित्यत्राभिन्नजातीया 'आरोहपरम्परा विहिता। उत्तरार्द्धे तु तथा नास्ति। शेते इत्यत्रापि न सोल्लेख आरोहः सोऽयमानुभविको गुणः श्लोकार्द्धश्लोकपादश्लोकाग्रक्रमेण नरसिंहवद्भवति। अत्र उपलक्षणतया आद्यमुदाहरति। अत्र पूर्वार्द्धमिति। क्रमैरितस्ततश्चरणविन्यासैर्विगलन्ती असम्पद्यमानायाऽभ्युद्गतिः अभ्युद्गरण तस्या याभीर्भय तयेति केचित। अन्ये तु वदन्ति। क्रमेण विगलदभ्युद्गतिभयमूर्द्धनयने स्फुटनादिभयं यस्या. सा क्रमविगलदभ्युद्गतिभियेति ॥ ८२ ॥

उपक्रमस्येति। यादृश्या पदसन्निवेशस्तनोपक्रम्यते तादृश्या वृत्तनिर्वाहः क्वचिद् विशेषशोभावहो भवति। अतएवात्र नात्यन्तनिर्वाहोऽभिमत'। एकदेशवृत्तेरपि अभिप्रायसमग्रकाव्यजीवभूतत्वादेतस्य एव नातिप्रसङ्गोऽपि तथा प्रकृतोदाहरणे प्रथमोत्थिताया अभ्रिदुहितुः अव्याजसर्वाङ्गीणलावण्यमवलोकयित्वा कृष्ण स्वचक्षुषोः कृतार्थता गमितवान्। इदानीमधरोष्ठमुद्राभेदेन यदि वर्णमात्रामपि भारतीं निश्चरन्तीमाकर्णयामि तदा श्रोत्रयोः सफलता भवेदिति मन्यते। न च इत्यमेव मुग्धाङ्गनानामालाप प्रवर्त्तते अपि तु नायकसन्निधौ भयादेवेति प्रथम पृच्छति। ग्राव्णा नासि गिरे च्युतेति। अनन्तरञ्च यदि न वक्ष्यामि तदा ग्राम्यामथ वक्ष्यामि तदा धृष्टामाकलयिष्यतीति जानत्या हृयमुत्तरमौचित्यापन्न'

स्वं वेश्म प्रतिगच्छतोरिति मुहुः श्रीशार्ङ्गिणोः सस्मितं
सा प्रश्नोत्तरयुग्मपंक्तिरुभयोरत्यायता पातु वः ॥

अत्र प्रत्येकपदानन्तरं नञो विनिवेशात् क्रमाभेदो रीतिः ॥ ९३ ॥

विशिष्टा भणितिर्या स्यादुक्तिं तां कवयो विदुः ॥

यथा, कुशलं तस्याः, जीवति, कुशलं पृच्छामि, जीवतीत्युक्तम्।
पुनरपि तदेव कथयसि, मृतां नु कथयामि या श्वसिति ॥

अत्र कुशलं तस्या इति पृष्टे कुशलमकुशलञ्चेति वक्तव्ये योऽयं जीवतीत्याद्युक्तिभङ्ग्या जीवितमात्रशेषताप्रतिपादनप्रकारः स काव्ये शब्दगुणेषु उक्तिसञ्ज्ञां लभते ॥ ९४ ॥

---

स्यात्। शिरःकम्प एकाचरश्च। तवाद्यः कालिदासेन प्रयुक्तो मूर्द्धकम्पमयमुत्तर ददाविति। द्वितीयं कविना विनिवेशित न इति। एव शुनतल्पितास्तत' तदनुबन्धेन कृतकृत्यमिवात्मान मन्यमानोऽधिकवासहेतुं धारयन् पृच्छति। पयसेति। तदिदमुक्तमार्त्तेति। प्रकारान्तरेण उत्तरदानासम्भवात् पुनरप्याह। नेति। तदनन्तर व्याजसरभाया: कियदधिकवचनश्रवणोत्कण्ठितः सर्वलोकप्रसिद्ध भयहेतु धारयन् पृच्छति। स्नापितेति अभिमतस्यानिष्टम्। स्वप्नेऽपि सञ्जात इति दृष्टासीति नोक्तम्। एवमपि वचनपल्लवनेन समस्तमुग्धाङ्गनाप्रसिद्धेन वचनोन्मुद्रणप्रकारेण पृच्छति। त्वदनुगेति। सर्वाकारेण उत्तमतामभिज्ञाय सानन्दस' स्व वेश्म प्रत्येव गतवान्न तु पृष्टवानिति। तदिद सर्वनभिमेत्य व्याचष्टे। अत्रेति ॥ ९३ ॥

विशिष्टेति। लोकोत्तराः सन्ति हि भणितिप्रकारा लोकप्रसिद्धाः। यथा सुतीऽसीति प्रश्ने गृहे देव कुले वा इत्यादि। एतत्प्रसिद्धिव्यतिक्रमेण तु या काचित् कविप्रतिभया भणितिः आक्षिप्यते सा भवति लोकोत्तरा। तथाच प्रतिभाकृष्टतया चमत्कारित्वाद्गुणत्वम्। अतएव कवय इत्याह। कविसहृदयानामेव तादृशोक्तिपरिचयसम्भवात्। तथाहि। प्रकृतोदाहरणे कुशलप्रश्ने कुशल वेति

उक्तेः प्रौढ़ः परीपाकः प्रोच्यते प्रौढ़िसंज्ञया।

यथा,—अभ्युद्धृता वसुमती दलितं रिपूरः
क्षिप्तक्रम कवलिता बलिराज्यलक्ष्मीः।
अत्रैकजन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत् पुरुषः पुराणः॥

अत्र प्रकृतिस्थकोमलकठोरेभ्यो नागरोपनागरग्राम्येभ्यो

---

लोकप्रसिद्धमतस्तदेव वक्तुमर्हति। यत्तु तदपहाय जीवतीति उपासनपरत्वापि प्रश्ने तथैवोक्त ततप्रतिभाकृष्टतया साभिप्रायमुन्नीयत इत्याह। अत्र कुशलमकुशलमित्यादि॥ ६४॥

सम्प्रति प्रकर्षकाष्ठालक्षण वाक्यस्य गुण लक्षयति। उक्तेरिति। उक्तिर्वाक्य तस्याय पाक सा प्रौढि। शब्दाना पर्य्यायपरिवर्त्तासहत्व पाक। यदाह। यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्। त शब्दन्यायनिष्णाता शब्दपाक प्रचक्षत इति। प्रौढ इति। उपक्रमसहारयोर्निर्व्यूढ स चाय नालिकेरसहकारमृद्वीकोपलक्षणस्त्रिविधो गीयते। तद्यथा। नालिकेलफल पक्व त्वचि कठिन शिराखण्डितकोमलप्राय कपालिकाया कठिनतर तथा कश्चित्सन्दर्भो मुखे कठिनस्तदनन्तर मृदुप्रायस्तत कठिनतरो नालिकेरपाक इत्युच्यते। तथाहि। प्रकृतोदाहरणे प्रथमपादेऽभ्युद्धृतेति वर्णचतुष्टयसारम्भे कठिन वसुमतीदलि इति वर्णषट्क कोमल तरिपूर इत्यनुस्वाररेफदीर्घेरचरचतुष्टय कठिनतरम्। अत्रापि तमिति मृदुप्रायनिवेशनेन कोमलकपालिकामुखभागसारूप्य द्रढयति इति प्रसादाराध्या। एव द्वितीयादिपादत्रये चतुष्कषट्कचतुष्कैर्नालिकेरफलसाम्यमुन्नेयम्। कथ पुनरेवविध पाक सम्भवतीत्यत आह। अत्रेति। अभ्यासनिर्वृत्त आभ्यासिक। काव्य कर्त्तु विचारयितु च ये जानन्ति तदुपदेशेन करणे योजने च पौन पुन्येन प्रवृत्तिरभ्यास। असावपि कथ पाकविशेषो भवतीत्यत आह। सन्निवेशचारुत्वेनेति। सन्निवेशो रचना तस्या चारुत्व तदपि कथमित्यत आह। आवापोद्वापाभ्यामिति। सन्दर्भानुप्रवेशनमावापस्तत. समुद्धरणमुद्वाप.। केषामित्यत उक्तम्।

वा पदेभ्योऽभ्युद्धृतादीनां ग्राम्यादीनामुभयेषां वा पदानामा-
वापोद्वापाभ्यां सन्निवेशचारुत्वेन योऽयमाभ्यासिको नालि-
केरीपाको मृद्वीकापाक इत्यादिर्वाक्यपरिपाकः सा प्रौढ़िः
इति उच्यते। तथाच एतद्वाक्यं नालिकेरीपाक इत्युच्यते। एवं
सहकारपाकमृद्वीकापाके अपि उदाहरणीये इति ॥ ६५ ॥

---

पदानामिति। उद्धृतानामिति। बुद्ध्या पृथक्कृतानाम्। कीऽयं इत्यत उक्तम्। प्रकृतिस्थादीत्यादि। तेनायमर्थः। प्रकृतिस्थादिपदकोऽप्येतद्वैचित्र्यं यद् घटनासौष्ठवेन पर्यायपरिवर्त्तनं न सहते। भवति हि सहृदयानामेवमन्यत्पदं नास्तीति व्यवहारः। सोऽयं रचनासिद्धिविशेषः कथमन्यथा तज्जातीयमेव पदमन्यत्र सन्दर्भे निवेशितं न तथा स्वदते। अतएवासौ वाक्यगुणः काठिन्यं च संयोगैर्दीर्घैर्वा स्वरैर्भवति। यथा अत्रैव उदाहरणे रिपूर इत्यादौ। सुप्तिङ्व्युत्पत्तिलक्षणस्तु वार्त्ताकपाकः कैश्चिदुक्तः स तु सुशब्दता लक्षणगुण एव। एवमिति। यथा द्राक्षाफलं त्वच आरभ्य कोमलमन्तरा द्वित्रिचतुरास्थिसम्पादितकिञ्चित्काठिन्यम् एव कश्चित्सन्दर्भ उपक्रमोपसंहारयोः कोमलःएव मध्ये कठिन एव। संयोगदीर्घस्वरमात्रकृतमनाक्कठोरभावो मृद्वीकापाक इत्युच्यते। यथा। अयि त्वदावर्जितवारिसम्भृतं प्रवालमासामनुबन्धि वीरुधाम्। चिरोज्झितालक्तकपाटलेन ते तुला यदा रोहति दन्तवाससा। यथाच। अनवरतनयनजललवनिपतनपरिपीतहरिणमदतिलकम्। वदनमपयातमृगमदशशिकिरणं वहति लीलहंसः। अतएव वार्त्ताकविकल्पलताकारादिभिरुक्तो नीलकपित्थपाकश्चतुर्थो नास्ति। यच्च परिणतं सहकारफलमारम्भादेव कोमलमस्थनि तु कठोरप्रायम् एवमपरः सन्दर्भो मुखादारभ्य मृदुरन्तरे कठिनतरः सहकारपाक इत्युच्यते। यथा। कमलिनि कुशलं ते, सुप्रभातं रथाङ्ग, कुमुदिनि पुनरिन्दाबुन्नते त्वं रमेथाः। सखि रजनिगतासि त्वं तमो जीर्यमुच्चैरिति, तरलितपक्षाः पक्षिणो व्याहरन्ति। अत्र एवोदाहरणेऽपि द्विधापि कठोरत्वमवसेयम्। तेऽमी त्रय एव शुद्धपाकाः व्यतिकरजन्मानस्तु भूयासः। एत एवार्थपाकाः पञ्चमे प्रकारान्तरेण प्रतिपादयिष्यन्ते ॥ ६५ ॥

उक्ताः शब्दगुणा वाक्ये चतुर्विंशतिरित्यमी ॥
अथैतानेव वाक्यार्थगुणत्वेन प्रचक्ष्महे।
तेषां श्लेष इति प्रोक्तः संविधाने सुसूत्रता ॥

यथा,—दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरात्
एकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति ॥

अत्रैकासनसंस्थितयोः प्रियतमयोर्विलासिना हि एका नयननिमीलनकेलिकर्मणा वञ्चिता, अन्या तु वदनचुम्बनेन रञ्जितेति। सेऽयं संविधाने सुसूत्रता श्लेषो नाम वाक्यार्थ-गुणः ॥ ८६ ॥

---

सूत्रकार एवार्थगुणप्रकरणे सङ्गतिं करोतीति। उक्ता इति। कृतकीर्त्तन हेतुभावप्रदर्शनार्थम्। एतानेव श्लेषादिनामकानिति। एषामिति निर्द्धारणे षष्ठी। वाक्यार्थशरीरभूतः श्लेष' प्रथम लक्ष्यत इति। घटनाश्लेष, इति सूत्रयित्वा क्रमकौटिल्यानुल्लणत्वोपपत्तियोगो घटनेति, वामनेन व्याख्यातम्। अस्यार्थः। इद कृत्वा इद कर्त्तव्यमिति क्रमस्तत्रैव कौटिल्य लोकातिगामिनी वक्रता। अवक्रयोः शब्दार्थयोः वचनमात्रत्वात्। अतिमात्रतया प्रतिभासाभावो-ऽनुल्लणत्व कथमेवमर्थः सङ्गच्छत„इत्यनुपपत्तिसमाधानौपयिकविशेषनिवेशनम् उप-पत्ति तथाच क्रमेण कौटिल्येनानुल्लणतया उपपत्त्या योजनमर्थस्य श्लेष, इति तत्र संविधानक्रमानुल्लणत्वेन सूत्रशब्देन उपात्ते स्वपदेन कौटिल्यम् उक्तम् अघटमानस्य एव वाक्यार्थस्य बुद्धिचातुर्य्येण घटनेति वाक्यार्थः। दृष्ट्वेति। एका नायिका, अपरा नायिका च तत्सखीप्रच्छन्ननायकप्रेमपात्र तेन एकासनसङ्गति'। प्रियतमे इति तदनुरञ्जनमेव जीवितसर्वस्वमिति मन्यमानस्य युगपत् प्रवृत्ति'। आदरेण निभृतपदन्यासतया तथा भूत्वा युगपत्कराभ्या नयनद्वयपिधान लोकप्रसिद्ध. केलि.। ईषदिति कन्धरामात्रं यथा चलते न तु शरीरमपि। अन्यथा चलनज्ञाने नायिकायाः कषायभावः स्यात्। निभृतरागोन्मुद्रणात् पुलकोद्गमः। अतएव प्रेम्णा स्वर्गोपरलोकोत्तरत्वाभिमानरूपेण तत्तदनेकभावोर्मिभिः आन्दोलन मनस

यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते ।

यथा,—अयमुदयति मुद्राभञ्जनः पद्मिनीना-

मुदयगिरिवनालीबालमन्दारपुष्पम् ।

विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्

कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

अत्र पद्मिनीविकाशकरणे उदयशैलावतरणे कोकशोकहरणे तमोविदारणे च अनुक्तोऽपि सूर्य्यलक्षणोऽर्थः प्रकटम् उपलक्ष्यते ॥ ९७ ॥

अवैषम्यं क्रमवतां समत्वमिति कीर्त्तितम् ॥

यथा, अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-

र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।

ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी

मुग्धत्वस्य च यौवनस्य च सखे । मध्ये मधुश्रीः स्थिता ॥

अत्र मधुश्रियो मौग्ध्यत्यागयौवनारम्भकतानां विशेषणानाम् अवैषम्यात् समता ॥ ९८ ॥

---

त्युल्लास' साधुवञ्चन न ज्ञानालील्यभिप्रायिकसपत्नीगतधिक्कारभावनया निभृतहासोन्मेष' । वञ्चनाचातुर्य्येण स्वमनीषितसम्पादन धूर्त्तता । तदेतद् व्याचष्टे । एवैकासनेति ॥ ९६ ॥

यत्तु प्राकट्यमिति । समभिव्याहृतपदार्थसंसर्गात्मनि वाक्यार्थे दर्पणतल इव अनुपात्तस्यापि विवक्षितस्य वस्तुन' प्रतिभासोऽर्थप्रसाद । न चेदमनुमान समानसंवित्संवेद्यत्वात । तदाह । अनुक्तोऽपि सूर्य्यलक्षणोऽर्थः प्रकटमुपलक्ष्यत इति ॥ ९७ ॥

अवैषम्यमिति । येन रूपेण लोकेऽर्थ' प्रतीतस्तदनतिक्रमण तस्योक्ति समता । वक्रता चात्र विशेषणमूहनीयमन्यथा भुक्त्वा व्रजतीत्यत' को विशेष' स्यात् । अग्रे मुग्ध इति । कोषात् प्रथममुद्भिद्यमाना कुरवककलिकाकान्ता-

माधुर्य्यमुक्तमाचार्य्यैः क्रोधादावप्यतीव्रता ॥

यथा, भ्रूभेदे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम्।
अन्तर्वाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च नो प्रश्रयः ॥

अत्र वासवदत्तालक्षणस्य अर्थस्य कोपेऽपि योऽयं विनयावलम्बनेन कोपचिह्ननिह्नवः तत् माधुर्य्यम् ॥ ९९ ॥

अनिष्ठुरत्वं यत् प्राहुः सौकुमार्य्यं तदुच्यते ॥

यथा,—सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा।

---

नखवत्पाटला भवतीति मधुश्रियो बाल्यम्। ततः प्रौढिमापद्यमानासु कलिकासु श्यामो वृन्तभागः स्फुटितत्वात् द्विधाऽवतिष्ठते इति यौवनम्। एवं बालाशोकमित्यादौ क्रमेण बाल्ययौवनचिह्नोपदर्शनम् अवसेयम् ॥ ९८ ॥

माधुर्य्यम् इत्यादि। शृङ्गारकरुणौ हि मधुरौ ततः तद्व्यञ्जकोऽर्थोऽपि मधुरस्तस्य शर्करादिरससोदरं माधुर्य्यम्। यथाहि शर्करारसः सहृदयस्य असहृदयस्य वा, सुस्थस्य असुस्थस्य वा, झटिति रसनाग्रमपीति चमत्कारमावहति। तथा चित्तद्रुतिसारचर्वणैकप्राणरसव्यञ्जकोऽर्थः तेन तद्व्यञ्जनशक्तिसमुद्रेकनिर्वहणं वाक्यार्थस्य माधुर्य्यमिति पर्य्यवसितोऽर्थः तच्च वासनापरिपाकवशादुदयव्ययवतीषु दीप्तचित्तवृत्तिषु जागरूकास्वपि समस्तन्यग्भावनया विरोधः सम्पद्यते इति क्रोधादावप्यतीव्रता इत्युक्तम्। तथाहि भ्रूभेद इत्यादौ गोत्रस्खलितादिना कदाचिदपराद्धे नायके प्रेमस्वभावादीर्ष्यारोषलक्षणव्यभिचारिप्रादुर्भावात् तदनुभावभ्रूभेदोद्गमो रतिप्रकर्षोद्भविष्णुना अवहित्थेन न्यग्भाव्यते। विरोधि विजये हि भूयान् प्रकर्षः परस्य भवति। अतएव परामित्युक्तम् एवम् ईषन्मां प्रति भेदकारि हसितमित्यादौ माधुर्य्यमुन्नेयम्। तदिदमाह। अत्र वासवदत्तालक्षणस्येति ॥ ९९ ॥

अनिष्ठुरत्वमिति। सामग्रीसम्भवेऽपि चित्तद्रुतिमनासादयन्नीरसः कठोरोऽभिधीयते। अतथाभूतस्तु झटिति तन्मयी भवनयोग्यान्तःकरणः सुकुमारस्तदिद-

गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥

अत्र सीतायाः पुरीपरिसरेऽपि कियदस्ति गन्तव्यमिति वचनं शृण्वतो रामस्य शिरीषमृदुतदङ्गावलोकनेन अश्रुणोऽवतारः सौकुमार्य्यमाह ॥ १०० ॥

अर्थव्यक्तिः स्वरूपस्य साक्षात् कथनमुच्यते ।

यथा,—पृष्ठेषु शङ्खशकलच्छविषु च्छदानां
रेखाभिरङ्कितमलक्तकलोहिताभिः ।
गोरोचनाहरितबभ्रु बहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥

अत्र कुमुदस्वरूपस्य साक्षादिव प्रतीयमानत्वेन यत् स्पष्टरूपाभिधानम् असौ अर्थव्यक्तिः ॥ १०१ ॥

---

सुकुमारनिष्ठुरत्वमिति । प्राहुरित्यनेन प्रसिद्धिं द्योतयति । सद्य इति । सह गन्तुमुत्सुका कथमेव सुकुमारप्रकृतिः कान्तारेषु भविष्यसीति वार्य्यमाणापि हृदयवैमुख्येन पदस्थामिति त्वरित गमिष्यामीति स्नेहमूढा त्रिचतुराणि पदानि जवात् गतवती । अश्रुणः प्रथमावतारो भविष्यदश्रुपरम्पराप्रचारभूतः । सौकुमार्य्यमाहेति । अश्रुपातेन अनुभावाश्रुनिमित्तभूता चित्तद्रुतिः करतलामलकवत् प्रकाश्यते ॥ १०० ॥

अर्थव्यक्तिरिति । स्वरूप स्वमसाधारणं कविप्रतिभैकगोचर चमत्कारिरूपं तस्य साक्षात् कथनं कविशक्तिवशात् साक्षात्कारसोदरप्रतीतिजनकपदवस्तु सन्दर्भस्य अर्थव्यक्तिनामा गुणः । अर्थो यथोक्तः तस्य व्यक्तिः प्रत्यक्षायमाणता जातिभेदस्तृतीये वक्ष्यते । पृष्ठेऽपि । ईषद्विकस्वरस्य कुमुदस्य किञ्चिद् विघटमानबहिः पलाशसम्बन्धिषु शीतातपासम्पर्कादत्यन्तविशदाना दलाना पृष्ठानि पाकलोहितरेखाङ्कितानि दृश्यन्ते । अतएव आमोदन्ते किञ्चित् उद्भिदुरेण मुखेन गर्भपिण्डितमामोद मुञ्चतीति ॥ १०१ ॥

कान्तिर्दीप्तरसत्वं स्यात्

यथा,—मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्यापि किं न सखि भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः॥

अत्र नायिकायाः सपत्नीं प्रतीर्ष्यानुबन्धेन प्रतिपादितस्य प्रियतमानुरागलक्षणस्य शृङ्गारस्य दीप्तरसत्वं कान्तिः॥१०२॥

भूत्युत्कर्ष उदारता।

यथा, प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी॥

---

कान्तिरिति। रसोऽभिमानात्मा शृङ्गारः तस्य दीप्तत्व विभावानुभावव्यभिचारिभिः सम्यक्सञ्चलितेन स्थायिना निरन्तरमुपचीयमानस्य परमकोटिगमनम्। तथाहि। मा गर्वमित्यादौ यत्र भङ्गेषु बहुतरसूक्ष्मभङ्गविशेषमयमञ्जरीलिखितेन वहिर्विषयातिरोधानलक्षणतादवस्थ्यात् प्रकाशनेन नायकस्य सपत्नीमनुरागे विच्छायभावोक्तिः। स्वात्मनि तु सहसा आविर्भवत्सात्त्विकप्रतिपादनेन जीवितसर्वस्वाभिमानात्मकरतिस्थायिभावप्रकाशने तस्याः सापेक्षभावे नायिकाया अपि तदवस्थैव सा प्रतीयते तदिदमाह प्रियतमानुरागेति। अनुरागेण लक्ष्यते समार्चिरिव अर्चिष उपचीयत इत्यनुरागलक्षणः॥ १०२॥

भूतीत्यादि। भूतिः सम्पत् तस्या उत्कर्षो लोकातिगप्रकर्षः, तस्यैव सहृदयचमत्कारार्पकतया गुणधुराधिरोहणक्षमत्वात्। प्राणानामिति। उचिता तपोयोग्या। वनस्य कल्पतरुसम्बन्धः सम्पत्तत्रैव सत्पदेन मुक्तास्तबकमाणिक्यमञ्जरीपीनाऽशुककिशलयादिविशेषद्योतिना प्रकर्षः पद्मप्रकरस्तोयसम्पत्तत्रैव काञ्चनमयत्वे पद्मानां प्रकर्षः। बहुत्व शिलावेश्मसम्पत्। तत्रैव रत्नरूपताप्रकर्षः

अत्र मारीचाश्रमस्य सत्कल्पवृक्षादिपदैर्वैभवोत्कर्षस्य प्रतिपादनमुदारता ॥ १०३ ॥

आशयस्य य उत्कर्षस्तदुदात्तत्वमीष्यते ॥

यथा,

पात्रे पुरोवर्त्तिनि विश्वनाथे क्षोदीयसि क्ष्मावलये च देये ।
व्रीडास्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः ॥

अत्र सकलक्ष्मावलयप्रदानेऽपि जातव्रीड़तया बलेराशयोत्कर्षप्रतिपादनाद् उदात्तत्वम् ॥ १०४ ॥

ओजः स्वाध्यवसायस्य विशेषोऽर्थेषु यो भवेत् ॥

यथा, तान्येव यदि भूतानि ता एव यदि शक्तयः ।
ततः परशुरामस्य न प्रतीमः पराभवम् ॥

अत्र परशुरामो विजयत एव इत्यस्मिन्नर्थे स्वाध्यवसायप्रतिपादनम् ओजः ॥ १०५ ॥

---

सन्निधौ स्त्रीप्रतियोगिकतासम्पत् तत्रैव विबुधेति प्रकर्षस्तदिदमाह । सत्कल्पवृक्षादिपदैरिति ॥ १०३ ॥

आशयस्येति । उत्कर्षः पूर्ववत् । उच्चाशयो लोके उदात्त इति प्रतीतः । पात्र इति । विश्वनाथ इति । यदाज्ञावशंवदा त्रिलोकी सोऽपि यत् प्रार्थयत इति, वलयेऽपि इति अपिशब्देन यस्यैकदेशः कुरुपाण्डवनिधननिदानतया विख्यातः तत्रापि देये लज्जत इति । देवासुरकिन्नरादिः अथ जङ्गमस्थावरप्रपञ्चो यदुच्छ्वासविलसित सोऽपि चमत्कृत इति पदार्थानभिहितः प्रकर्षोऽभिधेयः ॥ १०४ ॥

ओज इति । अध्यवसायो निश्चयस्तत्र विशेषः पूर्ववत् । स्वपदेन वक्ता अभिमत । तानीति । यदि हन्तव्यजातौ इदमेव न विपर्य्यस्तम् । ता एवेति । प्रभावोत्साहमन्त्रजाः तत्तदर्थनिर्वहणप्रख्यातकीर्त्तयः शक्तयो यदि न विलीनतामयासिषु. । परशुराम इति । अर्जुनभुजसहस्रच्छेदादिना यस्य परशुरामस्य त्रिभुवनेऽपि प्रसिद्धिः ॥ १०५ ॥

रूढाहङ्कारमौर्जित्यम्

यथा, उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष तत्कुलोद्भूतये विधिः ॥

अत्र इमे वयमिति आत्मान्वितव्रतचर्य्यादिसमुत्थप्रौढ़ाहङ्कारप्रतिपादनादौर्जित्यम् ॥ १०६ ॥

प्रेयस्त्वर्थेष्वभीष्टता ।

यथा, रसवदमृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥

अत्रामृतप्रभृतिभ्यः प्रियादशनच्छदस्याभीष्टताप्रतिपादनं प्रेयः ॥ १०७ ॥

अदारुणार्थपर्य्यायो दारुणेषु सुशब्दता ॥

---

रूढेति । ऊर्जितशब्दोऽहङ्कृते प्रसिद्धः तात्कालिकनिमित्तोपनिपाते वासनाविकाशात्तमो निर्भेटस्थानेषु सुप्तप्रवुद्ध इव स्थायिभिः असहज्यमानः प्रथमप्रादुर्भूतोऽभिमानोऽहङ्कार इत्युच्यते । रूढः सूक्ष्मावस्थातो द्वितीयामाविर्भावदशामापन्नोऽहङ्कारो यस्य स रूढाहङ्कारः तस्य भावस्तत्ता । सुगममुदाहरणम् ॥ १०६ ॥

प्रेय इति । शब्दगुणेऽनुनिष्पादिवर्णनीयप्रीतिजनकत्वं पदानामुक्तमिह तु वाक्यार्थस्य वक्तृप्रीतिगोचरत्वमुच्यत इति विशेषः । प्रीतिरुक्तापूर्वा । तत्र एव अभिशब्देन प्रकर्षो द्योतितः । अभीष्टता प्रेय इति प्रेयः पदप्रवृत्तिनिमित्तम् । रसवदिति प्रशंसायां मतुप् । अमृतमिति यस्य प्रसादात् त्रिदशैरमरत्वम् आसादितम् । नान्यथेति प्रत्यक्षसाचिके वस्तुनि प्रमाणान्तरानुसरणम् । प्रसन्नरसमिति । अप्रतालक्षणकाव्यापगमेन परिणतिः इत्यादि ॥ १०७ ॥

अदारुणेत्यादि । झटिति श्रातङ्कदायी दारुणः तस्य साक्षादभिधाने

यथा,

देवव्रते वाञ्छति दीर्घनिद्रां द्रोणे च कर्णे च यशोऽवशेषे।
लक्ष्मीसहायस्य तवाद्य वत्स वात्सल्यवान् द्रौणिरयं सहायः॥

अत्र मुमूर्षामरणादीनां दारुणार्थानां दीर्घनिद्रां वाञ्छति यशोऽवशेष इत्यादिभिः सुशब्दैः पर्य्यायेण भणनं सुशब्दता। सा च मुख्यार्थव्यतिक्रमस्य वाक्यार्थत्वान्न शब्दगुणः॥ १०८॥

व्याजावलम्बनं यत्तु सा समाधिरिति स्मृतः।

यथा,—दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम्॥

अत्र गमने सति प्रियजनावलोकनाभिलाषिण्याः शकुन्तलाया दर्भाङ्कुरचरणक्षतिवल्कलव्यासङ्गादिव्याजावलम्बनं समाधिः॥ १०९॥

सौक्ष्म्यमित्युच्यते तत्तु यत् सूक्ष्मार्थाभिदर्शनम्॥

---

विवक्षितप्रतीति स्खलनखेदसम्भवात् तदुपनीतस्य वस्तुनः तदध्यासान्तरितस्य वाक्यार्थत्वादिति। सर्वत्रैव हि लक्षणायाम् अर्थाध्यासोऽङ्गीक्रियते लौकिकी चेयं लक्षणेति न प्रयोजनगवेषणमपीति। सुगममुदाहरणम्॥ १०८॥

व्याजेति। चित्तवृत्तिषु बलादाविर्भवन्तीषु प्रकृतरसौचित्यविरोधिप्रकर्षात् प्रकटमनावरणीयासु च यदन्यथा समर्थनं तद्व्याजावलम्बनं प्रस्तुतोचितसमाधानात्मकत्वात्। तथाहि। पूर्वानुरागे त्रपासाध्वसविवशायाः तावन्नायकसमीपादपसरणमौचित्यापन्नमनन्तरन्तु उत्कण्ठातरलितायाः कथमालोकमात्रेण अपि कृतार्थः स्यादिति परावर्त्तनम्। तत्र च मौग्ध्यभङ्गशङ्काया दर्भाङ्कुरक्षतिप्रभृतिव्याजावलम्बनमेव कार्य्यसर्वस्वमाभासत इति॥ १०९॥

यथा,—अन्योन्यसञ्चलितमांसलदन्तकान्ति
सोल्लासमाविरलसवलिताङ्घतारम्।
लीलागृहे प्रतिकलं किलकिञ्चितेषु
व्यावर्त्तमानविनयं मिथुनं चकास्ति॥

अत्रान्योन्यसञ्चलितमांसलदन्तकान्तीत्यादिवाक्ये दम्पत्योः अनुरागलक्षणस्य सूक्ष्मार्थस्य दर्शनात् सौक्ष्म्यम्॥ ११०॥

शास्त्रार्थसव्यपेक्षत्वं गाम्भीर्य्यमभिधीयते।

यथा,—मैत्र्यादिचित्तपरिकर्मविदो विधाय
क्लेशप्रहाणमिह लब्धसवीजयोगाः।
ख्यातिञ्च सत्वपुरुषान्यतयाधिगम्य
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्॥

अत्र मैत्र्यादिपदानां शास्त्रार्थसव्यपेक्षत्वाद् गाम्भीर्य्यम्॥१११॥

---

सूक्ष्ममित्यादि। वाक्यैकगोचरोऽर्थः कुशाग्रीयबुद्धितया सूक्ष्मं तस्य दर्शनमुपायवैलक्षण्यात् तत्तद्विशेषवतः प्रत्यक्षायमाणता। सूक्ष्मालङ्कारादृ दस्तृतीये करिष्यते। स चाय भावी वासनीयश्च। भावनामात्रगम्यो भाव्यो यथा। उच्चद् भगमहिश्चावद्ढस्निन्नत्तरो सपरिषारभम्। पाणौपसरन्न मत्ताचवफलिह च सभमु ह बाला। एकाग्रता प्रकर्षगम्यो वासनीयस्तमुदाहरति। अन्योन्येति। व्याजापसृतपरिवारे लीलावेश्मनि तत्कालकलितमन्मथोन्माथ विदग्धमिथुनम् उत्तरोत्तरमपनीयमानत्रपासाध्वसतया प्रतिकलं नवेन्दुवत्कान्तिविशेषमासादयति। विचित्रमव्यभिचारि चानुप्रवेशे हर्षरुदितस्मितादीनामव्यवस्थिततया व्यतिरेकरूपक्लिलकिञ्चिताख्यशृङ्गारभावोन्मेषः॥ ११०॥

शास्त्रार्थ इति। एकपुरुषार्थप्रयोजनकपदार्थव्युत्पादन विधिनिषेधव्युत्पत्तिफलक शास्त्रं तदर्थसव्यपेक्षत्वम्। तदुक्तप्रक्रियानिरूपणाधीननिरूपणत्व वाक्यार्थस्य गाम्भीर्य्यम्। मैत्री, करुणा, मुदिता उपेक्षा इति चतस्रः चित्तसम्मार्जनाः। अविद्याऽस्मितारागद्वेषाभिनिवेशाः, पञ्च क्लेशाः। चित्तवृत्तिनिरोधो योग. स

विस्तरोऽर्थविकाशः स्यात्

यथा, संग्रामाङ्गनमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरनघा कीर्त्त्या च सप्ताब्धयः॥

अत्र विपक्षवधात् सप्ताब्धिव्यापिनी कीर्त्तिरर्जितेत्येतावतोऽर्थस्य बहुधा विकाशितात्वाद्विस्तरः॥ ११२॥

संक्षेपस्तस्य संवृत्तिः।

यथा, श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम्।
आत्मनः प्रतिकूलानि न परेषां समाचरेत्॥

---

एव व्युत्थानहेतुभिः अनास्कन्दनीयः सबीजः। सत्व प्रधानम्। पुरुषश्चिद्रूपस्तयोर्भेदः प्रथा ख्यातिरिति, साङ्ख्यप्रक्रिया। मैत्र्यादिपदानामिति। वाक्यार्थस्यैव यथोक्तरूपत्वे तत्प्रतिपादकपदानामवश्यं तथा भावो भवतीति वैशेषिकाद्भेदो वक्ष्यते॥ १११॥

विस्तर इति। वाक्यार्थस्य पल्लवभूततत्तत्सहृदयचमत्कारिविशेषप्रसारणं संहतविहतपटवत्। विस्तराख्यो गुणः। विस्तर इव विस्तरः शब्दप्रपञ्चवदित्यर्थः। अन्यथा विस्तार इति स्यात्। सङ्ग्रामाङ्गणेत्यादौ तु शत्रुशिरश्छेदात् सप्ताब्धिव्यापिनी त्वया कीर्त्तिर्जितेति एतावान् वाक्यार्थो लौकिकसाधारणतया च चमत्कारास्पदमिति सङ्ग्रामाङ्गणसङ्गतिरेव न तथा यथा वीरभावस्य उचिता तत्रापि चापसमारोपणमिति कापि उत्साहशक्तिः। अतएव बलवदाश्रयप्रसक्तलुण्टाकवधेन यदवसितं तेन एव तदासादितमिति सोपस्कारकर्तृकर्मप्रपञ्चेन विकाशनमेव काव्यपदवीप्राप्तिबीजं तदिदमाह। बहुविधं विकाशितत्वादिति। नात्र शब्दविकाशाधीनः प्रकर्ष इति शब्दविस्तराद्भेदः॥ ११२॥

संक्षेप इति। तस्य इत्यर्थस्य। समासे गुणीभूतस्यापि बुद्ध्या विभज्य परामर्शः। यथा। अथ शब्दानुशासनम्। केषां शब्दानामिति। अशेषविशेषोपग्राहक-

अत्र शास्त्रे विस्तरप्रतिपादितस्य धर्मस्य श्लोकार्द्धेनोक्तत्वादयमर्थसङ्कोचः संक्षेपः ॥ ११३ ॥

शब्दार्थौ यत्र तुल्यौ स्तः सम्मितत्वं तदुच्यते ।

यथा, इन्दुर्मूर्ध्नि शिवस्य शैलदुहितुर्वक्त्रो नखाङ्कः स्तने
टेयाद्वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः ।
संवादः प्रणवेण यस्य दलता कायैकतायां तयो-
रुद्दामविचिन्तितेन च हृदि ध्यातः स्वरूपेण च ॥

अत्र प्रणवलक्षणस्यार्थस्य तुल्यत्वेन यथावद्विभज्य विनिवेशनं सम्मितत्वम् ॥ ११४ ॥

साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते ॥

---

परस्कारेण वाक्यार्थस्य अभिधानं विवृतसंवृतपटवत् संक्षेपः । श्रूयतामिति । अत्र तेन तेन विशेषेण विस्तरतः प्रतिपादयितव्यस्य धर्मस्य यत्किञ्चिदात्मनः प्रतिकूलमन्यस्य नाचरणीयमिति सामान्येन अभिधानमप्रवृत्तप्रवर्त्तने प्रगल्भायमानमतिसुन्दरमाभासते । न अत्र रचनासङ्कोचप्रतिष्ठितं काव्यमिति शब्दगुणाद्भेदः ॥ ११३ ॥

शब्दार्थौ इति । शब्दस्यार्थौ तयोर्विभज्य विनिवेशनं सम्मितत्वमिति केचित् । तन्न । शब्दग्रहणवैयर्थ्यप्रसङ्गात् । द्वित्वाविवक्षाप्रसङ्गाच्च । "पल्लविअविअकरपल्लवेहिम्पफुल्लिअ वसुणहअच्छेहिम् । फलिअम्मिव पीणपओहरेहि अज्जा इलावसम्" इत्यादौ द्विप्रभृतीनामर्थानामविभज्य विनिवेशनमिष्यते । तस्माच्छब्दस्यार्थश्च शब्दार्थौ । तयोस्तुल्यत्वं यावदुद्देशशब्दार्थम् । अर्थस्य विभज्य तुलाधृतवत् प्रतिनिवेशः सम्मितत्वमिति । अर्थमुद्दिश्य शब्दतुलनं काव्यभावबीजं शब्दगुणः, शब्दमुद्दिश्य तु अर्थतुलनमर्थगुणः । तथाहि परमेश्वरस्य मूर्ध्नि बालेन्दुः, पार्वतीस्तनेन खाङ्क इति पृथक् शब्देन उद्दिश्य तदुपमायोग्यतया कायैकताया दलनं हृत्पद्मनवमद्वारयोः ध्यानेन युगपत् सन्निधानमिति सम्यग्विभज्य तुलितस्य एव प्रणवस्य प्रतिनिर्देश इति तदिदमाह । अत्रेति । यथावदिति । येन प्रकारेण सङ्गच्छते इति तदनतिक्रमेण इति ॥ ११४ ॥

यथा, दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥

अत्र तमालमालावलयितसरित्तीरकृतसङ्केतायाः कुलटायाः स्वतनौ भाविनां परपुरुषनखक्षतानां नलग्रन्थ्यालेखव्याज-गोपनेन साभिप्रायभणनं भाविकम्॥ ११५॥

गतिः सा स्यादवगमो योऽर्थादर्थान्तरस्य तु।

यथा, शुभे कोऽयं वृद्धो गृहपरिवृढः, किं तव पिता,
न, मे भर्त्ता रात्रौ व्यपगतदृगन्धश्च वधिरः।
हु हुं श्रान्तोऽहं शिशयिषुरिहैवापवरके
क्व यामिन्यां यासि स्वपिहि ननु निर्दंशमशके॥

अत्र प्रश्नादर्थमवगम्य उत्तरार्थान्तरावगमो गतिः॥११६॥

---

साभिप्राय इति। अभिप्रायविशेषप्रतिबद्धस्य वाक्यार्थस्य उक्तिविन्यास उक्त्या विशेषो न्यासः शब्दगुणे पदाना भावार्थनिष्पादिता इह तु अर्थस्येति विशेषः। तथाहि। दृष्टिमित्यादौ तनुमालिखन्तु जरठच्छेदानलग्रन्थय इत्युक्त्या विन्यस्यमान एव भाविनलग्रन्थ्यालेख्यरूपार्थः कुलटास्वरूपानुसन्धानदत्तान्तःकरणस्य प्रतिपत्तु-रनन्तरमेव स्वैरविहारचिह्नगोपनमभिव्यनक्ति॥ ११५॥

गतिरिति। अर्थादर्थविशेषा हृदयसंवादिन इति यावत्। अर्थान्तरस्य तथा-भूतस्य। तेन यत्र सहृदयहृदयङ्गमात् अर्थात्काकतालीयन्यायेन तादृशमर्था-न्तरमवगम्यते सा गतिरिति लक्षणार्थः। शुभे कोऽयं वृद्ध इति। सर्वाकार-मनवद्याग्रास्तामिहास्यमपि नायमर्हतीति हृदयानुकूलमर्थं प्रश्नादवगत्य गृहपरिवृढ-स्तमाद्मादपि मम नाथ कोऽपि किन्तु गृहस्वामीति हृदयसंवादिनम् ...र्थधार्थ्ये किन्त्व पितेत्यादिकप्रश्नोत्तरशृङ्खला गवेषणीया तदेतद् व्याचष्टे। उत्तरमत्युत्तरवाक्यात्। उत्तरन्तु पद प्रश्नपदमेव॥ ११६॥

तिः सा यस्त्विहार्थानामुत्पत्त्यादिक्रियाक्रमः॥

यथ,—प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-

स्तदनुविरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।

प्रभवति पुनर्ध्वान्तध्वंसक्षमः क्षणदामुखे

सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥

अत्र उदयादारभ्य चन्द्रस्य उत्पत्त्यादिक्रियाक्रमो रीतिः॥ ११७॥

उक्तिर्नाम यदि स्वार्थो भङ्ग्या भव्योऽभिधीयते।

यथा, त्वमिवं सौन्दर्य्या स च रुचिरतायाः परिचितः

कलानां सीमान परमिह युवामेव भजथः।

अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वा-

मतः शेषं चेत् स्याज्जितमिह तदानीं गुणितया॥

अत्राभीष्टस्य नायकनायिकासङ्गमस्य भङ्ग्या भणनमुक्तिः॥ ११८॥

विवक्षितार्थनिर्वाहः काव्ये प्रौढ़िरिति स्मृता॥

यथा, त्वद्वक्त्रेन्दुविलोकनाकुलधिया धात्रा त्वदीयां श्रिय

निःक्षिप्य प्रतिराजकेषु विदुषां लक्ष्म्या त्वमापूरितः।

---

रीतिरिति। उत्पत्त्यादीना क्रियाणा क्रमः काव्यशोभावहत्वेन गुण। नेद वस्तुस्वभाववर्णनमिति जातिरर्थव्यक्तेश्च भेद'। सुगमसुदाहरणम्॥ ११७॥

उक्तिरिति। स्वीयोऽभीष्टोऽर्थ' स्वार्थ, तस्य साक्षात्प्रतिपादनम् अनुचितमिति अर्थान्तरभङ्गिभि. प्रतिपादनमर्थगुण.। भव्यो मनोहर। सुगममन्यत्। नायकनायिकासङ्गमस्येति। नायकस्य नायिकया तस्याश्च नायकेनेति परस्परोत्कण्ठाप्रकर्षो विवक्षितः। तेनैकशेषो न भवति॥ ११८॥

विवक्षितेति। कवेरभिमतस्य भूयसोऽपि अर्थस्य स्वल्पेन एकवाक्येन प्रतिपादन प्रौढि.। तथाहि। त्वान्निर्माय जगद्विलक्षणवस्तुनिर्वहणचमत्कृतस्य धातु'

तेनैते नियतं दरिद्रति गृहेष्वेषामियं दृश्यते
नैनामाद्रियसे त्वमिच्छसि नु तां त्वामेव सा धावति ॥

अत्र त्वद्वक्त्रविलोकनाकुलेन धात्रा त्वदीया लक्ष्मीः प्रतिनृपेषु निःक्षिप्ता विदुषां च लक्ष्मीः त्वयि आरोपिता। अतस्त्वं विपक्षलक्ष्मीमाद्रियसे सा च त्वामनुधावति। या च विदुषां लक्ष्मीस्तया त्वमापूरितस्तेन ते दरिद्राः। अत एव त्वमेनां नाद्रियसे इयञ्च त्वद्विद्विद्गेहेष्वेव दृश्यते इत्येतावतः प्रभूतस्य अनेकवाक्येन प्रतिपादितत्वात् विवक्षितार्थनिर्वहण प्रौढिः ॥ ११९ ॥

पदाद्याश्रितदोषाणां ये चानुकरणादिषु।
गुणत्वापत्तये नित्य तेऽत्र दोषगुणाः स्मृताः ॥
त्रिविधा अपि ते भूयश्चतुर्विंशतिधा बुधैः।
प्रोक्ता यथा गुणत्वेन प्रविभज्य तथोच्यते ॥
या क्लिष्टस्लेच्छितादीनां पददोषेष्वसाधुता।

---

त्वद्वक्त्रेन्दुविलोकनं तदासङ्गेन त्वदर्थनिर्मितायाः श्रियः प्रतिराजकेषु भ्रमणक्रमेण सञ्चारण तत्पूर्वापरप्रतिसन्धानबलाद्विद्वज्जी लक्ष्मीमाकृष्येत्यादिको भूयानर्थः स्तोकेन वाक्येनोपनीत इति ॥ ११९ ॥

सम्प्रति अतिप्रसङ्गवारणार्थं क्रमप्राप्ता वैशेषिकगुणा लक्षयितव्यास्ते च दोषा अपि सन्तो गुणीभावमापन्ना उच्यन्ते। तत्रैव कवीनामालापः। सामण्णसुन्दरीण विब्भमसुव्वहइ अविणओच्चेअ। धूमोच्चिअ पज्जलिआणम्बहुमओ सुरहिदारूणम्। * दारूणाना गुणत्वमिति शङ्का दर्शयन्नाह। पदादीति। पदवाक्यवाक्यार्थदोषाणा गुणत्वापत्तये नित्य ये भवन्ति तेऽनुकरणादिषु मध्ये दोषगुणाः स्मृता

---

* सामान्यसुन्दरीणा विभ्रममुद्वहति अविनयोच्छ्रायः।
धूमोच्चय, प्रज्वलितानां बहुमतः सुरभिदारूणाम् ॥

निरूपितानुकरणे गुणत्वं सा प्रपद्यते ॥

यथा, उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुं हु मुञ्च मम मेति च मन्दजल्पितं जयति मानवतीनाम् ॥

अत्र हुं हु मम मेत्यसाध्वोरपि क्लिष्टम्लेच्छितयोरनुकरणत्वाद् गुणत्वम् ॥ १२० ॥

गुणत्वमप्रयुक्तस्य तथानुकरणे भवेत् ॥

यथा, दिवं पतत्काषिणो यान्ति येऽचीकमतभाषिणः ।
पतत्काषिणोऽपि नो यान्ति ये वचन्ति प्रयुञ्जते ॥

अत्राचीकमतवचन्तीत्यादिपदानां कविभिरप्रयुक्तानाम् अपि अनुकरणत्वाद् गुणत्वम् ॥ १२१ ॥

---

इति सम्बन्धः । यद्यपि च अनुकरणादिका एव न गुणास्तथापि अनुक्रियमाणाद्यभेदोपचारेणोक्तम् । पदादिदोषेषु अन्त्यान्त्यस्यैकस्य नवधाभेदे चतुर्विंशतिप्रकाराः । यथेति । येनोपाधिना गुणीभवनमाचार्य्यैरुपपादितं तत्तदुपाधिविभागप्रदर्शनं करिष्यत इति । या क्लिष्टेति । इह द्वये दोषा नित्या अनित्याश्च तत्रानुकरणमात्रानपवदनीयदोषभावाश्च्युतसंस्काराप्रयुक्तादयो नित्याः । अनुकरणीयानुकरणापवादकहेतुकाः श्रुतिकटुत्वप्रभृतयस्तु अनित्याः । येषु पददोषेषु क्लिष्टम्लेच्छितप्रभृतीनां याऽसाधुता निरूपिता सा गुणत्वमनुकरणे प्रपद्यत इत्यन्वयः । लुप्तैकदेशं क्लिष्टम् । अव्यक्तरूपं म्लेच्छितम् । आदिग्रहणेन ग्रस्तनिरस्तोपध्मातकम्पितादयः । हुं हु इति । द्वितीयहुङ्कारे विन्दुप्रोञ्छनात् क्लिष्टम् । मम मेति किं मुञ्च मुञ्चेति क्लिष्टमुत ममेति न निश्चीयते ॥ अनुकरणत्वाद् गुणत्वमिति । अर्थविशेषे हि साधुत्वव्यवस्थेति । यच्चाशक्तिजम् असाधुरूपं तस्यानुकरणे साधुत्वमिष्यत इत्युक्तमनुक्रियमाणं तु स्वरूपपदानुकरणतया पूर्वार्थत्यागेन साध्वेव । तस्य एव अनुकरणस्य तत्कालरञ्जकमानवती मम वचनानुकारतया च गुणीकरणसामर्थ्यमिति ॥ १२० ॥

पत्काषिण इति । पादमविकषन्तः । हिमकाषिहतिषु चेति पादशब्दस्य

यच्छ्रुतेर्विरसं कष्टं तस्य दुर्वचकादिषु ।
गुणत्वमनुमन्यन्ते सानुप्रासस्य सूरयः ॥

यथा, त्वाष्ट्रास्त्वाष्ट्रारिराष्ट्रे न भ्राष्ट्रे नादंष्ट्रिणो जनाः ।
धार्त्तराष्ट्राः सुराष्ट्रे न महाराष्ट्रे न चोष्ट्रिणः ॥

अत्र श्रुतिविरसत्वात् कष्टत्वेऽपि दुर्वचकत्वाद् गुणत्वम् ॥१२२॥

यत्पादपूरणाद्यर्थमनर्थकमुदाहृतम् ।
गुणत्वमनुमन्यन्ते तस्यापि यमकादिषु ॥

यथा,—योषितामतितरां नखलूनं
गात्रमुज्ज्वलतया न खलूनम् ।
बभौ मुखेनाप्रतिमेन काचन
श्रियाऽधिकानां प्रति मेनका च न ॥

---

पङ्गावः । वचेर्वचन्तीत्येवरूपमप्रयुक्तं न तु अन्यथापि । सत्य नाम न वच्मीत्यादेः अनुमतत्वात् । इत्यादिपदानामित्युदाहरणान्तराभिप्रायेण ॥ १२१ ॥

यच्छ्रुतेरिति । दुर्वचकयोगा इति । व्यवहारिकचतु.षष्ठ्या दुर्वचक प्रयोगोऽनुमत. तस्य अनुप्रासघटकत्वे अलङ्कारनिर्वहणक्षमतया कविशक्तिव्यञ्जकस्य गुणीभाव. । आदिपदेन रौद्रादिरसानुप्रवेशः । यदाह । शषौ सरेफसंयोगौ टवर्गश्चापि भूयसा । विरोधिन' स्यु. शृङ्गारे तेन वर्णा रसच्युता: । त एव विनिवेश्यन्ते वीभत्सादौ रसे यदा । तदा त दीपयन्त्येव तेन वर्णा रसच्युता, इति । त्वाष्ट्रा राक्षसास्त्वष्टुरपत्य वृत्रस्तस्यारिरिन्द्रस्तस्य राष्ट्रे स्वर्गे न सन्ति । भ्राष्ट्रे चणकादिर्भर्जनस्थाने न कुण्ठदंष्ट्रा भवन्ति । असितचञ्चुचरणा हंसा धार्त्तराष्ट्रा न विद्यन्ते । उष्ट्रिण उष्ट्रोपजीविनः ॥ १२२ ॥

यत्पादपूरणेति । द्योतनीयमर्थमन्तरेण प्रयुक्तमव्ययपदमनर्थकमित्युक्तम् । पादपूरणार्थत्वन्तु दूषणताबीजम् । आदिग्रहणाद् गद्यपूरणम् । सति तु उपयोगे तस्य तद्बीजाभावाद्दोषभावविरहो अलङ्कारारम्भे च गुणत्वं तदिदमुक्त यमकादिषु इति । आदिशब्दोऽनुप्रासचित्रादिपरः । वाक्यालङ्कारार्थत्वमपि शब्दालङ्कारारम्भकत्वमेव । यदाह । आर्षार्षिपुत्रकर्षिकवैदिकादिवाक्यानाम् अलङ्का-

अत्र खलुशब्दस्य चशब्दस्य च पादपूरणमात्रेऽपि प्रयोजने यमकत्वाद् गुणत्वम् ॥ १२३ ॥

यत्तु रूढ़िच्युतत्वेन प्रोक्तमन्यार्थसंज्ञितम्।
प्रहेलिकादिषु प्रायो गुणत्व तस्य युज्यते ॥

यथा, खातयः कनि काले ते स्फातयः स्फार्हवल्गवः।
चन्द्रे साक्षाद् भवन्त्यत्र वायवो मम धारिणः ॥

अत्र खातय इत्यादीनां घर्घरिकादौ धूडस्थानवस्थाने न रूढ़िः, गूढार्थे तु प्रहेलिकादौ तन्न दुष्यतीति तेषां दोषगुणत्वम् ॥ १२४ ॥

---

रार्थां इति। तेन उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि। अभिवाञ्छितं प्रसिद्ध्यतु भगवति युष्मत्प्रसादेन इत्यत्र हि प्र इत्येतयोर्न वाक्यालङ्कारप्रयोजकत्वमित्युक्तप्रायम्। योषितामित्यादौ अतितरां न खलून योषिता गात्रमुज्ज्वलतया नोनमित्येव पर्य्याप्ते द्वितीयपादे तदुभयमपि यमकारम्भक सत् प्रस्तोपयोगितया कविव्युत्पत्तिपुरस्कारप्रवृत्तमपजहाति दोषभावमुपादत्ते च गुणत्वमिति ॥ १२३ ॥

यत्त्विति। रूढिच्युतत्वेन द्वितीया सज्ञा प्रयोजयति। आकीर्णा मन्त्रणाद्युपयोगिनी प्रहेलिका तथाच तद्विद्यसम्भाषाया विदग्धे उपन्यासे स्वार्थाप्रत्यायकत्वलक्षणवीजाभावात् न दोषो गुणस्तु भवति। अनुकरणादिकमादिपदेन गृह्यते। खातयो घर्घरिका, कनीति कन्यासम्बोधनम्। कालस्वरणः-कर्णाटदेशभाषानुसारात्। स्फातयः स्फीता, स्फार्हौ मनोहरौ वल्गुः ध्वनिश्चन्द्र आह्लादकौ वायव प्राणाः धारिणोऽनवस्थिता, तदय वाक्यार्थ, हे कनि। कन्ये! तव आह्लादकचरणबद्धा यथोक्तविशेषणा घर्घरिकाः साक्षाद भवन्ति श्रोत्रेण प्रत्यक्षीक्रियन्ते अत्र प्रस्तावे मम प्राणा उद्दीपनप्रकर्षमसहिष्णवो धारिणोऽनवस्थिता इति। व्रणप्ररोहस्थानादौ खात्यादिशब्दाना रूढिर्न तु घर्घरिकादावित्याह। अत्रेति। नाम धातुविवक्षया द्विधा व्याख्यातम् ॥ १२४ ॥

तुच्छवाच्यमपुष्टार्थमिति यत् प्राक् प्रकाशितम् ।
तस्य छन्दोऽनुरोधादौ गुणत्वमवधार्य्यते ॥

यथा,

हिरण्यवर्णाकृति मेनमर्थिनामुशन्ति कल्पोपपदं महीरुहम् ।
यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥

अत्र हिरण्यवर्णाकृतिमिति कल्पोपपदं महीरुहमिति हिरण्यपूर्वं कशिपुमित्यस्य तुच्छार्थत्वेऽपि छन्दोऽनुरोधाद् गुणत्वम् ॥ १२५ ॥

प्रतिपादितमादौ यदसमर्थमवाचकम् ।
तस्यापि खलु मन्यन्ते गुणत्वं सीत्कृतादिषु ॥

यथा, आशु लङ्घितवतीष्टकराग्रे नीविमर्द्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिककराहततन्त्रीमण्डलक्वणितचारु चुकूजे ॥

---

तुच्छेति । शब्दपल्लवनस्य प्रकृतरसाननुगुणत्वेन दोषत्वप्रसङ्गे क्वचिदनन्यगतिकतया कवेरुत्पाद्यते । तथाहि । भिन्नसर्गान्तैः इत्यादिना सर्गाणामौत्सर्गिकैकवृत्तनिर्वाहौचित्ये यथोक्तसङ्क्षिप्तशब्दाप्रवेशात्परुपेण तदर्थत्वस्य विवक्षितत्वाच्च शब्दविकाशेन दोषः किन्तु गुण एव । प्रकृतोदाहरणे । हिरण्यवर्णाकृतिमिति । कल्पोपपद महीरुहमिति च निदर्शनं मन्यन्ते । षोडशादिशब्दानामपि वशस्थप्रवेशत्वादनन्यगतिकत्वाभावात् । हिरण्यपूर्वं कशिपुमिति तु सङ्गच्छते । न हि हिरण्यकशिपुशब्दोऽत्र प्रविशति प्रदर्शनार्थं तु द्वयमन्यदप्युपात्तम् । एवंविधः शब्दविस्तरो गुणतामासादयतीत्याशयात्तेनायमर्थः । पल्लवाख्यशब्दगुणे तावत्तुच्छता चमत्कारकारितया गुणधुराधिरूढैव अविस्तरविविक्तविषयतया क्व विशेषगुणस्य भवतीति जिज्ञासाया तु छन्दोऽनुरोधो विहितः सोऽपि हि कादाचित्क करोत्येव दोषभावव्यावृत्तिमिति ॥ १२५ ॥

प्रतिपादितमिति । अस्ति कश्चिदेव विषयो यत्र असमर्थस्य चारुतया गुणभावः । तथाहि । यद्यपि गणपाठादव्यक्तशब्दः कूजितं तथापि लोके पक्षि-

अत्र कूजितस्य पक्षिणोऽन्यत्र अवाचकत्वेऽपि कामशास्त्रेऽनुमतत्वाद् गुणत्वम् ॥ १२६ ॥

शास्त्रमात्रप्रतीतत्वादप्रतीतं तदुच्यते।
गुणत्वं तस्य तद्विद्यसम्भाषादौ विदुर्बुधाः॥

यथा,—सर्वकार्य्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकम्।
सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम्॥

अत्राङ्गस्कन्धपञ्चकमित्यस्य बौद्धशास्त्रमात्रप्रसिद्धस्यापि तद्विद्यसम्भाषायां गुणत्वम् ॥ १२७ ॥

अर्थप्रतीतिकृद्दूरे क्लिष्टं नाम यदुच्यते।
झटित्यर्थप्रतीतौ तद्गुणत्वमनुगच्छति॥

यथा,

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः।

---

विषय एव नियतं तथाच अभिमतविषये प्रयुक्तं पक्षिविरुतासारमावेदयति। हारीतप्रभृतीत्यादिना कामशास्त्रकारैः सीत्कारोपदेशनात् सीत्कारस्य च चतुःषष्टिकलात्वेन प्रवणतया अत्यन्तमुपादेयत्वात्। तदाह। अन्यानि अपि आकृतिग्रहणानि उपलक्षयेदिति ॥ १२६ ॥

शास्त्रेति। शास्त्रमात्रप्रसिद्धानामाद्यप्रतीत्यजननेन विवक्षितवाक्यार्थप्रत्ययपरिस्खलन खेददायिना नास्तदुष्टताबीजम्। यदि तु कुतश्चिद्विशेषात् झटित्येव प्रतीतिं जनयेत् तदा कथं दोषः। अस्ति च प्रतिपत्तिव्युत्पत्त्यतिशयलक्षणो विशेषस्तदिदमुक्तम्। तद्विद्येति। मन्त्रणाद्यवसरे औचितीवशात् तत्तत्पदानां गुणत्वमपि निर्वहति। शास्त्रप्रक्रियापेक्षित्वं गाम्भीर्य्यम्। शास्त्रव्यवहारसङ्केतितपदानां गुणत्वमित्यन्यः प्रकारः यथावद्विनियोगः कार्य्यं तस्य प्रकारसाकल्यं शरीरं शब्दच्छलात्काय आत्मासारभूतः चैत्रचस्य। कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागौ विनिपातप्रतीकारः कार्य्यसिद्धिरिति पञ्चाङ्गानि। रूप सञ्ज्ञा संस्कारौ वेदना विज्ञानमिति पञ्चस्कन्धाः ॥ १२७ ॥

अर्थप्रतीतिकृदिति। इहापि तदेव दूषणताबीजं झटिति प्रतीतिजनने सति

पितुः पदं मध्यममुत्पतन्ती काञ्चीगुणस्थानमनिन्दितायाः ॥

अत्रात्मनः पदं शब्दगुणमिति पितुः पदं मध्यममिति चाकाशविषयां काञ्चीगुणस्थानमिति नितम्बविषयामिति सर्वप्रसिद्धेर्झटित्येव प्रतीतिं करोतीति क्लिष्टस्यास्य गुणत्वम् ॥ १२८ ॥

अप्रसिद्धार्थसम्बन्धं यद् गूढ़ार्थमिति स्मृतम् ।
तद्व्याख्यानादिषु प्रायो गुणत्वेन तदिष्यते ॥

यथा, अम्हारिसावि कइणो हलिअन्दहालपमुहावि ।

---

समाधीयते । समाधानोपायश्च पदान्तरसन्निधानमतिप्रसिद्धिर्वा प्रकरणं वा । तथाहि । प्रकृतोदाहरणे उत्तरार्द्धे हरिरित्यभिधानात् आत्मनः पदमिति हरेः पदमिति सम्पन्नमस्य च सामान्यशब्दत्वादाकाशविषया प्रतीतिः यद्यपि झटिति नोत्पत्तुमर्हति तथापि शब्दगुणमिति विशेषणेन पदार्थान्तराद्यवच्छिद्य विवक्षिताभिमुखीप्रतीतिः उपजन्यते । पितुः पदमिति । यद्यपि पदमिति सामान्य तथापि आकाशस्यैव मध्यमचरणविन्यासस्थानत्वेन प्रसिद्धेर्न तथोचितप्रतीति व्यवधानम् । काञ्चीगुणस्थानमिति । चरणादारभ्य वर्णनाक्रमे नितम्ब एव काञ्चीनिवेशनस्य उचितत्वान्न प्रतीतिव्यवधान तदिदमुदाहरणत्रयप्रयोजनमुदाहरणादेरनेकोऽत्र वाक्यार्थो गवेषणीय' । कथ तर्हि सर्वप्रसिद्धेरिति ब्रवीति । इत्थ शब्दगुणशब्दस्य बहुव्रीहित्वादवश्य विशेषपर्य्यवसानाय प्रसिद्धिरनुसरणीयाऽवश्यञ्च वर्णनक्रमेऽपि काञ्चीगुणस्थानमनिन्दिताया इत्यत्र काञ्चीगुणस्थानशब्दस्य नितम्बविशेषपर्य्यवसानार्थं कवीनामौचित्यप्रसिद्धिरङ्गीकर्त्तव्येति । ननु च आत्मन'पद शब्दगुणत्वमित्यत्र प्रसादः कस्मान्न भवति । एवमाह न भवतीति । उदाहरणस्य अदूषणत्वात् सामान्यशब्दस्य विशेषपर्य्यवसानमन्यच्च । समभिव्याहृतपदार्थससर्गरूपे वाक्यार्थे स्वच्छसलिल इव अभिमतविशेषप्रतिविम्बनमिति उपाधिद्वयस्य सङ्करात्त्व ॥ १२८ ॥

अप्रसिद्धार्थसम्बन्धमिति । तस्य गुणार्थस्य व्याख्यान तद्व्याख्यानमत्रापि अतिप्रसिद्धग आकृष्टस्य अनतिप्रसिद्धार्थप्रतीत्यकरण दुष्टताबीजम् अभिधानीय तत्तु

मण्डुक्कमक्कडावि हुहोन्ति हरिसप्पसिंहावि ॥ (ज)

अत्र मण्डूकमर्कटसर्पसिंहेषु अप्रसिद्धप्रयोगत्वाद् गूढस्यापि हरिशब्दस्य स्वयं व्याख्यातत्वाद् गुणत्वम् ॥ १२८ ॥

नेयार्थं यत् स्वसङ्केतक्लृप्तवाच्यं तदीरितम्।
प्रहेलिकादिषु प्राज्ञैस्तद्गुणत्वेन गण्यते ॥

यथा, मोरु कलावे ज वहइ तह णामह सरिसणाउ।
उस्सीसा पाअन्तिगउअ ण णत्तिहि जाणु णाउ ॥ (झ)

---

(ज) अस्मादृशा अपि कवय' हरिचन्द्रहालप्रमुखा अपि।
मण्डूकमर्कटा अपि खलु भवन्ति हरि सर्पसिंहा अपि ॥

(झ) मयूर' कलापे य वहति तस्य नाम्नः सदृशनामा।
उच्छीर्षात् पादान्तगतो नु नक्त यथा नौका ॥

---

प्रतीतिपर्य्यवसानादेव निवर्त्तते। भवति च अभिधानकोष इव व्याख्याने झटिति-प्रत्यय.। अस्मादृशा अपि मन्दप्रतिभाना. कवयः कविशब्दवाच्याः हरिचन्द्र-हलप्रमुखाश्च लोकोत्तरप्रतिभाशालिनः तदवयवता विख्याते च अविख्याते च शब्दा साधारणा भवन्ति तद्यथा हरिशब्द एवेति व्याख्यानम्। ततो दोषत्वा-भाव. प्रतिवस्तुलक्षणालङ्कारपर्य्यवसायितया च प्रकृतायानुगुणत्वेन गुणत्वलाभस्-देतत् व्याचष्टे॥ स्वय व्याख्यातत्वात् दोषाभावो गुणत्व पुनराभिप्रायिकात् प्रकृतानुगुणभावादिति बोद्धव्यम् ॥ १२८ ॥

नेयार्थमिति। अत्रापि पूर्ववदेव वासना। आकीर्णामन्त्रणादौ विदग्धाना लक्षणादय. प्रहेलिकाविशेषानुन्मीलयन्त उपयुज्यन्ते। जिअणाउ इति पाठे जितनौक इति स एवार्थ. मयूरो वर्हभारे चन्द्रक वहति। अनेन सङ्के-तेन चन्द्रनाम लभ्यते सविष्टस्य शिरोदेश उच्छीर्षं चरणदेश. पादान्त। उच्छीर्षेण प्राचीदिक् लक्ष्यते। प्राक्शिराः शयीतेतिवचनादर्थात्पादान्तेन प्रतीची ततश्च प्राच्याः प्रतीचीम् अर्द्धचन्द्रो गत इति प्रात.कालोद्देदो वाक्यार्थ.।

अत्र मयूरबर्हैकचन्द्रकसङ्केतेन कल्पितस्य चन्द्रनाम्नो नेयार्थत्वेऽपि प्रहेलिकात्वाद् गुणत्वम् ॥ १३० ॥

यदनिश्चयकृत् प्रोक्तं सन्दिग्धं तद्गुणो भवेत् ।
भवेद्विशेषावगमो यदि प्रकरणादिभिः ॥

यथा,

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
स शार्ङ्गचक्रासिगदाब्जपाणिर्मेघच्छविः पातु जगन्ति शौरिः ॥

---

अणुणेन्ति इति । अनिणणाउ इति पाठे सुभगमानिनं कान्तमनुनयन्त्या मया ज्ञात इति खण्डितकामिनीखेदोक्तिः । न चैतासां लक्षणानामस्ति किञ्चित्प्रयोजनमिति नेयार्थत्वप्रसक्तौ प्रहेलिकाभाव एव समाधानहेतुः । ननु च उच्छीर्षपादान्तपदयोरस्तु मयूरकलाप इत्यादौ तु कथम् । यमिति हि सर्वनामाभिमतमेव तावदुपस्थापयति बर्हे बहुना बहुले कथमेकस्य प्रतीतिरिति । अभिधानेऽपि कदाचित् क्लिष्टस्य विशेषगुणः स्यात् । नात्र नेयार्थता किन्तु तेन सङ्केतेन कल्पितस्य चन्द्रनाम्न इति । तस्य नाम्नः सदृशनामेत्यनेन मुख्यवृत्त्यैव विवक्षितसदृशलाभादिति । अत्रेद वक्तव्यम् । तस्य नाम्न इत्यनेन चन्द्रकपदमुपस्थापित न च तेन सहास्ति चन्द्रपदस्य सादृश्यमिति तत्र लक्षणा आश्रयणीया तदिदमुक्तं चन्द्रसङ्केतेन कल्पितस्य चन्द्रनाम्न इति । उपलक्षणतया च एकदेशव्याख्यानम् ॥ १३० ॥

यदिति । संशायकजातीयस्य सन्देहजनकत्वं नाम दूषकताबीजम् । तद्यदि कुतश्चिद्विशेषात् विवक्षितप्रतीतिः अप्रत्यूहमुपपद्यते तदा भवत्येव दोषाभावः । विशेषावगमो विशेषदर्शनं तस्यैव संशयविरोधित्वात् । महीभृत इत्यादौ अपत्यशब्दो यद्यपि गौरीशब्दोऽपि तदितरदत्तपद इति संशायकजातीयो भवति तथापि तच्छब्दोपस्थापित एव विवक्षितविशेषे पर्य्यवसन्नपजहाति दोषत्वम् । तच्छब्द एव कथं तमर्थमुपनयतीत्यत्र तु प्रकरणमेव जाग्रदवस्थमस्ति । मेघच्छविरित्यत्र तु यद्यपि मेघपदं श्यामाश्यामदत्तपदतया संशायकजातीयं तथापि प्रसिद्धपदनीलवर्णार्थगौरीपदसमभिव्याहाराच्छब्दान्तरसन्निधिरपि विशेषे नियम-

अत्र तस्मिन्नपत्ये इत्यनिश्चितस्यापि अपत्यविशेषस्य सन्दिग्धत्वेऽपि गौर्य्यामिति प्रकरणेन गम्यते। मेघच्छविरि-त्यस्य च नवश्यामादिपदानुपादानेऽपि शौरिसम्बन्धत्वात् नव-मेघच्छविर्मेघश्यामच्छविरिति वा विशेषो निश्चीयते इति अस्यापि गुणत्वम् ॥ १३१ ॥

यत्तद्विरुद्धमित्युक्तं विपरीतप्रकल्पनम्।
तथाभूताभिधानेन गुणत्वं प्रतिपद्यते ॥

यथा, अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः।
भवतोऽभिमनाः समीहते सरुषः कर्त्तुमुपेत्य माननाम् ॥

---

यति तदा छविपदं वा विशेषे पर्य्यवस्यति। अत्र प्रकरणादीनां विशेषस्मृति-हेतुत्वात्। अतएव सूत्रे बहुवचनादिपदानुपादानादनुपात्ताः तदेतदभिसन्धाय व्याचष्टे। अत्रेत्यादि। एवं नवमेघच्छविरिति चोक्ते यथानियमेन अर्थप्रतीतिः अप्रत्यूहा भवति। यथा मेघच्छविरित्युक्ते इति। अतएव कविसमयप्रसिद्ध-विशेषावगमसामग्रीसम्पादनेन गुणत्वमिति। कथं पुनरिदं क्लिष्टस्य वैशेषिकं न भवति को वाक्यभूतेन भवति। किन्तु सहायकत्वमापादयतः प्रतिभासोऽपि उक्तयुक्त्या निवर्त्तत इत्यभिमतं न चैव रूपताक्लिष्टवैशेषिके सम्भवति। एकस्यैव चित्रपदस्य सहायशक्तिरिति न वाक्यार्थगामिता ॥ १३१ ॥

यत्तदिति। एवं वस्तुप्रकृतमभिसन्धाय वाक्यरचने तदुपमर्दकवस्त्वन्तर-प्रवेशो विरोधः। यत्र द्वे अपि वस्तुनी प्रकृते वस्त्वन्तरमेव वा प्रकृतं तद्यथोक्त-रूपाभावे कथं दोषः। तथाहि। अभिधायेत्यादौ दूतवाक्ये सन्धिविग्रहयो-र्मिथो विरोधिनोरपि विवक्षितं स दोषः। सरुषः सक्रोधस्य तव माननां पूजां शिशुपाल इच्छति अनुशयं पश्चात्तापोऽभिमुखस्य स तथेति सन्धिपक्षे विग्रहपक्षे तु अनुशयः क्रोधः। भवतः सकाशादभिभूय शून्यं यभीयस्येति नित्यसापेक्षत्वात् समासः सरुषो माननां उपयोगस्तदिह निसृष्टार्थस्य उभयोपन्यासो यद्रोचते तद्वि-धीयतामित्यभिसन्धाय रचितं इति गुणत्वमित्युभयविवक्षापक्षे व्याख्यानम्। यदा तु शासनहरो दूतस्तदा उचितेषु अपि शस्त्रेषु यथोक्तवक्तारो दूता भवन्तीति

अत्र विपरीतार्थकल्पनं विरुद्धत्वेऽपि सन्ध्यर्थविग्रहार्थयोः स्फुटभिन्नार्थत्वेनाभिधानाद् गुणत्वम् ॥ १३२ ॥

अप्रयोजकमित्युक्तमविशेषविधायकम् ।
स्वरूपमात्रे वक्तव्ये तस्यापि गुणतेष्यते ॥

यथा, तेऽप्याकाशमसिश्यामसुतप्लुत्य परमर्षयः ।
साग्रं वर्षसहस्रं स तपस्तेपे महामनाः ॥

अत्रासिश्याममित्याकाशं प्रति साग्रमित्यनेन वर्षसहस्रं प्रति विशेषानभिधानेऽपि दूरोत्पतनचिरतरतपश्चरणयोरुपयोगविवक्षायां गुणत्वम् ॥ १३३ ॥

---

न्यायेन विग्रहार्थमेवाभिसतः विपक्षस्यापि प्ररोचनाद्दूतकर्त्तव्येति सुखे सन्धिपर्य्यायभूतो युक्त एव । तदिद व्याख्यानेन स्फुटयति । अत्रेति । सन्धिरूपोऽर्थं सन्ध्यर्थं विग्रहरूपोऽर्थोविग्रहार्थः तयो अभिधानेन स्फुट एव भिन्नोऽर्थं प्रयोजनं पक्षद्वयेऽपि यत्प्रयोजनमुक्तं तदभिप्रायेण एतद्व्याख्यानम् ॥ १३२ ॥

अप्रयोजकमिति । तदेव कविभिरुपादीयत इति यदभिप्रेतसन्धिमाधत्ते । यच्च वाक्यार्थप्रविष्टमपि न तथाभावमासादयति तदप्रयोजकमित्युक्तम् । तस्य यदि विशिष्यस्वरूपाभिधाने पर्य्यवसानेन प्रयोगो न तर्हि दोष. । तथाहि । आकाशमित्यादौ नासि श्यामतारूप विशेषमाकाशे काश्चिदपि विशेषमावासुन्मुद्रयति आकाशस्य सर्वदा तद्रूपानपायात् । एवमसमग्रस्य सहस्रत्वाभावात् साग्रमित्यपि न विशेषाधायकम् । आकाशसहस्रयोस्तु यदेव रूपमावेदनीयमिति अत्र एतावन्मात्राभिप्रायेण नास्ति दूषण तथापि न अन्तरीयकयोरभिधाने किं प्रयोजन येन अनयोर्गुणभावसम्पत्तिरित्यत आह । दूरे इति । अतिदूरे श्यामत्वमधिक प्रतिभाति । क्षणमात्रमपि न विरतिरासीदिति साग्रपदाभिप्रायोऽत एव नात्र पौनरुक्त्यम् । तर्हि वाक्यार्थे विशेषाधायकत्वमेव अनयोरिति कथ दूषणत्वसम्भावना । इत्थं यस्मिन् अनुपादीयमानेऽपि न अभिमतन्यूनता तत्पदमप्रयोजकम् । अस्ति चात्र द्वयोरपि तज्जातीयतायां दोषत्वप्रसङ्गः । स प्रकृतोपयोगविवक्षायामेव निवर्त्तते । सर्वथा प्रकृतानुपयोगे दूषणत्वानपायिताऽस्ति चात्रोचित एव उपयोगो यो विवक्षितुमर्हतीत्याह । विवक्षायामिति ॥१३३॥

यदव्युत्पत्तिमद्देश्यमिति पूर्वं निरूपितम्।
महाकविनिबद्धं सत्तदप्यत्र गुणो भवेत्॥

यथा, षण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला-
मालम्बप्रोत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः।
पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवम्।
किरन्तः कावेरीलडहलहरीशीकरकणान्॥

अत्र तल्लगल्लडहलहरीप्रभृतीनामव्युत्पत्तिमत्त्वेन देश्यत्वेऽपि महाकविभिः अङ्गीकृतत्वाद् गुणत्वम्॥ १३४॥

ग्राम्यं घृणावदश्लीलामङ्गलार्थं यदीरितम्।
तत् संवीतेषु गुह्येषु लक्षितेषु न दुष्यति॥

तत्र संवीतं यथा,

तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्॥

---

यदिति। सन्दर्भच्छायावैषम्यमत्र कष्टताबीजमिति पूर्वमुक्तं तत्र यदि समानच्छायशब्दसन्निवेशनेन प्रतिक्षिप्यते तदा कथं दोषः। तथाभूतानामेव पदानां सन्दर्भनिर्वाहकतया महाकविनिबद्धमिति अतएव शब्दगमकतया गुणत्वलाभः। उद्दण्डत्वेन पिण्डीतगराणां कठोरता। तादृशानामपि तरलनेन प्रौढिः। उत्तालेत्याद्यनुप्रासवत् प्रौढपदसजातीयमेव तल्लपदमेवं गल्लादौ बोद्धव्यं तदिदमाह। अत्र तल्लगल्लेत्यादि॥ १३४॥

ग्राम्यमिति। अत्र केचित् यथासंख्यं व्याचक्षते। घृणावदादीनां त्रयाणां क्रमेण संव्यानगोपनलक्षणानि दोषत्वाभावबीजानीति तदसत्। घृणावदश्लीलयोश्चि-नाव एवाग्रे प्रतिसम्भेदविकम् उपादाय संव्यानादित्रिकस्य उपदर्शनात्। एता-दृशं यथासंख्यसूचनायैव लक्षणातिक्रमेण घृणावत्तं प्रथममुपादानम्। तस्मात् संव्यानमिव संव्यानं लोकानुमतिः। किञ्चित्पदं दुष्टजातीयमपि लोकेन

अत्र तद्वीर्य्यनिषेकभूमिः इति अश्लीलस्यापि गुणत्वम् ॥ १३५ ॥

यदाह, सवीतस्य हि लोकेषु न दोषान्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्ववासना ॥

गुप्ते यथा,

सुदुस्त्यजा यद्यपि जन्मभूमिर्गजैरसम्बाधमयाम्बभूवे ।
स तेऽनुनेयः सुभगेऽभिमानी भगिन्ययं नः प्रथमाभिसन्धिः ॥

अत्र जन्मभूमिसम्बाधसुभगभगिनीशब्दानाम् अश्लीलार्थान्तरत्वेऽपि प्रथमार्थप्रभावभावनागुप्तत्वाद् गुणत्वम् ॥

---

उपादानात् साद्रूप्य जहात्येव । प्रायेण लोकानुसारि काव्यदर्शनं भवत्यत प्रतिस्वभेदत्रितयसम्बन्धात् उपपन्न यथासख्य स्यादिति अभिधाय पूर्वक्रमेण उदाहरति । अत्रेति । एतेन सवीतेषु इत्यादिक बहुवचन व्याख्यातम् । यथा शिवलिङ्गस्य संस्थान इत्यत्र । यद्यपि मुख्यविधैव शिवलिङ्गपदमश्लील एवार्थे तथापि अविगानेन अनादिप्रयोगयोगित्वान्न व्रीडादानक्षम तथा इहापि । तद्वीर्य्येति । शिवलिङ्ग इत्यत्र भगवत्सम्बन्ध प्रयोजक इति तु तुल्यमत्रापीत्याह । तदिति । अत्र हि जगदन्तर्यामिणो भगवतस्तद्विरोधितया प्रसिद्धिरुपजीव्या तदुपजीवने व्रीडादायिनी प्रतीतिः अनुत्थायिनी एव । अत्रैव आचार्य्यमत लिखति । सवीतस्य हीति । कस्य असभ्यत्ववासनेति । वासना सकललोकसाधारण ज्ञानम् ॥ १३५ ॥

यस्य पदस्य व्युत्पत्तिलभ्यमर्थान्तर ग्राम्य यस्य वा समभिव्याहारलभ्य तत्र गोपन समाधानबीजम् । तदुभय भवति रूढेर्वा बलवत्त्व जलधरादिषु इव तथा तात्पर्य्योन्नयनप्रतिबन्धेन विपरीतार्थतात्पर्य्योन्नयनपर्य्यवसान वा । यथा उदाहरिष्यमाणे तथाच प्रतीतेरप्रत्यूहे दूषणताबीजाभावः तत्र प्रथमकक्षापच्चीकरणेनादौ सुदाहरति । रूढ्युपस्थापित प्राथमिकोऽर्थः तस्य भावो झटिति वाक्यार्थज्ञान तस्य भावना वासना तया गोपन चमत्कारार्पण न तिरोधानम् अमुम् एवार्थम् आचार्य्यमतेन स्वहस्तयति । वस्तुमाहात्म्येति । अविभावनादिति । विरुद्ध

यदाह, वस्तुमाहात्म्यगुप्तस्य पदार्थस्य विभावनात् ।
भगिनीभगवत्यादि नासभ्यत्वेन भाव्यते ॥ १२६ ॥

लक्षितं यथा, ब्रह्माण्डकारणं योऽप्सु निदधे बीजमात्मनः ।
उपस्थानं करोम्येष तस्मै शेषाहिशायिने ॥

अत्र ब्रह्माण्डोपस्थानशब्दयोः असभ्यस्मृतिहेतुत्वेऽपि अन्यत्र लक्षितत्वाद् गुणत्वम् । एवमशस्तादीनामपि गुणत्वम् ॥१२७॥

यथा, भद्रे मारि प्रशस्तं वद सदसि मुदा नृत्य कृत्ये मुहूर्त्तम्,
मृत्यो रक्तैश्चतुष्कं विरचय रचयारात्रिकं कालरात्रे ।
चामुण्डे मुण्डमालामुपनय विनयस्त्रायतां भैरवीर्थाम्,
एवं देवे भवानीं वहति परिजनव्याहृतिस्त्रायतां वः ॥

अत्र मारीकृत्यादीनामपि पदानां समस्तमङ्गलायतनस्य भगवतो विश्वेश्वरस्य सम्बन्धेनोक्तत्वाद् गुणत्वम् ॥१२८॥

---

ब्रीडाद्याश्रितया भावनं तस्याभावात् । तेन क्वचिद्गोगोपादानेऽपि तथाभावसम्पत्तौ न दोषः । एतदेव उदाहरणेन स्फुटयति । भगिनीति । एतेन भगवतीति पूर्वानुपात्तमुदाहरणं व्याख्यातम् । द्वितीयगोपनम् अशस्तार्थान्तरे व्यक्तीभविष्यतीति ॥ १२६ ॥

यस्य पदस्य 'एकदेशो ग्राम्यानुगामी तस्य स्मृतिहेतुता तत्र कुत्रचिदुक्तिवैचित्र्यात् 'एकदेशो झटिति स्मारक' क्वचित् तथैव समुदायशक्त्या विपरीतार्थोपस्थापनात् झटिति स्वार्थं समुदाय एव प्रतिपादयति । आद्यो दूषणम् । द्वितीयस्तु वैजात्याभावात् गुण ॥ तदेव लक्षणं यत्र आद्ये ग्राम्यत्व ततोऽन्यत्रैव बहुधालक्षणात् तदिदमुक्तम् अन्यत्र लक्षितत्वादिति ॥ १२७ ॥

पुनरपरेण प्रकारेण सव्यानं भवतीति अप्रशस्ते स्फोरयति । परमेश्वरस्य मङ्गलायतनत्व तत्सम्बन्धिमात्रस्य एव मङ्गलीभवननियमेन शास्त्रेतिहासादौ प्रसिद्धत्वात् । तदुक्तम् । तथापि स्मर्तॄणां वरदपरम मङ्गलमसीति । अयञ्च प्रकारोऽप्रशस्तार्थ एव भवति । मार्य्यादयो मातृविशेषाः । आरात्रिकं नीराजनदीपव्यासङ्गस्थानम् । परिजनपद सम्बन्धं पुष्णाति ॥ १२८ ॥

यथा वा, सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥

अत्र धार्त्तराष्ट्राः कालवशात् मेदिनीपृष्ठे निपतन्ति इति अस्य अमङ्गलार्थान्तरत्वेऽपि हंसानहं धार्त्तराष्ट्रानिति व्यपदिशामि इति वक्ष्यमाणवाक्यान्तरगुप्तत्वाद् गुणत्वम् ॥ १३९ ॥

यथा च, कोऽभिप्रेतः सुसंस्थानस्तस्या इति न निश्चयः ।
आशापिशाचिकैषा तु कुमारी मां वरिष्यति ॥

अत्र अभिप्रेतसुसंस्थानाशापिशाचिकाकुमारीति पदानामशस्तस्मृतिहेतूनामपि लोकैरब्यत्र लक्षितत्वाद् गुणत्वम् ॥ एवं घृणावदर्थादीनामपि गुणत्वम् ॥ १४० ॥

तत्र घृणावतो यथा,
पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥

अत्र,—निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥ १४१ ॥

---

द्वितीय गोपनप्रकारमश्लीलार्थान्तरं व्याज प्रपञ्चयति । यथा वेति । पक्ष पतत्रं परिकरश्च । आशादिक् प्रत्याशा च । मदः क्षीवता दर्पश्च । निपात आगमन भ्रंशादिहताना मेदिनीसङ्गतिश्च । रङ्गमङ्गलान्त. स्वस्त्ययनप्रवृत्तस्य सूत्रधारस्य मङ्गलार्थाविकारवस्तुप्रस्तावनं तावदबुद्धिपूर्वकमत्र न सम्भवति हंसान् अहमित्यादिना तात्पर्य्यस्य नियमितत्वात् । स्वशक्त्या तु पदार्थान्तरम् आभासयन्ति पदानि दोषतया न प्रतिभासते । तत्र वीव्यङ्गविशेषोपक्षेपस्यासुखशरीरत्वादौचित्यनिवेश एव स्फुट कारणमित्याशयो बोद्धव्य. । औचित्यविरोधो न सार्वत्रिक इति नातिप्रसङ्ग ॥ १३९ ॥

कोऽभिप्रेत इत्यादौ पूर्ववदेव वासना ॥ १४० ॥

अथापरं सभ्यानप्रकारं घृणावदर्थं कथयति । यथेति ॥ १४१ ॥

घृणावदर्थान्तरस्य यथा,

कामिनीगण्डनिःस्यन्दिविन्दुरिन्दुर्मतो मम।
अन्यथा कथमेतस्य जगद्द्योतिनी द्युतिः॥

अत्र रागातिशयहेतुभूतयोः कामिनीकपोलचन्द्रमसोः स्वरूपभावनासाहाय्येन अर्थान्तरभावना गुप्तेति गण्डनिःस्यन्दिविन्दुरित्यस्य घृणावदर्थान्तरस्यापि न दोषः॥ १४२॥

घृणावत् स्मृतिहेतुर्यथा,

विपूयरसनावन्तः पलाशाषाढधारिणः।
ब्रह्मवर्चस्विनो यान्ति द्विजपोगण्डका इमे॥

अत्र विपूयपलाशब्रह्मवर्चसपोगण्डशब्दानां घृणावत् स्मृतिहेतुत्वेऽपि अत्र लक्षितत्वात् अदोषत्वम्॥ १४३॥

एवमन्यत्र द्रष्टव्यम्।

अत्र च, किञ्चिदाश्रयसम्बन्धाद्धत्ते शोभामसाध्वपि।

---

गुणवृत्तिव्यापाराश्रयेषु अवान्तरादिपदेषु प्रथमत एव अन्यक्रियादिधर्माणाम् अन्यवारोपे समाधिप्रादुर्भावात् अनुत्थान दोषाभावत्वद्वार ततश्च मुख्य एव स्थाने जुगुप्सादायित्व पूर्वाचार्य्यश्लोकेनैव व्याचष्टे। अत्रेत्यादि। गुणग्रस्तत्वम् अभिप्रेत्यातिशयसम्पत्तौ प्रकृतौचित्यात् कपोलस्यैव प्रतिभासस्तदिदमुक्तं रागातिशयहेतुभूतयोरिति। तथाच जगन्नयनानन्दभूतस्य निःशेषिताशेषतमस चन्द्रमसो यदिदमभिमतकामिनीकपोलस्थलावण्यविन्दुमात्रतया भान तदुचितमेवेति॥ १४२॥

प्राच्यानामेव वासनाम् अभिसन्धाय स्मृतिहेतुमुदाहरति। यथेति। आषाढो दण्ड। ब्रह्मवर्चस्विन इति। ब्रह्महस्तिभ्या वर्चस इति समासान्तस्ततो मत्वर्थीय इति पोगण्डो बाल॥ १४३॥

एवमन्यप्रकारमपि सभ्यानादिक स्वयमुन्नेयमित्याह। एवमिति। अनि-

कान्ताविलोकने न्यस्तं मलीमसमिवाञ्जनम् ॥

तद् यथा, अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥

अत्राश्रयस्य बीभत्सरसोचितत्वात् अदोषः ।

सन्निवेशवशात् किञ्चिद्विरुद्धमपि शोभते ।
नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥

तद्यथा, अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः सम्भूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥

---

त्योऽय दोषः । तेन यत्र दोषता नास्ति तत्र विषये रसप्रकाशसामग्र्याम् अन्तर्भावात् कथं न गुणत्वम् अन्तर्भावश्च द्विधा प्रयोगविषयौचित्येन वा वागनुभावौचित्येन वा तत्र प्रथमं दर्शयति । किञ्चिदिति । यथा अञ्जनस्य न अञ्जनवल्लर्यादिसङ्गतत्वेन अतशो भाव्यमानस्यापि उद्दीपनविभावना । भवति तु कान्ताविलोचनचुम्बि-तयानुसन्धीयमानस्य । तथा पदस्यापि विषयेऽतद्विषये च प्रयुज्यमानस्य तदेतत् व्याचष्टे । अत्र आश्रयस्येति । द्वितीयमन्तर्भावप्रकारं व्युत्पादयति । सन्नि-वेशवशादिति । सन्निवेशो वागनुभावः । औचित्याकृष्टपदघटना तद्वशत्वं तदा-कृष्टत्वम् अतएव विरोधिसङ्गततया विजातीययोरपि औचितीवशेन कान्तिविशेषो-न्मीलकत्वात् पत्रपुष्पव्यतिकरजमालासादृश्यं दर्शयति । नीलमिति । अन्त्रै-रित्यादौ प्रत्युत्पन्नप्रदोषोन्मत्तप्रेताङ्गनावलोकस्य माधवस्यालम्बनोद्दीपनविभावादि-प्रकर्षे बीभत्सरसोत्तेजकतावदुपपन्नो यस्तु अयमकस्मादेव मङ्गलादिपदानां शृङ्गा-रानुयायिनामिह निवेशः स कथं दोषभावादपनेतव्यः, कथं वा गुणत्वम् आसा-दयितव्यं इत्यतो हेतुगर्भं व्याचष्टे । अत्र शृङ्गारिण इति । शृङ्गारवासनानि-

अत्र शृङ्गारिणो हि जगदपि शृङ्गारमयं पश्यन्तीति बीभत्सरसेऽपि मार्दवेन अन्त्रादिपदानाम् अन्तरालेषु निवेशितानां मङ्गलप्रतिसरादिपदानामदोषः।

अश्लीलादेरमी भेदा भिद्यन्ते यत्त्रिधा त्रिधा।
भवन्ति नव तेनैते पूर्वोक्ता दश पञ्च च॥
चतुर्विंशतिरित्येषा प्रोक्ता पदसमाश्रया।
समासात् पूर्वनिर्दिष्टदोषाणां गुणकृतये॥
इत्येतत् पददोषाणामदोषत्वमुदीरितम्।
इदानीं वाक्यदोषाणां गुणत्वमभिधीयते॥
तत्र शब्दविहीनस्य विवक्षावशतः क्वचित्।
निसर्गसुन्दरत्वेन गुणत्वं परिकल्प्यते॥

---

विष्टः शृङ्गारी तथाच पूर्वं वीभत्सरसान्वयेऽपि प्रकृतशृङ्गारभङ्गो मा भूदित्येतदर्थं मेव कविना मम हीत्यादिना प्रतिज्ञाय लीनेव इत्यादिवासनादृढलम् उपपादितम्। अतएव प्रतिपद रूपकमाविष्टाभिप्रायसैव शृङ्गारसय शृङ्गाराङ्गतया रसतापन्नम्। उपपद्यन्ते च तच्चित्तस्य सादृश्यमात्रेण तद्रूपतानुसन्धानम्। ततश्च कथ न उद्दीपनता वस्तुसत्त्वस्यानुपयोगित्वात्। अतएव सूचितस्य वीभत्सस्य प्रकृतेन बाधात् प्रकृतार्थानुपोष इति। ननु कथमुद्देशे चतुर्विंशतिधा इत्युक्त दोषाहि पूर्वं षोडशैव विभक्ता इत्यत आह। अश्लीलादेरिति। निगदव्याख्यातम्। चतुर्विंशतिरित्येषेति आदशब्दः सख्यासख्येये वर्त्तते ततः सख्याने सख्येये चेत्यभिधानात् केवलसख्यानवचनत्वेन गवा विंशतिरितिवत्पदसमाश्रयेत्युपपन्नम्। क्रमप्राप्तवाक्यदोषगुणीभावव्युत्पादनम् अवतारयति। इदानीमिति। यस्य वस्तुनो नानारूपाणि विजातीयरूपाणि तत्र तद्रूपविवक्षावैचित्र्याच्छब्दवैचित्र्य सङ्गच्छत इति दोषत्वाभाव। एव रूपतागमितवतीत्यादौ कदापि नास्तीति दोषरूपता एव। क्वचित् पुनरस्ति रूपान्तरमित्याह। क्वचिदिति। भवत्वेव गुणत्वन्तु कथमित्यत आह। निसर्गेति। नियतरूपविवक्षाहि महाकवीना न लावण्यम् अनुसन्धाय

यथा, आक्षिपन्त्यरविन्दानि मुग्धे तव मुखच्छविम् ।
कोशदण्डसमग्राणां किमेषां खलु दुष्करम् ॥

अत्र न लोकाव्ययनिष्ठाखलर्थतृणामिति कर्तृकर्मणोः षष्ठीप्रतिषेधे किमितेषां दुष्करमित्यपभाषणेऽपि सम्बन्धमात्रविवक्षातो गुणत्वम् ॥

यदाह, इदं हि शास्त्रमाहात्म्यदर्शनालसचेतसाम् ।
अपभाषणवद् भाति न च सौभाग्यमुज्झति ॥ १४४ ॥

यत्र: सम्बन्धविज्ञानहेतुः कोऽपि कृतो यदि ।
क्रमलङ्घनमप्याहुर्न दोषः सूरयो यथा ॥
बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु ।

---

भवितुमर्हति तथाहि आक्षिपन्तीत्यादौ एषां दुष्करमिति अत्र खलर्थयोगेन लोकाव्ययनिष्ठाखलर्थतृनामित्यनेन षष्ठीप्रतिषेधादेषामिति कथं षष्ठीति दुष्टजातीयतामादाय शेषरूपविशेष विवक्षासमाधानहेतु । अस्ति हि षष्ठ्यर्थस्य सम्बन्धस्य द्वैरूप्य सम्बन्धसामान्य विशेषश्च जन्यजनकभावादिः । तत्र सम्बन्धविशेषविहितषष्ठीमुपादाय नलोकेत्यादिना निषेधः सम्बन्धसामान्यरूपमुपादाय षष्ठी केन वार्य्यते । अयमेव सम्बन्ध. शेष इत्युच्यते । एवं तावत् न दोषत्वम् । यथा कोषसमग्राणा राज्ञा विपक्षश्रीहरणमुपदिश्य यत् किमपि सम्बन्धिमात्रमेव न दुष्कर तथा पद्मानामिति समर्थयामहे । कथम् अन्यथा दुरापत्वहृदनश्रीहरणमिति प्रकृतपोषलाभात् गुणत्वमतिसुलभ तदेतत् व्याचष्टे । अत्रेति । ननु सम्बन्धमात्रविवक्षाया दोषता मा भूत् गुणत्व तु कथमिति यथोक्तमभिसन्धाय परमत लिखति । इद हीति । शास्त्रमाहात्म्य विधिनिषेधयो परस्परासङ्कीर्णविषयत्वम् ॥ १४४ ॥

यत्र इति । क्रमभ्रंशे हि यथा अभिमतान्वयप्रतीति प्रत्यूहो दूषणताबीजं तद्यदि कुतश्चिद्विशेषादस्खलितैव प्रतीतिरुपजायते तदा बीजाभावेन तथाभावो निवर्त्तत एव स च विशेषः प्रतिपदमनुक्रमितुं न शक्यत इति कोऽपि यत्र इति सामान्येन प्रतिपादितम् । योऽय शब्दक्रमलङ्घनापवादोऽर्थक्रमलङ्घने तु

आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥

आद्यन्तौ मध्यम इति सम्बन्धिविज्ञानहेतोर्विधानात् न शाब्दक्रमलङ्घनं दोषः। वक्तुश्च बन्धुत्यागदेशत्यागयोः तनुत्यागाद् गरीयस्त्वेनाभिमतत्वादित्यर्थक्रमलङ्घनस्यापि गुणत्वम् ॥ १४५ ॥

विरूपसन्धि यत्पूर्वं विसन्धि च निरूपितम् ।
न च दुर्वचके प्रायः प्रगृह्यादौ च दुष्यति ॥

तत्र—दुर्वचके विरूपसन्धिः ॥

यथा,

जयन्ति वर्षास्विति भर्गदुर्गयोः सुदुर्वचा दुर्वचकप्रयुक्तयः ।
अभेद्गौड्जे खमपोग्भोग्रुग्भुङ्भ्रमव्रुणसुखि सभ्रजेधि नः ॥

---

अभिप्रायविशेष तथाहि बन्धुत्याग इत्यादौ बन्धुत्याग तनुत्याग देशत्यागात् क्रमेण उद्दिश्य तथैवानुद्देशोऽपि अर्हति न तु आदिममुद्दिश्य ततोऽन्त्यस्ततो मध्य इति उद्देशानुद्देशलक्षणशास्त्रक्रमभङ्गजातीयत्वेऽपि सम्बन्धज्ञानहेतुयत्नकरणात् अदूषणत्वं व्यवस्थाप्यते। यतश्च अयमेव यदादिपदैः उल्लेखसन्निहिततत्तत्स्थानविशेषगामिन एव प्रतीतिमुपजनयन्ति। अवश्यञ्चानेन क्रमेण अत्र वक्तुमुचित तनुत्यागस्य विजातीयताविवक्षया पृथगेव वक्तुमर्हत्वात्। एवञ्च अनुपपत्तिर्लोके बन्धुत्यागापेक्षया शरीरत्यागस्य अतिक्लेशत्वेन प्रसिद्धि'। अतश्च मध्यम आयतक्लेश आद्यन्तौ क्षणिकज्वरौ इति वचनमुचितमिति आर्थक्रमभङ्गः कथ न भवति तत्राह। वक्तुश्चेति। अभिमतमित्यनेन अभिप्रायविशेषोऽपवादहेतु यथारुचि यथार्थित्व यथाव्युत्पत्ति भिद्यते। आभासोऽप्यर्थ एकस्मिन् अनुसन्धानसाधित, इति न्यायात् उपपन्नम् एवैतदिति ॥ १४५ ॥

विरूपेति। विरूपो दुर्वाचकोविसन्धिर्विगत संहिताकार्य्यं दुर्वचके कलाविशेषरूपतयानुमते संहिताकार्य्यनियम। द्वितीये कुत्र अदूषणमित्याह प्रगृह्यादौ इति। प्रगृह्य मीदूदेद्द्विवचन प्रगृह्यमित्यादिना यत्र प्रगृह्यसंज्ञा विहिता तत्र आदिग्रहणादिनापि प्रगृह्यसंज्ञया प्रकृतिभावविधानम्। यथा उदाहरि-

अत्रोत्तरार्द्धस्य विरूपसन्धित्वेऽपि दुर्वचकत्वेन कलाविद्भि-
राहृतत्वाद् गुणत्वम् ॥

यदाहुः। शुकस्त्रीबालमूर्खाणां मुखसंस्कारसिद्धये।
प्रहासाय च गोष्ठीषु वाच्या दुर्वाचकादयः॥

प्रगृह्यादौ विगतसन्धिर्यथा,

कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः।
स इतोऽब्दे ऋतावृतप्रियो न ऋचस्त्वं न यजूंषि जुहुषे॥

अत्र विसन्धेः प्रगृह्यादिहेतुकत्वाद् गुणत्वम्॥

यदाह, न संहितां विवक्षामीत्यसन्धानं पदेषु यत्।
तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम्॥ १४६॥

---

ष्यते। यत्र वा वक्तुः खेदादिना विच्छिद्य पाठे विरतिर्भवति। यथा। का
स्तकशिरोरुहेति। तदेव दुर्वचकप्रगृह्यादौ यथासङ्ख्य विरूपविसन्धिविगत-
सन्धानयोः अपवादकारणे इत्याह। अत्रेति। प्रयुज्यन्त इति प्रयुक्तयो दुर्वच-
काश्च ता प्रयुक्तयश्चेति दुर्वचकप्रयुक्तय इति कर्मधारयः। सुदुर्वचा इति। अन्यै-
र्नोच्चारयितुमशक्याः। स्वयमेव कवि प्रतिज्ञाय उत्तरार्द्धे दुर्वचकानि आह। अभे-
डित्यादि। हे अगेडजे पर्वतराजपुत्रि। खम् आकाशमभेड्भाना नक्षत्राणामीडी-
श्वरश्चन्द्रः सोऽविद्यमानो यत्र तिरोधानात् असत्कल्पिता चन्द्रमसः केन पुनस्तिरो-
धानमित्याकाङ्क्षायां द्वितीयं विशेषण अपोग्रेति। अपगतोग्रभाः दीप्तिः उग्ररुचिरः
आदित्य तदीयद्रोहकारिणोऽभ्रपदवाच्या मेघा यत्र। असु रोहतीत्यब्रुट् पद्म
तद्वन्मुख यस्या इति देवीसम्बोधनम्। चेदीदृशं तर्हि सभ्रं सहचरी भवास्माक-
मिति गौर्य्या उत्तरम्। कलारूपत्वेन विरूपसन्धानस्य गुणत्वमित्याह। कलाविद्भिः
आहृतत्वात्। कमले इवेत्यादौ उदाहरणत्वात् नैकं श्लोकार्द्धः। पूर्वार्द्धे कमले
इत्यादि त्रितयं प्रगृह्यसञ्ज्ञोदाहरणम्। उत्तरार्द्धे विनैव प्रगृह्यसञ्ज्ञा प्रकृति-
भावविधान यत्र तत् त्रितयोदाहरणम् तथाहि अब्दे ऋताविति न ऋच इति च
ऋत्यक इत्यनेन प्रकृतिभावः। यजूंषि जुहुस इति। इको सवर्णे शाकल्यस्य

अत्र मा स्म जुगुप्सेति वक्तव्ये जुगुप्सत स्म एनमदुष्टभावं मैवमिति पदव्यतिक्रमस्य व्यस्तेऽपि इच्छन्ति केचिदिति लुङ्लङोर्विशेषलक्षणत्वाद् गुणत्वम् ॥ १४८ ॥

पर्य्यायेण द्वयोर्यत्र वाक्यं प्रश्नोत्तरादिषु।
संकीर्णं तन्न दोषाय वाक्ये वाक्यविदो विदुः॥

यथा, बाले! नाथ! विमुञ्च मानिनि! रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।

---

तादृगुच्चारणविपर्य्यासेन वा। यथा कपालमनुलिम्पति दुकूलं परिदधातीति अत्र क्रमनियमोऽभिमत.। अनुलिम्पति कपालं परिदधाति वस्त्रमिति अपिक्रतेन तस्यैवार्थस्य लाभात्। यदा तु कपालं परिदधाति दुकूलमनुलिम्पतीति क्रियते तदा भवति सन्निधिविपर्य्यासः तदेतद् व्याकीर्णसङ्कीर्णयोः तुल्यं तदिदमुक्तं क्रमेण व्युत्क्रमेण वा स्मोत्तरे लङ् चेत्यनेन मा शब्दादुत्तरं यत्र स्मशब्दप्रयोगः तत्र लुङ्लङोर्विधाने पदक्रमनियम. कृतः तत् कथं स्म ममेति प्रयुक्ते सोऽर्थः प्रत्येतव्य इत्यत आह। व्यस्त इति। विशेषेण लक्ष्यत इति विशेषलक्षणं तस्य भाव त्वम् ॥ १४८ ॥

पर्य्यायेणेति। यत्र वाक्यैकवाक्यतायाम् अवान्तरवाक्येषु परस्परपदार्थप्रवेशेन यथाऽभिमतसंसर्गप्रतीतिः स्खलिता भवति तत्र सङ्करो दूषणप्रतीतेः अस्खलने तु न दोषः। स्खलनं च अनेकवक्तृकपर्य्यायप्रवृत्तवाक्यावयवमिश्रणेन भवति तदपि मिश्रणं प्रश्नोत्तररूपमन्यादृशं वा भवतीति आह। प्रश्नोत्तरादिषु इति। विषयसप्तमीयम्। वाक्ये वाक्यं वाक्ये वाक्यं पृषोदरादित्वात् साधु। तत्र प्रश्नोत्तरादिरूपं वाक्ये वाक्यमुदाहरति। बाले इति। अत्र बाले विमुञ्च मा प्रति रुषमिति प्रथमप्रश्नवाक्यं नाथ रोषात् मया किं कृतमिति तादृशमेव उत्तरवाक्यम्। तत्र बाले इति वाक्यप्रतीकानन्तरमेव नाथेति वाक्यान्तरप्रतीकस्य निर्देशः सङ्कीर्णजातीयतामाकारयितुमत. प्रश्नोत्तरप्रभावादपोद्यते। सङ्कीर्णयो अपि वाक्ययो. पर्य्यायनिर्देशे भवति एव वाक्ये वाक्यमिति चेत् न

तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥
अत्र सङ्कीर्णत्वेऽपि वाक्ये वाक्यत्वात् न दोषः ॥ १४९ ॥

प्रकृतिस्थादिभेदेन ग्राम्यादिभिरथापि वा।
अपदं तस्य चानुज्ञा भाषाचित्रे विधीयते ॥

यथा, ह्यतो जो ज्जलदेउ नैव मदनः साक्षादयं भूतले
तत् किं दीसइ सच्चमाहतवपुः कामः किल श्रूयते।

---

व्यतिकरस्याऽभिप्रायविशेषव्यञ्जकतया चमत्कारकारित्वेन विजातीयत्वात् अतएव गुणत्वम्। तथाहि। बाले इति पद परचित्तानभिज्ञायाः क्षुद्रसहचरीवचसि विश्वासभाजः सोपालम्भं सम्बोधनमाविष्करोति। एतदाकर्ण्य अनन्तरमेव ईर्ष्याकषायकामिनीवचनमुचितमिति नाथेति सम्बोधनं साभिप्राय प्रभुरसि न पुनरस्मासु दत्ताश्रयो न वा स्वाधीनता सौभाग्यभागिति विवक्षितत्वात्। एवमुत्तरत्र स्वयमुन्नेयम्। उपलक्षण च द्वयोरिति एकस्यापि वक्तुः प्रहेलिकादौ तद्विधविषये तदाभाषणस्य उचितत्वात्। विजातीयवाक्यद्वयसन्दंशपतितपदे किमिदमनेन अन्वीयतेऽनेन वेति सन्देहसङ्कीर्णता सम्भयोऽपि सङ्करमव्यासीन एवेति गुरवः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामिति अत्र राजपद सन्दंशपतितं किं पूर्व्वेणाथ परेणान्वीयत इति सन्दिह्यते राजगीचौरादौ द्वयेनानुयोगी पदस्य निश्चित इति ॥ १४९ ॥

प्रकृतिस्थेति। विभिन्नेत्यादौ अपदलक्षणसूत्रे पञ्चानामिति व्यतिकर एकत्वेन नाभिप्रेतोऽपि तु ग्राम्यादित्रिकस्य वा प्रकृतिस्थादित्रिकस्य वेति विकल्पेन उपन्यासप्रयोजनमनुज्ञासम्पत्तिस्तेन दोषताभावगुणीभावौ प्रतिपादितौ। विषयं दर्शयति। भाषाचित्र इति। संस्कृतादिव्यतिकरस्य अपदत्वेन अभिप्रेतत्वात्। संस्कृतादयो ग्राम्यादयः प्रकृतिस्थादयश्च भाषाशब्देनाभिमताः। यथा हि नानावर्णारम्भमालेख्यचित्र यथा वा भिन्नप्रकारतन्तुनिर्वात. पटश्चित्रपटस्तथा नानाभाषाभिरारब्धं किञ्चित् काव्य चित्रमुच्यते। चित्रमाश्चर्य्यं तत्कारि च चित्रम्। तेन रूपद्वयसम्पत्तौ युक्तिपोषः स्यादेवं यथौचित्याकृष्टनानाभाषाव्यतिकरजनैक सम्भवतीति आमञ्ञ्य सर्वेमात् सर्वं भाषासङ्करमेव उदाहरति।

एद्दूए किअलेउ भूतपतिना गौरीविवाहोत्सवे
ऐसे सच्चुजिवोल्लुहस्तकटकः किं दर्पणेनेच्यते ॥

अत्र ग्राम्यः प्रष्टा नगरमागतः राजानं दृष्ट्वा ग्राम्यैः प्रकृतिस्थैरेव वा पदैः प्राकृतेन पृच्छति। हातो जो ज्जलदेउ इति। नागरश्च तमनुजिघृक्षुरुपनागरैः कोमलैर्वा पदैः सवक्रोक्तिं प्रत्याचष्टे, नैव मदनः साक्षादयं भूतले इति। अथ ग्राम्य आहितप्रतिभः पूर्वपदानुरोधादर्द्धप्राकृतेन एव ग्राम्योप-

---

यथेति। सङ्करमौचितीं च व्याख्यानेन स्फुटयति। अत्र ग्राम्य इति। ग्रामवासी किञ्चिद् व्युत्पन्नश्च। ग्राम्याश्च नगरवस्तुनि अद्भुतचमत्कारवन्तो जिज्ञासवश्च भवन्तीति जातिः। तत्र राजानं दृष्ट्वेति। अद्भुतवस्तुकथनेन चमत्कारः। पृच्छतीति। जिज्ञासा बहुमान आदरः चमत्कारेणैव। यद्वा यान पृच्छति तेषु एव बहुमानो धन्यास्ते ये नामगोत्रादिकमेतस्य जानन्त सततमनम् अवलोकयन्त इत्याशयात्। प्रस्तुतग्राम्यप्रकृतेः च अस्य प्राकृतपदैरेव प्रश्नो योग्यस्तदेतत् सर्वम् आदर्शयितुं प्रश्नं पृथक्कृत्य दर्शयति। हातो इत्यादि हातो इति महाराष्ट्रभाषाया प्रश्नकाकुरय स इत्यर्थे। स इति यो नामैतत् नगरनायकत्वेन अस्माद्ग्रामेऽपि बहुशो विख्यातकीर्त्तिरिति चमत्कारः। जोज्जलदेउ इति। जिज्ञासा सामान्यतश्च नगरसञ्चरिष्णुजनगोचरोऽय प्रश्नः। अत्र सर्वाण्येव पदानि नातिहीनपात्रे ग्राम्ये प्रकृतिभवानि अपभ्रंशपदानि। देशीपदत्वेन सर्वेषां ग्राम्यता। हातो इत्यनेन स्वरकृत गौरवम्। जोज्जलदेउ इत्येकसंयोगवर्णापादितगौरवञ्च प्रकृतिस्थ तदत्र प्राकृतग्राम्ययोः औचित्यात्सङ्करः। प्रकृतिस्थे तु नौचित्यम् उपयुज्यतेऽपि तु सन्दर्भारम्भस्तेन प्रक्रान्त इति विवक्षितम्। अधिकस्य प्रष्टव्यस्य अभावात् एतत्प्रश्नानन्तरमेव उत्तरावसरः। ततश्च नानौचित्यम्। प्रश्नोत्तरोपन्यासो हि इति। प्रकृत्यैव च नागरका ग्राम्यमतविरोधिनो वक्रोक्तिरसिका भवन्ति। यदि तस्य ग्राम्ये जघन्यबुद्धिः किमिति उत्तरमेव दास्यतीत्यत उक्तम् अनुजिघृक्षुरिति। सबहुमान पृच्छति। ग्राम्ये यस्य दया तदानीम् आसीत् जिज्ञासानिवर्त्तकज्ञानजननम् अनुग्रहः। यद्यपि नागरस्य नागराण्येव पदानि प्रयोक्तुमर्हन्ति तथापि ग्राम्यानुग्रहे कर्त्तव्ये तद्बोधयोग्यमेव उक्तिमप

नागरैः प्रकृतिस्थकोमलैर्वा पदैस्तमुपालभते। तत् किं दीसद्द
सच्चमाहतवपुः कामः किल श्रूयत इति। अथ नागरो
ज्ञाततत्प्रावीण्यः तत्पदानुरोधादेव अर्द्धप्राकृतेन ग्राम्योप-
नागरनागरैः प्रकृतिस्थकोमलकठोरैर्वा पदैः समाधत्ते।
एद्दूए विअलेङ भूतपतिना गौरीविवाहोत्सवे इति। अथ
ग्राम्यः श्लोकसमाप्तिः पादस्य तदुत्तरस्य च अनुरोधाद्
ग्राम्याणि प्रकृतिस्थानि वा त्रिचतुराणि पदानि प्राकृतेनोक्त्वा
पादार्द्ध एव तिष्ठति। ऐसें सच्चुजिवोलु इति। अथ नागरो

---

न तु नागरत्वं तर्हि ग्राम्यैरेव कुतो न ब्रवीतीति अपि न वाच्यम्। सहसा एव
तथाकरणे ग्राम्यमतविरोधोऽपि तु उपनागरकरूपभङ्गप्रसङ्गात्। ततो मध्यमानि
उपनागराणि प्रयोगयोग्यानि इत्याह। उपनागरैरिति। स्वभावत एव प्राकृत-
प्रकृतिस्थाना संस्कृतप्रकृतिस्थाना प्रौढत्वं भवति। येन यद्यपि ग्राम्यप्रयुक्तजातो-
यान्येव सन्दर्भैकरूपतासिद्ध्यर्थं घटयितुम् उचितानि तथापि औचितो प्राप्त-
संस्कृतपदनिवेशने यदि प्रकृतिस्थत्वमाद्रियेत तत' छायावैरूप्यं स्यादिति आश-
येन कोमलप्रायाण्येव निवेशितानि इत्याह। कोमलैर्वा इति। भूयसा व्यपदेशो
भवतीति लोकन्यायानुसारात् साचादिति एकस्य प्रकृतिस्थत्वेऽपि कोमलैरिति
उक्तम्। साकाङ्क्षप्रश्ने च किमथ लोकोत्तरो "नोज्जलदेउ" नान्यः कश्चित्
तादृगिति भावो विवचित तत्र न इत्येव उक्तेन अनुग्रहः कृतः स्यादिति अधिक-
मपि किञ्चित्वक्तुमुचितमित्याह। सवक्रोक्तीति। एतेन नागरकवृत्तिरूप-
स्पृहिता नैव इत्येवकारेण मनुष्य एव अयं न भवति दूरे तद्विशेषरूपो नोज्जलदेव
इति प्रकाशितम्। साचादिति। प्रत्यक्षेण अवधार्यमाण. किञ्चित्व्युत्पन्नत्वेन
ग्राम्यस्य उक्तत्वात्। कामव्यावृत्तसाचाङ्गावलक्षणविरुद्धधर्मानुसन्धानेन मदन-
दाहव्यतिकरता सम्भवतीति लब्धावसरे ग्राम्यानुयोगम् अवतारयति। अथेति।
शिक्षाविशेषस्पर्शिनी बुद्धिःप्रतिभा। साम् एकान्ततो नागरकवृत्तपरिचयपरा-
ङ्मुखीन मा भङ्क्षिष्ठा इत्याशयशौटीर्य्येण नागरकप्रयुक्तजातीयैः एव पदैः प्रश्नो
योग्यो न चैतावतैव सर्वथा प्रकृतित्यागोऽर्हतीत्यतः स्वप्रयोगयोग्यान्यपि प्रयोग-
मर्हन्ति तत्राऽर्द्धं प्रकृतिवैशसेनार्द्धं प्राकृतमर्द्धं ग्राम्यस्य प्रश्नवाक्यानुचितम् इत्याह।

जितकाशी ग्राम्योपनागरनागरैः प्रकृतिस्थकोमलकठोरैरेव पदैः श्लोकमुत्तरञ्च पूरयति, हस्तकटकः किं दर्पणेनेक्ष्यते इति। तत्र च प्राकृतानां सर्वेषामपि ग्राम्यत्वम्। प्रष्टुः संस्कृतपदेषु वपुरित्युपनागरं शेषाणि ग्राम्याणि प्रतिवक्तुश्च हस्तविवाहगौरीपदानि ग्राम्याणि, भूतपतिनेति नागरं

---

पूर्वपदानुरोधादिति। पूर्वं परप्रयुक्तं पद तर्कितम्। सद्मना सत्यः। यावती ग्राम्यस्य व्युत्पत्तिरर्हति तावतीमुपन्यस्यति। श्रूयत इति। ऐतिह्यासिकमुखा देवम् आकर्णितं न पुनरद्यापि निर्णयो वर्त्तते इत्यर्थः। तर्कितमिति प्रकृतिस्थ दौयदौति कोमलं सद्मनेति प्रकृतिस्थं हतवपुरिति कोमलं कामं किलेत्यपि तथा श्रूयत इति प्रकृतिस्थम् इत्यनन्तर नागरिकस्य उत्तरावसरः। कथं परमार्थवादिनि उत्तर दातव्यमिति अनुपपत्तावय समाधानप्रकारो भवति। अस्ति ग्राम्यस्य किल श्रूयत इत्येताभ्यां सन्दिहानत्व किञ्चित्व्युत्पन्नत्वञ्च उन्नीतमिति किमपि अलीकमेव बुद्धिकौशलात् तथा प्रतीयमानम् अभिधाय प्रतारणम् उपपद्यते। तन्मात्रपरत्वाच्च सर्वाकारम् अधिका व्युत्पत्तिराहत्यदर्शयितुमर्हतीति तर्कितम् इत्यादिपाठे यावती ग्राम्यस्य व्युत्पत्तिस्तावदनुकरण कियदधिकव्युत्पत्तिपुरस्कारमर्हतीति आशयवानुत्तरम् अवतारयति। अथेति। पादस्तर्कितम् इत्यादिग्राम्यप्रयुक्तः तस्य अनुरोधी व्युत्पत्त्यनुकरणम्। ऐदूए इति दृष्ट व्याजोऽनेन व्याजेन भूतपतिः पशुपतिः। ननु न क्वचिदेव श्रूयते तत्कथ ग्राम्यस्य प्रबोधी भवतीत्याह। गौरीविवाहोत्सव इति। मा श्रूयताम् उपपत्त्या तु सिद्धो द्वितीयो यदि कामप्रादुर्भावो न स्यात् कथं गौरीपाणिग्रहं भगवत उत्साह इत्यतस्तेन एव कारुणासन्तानशान्तात्मना भूयः सृष्टः स्यात् इत्यर्थः। पच्छेति पाठे प्रकृतिस्थ मे इति कठोर किमलिउ इति कोमलं भूतपतिनेति तथा। गौरीविवाहोत्सव इति प्रकृतिस्थम्। एँदूएँ इतिपाठे द्वयमपि कठोरम्। तदत्र कठोरनिवेशनं व्युत्पत्त्याधिक्यसूचनाय। एतावति उक्ते परीक्षणव्युत्पत्तिर्न किञ्चिद्ग्राम्य प्रतिभाति। न च तस्य अद्यापि निःशङ्कता वर्त्तते। ततो नागरकप्रामाण्यदत्तभरः प्रश्नो घटत इत्याशयवान् अवतारयति। अथ ग्राम्यमिति। प्रकृत्यापन्न एव तेन यथा प्रथम ज्ञातो इत्यादिप्रश्ने गतिं तथावापीति ग्राम्यप्रकृतिस्थयोः उपन्यासः। भाषाचित्रेषु परस्परसहर्षादेक्ष-

श्लेषाद्युपनागराणि। तदिदमीदृशि प्रमेये तथा एव उपक्रमादेतत् न दुष्यति ॥ १५० ॥

वाक्यान्तरसगर्भं यद् वाक्यं तद्वाक्यगर्भितम्।
रसान्तरतिरस्कारे तदिष्टं नेष्टमन्यथा ॥

यथा, दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

---

काव्यरचनाप्रवृत्तये ग्राम्यस्यापि श्लोकसमाप्तिपदारम्भो योग्य एव। यदि चायमेव समस्तं निर्वाहयन् अशेषप्रश्नानिवृत्त्युपयुक्तमुत्तरं नागरस्य निवेशितं स्यादिति तदुत्तरानुरोधेन पादार्द्ध एव विलम्बोऽपि उचितः। ऐमें एवमिति स्पष्टार्थे, काकुगर्भम्। सच्च निर्वोढ इति निरवधारणे। सत्यमेव एतदुक्तम्। यदि सत्यपुरःसरं ब्रूयाः तदा प्रत्येमीत्यर्थः। एवं ग्राम्यताप्रतारणसिद्धौ किमिव सर्वलोकसाक्षिके वस्तुनि वक्रोक्त्यैव पूर्वव्युत्पत्तिमात्रनिवेशनेन उत्तरं दत्त्वा श्लोकपूरणमेव नागरस्य उचितमित्याशयेन उत्तरम् अवतारयति। अयेति। हस्ते इति प्रक्रान्तिस्थ कटकमिति कोमलं दर्पणेन दृश्यते इत्येते प्रकृतिस्थे इति प्रकृतिस्थादीनां सुपरिचेयत्वात् ग्राम्यादीन्येव व्याचष्टे। अत्र चेति। प्रकृतिव्यतिकराव्यतिकरत्वयोः औचित्यापन्नत्वाद्भाषासङ्कर शोभावहत्वेन गुण एव भवतीति उक्तमुपसंहरति। तदिति ॥ १५० ॥

वाक्यान्तरेति। रसान्तरं रसविशेषः प्रकृतरसानुसहितौ रसस्तेन तिरस्कारो दोषभावस्तस्मिन् सति तथा कृतं वाक्यमिष्टमेव कवीनाम् उपादानयोग्यमेव अन्यथा न इष्टं दुष्टमेव इत्यर्थः। तेन अयमर्थो भवति। प्रकृतरसतिरोधायकत्वं किल दूषणताबीजं तदतिरोधानेन एव निवर्त्तते प्रत्युत द्वितीयपरिच्छेदे वक्ष्यमाणगर्भादिवाक्ययोजनप्रकारसम्पत्तौ अलङ्कारलाभे गुणत्वं भवति। तथाहि दिङ्मातङ्गानां घटया विभक्ता पृथक् उद्दिश्य व्यवस्थापिताश्चत्वारः आघाटा यस्याः तथा तेन सप्तद्वीपा वसुमती साध्यत इति विवक्षितम्। ये तावत् भरतभगीरथप्रभृतयः प्रथितप्रतापातिशयाः तेषां तद्दूषणपरिनिष्ठितशक्तीनामेकस्यापि समस्त-

अत्र यथोक्ता मही साध्यते सिद्धा च सा विप्राय प्रतिपाद्यते इति वक्तव्ये, येयं वीराद्भुतरसवशप्रवृत्तेन वदन्त एव हि वयं रोमाञ्चिताः पश्यत इति वाक्येन प्रकृतवाक्योक्तेः असमाप्तौ एव विप्रायेत्यादिपदविच्छित्तिः सा रसान्तरतिरस्कृतिरित्युच्यते। तथा चेदं वाक्यान्तरसगर्भमपि वाक्यं न दोषाय भवति ॥ १५१ ॥

यद्भिन्नलिङ्गमित्युक्तं विभिन्नवचनं च यत्।

---

क्षत्रवंशोन्मूलनेन नवखण्डमेदिनीसिद्धौ न उत्साहशक्तिः श्रवणगोचरताम् अयासीदिति लोकोत्तरा परशुरामस्य उत्साहशक्तिः आवेद्यते सिद्धा सा च इत्यनेन यावदेव अभिलषितं तावदेव सिद्धमिति अहो विजिगीषुतेति पूर्ववदेव अभिप्रायः। न चेदसौ सिद्धिमभिसन्धाय प्रवृत्तोऽनुपदमेव सा सम्पन्नेति चकारेण द्योत्यते। एवम् अभिहिते अभिप्राये इत्यादिकमस्ति वाक्यशेषभूतं तद्विच्छिद्यैव मध्ये वदन्त एव हि वयं रोमाञ्चिता इति वाक्येन सगर्भता सा न दोषाय। अनेन हि वाक्येन लोकोत्तरवस्तुभावनात्मकविभावसम्पत्तौ प्रादुर्भवन् वक्तुमभिमतो रसो व्यज्यते। स च वीरानुसन्धानहेतुर्वीराद्भुतयोः समानभूमिकयोः अन्योन्यानुगमेन प्रतिकूलता विरहिता। तत्र यथा शृङ्गाररौद्रबीभत्सानाम् एकप्रघट्टकेन सूत्रणे सन्निपातितैरपि हास्यकरुणभयानकैर्न तिरस्कारः। स्वाङ्गमव्यवधायकमिति न्यायात् तथा इह वीरस्य अद्भुतेन अतएव अद्भुतादुद्वेलस्य प्रादुर्भूतपुलकाङ्कुरलक्षणानुभावप्रदर्शनं पश्यतेति। न चात्र दोषोदाहरणे मया इति कारकविभक्तिः उत्थिताकाङ्क्षाया रचेनमित्यादिना स्वरसबाधः तथा अत्र सम्भवति सिद्धेति एतावत्यपि दर्शिते वाक्यार्थपर्यवसानात्। न च सम्पूर्णे रसे वदन्त एव इत्यादिकम् अभिधातुमर्हति। अद्भुता च पार्थिवानुभावस्य तन्मात्रपूरणापेक्षत्वात्। एवं रसानुभावनाढ्यस्य तत्रे एव पुनःपुनः उत्कण्ठाया जिगीषुकरणीयलब्धपात्रप्रतिपत्तिविशेषस्फोरणे विप्राय प्रतिपाद्यत इत्युक्तम्। दानवीरोऽपि वीर एव अतएव अधिकस्य कर्तव्यस्य अभावे किमपरमित्यादिरुपसंहारः तदेतत्सर्वं व्याचष्टे। अत्रेति ॥ १५१ ॥

यद्भिन्नेति। दोषप्रकरणानुरोधेन समस्तव्यस्तोदाहरणं बोद्धव्यम्। सहृदयै-

उपमा दूषणं तत्र यत्रोद्वेगो न धीमताम् ॥

यथा, अन्यदा भूषणं पुंसः शमो लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥

अत्र पुंसो योषित इव शमो लज्जेव पराक्रमो वैयात्यमिवेति लिङ्गभेदः । परिभवे सुरतेषु इवेति तु लिङ्गभेदो वचनभेदश्च दृश्यते । स चैषामेव परस्परम् उपमानोपमेयभावविवक्षाया पर्य्यायान्तराभावादन्यथा कर्त्तुम् अशक्यमिति सहृदयहृदयानुद्वेजकत्वात् न दुष्यतीति दोषस्यापि गुणत्वम् । तदिदं द्वयोरपि एकमुदाहरणम् ।

अथ भिन्नलिङ्गस्यैव यथा,

यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥

---

द्वेजकत्वेन हि दोषता यत्र तु कथञ्चित् तथाभावो न भवति तत्र दोषत्वहानिरुचितैव । तथाहि स्त्रीपुंसयो एव प्रकृतानुगुणोपमानोपमेयभाव विवक्षायाम् आवश्यक लिङ्गवचनभेदयो. अन्यतरदेकस्य पुंस उपमेयत्वेन दारशब्दस्य भिन्नवचनत्वनियमात् कलत्रपद भिन्नवचनमेव । पर्य्यायाणामपि लिङ्गभेदो नियत. । न च पुवचन किञ्चित्समानस्वभावमस्ति येन अय प्रकारो निवर्त्तेत । न चैवविधोपमानमन्तरेण प्रस्तुतवाक्यार्थपोष । एवमनन्यगतिका भिन्नलिङ्गता भिन्नवचनता वा साहित्यसमयविदामुद्वेग न उत्पादयति । अतएव अलङ्कारौचितीसम्पदा गुणत्वसिद्धि. । एव शमलज्जयो पराक्रमवैयात्ययो' परिभवसुरतयोश्च बोद्धव्यम् इत्याशयवान् व्याचष्टे । अत्रेति । रत रह श्रथन मोहनमिति सुरतवाचिना सर्वेषाम् एव नपुसकता न दुष्यतीति सहृदयहृदयानुद्वेजकत्वादिति हेतुर्गुणत्वे तु आभिप्रायिक स च दर्शित एव । यस्येति । धर्मार्थकामास्त्रिवर्ग । वह्निदीपनचर्मपुटी भस्त्रा सा यथा वातेन पूर्य्यते वातञ्च मुञ्चति न तु किञ्चित्पुरुषार्थमासादयति तथा त्रिवर्गशून्येऽपि भस्त्रापर्य्यायस्य

अत्र प्राग्वदेव पर्य्यायान्तराभावात् स लोहकारभस्त्रेवेति लिङ्गभेदस्य न दोषः ॥ १५२ ॥

भिन्नवचनस्यैव यथा,

प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
मुक्तात्मानः शिवं नेमिरन्येऽपि ददतां जिनाः ॥

अत्र नेमिरन्येऽपि इति वचनभेददोषेऽपि ददतामिति क्रियापदादेर्वचनश्लेषमाहात्म्याद् गुणत्वम् । न च इदं वाच्यमत्रेवादिर्न विद्यत इति नोपमात्वम् । इवस्यापिना समु-

---

समानलिङ्गस्य अभावेन सहृदयानाम् अनुद्वेगोऽलङ्कारसम्पत्त्या गुणत्वम् उपपन्नम् इत्याह । अत्र प्राग्वदेवेति । अदोष इत्युपलक्षण गुणश्च भवतीत्यपि बोद्धव्यम् ॥ १५२ ॥

प्राज्येति । आर्हताना नेमिनामा जिनविशेषोऽन्ये जिना ऋषभनाथप्रभृतयः प्राज्यमुचित तथाभूत प्रभाव सिद्धिरूपो यस्य तादृशो नेमि' शिव ददतां ददातु । ददतान इति धात्वनुसारात् । कस्मे इति अपेक्षाया मुक्तात्मा इत्यव न. पक्षे वो युष्मभ्य शिव ददता ददत्विति । धर्मस्य प्रभवम् उत्पत्तिनिमित्तम् । नेमि' प्रभव. प्रभुता यथावदनुशासनेन जिना रजश्च तमश्च रजस्तमसी ते अस्ते क्षिप्ते येन स तथाभूतो नेमि' । अस्त रजो येस्तेऽस्तरजसस्तेषु प्रकृष्टा' तमपि अस्त-रजस्तमा' । मुक्तो निरावरण आत्मा । आत्मशब्द आत्मवचन' स्वरूपवचन इति वा बहुव्रीहिः तादृशो नेमि. जिनास्तु मुक्तात्मान इति स्पष्टम् । तदिह वचनभेदम् अन्तरेण वचनश्लेषाभावात् भिन्नवचनत्वस्य आवश्यकत्वेन दोषः । श्लेषलक्षणा-लङ्कारघटनया गुणत्वम् । ननु च लिङ्गादिभेद उपमाया दूषणत्वम् उक्तमिहतु अलङ्कारान्तर उदाक्रियते तत्काथ पूर्वापरसमञ्जसत्वं न च अत्रोपमा सम्भवति तत् सामग्र्यसम्भवात् । उपमानोपमेयसाधारणधर्मेवादिशब्दाः किल तद्घटका' तदत्र वितयसत्त्वे तु अपीव वद्दा प्रभृतिशब्दानुपादानात् कथम् उपमेति शङ्काम् उत्थाप्य निरस्यति । न चेति । इवादयो हि शब्दा. सादृश्यद्योतकाः तथाच क्वचित् प्रसिद्धस्य प्रकृते सम्बन्धप्रतीतिः तेभ्यो भवति बिम्बप्रतिबिम्बन्यायाश्रयणात्

इवार्थेन तुल्यधर्माणां तु धर्मस्य प्रभव इत्यादिभिर्वचनश्लेषैः विषयापहारात् । यथा, अग्रतो द्योतकलोप उपमायाम् । कोमलातपाटलो तन्वि पल्लवश्चाधरश्च ते । नन्वेषोऽपि श्लेषः कस्मान्न भवति । उच्यते । यत्र द्वयोः सदृशयोरभिधानं स श्लेषो यत्र सदृशात् सदृशप्रतिपत्तिस्तदुपमानम् । यत्र द्वयोः सादृश्यमभिधीयते प्रतीयते वा सोपमेति प्रबन्धेनाग्रे वक्ष्यामः । उपमालक्षणं चैतत् । यदुपमायामेव लिङ्गवचनभेदेन दूषणं

---

देवस्य न युगपत् तुल्यरूपसम्बन्धोऽपिशब्दस्तु युगपत् तुल्यरूपसम्बन्धं बोधयतीति विभिन्नविषयत्वं न हि इवादिशब्दाभावे सादृश्यमेव न प्रतीयते लुप्तोपमाप्रपञ्च-भङ्गप्रसङ्गात् । अन्यत एव प्रतीतिसिद्धेरुपायान्तरवैयर्थ्यात् । किमितीह न इवादि-पदं प्रयुक्तमिति प्रश्नोऽवशिष्यते तत्र इदमुत्तरमिवस्य इत्यादि । नेमिरन्ये-ऽपीति अपिशब्देन समुच्चयोऽपि अवसीयते । स च युगपदेकसम्बन्धाभिधाने-निर्वहति । तेन अनेकमुद्दिश्य किञ्चित् एकसम्बन्धाभिधानं समुच्चयाभिधायिनो विषयः । एकमुद्दिश्य प्रसिद्धान्यधर्मविधानं तु यथेवादेरिति विषयविरोधात् न प्रयुज्यत इति । स्यादेतदिववद्वा यथादिशब्दा यत् पराः तस्य एव उप-मानता प्रतीतिः तथाच अनेन इदं तुल्यमिति साधारणधर्मविधिरूपा कथमुपे-मेति अत उक्तं तुल्यधर्मणाम् तु इति । नात्र वचनश्लेषतुल्यधर्मागमोऽपि तु तथा व्यवसितानामेव शब्दतत्त्वतेति धर्मस्य प्रभव इत्यादिभिः द्विवचनश्लेषैः तथापि विषयोऽपहृत इति । यदि च इवादिमन्तरेण न उपमाप्रतीतिः तर्हि प्रसिद्धमुपमोदाहरणं भज्येतेत्याह । यथेति । अग्रतश्चतुर्थपरिच्छेदे । अत्र अपि उपमामनङ्गीकुर्वतो मतमाशङ्कते । ननु इति । इहापि चकाराभ्यां युग-पत् पल्लवाधरयोः एकधर्मविधानस्य तुल्यत्वादिति देश्याभिप्रायः । उक्तायुक्त्या दूषयति । उच्यते इति । तर्हि प्रकृतोदाहरणेन अस्त्येव उपमा कथं वचन-भेदस्य गुणीभावः उदाक्रियत इत्याह । यत्रेति । यद्यपि अभिधीयमानं नास्ति सादृश्यं तथापि प्रतीयमानोपमा व्यवक्रियतामित्यर्थः । शब्दमात्रसाम्यं श्लेषसङ्कीर्णमेवेति उपेक्षितवान् । ननु यत्र उपमया काव्यव्यपदेशः तत्र प्रतीय-मानमपि सादृश्यमूरीक्रियते । यत्र तु अलङ्कारस्वभावव्यवस्थापितमेव काव्यं

तस्य सर्वालङ्कारसाधारणत्वात् केवलसादृश्यमलङ्कार इति दर्शने उपमायामुदाह्रियते ॥ १५३ ॥

यत्रोपमानधर्माः स्युर्नोपमेयेन सम्मिताः ।
तद्धीनोपममित्याहुस्तत्प्रसिद्धौ न दुष्यति ॥

यथा,

स मारुताकम्पितपीतवासा बिभ्रत् सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः सेन्द्रायुधो मेघ इवावभासे ॥

अत्र सेन्द्रायुध इति कार्मुकमात्रोपादानं वासशङ्खयोस्तु अनुपादानादूनोपमत्वं तत्र इन्द्रविद्युतोरतिप्रसिद्धत्वाद दोषत्वम् ।

यदाह, सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।

---

न तत्रापीत्याह । उपलक्षणमिति । प्रतिपत्तिवैरूप्यस्य अलङ्कारान्तरसाधारण्यादुपमातोऽन्यत्रापि लिङ्गवचनभेदौ दूषणमेव । तद्यथा मुखं पद्ममिति रूपके मुखं पद्म वेति सशये न मुखं पद्ममेवेति अपह्नवे । एवमन्येऽपि । अतएव द्वे भिन्नलिङ्गवचने इत्यत्र न उपमाग्रहणम् । यदि एवं कथमुपमायामेव दूषणमुदाह्रियत इत्यत आह । केवलमिति । चिरन्तनैः हि भरतमुनिप्रभृतिभिः द्वे एव यमकोपमे शब्दानुगतालङ्कारत्वेनेष्टे । तत्प्रपञ्चनमात्रं तु पुनरन्यैः अलङ्कारकारैः कृतमुपमाया. प्रभूतविषयतया प्राधान्यात् तच्च उदाहृतमतिस्फुटं भवतीति सक्षेप ॥ १५३ ॥

यत्रोपमान इति । उपमेयेन उपमेयविशेषणेन सम्मिताः तुल्यसंख्याः । इन्द्रायुधम् इन्द्रधनुरेकम् उपमाने उपमेये पीतं वासः शार्ङ्गमब्जः शङ्ख इति त्रीणि विशेषणानि तदिहाधिकविशेषणविषय इति जिज्ञासासमकालमेव अप्रसिद्धेन्दुबिम्बयोः उपमानयोः मेघानुसन्धानात् स्खलनाभिमुखी प्रतीतिः अवलम्ब्यते । ध्वननव्यापारोन्मेषात् च गुणत्वलाभः । तदुक्तम् । मुख्या महाकविगिरामलङ्कृतिभृतामपि । प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् इति । न चैव स्तनितादीनामिति कथं प्रतीतिरिति वाच्यम् । प्रतीय-

यथोपपत्तिं कृतिभिरुपमानं प्रयुज्यते ॥

अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमुद्युति।

यत्किञ्चित् कान्तिसाम्यात्तु शशिनैवोपमीयते ॥

इति ॥ १५४ ॥

क्रमेणानेन कृतिभिरेष्टव्यमधिकोपमम्।

विशेषस्तूपमेयाङ्गमनुमानात् प्रतीयते ॥

यथा,

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।

शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥

अत्र शशिनो ग्रहणादधिकोपमत्वेऽपि उपमात्वेनाविवक्षणाद् गुणत्वम्। यदि वा उपमाने धर्मोद्घाटनानुमानात् शङ्खचक्रगदाधरो विष्णुरिति प्रसिद्धेः शङ्खोऽनुमेयः ॥ १५५ ॥

---

मानस्यापि प्रतिपत्तिवैरूप्यसमाधौ वा अनौपयिकस्यानाकाङ्क्षितत्वेन आदरादित्याह। सर्वं सर्वेणेति। यथा उपपत्तिपर्यन्तो यावता उपमानविशेषणत्वेन प्रक्रान्तमुपमेयविशेषणप्रतिबिम्बता नीयते तदतिक्रमेण एकपुत्रीति अनुरोधे कल्पितेनापि उपमेयविशेषणेन इत्यर्थः। अन्यथा चन्द्रमुखादीनां न उपमा पर्यवस्येत् इत्याह। अखण्डेति ॥ १५४ ॥

अमुमेव प्रकारमधिकोपमेये योजयन्नाह। क्रमेणेति। यत्र उपमानेऽधिकविशेषणसद्भावेऽपि तद्वाक्यम् अधिकोपममिति इति उच्यते तत्र झटिति प्रतिबिम्बभूतोपमेयविशेषणप्रतिसन्धाने न दोष तदेव तु कथमत उक्तम्। विशेषस्त्विति। उपमेयाङ्गे विशेषाविशेषणम् उपादानात् उपमानविशेषणात् प्रतीयते। शतह्रदा विद्युत्। उपमानत्वेन अविवक्षितत्वात् इति आपाततः। उपमानविशेषणानां यावत् प्रतीति न ग्रहणमिति प्रकाशयितुं पारमार्थिकस्तु सिद्धान्त इत्याह। यदि वेति। उपमानधर्मस्याधिकस्य उद्घाटनम् अभिधानं तस्य अनु पश्चात् मानं ज्ञानम्। कथमेतत् इत्याह। अतिप्रसिद्धेरिति ॥ १५५ ॥

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।
न छन्दोभङ्गमप्याहुस्तदा दोषाय सूरयः ॥

यथा, जह ण्हाउं ओइस्से अब्भिन्नमुल्लसिअमंसुअद्धन्तम् ।
तह आणन्दासि तुमं सच्छे गोलाणईतूहे ॥ (ञ)

अत्र द्वितीयैकादशत्रयोविंशतिवर्णानां संयोगपरत्वाद् गुरुत्वेऽपि ह्लह्वादिसंयोगस्यातीव्रप्रयत्नोच्चारणेन पूर्वलघुत्वेन छन्दोभङ्ग इति गुणत्वम् ॥ १५६ ॥

वाक्यमस्थानविरतिप्राग्भग्नयतिसंज्ञया ।
समुद्दिष्टं यदधुना गुणत्वं तस्य कल्प्यते ॥

---

(ञ) यथा स्नातुमवतीर्णे आर्द्रीभूतमुल्लासितमंशुकार्द्धान्तम् ।
तथाच स्नाता भवसि त्वं स्वच्छे गोदानदीतीर्थे ॥

---

यदा प्रयतनं प्रयत्नः स्थानकरणव्यापारः तस्य तीव्रत्वमुद्रिक्तत्वं तत एव हि पिण्डाक्षरादीनाम् अकठोरत्वमाभासते । आदिग्रहणादिव हि ङकारौ सानुस्वारौ च केवलौ पदान्ते वर्त्तमानौ तत्तद्भाषाविषयेऽवसेयौ । क्वचिदेव हि वर्णे तथा अवभासते न तु सर्वत्र तदुपलक्षणम् एव रहवज्जणसज्जोए इत्यादिकं छन्दोविचितौ दर्शितम् । जहेति । स्नातुमवतीर्णे त्वयि अंशुकार्द्धमुद्भष्टं स इवन्तमार्द्रीभूत यथा चलत्वं स्थितेस्तथावगम्यते न तु अन्तर्जलं जलकेलिस्थानमवतीर्णं इत्यभिप्रायशेषः । कथमन्यथा गोदावरीनद्याः स्वच्छं जलं दृश्यते इति । तूहन्तीर्थम् । अत्र द्वितीयैकादशादिस्थानेषु यद्यपि संयोगात् पूर्वभावे गुरुत्वं विद्यते तथापि तीव्रप्रयत्नोच्चारणीयमकारहकारादिसंयोगसहिम्ना नावच्छेदश्रव्यता कलुषीक्रियत इति एवमन्यदपि उदाहार्य्यम् । यथा अवलाइंगलेत्तिधवलेहिंअयं जणसामलेणिसालआए । धखवत्तकुसुमाइ धम्म- लाभीओसरइ इत्यादि नाम धातुमागे स्वरास्थाने च पठिति विच्छेदो न भवतीति उक्त स तदुल्लङ्घनमात्रेण समाधीयते शोभा पुष्यतीति ॥ १५६ ॥

कार्य्याकार्य्येति च नाम भागमुल्लङ्घविच्छेदश्रव्यता च परस अभ्यादेशेन

यथा, शोभां पुष्यत्ययमभिनवः सुन्दरीणां प्रबोधः
किञ्चिद् भावालसमसरलप्रेक्षितं कामिनीनाम्।
कार्य्याकार्य्याण्ययमविकलेनागमेनैव पश्यन्
वश्यामुर्वीं वहति नृप इत्यस्ति चायं प्रयोगः॥

अत्र पादत्रये चतुर्थस्थाने यतौ कर्त्तव्यायां पञ्चमस्थाने कृतत्वादपरत्र च पादस्य मध्यभागे निविष्टकेवलस्वरत्वाद् यतिभङ्गेऽपि स्वरसन्धिकृतत्वादविभिन्ननामधातुशरीरत्वाच्च न दोषत्वम्।

तदाह, स्वरसन्ध्यकृते प्रायो धातुभेदे तदिष्यते।
नामभेदे च शेषेषु न दोष इति सूरयः॥
लुप्ते पदान्ते शेषस्य पदत्वं निश्चितं यथा।
तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते॥ १५७॥

अशरीरं क्रियाहीनं क्रियापेक्षा न यत्र तु।
प्राशस्त्यादेरपेक्षा वा न दोषस्तत्र तद् यथा॥
कियन्मात्रं जलं विप्र! जानुदघ्नं नराधिप!।

---

किञ्चिद्भावेति नृप इति च स्वरसन्धाने विच्छेदौ अतएव अव्यत्वमपि तदेतद् व्याचष्टे। अत्रेति। मन्दाक्रान्तामभनभयुगङ्गद्वय वेददिग्भिरिति चतुर्थदश-मयोः यतिराम्नाता। पञ्चमस्थान इति। प्रथमतृतीययोः द्वितीये तु षष्ठे यति-करणादिति बोद्धव्यम्। ननु पदच्छेदे स्वरसन्धानपठिति विरामः सोल्लेखो घट्यते न तु चतुष्पादे तथा अस्तीति कथं अव्यत्वमत आह। लुप्त इति। सन्धौ विकारीयत्वयलोपादिक कार्य्यं तथाच पदान्ते सति पदच्छेद एव अयमिकारो ऽवतिष्ठत इत्यर्थः॥ १५७॥

अशरीरमिति। प्रधानाविमर्शो हि दूषणमित्युक्तं तदुपात्तानामेव पदार्थाना प्रधानगर्भीकरणे तत्प्रतिबन्धे अवश्यविधेयमन्य प्रति गुणीभावे वा समाधीयते अतएव विशेषादगुणत्वम्। तथाहि कियन्मात्र जानुदघ्नमित्यनयोः परिमितं

तथापीयमवस्था ते नहि सर्वे भवादृशाः ॥

अत्र त्रिषु पादेषु पदानि क्रियापदं नापेक्षन्ते सापेक्षं च असमर्थं भवति। चतुर्थे तु न हि इत्यादिभिः सन्तीत्यपेक्षते। न चैतावतामीषामसामर्थ्यं भवति। यदाह। यत्रान्य-क्रियापदं नास्ति तत्रास्तिः भवन्ती परः प्रथमपुरुषः प्रयु-ज्यते इति ॥ १५८ ॥

श्लिष्टमस्पृष्टशैथिल्यं शिथिलं तद्विपर्ययः।
गौडीयैरिष्यते तत्तु बन्धप्राशस्त्यगौरवात् ॥

यथा, लीलाविलोलललनाललितालकलासकाः।
विलुप्तमालतीमालाजलकालानिला ववुः ॥

अत्र शैथिल्यदोषेऽपि बन्धप्राशस्त्येन गौडैरादृतत्वाद् गुण-त्वम् ॥ १५९ ॥

---

क्रियाप्रधानगर्भभूता न हि भवादृशा इत्यत्र तु सत्ताक्रियायाः सकलपदार्था-व्यभिचारात् अपेक्षित इति सिद्धि तदिदम् आचार्यमतेन आह। यत्र अन्येति। भवन्ती वर्त्तमाना। तदेतद् वाक्य क्रियाप्रधानमिति दर्दश सप्रधानं विशेष्यमात्र तु वाक्यार्थ इति परमार्थः तेन राधारहः साक्षिणाम् इत्यादौ आवश्यकविधेय साक्षिभावादिगुणतया राधासम्बन्धादीना वैवक्षिकप्राधान्याना-मपि प्रधानत्वाविमर्शो न दोष इत्युक्त भवति ॥ १५८ ॥

श्लिष्टमिति। पारुष्यशैथिल्याभ्या विना कृत श्लिष्टमित्युक्त तस्य विपर्ययो विपरीत वाक्य शिथिल भवति। परुषम् अल्पप्राणाक्षरोत्तर वा इत्यर्थः। एवं-विधमपि च एतत् अनुप्राससौष्ठवात्पदानामेकताप्रतिभासे समाधीयते उद्भटानु-प्रासतया च कान्तिप्राधान्ये गौडीयरीतिप्राधान्येन गुणत्वमासादयति तदिदम् उक्तम्। बन्धप्राशस्त्यगौरवादिति। गौडीयैः गौडीयरीतिगोचरहेतुवाक्प्रकर्ष शालिभि। लीलेति। अत्र दन्त्यवर्णमयत्वेन अल्पप्राणाक्षरोत्तरतायामपि पदैकताप्रतिभासानुप्रासयो उद्रेकः कान्तिप्रकर्षोऽवसेयः ॥ १५९ ॥

न दोषः क्वापि वैषम्येऽप्यर्थालङ्कारकारणात् ।
पौरस्त्यैरादृतत्वाच्च शब्दाडम्बरतोऽपि वा ॥

यथा, चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।
स्पर्द्धते रुद्धमद्धैर्य्यो वररामामुखानिलैः ॥

अत्र सत्यपि शब्दवैषम्यदोषे शब्दाडम्बरगुणादर्थालङ्कारगुणात् पौरस्त्यैरादृतत्वाच्च गुणत्वम् ॥ १६० ॥

कठोरमपि बध्नन्ति दीप्तमित्यपरे पुनः ।
तेषां मतेन तस्यापि दूषणं नैव विद्यते ॥

यथा, न्यक्षेण पक्षः क्षपितः क्षत्रियाणां क्षणादयम् ॥

अत्र कठोरत्वेऽपि दीप्तत्वाद् गुणत्वम् ॥ १६१ ॥

अविदग्धाङ्गनाबालप्रसिद्धार्थं प्रसादवत् ।

---

न दोष इति । अर्थालङ्कारकारणात् अर्थालङ्कारहेतुम् । यत्र हि शब्दस्य अर्थोऽन्यथारूप भजते तत्र अवश्य तदनुयायिना पदसन्दर्भेण भिन्नरूपेण भाव्यम् । एवमपि छायावैरूप्य वैरस्यमेव आवहतीति आशङ्क्य शब्दाडम्बर इत्युक्तम् । आडम्बर उद्भटता । तस्यापि एकरीत्यनिर्वाहो दूषणमिति अत पौरस्त्यैः इत्युक्तम् । चन्दनेति । अत्र यद्यपि मलयानिल एक एव वाक्यार्थः तथापि चन्दनप्रणयेन प्रवृद्धसौरभे मन्द इत्याभ्या शृङ्गाराङ्गताप्रतीतौ उन्मिश्रः सन्दर्भः । मलयमारुत इति कोमल, वररामामुखानिलै. इत्यपि तथा तत्रापि आरभटीप्रकाशने स्पर्द्धत इति स्फुटम् । एव रुद्धमद्धैर्य इति तदेव समताविपर्य्यासेऽपि विशेषणानाम् अर्थाना भिन्नभिन्नरसानुप्रवेशे पृथगर्थालङ्काराः प्रकाशन्ते अस्ति चात्र शब्दाडम्बरवशादेव छायारूपाप्रतिभासः । लाटीया च रीतिः ॥ १६० ॥

कठोरमिति सुकुमारताविपर्य्यासः कठोरः सन्दर्भः प्रस्फुटतरवर्णप्रधानम् इति यावत् । सोऽय दीप्तरसानुप्रवेशात् औचित्येन गुणत्व भजत इति व्यञ्जयन्ति अपरे पौरस्त्याः । न्यक्षेण सामस्त्येन ॥ १६१ ॥

विपर्य्ययोऽस्याप्रसन्नं चित्रादौ तन्न दुष्यति ॥

यथा, याश्रिता पावनतया यातनाच्छिदनीचया ।
याचनीया धिया माया या मायासं स्तुता श्रिया ॥

अत्राप्रसाददोषेऽपि चित्रत्वाद् गुणत्वम् ॥ १६२ ॥

अध्याहारादिगम्यार्थं नेयार्थं प्रागुदाहृतम् ।
स गम्यते प्रसिद्धश्चेन्न तद्दोषवदिष्यते ॥

यथा, मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥

अत्र दहतु इत्यादीनामध्याहार्य्यतया नेयत्वेऽपि अतिप्रसिद्ध्या प्रतीयमानत्वाद् गुणत्वम् ॥ १६३ ॥

असभ्यार्थं मतं ग्राम्यं तद्ग्राम्योक्त्यैव दुष्यति ।
विदग्धोक्तौ तु तस्याहुर्गुणवत्वं मनीषिणः ॥

---

अविद्वद्विपर्य्ययः प्रत्यनीकभूत वाक्यमादिग्रहणात् यमकश्लेषप्रहेलिकाप्रकरणानि । या देवी पवित्रत्वेनाश्रिता अनीचया तुङ्गया बुद्ध्या मायायामस्य अविद्याविस्तारस्य आयास ग्लानि विच्छेद याचनीया प्रार्थनीया यतो यातन नरकानुभवनीय दुःख छिनत्ति श्रियापि स्तुतेति । अष्टदलकमलबन्धोऽयम् । तदिह तथा वर्णसन्निवेशस्य चमत्कारकारित्वेन प्रसादोऽपि सहृदयश्लाघाविषयो गुणतामभ्यास्त इति ॥ १६२ ॥

अध्याहारेति । असम्पूर्णं वाक्य नेयार्थमित्युक्तं तस्य एवं रूपता झटिति श्रुतार्थापत्तिप्रादुर्भावपरिङ्गवकसन्धानात् समाधीयते । तथाहि मा भवन्तमनल इत्यादौ वृक्षसमभिव्याहारेण दहनादीना योग्यतया शीघ्रमेव धाक्षीदित्यादि क्रियान्वयोऽवसीयते । स्वस्तिवचनेन च अमङ्गलप्रस्तावनिरासात् तथाभूतक्रियानुपादान वक्राचमतया गुण इति ॥ १६३ ॥

असभ्यार्थमिति । रसस्यादीप्ति. कान्तिविपर्य्ययो वचनापराधेन दूषणता-

यथा, कामं कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्या सोऽयमस्मास्वनुग्रहः ॥

अत्र ग्राम्यत्वेऽपि ग्राम्यार्थस्य विदग्धोक्त्या तिरस्कृतत्वाद् गुणत्वम् ॥ १६४ ॥

ओजः समासभूयस्त्वं तद्दीप्तार्थेषु बध्यते ।
विपर्य्ययोऽस्यासमस्तं तद्दीप्ते चेन्न दोषभाक् ॥

यथा, यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत् कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥

अत्रासमस्तत्वेऽपि प्रौढ़बन्धत्वाद् गुणत्वम् ॥ १६५ ॥

समस्तमसमस्तं वा न निर्वहति यद्वचः ।
तदनिर्व्यूढ़मस्यापि न दोषः क्वापि तद् यथा ॥

प्रसीद चण्डि! त्यज मन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः ।
किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्तविलासमास्यते ॥

---

मध्यास्ते स समाधीयते अत्र ग्राम्योक्तिपरिहारेण एव अतएव उक्तिसमर्पितच्छाया-विशेषयोगे गुणत्वलाभः सहृदयसभाया न साधुरसभ्यो वैदग्ध्यविधुर ग्राम्यम् ॥१६४॥

ओज इति । दीप्तरसानुप्रविष्टार्थप्रतिपादकसन्दर्भौचित्येन समासभूयस्त्व-मोजोऽस्य विपर्य्ययो दीप्तेरप्रत्यूहादेव समाधीयते तदिदमुक्तं "दीप्तार्थं बध्यते यत्र तद्दीप्तश्च न दुष्यतीति । सुगममुदाहरणम् । व्यूढं प्रौढः ॥ १६५ ॥

समस्तमिति । उपक्रान्तरीतेः अनिर्वाहे मधुरसपर्य्यन्तताप्रतीतिः स्खलतीति दूषणताबीजमुक्तं तथाभूतरसानुगुणव्यभिचार्य्यनुप्रवेशव्यञ्जनौचित्यात् उपक्रमनिर्वाह-स्वर्वस्वायमानो गुणताम् आसादयति । तथाहि प्रसीदेति आदौ प्रणयकेलिकुपित-कामिनीप्रसादनाया शृङ्गारविरोधिसमासव्यतिकरेण रीतेरप्युक्रमे रोषलचण-

अत्र समस्तरीत्यनिर्वाहादनिर्व्यूढत्वेऽपि रसान्तरपरिग्रहेण रीत्यन्तरपरिग्रहाद् गुणत्वम् ॥ १६६ ॥

अनलङ्कारमित्याहुरलङ्कारोज्झितं वचः ।
पूर्वोत्तरानुसन्धाने तस्य साधुत्वमिष्यते ॥

यथा, निशम्य ताः शेषगवीरभिधातुमधोक्षजः ।
शिष्याय बृहतां पत्युः प्रस्तावमदिशद्दृशा ॥

अस्यानलङ्कारत्वेऽपि पूर्वापरानुसन्धानप्रयोजनभूतत्वाद् गुणत्वम् ॥ १६७ ॥

वाक्याश्रयाणां दोषाणां गुणीभावोऽयमीरितः ।
अथ वाक्यार्थदोषाणामदोषः कथ्यतेऽधुना ॥
समुदायार्थशून्यं यत् तदपार्थं प्रचक्षते ।
तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति ॥

यथा, क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् ।

---

भावानुभावभू'स्तनकम्पवर्णनाया समासोऽनुप्रविष्ट इति व्यक्तः पूर्वरीतेः 'पनिर्वाह' । रसान्तर प्रक्रतविजातीयैरसम्बद्धो व्यभिचारीभाव. ॥ १६६ ॥

अनलङ्कारमिति । अनुत्कृष्टाप्रविष्टविशेषणवद्वाक्य निरलङ्कारो पूर्वोत्तर-वाक्यसङ्गतिकरणप्रयोजनकतया न दोष. । कथ तथाभूतस्य काव्यत्वमित्यपि न वाच्यम् । अनुगतेन वक्रीभावेन तत्समर्थनात् । व्यक्तमुदाहरणम् ॥ १६७ ॥

सूत्रकार एव वाक्यार्थदोषगुणीभावविवेचन सङ्गमयति । वाक्याश्रयाणा-मिति । मत्तादिवचनान्यनुक्रियमाणानि चमत्कारम् अर्पयन्ति । अतएव छाया-लङ्कारप्रादुर्भावाद्गुणः अनित्यदोषतया च अनुकरणान्यदपि गुणीभवनबीजमुन्नेय-मिति उदाहरणेन व्यञ्जयन्नाह । क्वाकार्यमिति । अत्र श्रुतिशालिनी नायकस्य वासनापरिपाकवशाद्विप्रलम्भावेशेऽपि प्रथम प्रादुर्भावः । काकन्य प्रशलक्ष्मण.

किं वक्त्रन्यपकल्मषाः कृतधियो रेखैव सान्याद‍ृशी
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं धास्यति ॥

अस्य समुदायार्थशून्यतया अपार्थस्यापि उन्मत्तवचनत्वाद् गुणत्वम् ॥ १६८ ॥

यदप्रयोजनं यच्च गतार्थमर्थमेव तत् ।
तस्यापि क्वापि निर्दोषः प्रयोगो दृश्यते यथा ॥
गीताविदुरवाक्यानि धर्माः शान्तनवेरिताः ।
न श्रुता भारते येन तस्य जन्म निरर्थकम् ॥

अत्र गीताविदुरवाक्यादीना कथायाम् अप्रयोजकत्वेऽपि इतिहासव्याजेन चतुर्वर्गप्रतिपादनस्यारम्भ एव प्रतिज्ञानाद् गुणत्वम् तदिदमप्रयोजनम् ॥ १६९ ॥

---

क्व च कुलमिति । तदैव शान्तरसानुयायिनमनन्तरमेव बाधित्वा चित्तानुरञ्जकप्रकृतरसाव्यभिचारिणा औत्सुक्यस्य प्रादुर्भावो भूयोऽपि दृश्येत सेति । एव दोषाणामुपशान्तये श्रुतमित्याद्यौचित्यादीना पूर्वपूर्वप्रादुर्भूतानाम् उत्तरोत्तरभाविभिश्चिन्ताप्रभृतिभिः अपवादे प्रकृतवासना प्रौढि' अवसेया । उन्मत्तवचनत्वादिति । रसाविष्टचेतस तदुत्कलिकाप्रायाणा भावानामव्यवस्थया कीर्त्तनमुन्मादः ॥१६८॥

यदप्रयोजनमिति । प्रबन्धार्थपोषी नाधायकवाक्यम् अप्रयोजनमर्थलाभप्रतिपादकतया कृतकर व्यर्थम् । एवकारो भिन्नक्रमस्तच्छब्द. अनन्तर द्रष्टव्य. । दृश्यत इत्यनेन तत्र तत्र प्रकृतसङ्गतौ सत्या दोषाभावोऽवसेय इति दर्शितम् । यद्यपि भगवद्गीताया मोक्षाधिकारिणामस्ति एव प्रकृतशान्तरसपरिपोषकत्व तथापि तदन्तर्गताना भूयसामाहत्य नास्ति भीष्मविदुरवाक्यानान्तु धर्माधिकारे प्रकृताना व्यक्त एव निष्प्रयोजनभावः सोऽय यथा समाधीयते तद्विवृणोति । अत्रेति । इतिहासरूपे प्रबन्धे सत्यपि शान्तस्य वाक्यार्थाभावेन बहूनाम् इतिहासाना त्रिवर्गाधिकारित्वात् चतुर्वर्गप्रतिपादनमेव महर्षे. अभिमत धर्मादित्रितयस्य च प्रासङ्गिकतया न पूर्ववदस्य अर्थैकताविरोधः । तदिदमुक्त व्याजेनेति ।

एवं गतार्थमपि । यथा,—

हृत्कण्ठवक्त्रश्रोत्रेषु कस्य नावस्थितं तव ।
श्रीकण्ठहारकर्पूरदन्तपत्रप्रभं यशः ॥

अत्र एकेन एव उपमानेन शौक्ल्यप्रतीतौ शेषोपमानपदानां व्यर्थत्वेऽपि यशसः स्मर्य्यमाणत्वगीयमानत्वस्तूयमानत्वश्रूयमाणत्वैः हृदयादिषु श्रीखण्डादिवदनस्थानस्य प्रतीयमानत्वाद् गुणत्वम् ॥ १७० ॥

अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।
तदेकार्थं रसाक्षिप्तचेतसां तन्न दुष्यति ॥

यथा, असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥

असारं संसारमित्युक्त्वा परिमुषितरत्नं त्रिभुवनं निरालोकं लोकं जगज्जीर्णारण्यमिति यदुक्तं, तस्य विशेषानभिधायकत्वेऽपि रसाक्षिप्तेन वक्त्राभिहितत्वाद् गुणत्वम् ॥ १७१ ॥

---

एवञ्च व्युत्पादयितव्यविषयजिज्ञासोपादाने धर्मार्थप्रवृत्तये वाक्यमिदं सफलतामासादयद् गुण एव भवति । एवं गतार्थमपीति ॥ १६९ ॥

श्रीखण्डेनैव उपमाने यशसः शुक्लत्वमवगत शेषोपमानपदानि केवलकतकराणीति व्यर्थत्वप्रसङ्गे स्मरणादिविशेषविवक्षया तिरस्क्रियते यथा सख्यादिभङ्गिसौभाग्येन च गुणीभाव इति ॥ १७० ॥

अविशेषेणेति । पूर्वोक्तपूर्वोक्ताभिन्नतात्पर्य्यकमविशेषेण तात्पर्य्यावृत्तिप्रयोजनम् अन्तरेण तन्मयीभवन चेतसः आक्षेपः । असारं संसारमित्यनेन स्थावरजङ्गमप्रपञ्चस्य निःसारतां प्रतिपाद्य "जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते"

संशयायैव सन्दिग्धं यदि जातु प्रयुज्यते।
स्यादलङ्कार एवासौ न दोषस्तत्र तद् यथा॥
कुदो लब्भइ पन्थिअ सत्थरअं एत्थ गामणिघरम्मि।
उसअपओहरे पेक्खिऊण जइ वससि ता वससु॥ (ट)

अत्र केनापि पथिकयूना प्रावृडारम्भे ग्रामणीवधूः पीनोन्नतस्तनी सत्थरअमिति स्रस्तरकव्याजेन शस्तरतं याचिता। तं प्रत्याचक्षाणैव यथोक्तं ब्रूते। कुतोऽत्र ग्रामणीगृहे स्रस्तरकः, कुतो वा शस्तं रतम्। उन्नतौ पयोधरौ मम हृदये नभसि वा पयोधरान् दृष्ट्वा यदि वससि तद् वसेति तदन्यगोपनाय द्व्यर्थैरेव पदैः प्रयुक्तमिति सन्दिग्धस्यापि अस्य गुणत्वम्॥ १७२॥

वाक्ये प्रबन्धे चार्थानां पौर्वापर्य्यविपर्य्ययः।
दोषः सोपक्रमो नाम चित्रहेतौ न दुष्यति॥

---

(ट) कुतो लभ्यते पथिक स्रस्तरक (शस्तरत) मत्र ग्रामणीगृहे।
उन्नतपयोधरान् प्रेक्ष्य पुनर्यदि वससि तदा वस॥

---

इति। परिमुषितरत्नमिति अत्रापि तावानेव तात्पर्य्यार्थः। एवं निरालोकं लोकं जगज्जीर्णारण्यमिति अत्रापि द्रष्टव्यं सुगमम् अन्यत्॥ १७१॥

संशयायैवेति। मिश्रो विरुद्धार्थवाक्यं संशयापादनेन दुष्यतीत्युक्तम्। यदा तु सन्देह एव तात्पर्य्यमवधार्य्यते तदा स एव रञ्जकतया अलङ्कारतामारोहतीति कथं गुणीभाव इति तदिदमुक्तम्। स्यादलङ्कार एवेति। कुतो लभ्यते पथिकस्रस्तरं शस्तरतं चात्र ग्रामणीगृहे ग्रामणी ग्रामप्रधानं उन्नतपयोधरान् मेघान् पयोधरौ स्तनौ वा दृष्ट्वा यदि वससि तद्वस। अत्र स्पष्टं सन्देहजननेन निभृतानुरागप्रकाशनं पथिकविषये प्रतीयते। द्व्यर्थैरिति। तदुक्तं द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्विति॥ १७२॥

वाक्ये इति। अर्थानां कार्य्यकारणभूतानां तेषामेव पौर्वापर्य्यनियमाद्

यथा, पश्चात्पर्य्यस्य किरणानुदीर्णं चन्द्रमण्डलम्।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः॥

अत्र पौर्वापर्य्यविपर्य्ययादपक्रमदोषस्य चन्द्रोदयं प्रति-रागोद्दीपनप्रकर्षप्रकाशनत्वाददोषः॥ १७२॥

यस्मिन् रीतेरनिर्वाहः खिन्नं तदभिधीयते।
न दोषस्तस्य तु क्वापि यत्र च्छाया न हीयते॥

यथा,—अभिनववधूरोषः स्वादुः करीषतनूनपात्
असरलजनाश्लेषस्तुषारसमीरणः।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः
विरहिवनितावक्त्रक्लैव्यं विभर्त्ति निशाकरः॥

अत्र उपमानानि सामान्यवचनैः समस्यन्ते इति प्रक्रान्त-

---

इति पूर्वार्द्धेऽध्याहार्य्यम्। चित्रहेतौ इति प्रसिद्धरूपविपर्य्यासेन हेतुवचनद्वारा प्रकृतवाक्यार्थपरिपोषाधान चित्रहेतुः पर्य्यस्य विस्तार्य्य चन्द्रोदयरागोद्दीपनयोः सत्यपि हेतुहेतुमद्भावेन पौर्वापर्य्ये प्रथम रागसागरः पश्चात् चन्द्रमण्डलमुदीर्णम् इति विपर्य्यासप्रतीतिसमसमयमुद्दीपनविभावनानुसन्धानाद् हिमांशोः अति-शीघ्रकारिताप्रकाशनात् प्रकृतशृङ्गाररसो दीप्यते। एव कुलकादिरूप प्रबन्धान्त-र्गतवाक्येषु अपि गुणत्वमवसेयम्॥ १७२॥

यस्मिन्निति। वाक्यार्थस्य धर्मिणो यदलङ्कारभङ्ग्या प्रक्रमस्तया निर्वहणाभावः खेदः स तु पूर्वालङ्कारविश्रान्तौ प्रतीतेः अस्खलनेन दोषः। गुणत्व च तस्य भङ्ग्यन्तरैरपि प्रकृतालङ्कारे ध्वननात्। तथाहि अभिनववधूरोषस्वादुरसरल-जनाश्लेष इव क्रूर इत्युपमानानि सामान्यवचनैः समस्यन्त इति समासद्वयेन उपमा-मुपक्रम्य गलितविभवस्याज्ञेवेति समासत्यागाद्विरहिवनितावक्त्रक्लैव्यं विभर्त्तीति च अन्तरधर्मारोपेण च उपमात्यागात् सत्यपि रीतेरनिर्वाहे उपमायामेव पर्य्यवसान समाधानहेतुः। गुणत्वहेतुमाह। व्याख्यापरत्वेन इति। गलितविभवाज्ञाम-सृणेति समासे कर्त्तव्ये योऽयमिव शब्दप्रयोगः स इवार्थे पूर्वौ समासौ बोधयति। क्लैव्य विभर्त्तीति सामान्यालङ्कारे कथम् अन्यधर्मम् अन्यो वहतीति प्रतिसन्धान-

रीतेः अनिर्वाहेऽपि समासव्यापारत्वेन एव इवे शब्दतद्धितयोः प्रयोगे प्रत्युत छायोत्कर्षं इति गुणत्वम् ॥ १७४ ॥

लोकातीत इवार्थो यः सोऽतिमात्र इहेष्यते।
वार्त्तादौ तेन तुष्यन्ति विदग्धा नेतरे जनाः॥
तच्च वार्त्ताभिधानेषु वर्णनास्वपि विद्यते।
कान्तं जगति तत्कान्ते लौकिकार्थानुयायि यत्॥
लौकिकार्थमतिक्रम्य प्रस्थानं यत् प्रवर्त्तते।
तदत्युक्तिरिति प्रोक्तं गौडानां मनसो मुदे॥

यथा, देव धिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम्।
युष्मत्पादरजःपात धौतनिःशेषकल्मषम्।

अत्रातिमात्राख्ये दोषेऽपि वार्त्ताभिधानेऽभिधेयस्य कान्तिगुणस्याभ्यनुज्ञानाद् गुणत्वम्।

यथा वा, अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम्॥

अत्रातिमात्रत्वेऽपि वर्णनार्थत्वाद् गुणत्वम्। अथानतिमात्रं कीदृक्। उच्यते। वार्त्तं तावत्।

यथा, गृहाणि नाम तान्येव तपोराशिर्भवादृशः।

---

समसमय वक्तृत्व्यमस्य इति अन्तर्गतोपमाप्रकटीभावे उपमासमासपदयोरपि सा प्रतीयत इति सेय कविचातुरीप्रतीयमानच्छायामेव पुष्णाति तदिदमुक्तम्। प्रत्युतेति ॥ १७४ ॥

धनामये प्रियालापे वार्त्तं वार्त्ता च कीर्त्यते। वर्णनासु अपि इत्यादिपदविवरण दृश्यते कान्तमित्यभिसम्बन्ध। लौकिकार्थानुयायि यत् जगति लोके कान्तमुच्यते तथाभूतम् अतिक्रम्य यत्कवीना प्रस्थान प्रवर्त्तते तदपि गौडाना मनसो मुदे प्रोक्ता शब्दाडम्बरात्मकगौडरीतिप्रियाणा विदग्धकामाना ज्ञापक सद् गुणीभवतीति

सम्भावयति यान्येव पावनैः पादपांशुभिः ॥

अथ वर्णनायां यथा,

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्य्याप्तस्तवबाहुलतान्तरे ॥ १७५ ॥

परुषं निष्ठुरार्थं तु यदतीव विगर्हितम् ।
विरुद्धलक्षणाद्यासु तदुक्तिषु न दुष्यति ॥

यथा, हालाहलं विषं भुंच्व सखि मा तत्र विश्वसीः ।
यद्वा न दह्यसे काष्ठैः स्वल्पैस्त्वमपि मे मतिः ।

अत्र पारुष्येऽपि विरुद्धलक्षणया अर्थान्तरस्य लक्षितत्वाद् गुणत्वम् ॥ १७६ ॥

अप्रस्तुतं रसं प्राहुर्विरसं वस्तु सूरयः ।
अप्राधान्ये तदेष्टव्यं शिष्टैः स्याद्रसवस्तुनोः ॥

यथा, क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

---

श्लोकार्थः । धिष्ण्यं गृहम् । ननु प्रियालापवर्णनयोः एवंविधा एव लोके काव्ये च वचनसन्दर्भा इति नास्ति अतिमात्रतानतिमात्रतयोर्भेद इति पृच्छति । अथेति ॥ १७५ ॥

सुगममन्यत् । परुषमिति । विरुद्धलक्षणा लौकिकी तस्याहि झटिति अभिधानाविनाभावात् अपरुषार्थप्रतीतेः अभिधानतः पारुष्य न दोषो लक्षणापरिग्रहेण च गुणत्वम् । तदाहुः । अभिधेया विनाभावप्रतीतिः लक्षणेति या । सैषा काव्ये दग्धवक्त्रा जीवित वृत्तिरिष्यते ॥ १७६ ॥

अप्रस्तुतेति । अप्राधान्य इत्युपलक्षण वाच्यत्वेऽपि इति च बोद्धव्यम् ।

अत्र करुणे शृङ्गारस्य अप्रस्तुतत्वेऽपि शम्भुप्रभाववर्णनाङ्गभूतत्वेन द्वयोरपि अप्राधान्यात् अवैरस्येन गुणत्वम् ॥ १७७ ॥

हीनं यत्रोपमानं स्यादुपमेयं गुणाधिकम्।
हीनोपमं तदस्याहुः कवयः क्वाप्यदुष्टताम् ॥

यथा, ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥

अत्र उपमानस्य हीनतायामपि रागातिशयहेतुत्वाद् गुणत्वम् ॥ १७८ ॥

यत्रोपमानमुत्कृष्टमुपमेयं निकृष्यते।
ज्ञेयं तदधिकौपम्यमस्यापि क्वाप्यदोषता ॥

यथा, कान्त्या चन्द्रमसं धाम्ना सूर्य्यं धैर्य्येण चार्णवम्।
राजन्ननुकरोषि त्वं सौभाग्येनापि मन्मथम् ॥

अत्र अधिकौपम्येऽपि राज्ञो लोकपालांशत्वेन शिष्टैः आदृतत्वाद् गुणत्वम् ॥ १७९ ॥

उपमानेन वैषम्याद्भवेदसदृशोपमम्।
तस्याप्यनुज्ञामिच्छन्ति व्यतिरेकोपमादिषु ॥

यथा, प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा।

---

रसवस्तुनोः परस्परविरोधिरसव्यञ्जकयोः। यद्वा। मिथो विरोधिरसरूपयोः एव वस्तुनोः तदाह। वाध्यानामङ्गभावं वा प्राप्तानामुक्तिवत्सलेति ॥ १७७ ॥

हीनमिति। जातिप्रमाणाभ्याम् अपकृष्टं हीनं चन्द्रापेक्षया कामिनीकपोलस्य अपकर्षं आत्मनस्तुल्यताम् उद्दीपनस्य प्रतिपाद्यमानः प्रकृतशृङ्गारप्रकर्षम् अर्पयिष्यतीति गुणत्वम् ॥ १७८ ॥

एवमधिकोपमेऽपि ॥ १७९ ॥

न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव ॥

अस्य असदृशोपमत्वेऽपि व्यतिरेकोपपादकत्वाद् गुण-त्वम् ॥ १८० ॥

यस्योपमानं लोकेषु न प्रसिद्धं तदिष्यते ।
अप्रसिद्धोपमं नाम तत् क्वचिन्नैव दुष्यति ॥

यथा,—उद्गर्भहूणरमणी रमणोपमर्द-
भुग्नोन्नतस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारगौरै-
र्विष्णोः पदं प्रथमसग्रकरैर्व्यनक्ति ॥

अस्य अप्रसिद्धोपमत्वेन दूषणत्वेऽपि द्वयोरपि शृङ्गारो-द्दीपकत्वसाम्याद् गुणत्वम् ॥ १८१ ॥

निरलङ्कारमित्याहुरलङ्कारोज्झितं वचः ।
अर्थौर्जित्येषु तस्यापि क्वचिन्निर्दोषता मता ॥

यथा, याच्ञां दैन्यपराभवप्रणयिनीं नेक्ष्वाकवः शिक्षिताः
सेवासंवलितः कदा रघुकुले मौलौ निबद्धोऽञ्जलिः ।
सर्वं तद्विहित तथाप्युदधिना नैवोपरोधः कृतः

---

उपमानेन वैषम्यम् अन्वयेन सादृश्याभावात् । व्यतिरेकोपमादीत्यादिग्रहणाद् व्यतिरेकदृष्टान्तोत्यादिपरिग्रहः ॥ १८० ॥

यस्योपमानमिति । लोकाप्रसिद्धमेव कविभिरुपमानं कान्तं भवति तेन यत्र लोके प्रसिद्धं तेन सदृशोपमावर्णने सम्भवदपि अप्रसिद्धोपमत्वं रसानुप्रवेशेन गुणी-भवति । उद्गर्भत्वेन स्तनाग्रश्यामिका तया लाञ्छनानुकरणम् अभिलषितम् ॥१८१॥

निरलङ्कारमिति । दैन्यपराभवप्रणयिनीमित्याद्युत्कृष्टपुष्टिविशेषणयोगादस्ति शब्देऽस्पष्टे वक्रतार्थे तु नास्ति वक्रत्वं वा अलङ्कार इति । यद्यपि वाक्यार्थो निरलङ्कार इव भासते तथापि विशेषतः अलङ्कारानध्यवसायेऽपि सामान्येन

पाणिः सम्प्रति मे हठात् किमपरं स्प्रष्टुं धनुर्वाञ्छति ॥

अत्र निरलङ्कारत्वेऽपि अर्थौजित्याद् गुणत्वम् ॥ १८२ ॥

असभ्यार्थं यदश्लीलं तदर्थान्तरवाचि वा।
तस्येह दृश्यते भूम्ना प्रयोगो नाभिदुष्यति ॥

यथा,—अद्यापि तत्कनककुण्डलघृष्टगण्ड-
मास्यं स्मरामि विपरीतरताभियोगे।
आन्दोलनश्रमजलस्फुटघर्मबिन्दु-
मुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥

इत्यश्लीलार्थेऽपि कविभिरविगीतत्वाद् गुणत्वम् ॥१८३॥

देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्त्तवः।
नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥
चराचराणां भूताना प्रवृत्तिर्लोकसञ्ज्ञिता।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः ॥
तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्त्तते।
कवेः प्रमादाद्देशादिविरोधीत्येतदुच्यते ॥

---

वक्रता प्रकाशत एव। न हि लौकिकशास्त्रीयवचनार्थवैपरीत्यमिह प्रतीयते। तदिदमुक्तमर्थौर्जित्यादिति ॥ १८२ ॥

अस्ति हि वय याचामह इति उक्ते याञ्चा च भिक्षाकरी नालङ्किता इत्युक्तौ नायकप्रकर्षाभिव्यञ्जकौ विशेष इत्याह। असभ्यार्थमिति। क्वचित् प्राथमिक एव पदार्थससर्गोऽश्लील' क्वचित्तु न तस्मिंस्तथाभूतेऽपि ससर्गान्तरमिति यदश्लीलम् अर्थान्तरवाचि वेत्युक्तम्। कविभिरविगीतत्वादिति। अविपरीताद्विपरीत एतमुत्कृष्यत इति शास्त्रकारै आम्नातात् तस्य शृङ्गारोद्दीपनतया कविभिः आदृतत्वात् इत्यर्थ. ॥ १८३ ॥

देशोऽद्रीति। आदिपदेन द्वीपादिपरिग्रहः। कामार्थसंश्रयाः। अर्थ-

विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥

तत्र देशविरुद्धस्य गुणीभावो यथा,

तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥

अत्र देशविरुद्धत्वेऽपि तस्य राज्ञः प्रभावेणेति कारणोपन्यासाद् गुणत्वम् ॥ १८४ ॥

कालविरुद्धस्य यथा,

राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
चुम्बन् कदम्बकुसुमैः सह सप्तच्छदोद्गमान् ॥

अत्र कालविरुद्धत्वेऽपि राज्ञां विनाशपिशुन इत्यनिष्टसूचकोत्पातरूपत्वाद् गुणत्वम् ॥ १८५ ॥

लोकविरुद्धस्य यथा,

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।
अबलाविरहक्लेशविह्वलो गणयत्यलम् ॥

अत्र लोकविरुद्धत्वेऽपि कामिभिः तथा संवेद्यमानत्वाद् गुणत्वम् ॥ १८६ ॥

युक्तिविरुद्धस्य यथा,

स सङ्कोचश्चन्द्रादिव कुमुदराशेरशरणः
स सूर्यात् कोकानां विरह इव लुप्तप्रतिविधिः ।
गुणेभ्यस्ते खेदप्रशमनकरेभ्योऽपि यदयं

---

संश्रया' । प्रवृत्तयोऽवस्थाविशेषाः । हेतुविद्या आन्वीक्षिकी । 'अयथारूढं' तथाच अप्रसिद्धम् ॥ १८४ ॥

खलानामुद्वेगस्तदिदममृतादेव मरणम् ॥

अत्र युक्तिविरुद्धत्वेऽपि छेकोक्त्या सम्भाव्यमानोपमया तथा प्रतीतेर्गुणत्वम् ॥ १८६ ॥

औचित्यविरुद्धस्य यथा,

तेनाथ नाथ दुरुदाहरणातपेन
सौम्यापि नाम परुषत्वमभिप्रपन्ना ।
जज्वाल तीक्ष्णविशदाः सहसोद्गिरन्ती
वागर्चिषस्तपनकान्तशिलेव सीता ॥

अत्र स्त्रीत्वादौचित्यविरोधेऽपि तत्समयोचितत्वाद् गुणत्वम् ॥ १८७ ॥

वचनविरोधो यथा,

परदाराभिलाषो मे कथमार्य्यस्य युज्यते ।
पिबामि तरलं तस्याः कदा नु रदनच्छदम् ॥

अत्र वचनविरोधेऽपि वक्तुस्तथाविधावस्थत्वाद् गुणत्वम् ॥ १८८ ॥

धर्मविरोधस्य यथा,

पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालकन्यका ।
सतीनामग्रणीस्त्वासीद्दैवो हि विधिरीदृशः ॥

अत्र धर्मविरोधेऽपि दैवो विधिः इत्यनेनाभिहितत्वात् अदोषः ॥ १८९ ॥

---

कालविरुद्धस्येति । उपघात उत्पातः ॥ १८५ ॥ १८६ ॥

स सङ्कोच इति । यदि चन्द्रादिभ्यः कुमुदसङ्कोचादयो भवेयुः तदा भवद्गुणेभ्यः खलानामुद्वेग उपमीयते न तु तथा सम्भवति तेन अयमलौकिकत्वादाश्चर्य्यमर्पयतीति वाक्यार्थपरिपोषात् तथा उपन्यासो गुण एवेति ॥ १८७ ॥ १८८ ॥

वचनविरोधस्येति । अष्टमी कामावस्था ॥ १८९ ॥

धर्मशास्त्रविरुद्धस्य यथा,

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रियै ।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥

अत्रापन्नः शत्रुरभियातव्य इति नीतिः तच्च मानिनो ह्रियै भवति इति विरुद्धमपि उद्धतपुरुषभाषितत्वात् न दुष्यतीति गुणत्वम् ॥ १९० ॥

कामशास्त्रविरुद्धस्य यथा,

दोलातिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।
कामिनां लयवैषम्याद् गेयं रागमवर्द्धयत् ॥

अत्र त्रासतो लयवैषम्येण गेयस्य रागहेतुत्वेऽपि कामिनी-मुखोद्गीर्णत्वाद्रागविवर्द्धनत्वेन गुणत्वम् ॥ १९१ ॥

इत्थं गुणाश्च दोषाश्च काव्ये दोषगुणाश्च ये ।
आख्यातास्ते स्फुटं सम्प्रत्यलङ्कारान् प्रचक्ष्महे ॥ १९२ ॥

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः १९३

---

देवी ह्रीति । सिद्धादेशाच्च सतीत्व पञ्चालकन्यकायाः । तिरस्कृतमिति अत एव वा पञ्चधा विवक्षित इत्यागम' ॥ १९० ॥

उद्धतपुरुषभाषितत्वादिति । पूर्वपक्षतया सिद्धान्तोपोद्घातत्वादित्यर्थ. ॥१९१॥

लयवैषम्यादिति । गीतस्य कलाप्रकथनात् तस्य च विषमलयस्यारञ्जकत्वात् कथं रागवर्द्धनमिति दूषण दोलागतागतत्रस्तकामिनीगीतप्रभावोक्तिः चमत्कार-कारित्वात् तिरोधीयत इति गुणभाव च नीयते भावान्तरालवर्त्ती कामो लय. ॥ १९२ ॥

ननु गुणैरेव शब्दार्थयोः सनाथीकरणे किमलङ्कारविवेचनप्रयासेन, इत्यत

यदि भवति वचश्च्युतं गुणेभ्यो
वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं
नियतमलङ्करणानि संश्रयन्ते ॥ १९४ ॥

दीर्घापाङ्गं नयनयुगलं भूषयत्यञ्जनश्री-
स्तुङ्गाभोगौ प्रभवति कुचावर्चितुं हारयष्टिः ।
मध्ये क्षामे वपुषि लभते स्थान कूर्पासलक्ष्मीः
श्रोणीबिम्बे गुरुणि रशनादाम शोभां बिभर्त्ति ॥१९५॥

इति महाराजभोजदेवविरचिते सरस्वतीकण्ठाभरणालङ्कारे
गुणविवेचनं नाम प्रथमः परिच्छेदः ।

---

आह । युवतेरिति । अङ्गेत्याक्षेपसम्बोधने । अलङ्कारसाहित्यबुद्धिसङ्गतिः प्रणय. । विकल्पो विशेषस्तर्हि किमुत्तरसिद्धौ पूर्वेणेति न्यायेन त्यज्यन्ता गुणा इत्यत आह ॥ १९४ ॥

यदि भवतीति । विहतमेतत् ॥ १९५ ॥

ते च अलङ्कारा यथास्थान निवेश्यमाना एव सहृदयरञ्जनक्षमा इति कवीन् शिक्षयति । दीर्घेति । तेन शब्दादिविषयविभागेन अलङ्कारविवेचन सप्रयोजनमेव इति तात्पर्य्यार्थ. । शेषमतिरोहितम् ॥ १९६ ॥

इति दोषगुणविवेचनो नाम प्रथम. परिच्छेद. ।

---

# द्वितीयः परिच्छेदः ।



शब्दार्थोभयसंज्ञाभिरलङ्कारान् कवीश्वराः ।
वाह्यानाभ्यन्तरान् वाह्याभ्यन्तरांश्चानुशासति ॥ १ ॥
ये व्युत्पत्त्यादिना शब्दमलङ्कर्तुमिह क्षमाः ।
शब्दालङ्कारसंज्ञास्ते ज्ञेया जात्यादयो बुधैः ॥ २ ॥
जातिर्गती रीतिवृत्तिच्छायामुद्रोक्तियुक्तयः ।
भणितिर्गुम्फना शय्या पठितिर्यमकानि च ॥ ३ ॥
श्लेषानुप्रासचित्राणि वाकोवाक्य प्रहेलिका ।
गूढप्रश्नोत्तराध्येयश्रव्यप्रेक्ष्याभिनीतयः ॥ ४ ॥

---

एव दोषगुणेषु निर्णीतेषु अलङ्काराः प्राप्तावसराः तत्र अलङ्कारसामान्यलक्षणमाद्यपरिच्छेदे तद्विभाग दर्शयन् परिच्छेदत्रय सङ्गमयति। शब्दार्थोभयसञ्ज्ञाभिरिति। इत्थम्भूतलक्षणे तृतीया मध्यमपदलोपी समासः। तेन शब्दालङ्कारार्थालङ्कारोभयालङ्कारसञ्ज्ञाभिरित्यर्थः। गुणप्रस्तावे वाह्यत्वादिकं निवृत शब्दोऽवच्छेदकतया प्रथमप्रतिसन्धेयभावेन च शरीरस्थानीयो वाह्यस्ततः तदाश्रया अलङ्कारा अपि वाह्याः। अर्थो विच्छेद्यतया पश्चात् अनुसन्धेयतया च आत्मतुल्य आभ्यन्तरः तेन तदाश्रया अलङ्कारा अपि आभ्यन्तराः। एतेन वाह्याभ्यन्तरा व्याख्याताः। आश्रयाश्रयिभावश्च यथा तथोक्तमेव। उभयालङ्कारेषु योगस्य प्रायिकत्वम् आश्रित्य कवीश्वराणाम् अनुशासनमुक्तमेतत् विवेचयिष्यते चतुर्थारम्भे ॥ १ ॥

शब्दालङ्कारसामान्यलक्षणमाह। ये व्युत्पत्तीति। विशिष्टा उत्पत्तिर्व्युत्पत्तिर्लोपागमविकारादिप्रपञ्चः। अतएव हि संस्कृतादिजातयो व्यवतिष्ठन्ते। आदिग्रहणात् गुरुलघुसन्निवेशात् श्रयोगत्याद्यवच्छेदाः त्रयोविंशतिरुपात्ताः। वाह्यकङ्कणादिसाम्यादिय सञ्ज्ञा प्रवृत्तेत्याह। शब्दालङ्कारसंज्ञा इति ॥ २ ॥

जातिरित्यादि। ते च प्रतिविशेष वक्ष्यन्ते ॥ ३ ॥ ४ ॥

चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः।
अथासां लक्षणं सम्यक् सोदाहरणमुच्यते ॥ ५ ॥
तत्र संस्कृतमित्यादिर्भारती जातिरिष्यते।
सा त्वौचित्यादिभिर्वाचामलङ्काराय जायते ॥ ६ ॥
संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन।
साधारण्यादिभिः केचित् केचन म्लेच्छभाषया ॥ ७ ॥
न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत्।
सङ्कीर्णं नाभिजातेषु नाप्रवुद्धेषु संस्कृतम् ॥ ८ ॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः।
पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥ ९ ॥
संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः।
शक्यो रचयितुं कश्चिदपभ्रंशेन जायते ॥ १० ॥

---

शब्दालङ्कारजातयः। शब्दालङ्कारसामान्यानि ॥ ५ ॥

स्वरूपस्थितौ रूपान्तरगवेषणम् अनुचितमतो जाते प्राधान्यात् प्रथमं लक्षणम् इत्याह। तत्रेति। संस्कृतमिति भावप्रधानो निर्देशः। भारतीग्रहणं स्पष्टार्थम्। ननु अवश्यं शब्देन संस्कृताद्यन्यतमेन भवितव्यं तत्कोऽत्र कवेः शक्तिव्युत्पत्त्योरंशो येन अलङ्कारता स्यादित्यत आह। सेति। औचित्याकृष्ट एव अलङ्कारोऽस्ति च संस्कृतादेरपि तथाभाव इति भावः ॥ ६ ॥

यद्यपि अर्थौचिती पूर्वं दर्शयितुमुचिता तथापि प्राधान्यमावेदयितुं पृथगौचितीमाह। संस्कृतेन एवेति ॥ ७ ॥

विषयौचितीमाह। न म्लेच्छितव्यमित्यादि। म्लेच्छनमपशब्दः प्राकृतं संस्कृतभवम्। अभिजातः शुद्धान्वयः ॥ ८ ॥

अथ के संस्कृताद्युचितवक्तार इत्यत आह। देवाद्या इति। आदिग्रहणेन ऋषिभूमिपतिप्रभृतयः ॥ ९ ॥

वाच्यौचितीं दर्शयति। संस्कृतेन एव इति। यथाहि। देवतास्तुत्यादौ संस्कृतं प्रगल्भते न तथा प्राकृतादि। यथा च सूक्ष्मवस्तुस्वरूपोद्घट्टने प्राकृतस्य सौष्ठवं न तथा संस्कृतादेरित्यादि ॥ १० ॥

पैशाच्या शौरसैन्याऽन्यो मागध्याऽन्यो निबध्यते।
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥ ११ ॥
नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया।
कथां गोष्ठीषु कथयंल्लोके बहुमतो भवेत् ॥ १२ ॥
शृण्वन्ति लटभं लाटाः प्राकृतं संस्कृतं द्विषः।
अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गुर्जराः ॥ १३ ॥
ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया।
गौडस्त्यजतु वा गाथामन्या वास्तु सरस्वती ॥ १४ ॥
केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः।
काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः ॥ १५ ॥
गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम्।

---

द्वित्राभिः कोऽपि काव्यसमस्ताभेदस्यार्थः। सर्वाभि' कश्चन प्रकरणादेरर्थः ॥ ११ ॥

विषयौचित्यमेव क्वचिद्विशेषे कान्तिप्रकर्षम् अर्पयतीत्याह। नात्यन्तमिति। समानबुद्धिशीलवयसां विनोदार्थमासनबन्धो गोष्ठी ॥ १२ ॥

देशौचितीमाह। शृंखन्तीति। लटभ मनोज्ञम्। स्वेन गुर्जरजातीयेन ॥ १३ ॥

ब्रह्मन्नित्यादिना निन्दार्थानुवादेन गौडेषु प्राकृतानौचित्य राजशेखरेण व्यञ्जितम् ॥ १४ ॥

समयौचिती दर्शयति। केऽभूवन्निति। आढ्यराजः शालिवाहनः साहसाङ्को विक्रमादित्य'। ग्रन्थकृत्पूर्वजतया श्रीपदम् ॥ १५ ॥

ता इमाः परस्परसङ्कीर्णाः षडेव संस्कृतादिभाषा भवन्तीति सामान्यविभागम् एतद् विरचनप्रयोजनञ्च उपसंहरति। गिर इति। दिव्या' संस्कृता भूतवचनं पैशाचम्। मथुरावासिभणितिः शौरसेनी। तेषामिति। तच्च भूतवचनं स च अपभ्रंशस्ताश्च दिव्याद्या इति नपुंसकमनपुंसकेन इत्येकशेषः पाक्षिक

विदग्धानामिष्टे मगधमथुरावासिभणिति-
निबद्धा यस्तेषां स इह कविराजो विजयते॥ १६॥
शुद्धा साधारणी मिश्रा संकीर्णा नान्यगामिनी।
अपभ्रष्टेति साचार्य्यैर्जातिः षोढ़ा निगद्यते॥ १७॥

तासु उत्तमपात्रप्रयोज्या संस्कृतजातिः शुद्धा यथा,—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन॥ १८॥

मध्यमपात्रप्रयोज्या प्राकृतजातिः शुद्धा यथा,

---

बहुवचनम्। प्रतिभार्थप्रापणा जीवदर्पणा निपुणो हि कविः स एव हि सर्व-प्रधीनताद्दग्युक्तिसिद्धिसम्पन्न' कविराज' अतएव विजयते सकललौकिकशास्त्रवचन-निर्मालभ्य' प्रकर्षेण वर्त्तते इति॥ १६॥

संस्कृतादिषु यथायोग शुद्धादिभेदेन जाति. षोढा भिद्यत इत्याह। शुद्धा साधारणीति। इह भाषारूपविषयभेदेन भिन्नाः संस्कारा यानधिकृत्य पाणिनिवररुचिप्रभृतीनाम् अनुशासनानि व्यवतिष्ठन्ते। तत्रैक एव संस्कारः प्रत्यभिज्ञायते सा शुद्धा। संस्कारान्तराग्रहणात्। यत्र तु लक्षणसम्भेदेन नानासंस्कारसम्पातः चीरनीरवत्साधारणी। रूपसाधारण्या नरसिंहवद्द-भाषाभेदव्यवस्थितभागद्वयात्मिका मिश्रा। रूपमिश्रणात्। तिलतण्डुलन्यायेन सङ्कीर्णा विजातीयवस्त्वन्तरव्यतिरेक एव लोके सङ्कीर्णव्यवहारात्। या पुन. प्रकृतिभावेनापि भाषान्तरसम्पर्कं न सहते सा अनन्यगामिनी। संस्कार-सम्भेदेन वा प्रकृतिभावेन वा नान्य गच्छति यतोऽपशब्दरूपा अपभ्रष्टा॥ १७॥

तासु उत्तमेति। पात्रलक्षणमुत्तमादिभेदश्च पञ्चमे वक्ष्यते। उन्नमितैकेति। पदानि प्रकृतानङ्गलेखोचितानि निर्व्याजप्रेमगर्भाणि। अतएव भावापीडापप्रति-सन्धाननिमग्नमानसायाः चिन्तानुभावरूप भ्रूलताविरेचितमिवासीत्। हस्ततल-निहितैककपोलायाः तादृक्पुलकितैककपोलदर्शनात् अतिमानात्मा शृङ्गारःसुप्र-बुद्ध इव तत्काल नायकस्यापि इति मिथोऽनुबन्धलक्षणा अपूर्वानुरागकक्षाम् अधि-रूढा रतिः एव काव्यसर्वस्वायते। अत्र च कस्यचित् पदस्य भाषान्तरसाधारण्येऽपि भूयसामुदाहरणत्वमेवम् अन्यत्रापि॥ १८॥

तुज्झ ण आणे हिअअं मम उण मअणो दिआ अ रत्तिं अ।
णिक्किव तवेइ वलिअं तुह जुत्तमणोरहाइ अंगाइ ॥१९॥ (ठ)

हीनपात्रप्रयोज्या मागधिका शुद्धा यथा,

शद साणुशमंशभालके कुम्भशहश्शवशाहि शञ्चिदे।
अणिशं च पिआमि शोणिदे वलिशशदं शमले हुवीअदि ॥२०॥
(ड)

नात्युत्तमपात्रप्रयोज्या पैशाची शुद्धा यथा,

पणमत पणअप्पकुपितगोलीचलणग्गलग्गपडिविंवम्।
दससु णहदप्पणेसु एआदसतणुधलं लुद्दम् ॥ २१ ॥ (ढ)

नातिमध्यमपात्रप्रयोज्या शौरसेनी शुद्धा यथा,

---

(ठ) तव न जाने हृदय मम पुनर्मदनो दिवा च रात्रिं च।
निष्कृप तपति बलवत् त्वयि युक्तमनोरथानि अङ्गानि ॥
(ड) शत मानुषमांसभारकाः कुम्भसहस्र वसाभिः सञ्चितम्।
अनिशं च पिबामि शोणित वर्षशत समरो भविष्यति ॥
(ढ) प्रणमत प्रणयप्रकुपितगौरीचरणाग्रलग्नप्रतिबिम्बम्।
दशसु नखदर्पणेषु एकादशतनुधरं रुद्रम् ॥

---

तुज्झेति। वलिअं बलवत्क्रान्तमभिमुखम् ॥ १९ ॥

शदसाणुशेति। अत्र मांसादिलाभहेतुतया समराशंसन बीभत्सनुन्मुद्रय-हीनपात्रता द्रढयति ॥ २० ॥

नात्युत्तमेति। उत्तमात् अपकृष्ट मध्यमादुत्कृष्ट नात्युत्तमम्। एव नाम देवी कोपे भगवतः प्रणयकातरता येन युगपदिव सर्वाभिरपि मूर्त्तिभिः प्रणमतीति प्रतीयमानोत्प्रेक्षा ॥ २१ ॥

नातिमध्येति। हीनादुत्कृष्ट मध्यमादपकृष्ट नातिमध्यमम्। तुं सीति।

तं सि मए चूअङ्कुर दिण्णो कामस्स गहिदधणुअस्स ।
जुवइमणमोहणसहो पञ्चब्भहिओ सरो होहि ॥२२॥ (ण)

नातिहीनपात्रप्रयोज्योऽपभ्रंशः शुद्धो यथा,

लइ वप्पुल पिअ दुद्धं कुदो अम्हाणं छुच्छासि ।
पुत्तहमत्थे हत्थो जइ दहि जम्मेवि जादं आसि ॥ (त)

प्रायिकञ्चैतत् तेन कवेरभिप्रायशक्त्यादिभ्यः सर्वा अपि सर्वप्रयोज्या भवन्ति ॥ २३ ॥

---

( ण ) त्वमसि मया चूताङ्कुर । दत्त. कामस्य गृहीतधनुषः ।
युवतिमनोमोहनसह पञ्चाभ्यधिकं शरो भव ॥
( त ) गृहाणानुकम्प्य पिव दुग्ध कुतोऽस्माक तक्रम् ।
पुत्रकमस्तके हस्तो यदि दधि जन्मन्यपि जातमासीत् ॥

---

कामस्य कामायेत्यर्थः । चतुर्थ्याः सम्बन्धसामान्यविवक्षाया षष्ठीति सूत्रात् षष्ठी ॥ २२ ॥

नातिहीनेति । हीनात् किञ्चित् उत्कृष्ट मध्यमादपकृष्टं नातिहीनम् । लइ वप्पुलेति । शपथं पुत्रस्य मस्तकेनाह अपि यदि तक्रस्य व्यापकं दधि जन्मन्यपि जातमासीदिति व्यापकानुपलब्धिः प्रयुक्ता । ननु प्राकृतादिषु उत्तमादिपात्रव्यतिकरदर्शनात् कथमेषा व्यवस्था घटत इत्यत आह । प्रायिकमिति । यत्र प्रकृतनिर्वहणोचितविशेषाभिसन्धानेन कविरन्यथा प्रवर्त्तते । यथा मालत्या संस्कृतमाश्रित्य । एषोऽस्मि भोः कार्य्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्त इत्यादि, यत्र वा कवेर्व्युत्पत्तिकृतो भाषाविपर्य्यासः शक्त्या तिरस्क्रियते यथा मृच्छकटिके विटस्य मध्यमपात्रस्य अपि संस्कृतोक्तिः । यत्र वा प्रबन्धौचितौ परवशाः संस्कृतादिजातयो विपर्य्यस्यन्ते । यथा च सर्गबन्धादौ मध्यमादेरपि संस्कृतमेव खण्डकथापरकथादौ उत्तमादेरपि प्राकृतमेव, बृहत्कथादौ पैशाचमेव, वस्तुबन्धादौ अपभ्रंश एवेति । तत्र सन्धिसन्ध्यङ्गघटनासौष्ठवेन रसः पुष्यतीति भरतमुनिप्रभृतीनामतिप्रकाश एव पन्थाः ॥ २३ ॥

ता इमाः शुद्धाः षड़ेव, साधारण्यादयः पुनरनन्ताः । तासु मध्यमपात्रभूमिकास्थोत्तमपात्रप्रयोज्या संस्कृतप्राकृतयोः साधारणी यथा,—

सरले ! साहसरागं परिहर रम्भोरु ! मुञ्च संरम्भम् ।
विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥ २४ ॥

नात्युत्तमभूमिकास्थोत्तमपात्रप्रयोज्या संस्कृतपैशाचयोः साधारणी यथा,—

चम्पककलिकाकोमलकान्तिकलापाथ दीपितानङ्गा ।
इच्छति गजपतिगमना चपलायतलोचना लपितुम् ॥

एवं संस्कृतापभ्रंशादिसाधारण्यः प्राकृतादिभाषान्तरसाधारण्यश्च द्रष्टव्याः ॥ २५ ॥

वक्तृविषयौचित्यादिप्रयोज्या मिश्रा यथा,—

---

साधारण्येति । संस्कृतस्य प्राकृतादिसाधारण्ये पञ्चप्रकाराः प्राकृतस्य शौरसेन्यादिसाधारण्ये चत्वारः शौरसेन्याः पैशाच्यादिसाधारण्ये त्रयः पैशाच्या मागध्यादिसाधारण्ये द्वौ । मागध्या अपभ्रंशसाधारण्ये एक इति । द्विविकल्पे पञ्चदशप्रभेदास्त्रिविकल्पे विंशतिश्चतुर्विकल्पे पञ्चदश पञ्चविकल्पे षट् षड्विकल्पे एक इति सर्वमिलने सप्तपञ्चाशत्प्रकारा साधारणी । एवं मिश्रादौ अपि लोष्टप्रस्तारक्रमेण बहवो भेदा इति तावदुदाहरणे ग्रन्थगौरवं स्यादिति दिङ्मात्रमुदाहरति । तास्विति । अभिन्नसंस्कारा भाषाप्रयोगे हि प्रयोक्तृप्रकृतिसम्भेदे भवति । न च प्रकृतिसम्भेदस्तात्त्विकः स्वभावसङ्करप्रसङ्गादत उक्तं मध्यमपात्रभूमिकास्थेति । भूमिका वर्णिका । मध्यमपात्रप्रकृत्युचितो रागाद्यभिनयः तत्र तिष्ठति तत्परिग्रहेण चित्रतुरगवत् सामाजिकानां सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिविलक्षणप्रतिपत्तिपदवीम् अवतरतीति मध्यमपात्रभूमिकास्थम् उपलक्षणञ्च इदमुत्तमभूमिकास्थमध्यमप्रयोज्यापि इयमेव एवमुत्तरत्र ॥ २४ ॥

तव विरहायासं सोढुं मम चित्तमसहमिति योजना ॥ २५ ॥

जयति जनताभिवाञ्छितफलप्रदः कल्पपादपो गिरिशः।
जअइ अ तमल्लिअन्ती गिरितणया पणअकप्पलआ ॥ (ध)

एवं भाषान्तराणामपि मिश्रीभावो द्रष्टव्यः ॥ २६ ॥

दुर्विदग्धादिपात्रप्रयोज्या संकीर्णा यथा,

अकट गुमटी चन्द्रज्योत्स्ना कलं किल कोइलो
लवइ अ सुहुर्याम्यो वायुर्निवारश्च वाइ अ।
अवि सखि अला रक्ताशोकस्तवापि मनो मुदे
न कज न कजं मानेनाद्य प्रियं प्रति जाहुदा। (ट)

---

(ध) जयति तमालीयमाना गिरितनया प्रणयकल्पलता।

(ट) "अकट आश्चर्य, गुमटी मनोज्ञा" 'कोइलो लवइ' कोकिलो लपति; वाइ अ=वाति च, "निवारश्च वारकशून्य, अला आगतः, जाहुदा याम:" कज कार्य्यम्।

---

वक्तृविषयेति। यदा उत्तमादिषु नानावक्तृभिरेका काव्यसमस्या क्रियते। भिन्नभाषोचितवर्णनीयविषयं वा काव्यमेकम् उपक्रम्यते। यदा वा शक्तिनिरूपणाय कवेरेव नानाभाषामय काव्यमारब्धं स्यात् तदा कथं न अलङ्कारपदवीमध्यास्ते अत आह। मिश्रेति ॥ २६ ॥

दुर्विदग्धादीति। नागरकभावमवाप्तस्तद्भूमिकामवलम्बमानो दुर्विदग्धः। आदिपदात् पूर्वोक्ताः समस्यादय.। अकटमाश्चर्य्यम्। गुमटी मनोज्ञा। आस्फालितखड्गस्येव स्फुरणे लवइ इति महाराष्ट्रदेशी। तथाच प्रयोगः। लवइ अविज्जुमणीहरीत्याराध्याः। अन्ये तु लपतीत्ययमाहुरेव च कलशब्दः पुष्यतीति। याम्यो दक्षिणो निवारश्च निर्वंशको वारकशून्यो वा अला आगतः। यदिह मानी न क्रियेत ज्योत्स्नादयो मनो मुदमेवाधास्यन्तीति प्ररोचना। यदा तु •मनोमुद इतिपाठेऽपिशब्देन नायकसाधारणमुत्कण्ठाकारित्वमुक्त

सेयं संस्कृतमहाराष्ट्रापभ्रंशयोगस्तिलतण्डुलवत् संकीर्णा जातिः। एव प्राकृतापभ्रंशसङ्करोऽपि द्रष्टव्यः ॥ २७ ॥

क्रीड़ागोष्ठीविनोदाद्यर्थाऽनन्यगामिनी असाधारणी यथा,

भीष्मप्रोक्तानि वाक्यानि विद्वद्वक्त्रेषु शेरते।
गोसे तिरिञ्छिरिञ्छोली तल्ल तूहे विवल्लिदा ॥ (ध)

अत्र पूर्वार्द्धपदानि संस्कृत एव, उत्तरार्द्धपदानि प्राकृत एव। सेयम् असाधारणी अनन्यगामिनी च जातिः उच्यते। भाषान्तराणां पुनः असाधारण्यं नास्ति ॥ २८ ॥

---

(ध) "गोसे=प्रभाते, तिरिञ्छिरिञ्छोली=कमलरजः पङ्क्ति, तल्ल=ऋल्पसर', तूहे=(तीर्थे), विवल्लिदा=प्रसारिता"

---

चन्द्रज्योत्स्नादीनामिति। अतो न कज नकज नार्यो नार्थ ईर्ष्यारोषलक्षणेन प्रतिकूलभावावलम्बिना मानेन तस्मात् प्रियमेव प्रति जाहुदा यामः। यदामनन्ति स्वय वा तत्र गमनमिति ॥ २७ ॥

क्रीडेति। काव्यसमस्याक्रीडा उक्तपूर्वा गोष्ठी तत्र विनोदो मनोऽनुकूलेन समयातिवाहनम्। आदिपदं पूर्ववत्। ननु माभूत् प्रकृतिभावेन भाषान्तरसम्भेदः सस्कारसम्पातेन तु भविष्यति तथाच कथं साधारणीती भिद्यत इत्यत आह। असाधारणी चेति। नात्र पूर्वोत्तरार्द्धयोः ऐकमत्यमुदाहरणत्वात्। आराध्यास्तु यथा सरस्तीरे कमलरजः पङ्क्तिः प्रसृता शोभते तथा विद्वद्वक्त्रेषु भीष्मवाक्यानीति उपमाकल्पनया कथञ्चित् एकवाक्यतामाहुः। अत्र पूर्वार्द्धपदानीति। प्राकृत एवेति। महाराष्ट्रदेशीयत्वात् देशीपदानाञ्च स्थानिभावासम्भवात्। भाषान्तराणा पुनरिति। सिद्धिर्महाराष्ट्रीतः, सिद्धिं शौरसेनीतः इत्युपक्रम्यानुशासनात् तद्भवरूपतैव स्फुटा। तत्समानान्तु साधारण्यमिह इति ॥ २८ ॥

अपभ्रष्टा यथा,

मुद्धे ! गहणअ गेण्हउ तं धरि मुद्दं णिए हत्थे ।
णिच्छउ सुन्दरि ! तुह उवरि मम सुरअप्पहा अत्थि ॥ (न)

सेयमपशब्दप्रयोगतोऽपभ्रष्टापि अविद्वद्भिः श्रोत्रियाद्यैः प्रयुज्यते इति अपभ्रष्टा जातिः ॥ अस्या अपि च अनुकरणे साधुत्वमिष्यते ॥ २९ ॥

पद्यं गद्यञ्च मिश्रञ्च वाक्यं यत् सा गतिः स्मृता ।
अर्थौचित्यादिभिः सापि वागलङ्कार इष्यते ॥ ३० ॥

---

(न) मुग्धे । ग्रहणकं (रत्नमूल्यम्) गृहाण त्वं धारय मुद्रां निजे हस्ते ।
निश्चय, सुन्दरि ! तवोपरि मम सुरतस्पृहाऽस्ति ॥

---

मुग्धे इत्यत्र तव उपरि सुरतस्पृहा अस्ति इत्यादिकमपशब्दबहुलत्वेन अपभ्रष्टा स्पष्टैव । सा तु कथमलङ्कार इत्यत आह । सेयमिति । श्रोत्रियश्छान्दसः आद्यपदेन पालाट्यः सर्व एव हि लौकिकः पदार्थोऽभिनयकथामधिरूढः परित्यज्य ग्राम्यमभिमुखीभूतो विभावादिषु कथं न अलङ्कारस्तदिदमुक्तं प्रयोगत इति । न चापशब्दानां दोषत्वमेव इति वाच्यम् । अनुकरणे तु सर्वेषामिति दोषसामान्यावलम्बिना गुणीभावेन अस्य विपरीकृतत्वादिति ॥ २९ ॥

नानावच्छिन्नगतिः काव्यशरीरे निविशते इति तदवच्छेदरूपां गतिमनन्तरं लक्षयति । पद्यमित्यादि । पठितपदात्पदान्तरसञ्चारो गतिः; सा केनचित् औचित्योपनिपातिना सन्दर्भपरिमाणेन नियम्यते । ततः तदपि उपचारेण गतिः । पठितिपरिमाणञ्च काव्ये समाश्रयत इति तदपि गतिस्तच्च पद्यादिभेदेन त्रिविधमिति सङ्क्षेपः । अतएव गद्यबन्धे तु कैश्चिद्वृत्तमाश्रित उत्त वर्त्तनमियत्तेति यावदिति । सर्वनामशब्दा हि कदाचिदुद्देश्यस्य लिङ्गमाश्रयन्ते

कश्चिद् गद्येन पद्येन कश्चिन्मिश्रेण शक्यते ।
कवितुं कश्चन द्वाभ्यां काव्येऽर्थः कश्चन त्रिभिः ॥ ३१ ॥
यादृग् गद्यविधौ बाणः पद्यबन्धेन तादृशः ।
गत्यां गत्यामियं देवी विचित्रा हि सरस्वती ॥ ३२ ॥
यथामति यथाशक्ति यथौचित्यं यथारुचि ।
कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते ॥ ३३ ॥
द्रुता विलम्बिता मध्या साथ द्रुतविलम्बिता ।

---

कदाचित् प्रतिनिर्द्देश्यस्येति काव्ये यत् सा गतिरित्युक्तम् । तत्र पद्यं चतुष्पदीति न लक्षणमुल्लिखमाचादौ द्विपदपञ्चपदादिशरीरे तदभावात् । अपादः पदसन्तानो गद्यमित्यपि न । अपादत्वं हि अप्रत्यभिज्ञायमानवृत्तभागत्व विवक्षितचतुष्पदीव्यतिरिक्तत्व वा । आद्ये वृत्तगन्धिपद्य न स्यात् । द्वितीये तु अतिप्रसङ्ग. । तस्मात् छन्दोनियमवती काव्यमतथाभूता तु गद्यमिति विभागः । गद्यपद्यात्मक वाक्यं मिश्रम् । तदस्यागतेः अलङ्कारत्वम् उपपादयति । अर्थौचित्यादिभिरिति ॥ ३० ॥

तत्रार्थौचितीमाह । कश्चित् गद्येनेति । यथा हि अटवीवर्णनादौ गद्य प्रगल्भते तथा न पद्य यथा च काव्यशास्त्रतानिर्वहणौचितेऽर्थे पद्यमुत्सहते न तथा गद्यमित्यादि । एव कथाख्यायिकादौ गद्यमेव चम्पूप्रभृतौ मिश्रमेव इत्यादिपदोपात्तबन्धौचिती द्रष्टव्या ॥ ३१ ॥

आस्ता तावदर्थाद्यौचित्यगवेषण स्वरूपेण एव पद्यादिक परिस्फुरत् कविप्रतिभाविशेषावेदनेन सहृदयावर्जकम् अवसीयते । कथमन्यथा क्वचिदेव कस्यचित्सौष्ठवमित्याह । यादृगिति । गत्या गत्यामिति । पद्ये गद्ये मिश्रे च इत्यर्थः । विचित्रा अव्यवस्थितसिद्धिका ॥ ३२ ॥

प्रयोगव्यवस्थामुपपादयति । यथा मतीति । मतिर्व्युत्पत्तिः युक्तायुक्तविवेक इति यावत् । शक्तिः कवित्वबीजभूतः प्राक्तनः संस्कारः औचित्य दर्शितमेव । रुचिर्मनोऽनुकूलताप्रतिसन्धानम् । कवेः पात्रस्येति यथायोगम् । तथाहि शक्तिव्युत्पत्ती कवेरेव । औचित्यं पात्रस्यैव रुचिः उभयोरपीति ॥ ३३ ॥

स चाय सन्दर्भावच्छेदी गुरुलघुसन्निवेशेन एव शोभत इति तमाश्रित्य विभाग-

द्रुतमध्या च विज्ञेया तथा मध्यविलम्बिता ॥ ३४ ॥
सा लघूनां गुरूणाञ्च बाहुल्याल्पत्वमिश्रणैः ।
पद्ये गद्ये च मिश्रे च षट्प्रकारोपजायते ॥ ३५ ॥
तत्र वृत्तञ्च जातिश्च पद्यमाहुरथो पृथक् ।
सम चार्द्धसमं चैतत् विषमञ्च प्रपद्यते ॥ ३६ ॥
गद्यमुत्कलिकाप्रायं पद्यगन्धीति च द्विधा ।
द्विधैव गद्यपद्यादिभेदान्मिश्रमपीष्यते ॥ ३७ ॥
ललित निष्ठुरं चूर्णमाविद्धञ्चेति योऽपरः ।
विशेषः स तु गद्यस्य रीतिवृत्त्योर्भविष्यति ॥ ३८ ॥

---

आह । द्रुतेति । आद्यास्तिस्रः शुद्धा आसामेव मिथो व्यतिकारेण उत्तरास्तिस्रः सङ्कीर्णाः ॥ ३४ ॥

कथमेषा व्यवस्थेत्यत आह । सा लघूनां गुरूणामिति । बाहुल्यमनल्पत्वं मिश्रणञ्च तुल्यवत्प्रतिभानम् । न गद्यादिकामेव गति किन्तु तदाधाराः पठितिसञ्चार इति व्यनक्ति । पद्ये गद्ये च मिश्रे चेति ॥ ३५ ॥

वर्णनियत छन्दो वृत्तम् । मात्रानियत जातिः । समप्रस्ताव समम् । प्रथमतृतीययोः द्वितीयचतुर्थयोश्च तुल्यप्रस्तावमर्द्धसमम् । विभिन्नचतुष्पादं विषमम् ॥ ३६ ॥

उत्कलिका कल्लोलस्तत्प्रायम् उच्चावचमिव प्रतिभासमानमित्यर्थः । यथा सलीलकरकमलतालिकातरलवलयावलीकमिति । वृत्तगन्धि प्रतिभातवृत्तैकदेशम् । तदेतदल्पाख्यायाम् उत्पन्नेन समासान्तेन व्यञ्जित तदयमर्थः सामान्यतः पद्यादिभेदेन गतिस्त्रिधा । तत्रापि जात्यादिभेदेन षट्प्रकारा सेऽपि द्रुतादिभेदेन षट्त्रिंशदिति ॥ ३७ ॥

ननु ललितादयो गद्यभेदाः कैश्चिदलङ्कारकारैः परिसंख्याताः ते कस्मान्नोच्यन्ते इत्यत आह । ललितमित्यादि । सुकुमारसन्दर्भं ललितम् । यथा कमलिनीवनसञ्चरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिन्निर्भरं पदमादधातीति । अस्फुटसन्दर्भं निष्ठुरम् । यथा उत्तम्भितकुटिलकुन्तलकलापः श्मशानवाटमवतरतीति । अनुल्लिखितसमास चूर्णं यथा । अभ्यासो हि कर्मणः कौशलमाद-

तत्र पद्यभेदेषु समवृत्तेद्रु ता गतिर्यथा,

अयि ! विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु ! वल्लभम् ।
अरुणकरोद्गम एष वर्त्तते वरतनु ! सम्प्रवदन्ति कुक्कुटाः ॥

सेयं समवृत्ते लघुसयुक्ताक्षरभूयस्त्वाद् द्रुता गतिः ॥ ३९ ॥

समवृत्ते विलम्बिता यथा,

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः ॥

सेयं स्थाने स्थाने गुर्वक्षरयोगाद् विलम्बिता गतिः ॥ ४० ॥

तत्रैव मध्या यथा,

आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ।

---

षाति । न खलु सन्निपातमात्रेणोदविन्दुरपि ग्रावणि निम्नतामादधातीति । उद्भटसमाससाविद्धम् । यथा । कुलिशशिखरखरतरनखरप्रचयप्रचण्डचपेटपाटितमत्तमातङ्गमदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि इति । रीतिवृत्त्यो' इति विषयसप्तमी । तथा । ललितं कौशिक्यादौ, निष्ठुरम् आरभट्यादौ, चूर्णं वैदर्भ्यादौ, आविद्धं गौडीयाप्रभृतौ, यथायथम् अन्तर्भवतीति न उक्तभेदाः परिसंख्याता इत्यर्थः ॥ ३८ ॥

उक्तप्रकारेषु किञ्चिदुदाहरति । तत्रेति । नवसङ्गमभीरु इति सम्बोधनम् । भीरुशब्दादूङ् तस्मात् सम्बोधनङ्खे रूपम् । गर्भंरत्नरथानालोकयति चेत्तदाह । सम्प्रवदन्तीति । अत्र प्रतिपादमष्टौ लघवश्चत्वारो गुरव इति लघुबाहुल्ये संयोगाक्षराणामुद्रेके च तालत्रयवदतिव्यक्त एव द्रुतभावः ॥ ३९ ॥

प्रणम्येति । अत्र यद्यपि पदचतुष्टये गुरुलघूना समसंख्यत्वमेव तथापि संयोगाक्षरैः अन्तरान्तरापठितदीर्घाभावोन्मेषात् आरोहप्राधान्ये विलम्बिता । एवं व्युत्क्रमेण समानिकायामपि विलम्बितैव । यथा मीनजालघटितानि सूर्यरश्मिबोधितानि मत्तषट्पदाकुलानि पश्य भीरु ! पङ्कजानि । तदिदमाह । सेयमिति । तेन विभागसूत्रे गुरुलघुमिश्रणम् एव रूपमपि बोद्धव्यमिति ॥ ४० ॥

वदन्ति स्म बलं वाह्नोः सितच्छत्रस्मिताः श्रियः ॥

सेयं नातिलघुचरत्वात् मध्या गतिः ॥ ४१ ॥

द्रुतविलम्बिता यथा,

अवतु वः सवितुस्तुरगावली स्फुरितमध्यगतारुणनायका ।
समभिलङ्घिततुङ्गपयोधरा मरकतैकलतेव नभःश्रियः ॥

सेयं द्रुतायाश्च विलम्बितायाश्च गतेरन्तरान्तरानुप्रवेशाद् द्रुतविलम्बिता गतिः ॥ ४२ ॥

द्रुतमध्या यथा,

अपि तुरगसमीपादुत्पतन्तं मयूरम्
न स रुचिरकलाप वाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥

सेयं द्रुतायाश्च मध्यायाश्च गतेरन्तरानुप्रवेशाद् द्रुतमध्या गतिः ॥ ४३ ॥

मध्यविलम्बिता यथा,

दुन्दुभयो दिवि दध्वनुरुच्चैरुच्चकराः कपयश्च ववलुः ।

---

आसीदिति । अत्र यद्यपि गुरवो बहव' तथापि न द्रुतिर्न विलम्बन पठितैरित्यनुभवसाक्षिकोऽयमर्थ' तदेतदाह । नातिलघुचरेति ॥ ४१ ॥

अवतु व इति । अरुणो गरुडाग्रजः श्रोणश्च नायको नेता हारमध्यमणिश्च पयोधरा मेघा स्तनौ च तदेतस्मिन् द्रुतविलम्बिताख्ये वृत्ते समाख्येव रूपं बोधयतीति ॥ ४२ ॥

अपि तुरगेति । उत्पन्नाविर्भवदर्हंगतोज्ज्वलविचित्रकोमलमयूरस्तत्कालनव्याजप्रेमनिर्यन्त्रणकण्ठग्रहविलुलितप्रियाकेशपाशवासनाविकाशहेतुः सर्वस्वायमानः कथ बाणलक्ष्यता सहत इति चित्रप्रत्ययेन व्यज्यत इति । अत्र पादचतुष्केऽपि प्रथम द्रुता पश्चात् मध्या च भागशः प्रत्यभिज्ञायते इत्याह । सेयमिति ॥४२॥

सिद्धनिकायकराञ्जविमुक्तं माल्यमथाङ्गदमूर्ध्नि पपात ॥

सेयं मध्याया विलम्बितायाश्च गतेः अन्तरानुप्रवेशात् मध्यविलम्बिता गतिः ॥ ४४ ॥

एवमर्द्धसमविषमयोः मात्राच्छन्दःसु गद्यमिश्रयोर्लघुगुरुनिश्रवर्णविन्यासविशेषभूयस्त्वेन द्रुतादिगतयो गवेषणीयाः ॥

तत्र विषमवृत्तच्छन्दसि द्रुता यथा,

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः॥४५

अर्द्धसमच्छन्दसि विलम्बिता यथा,

विहितां प्रियया मनःप्रियामथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं नृपमूचे वचनं वृकोदरः ॥ ४६ ॥

उत्कलिकाप्रायगद्ये द्रुतमध्या च यथा,

व्यपगतघनपटलममलजलनिधिसदृशमम्बरतलं विलोक्यते ॥
अञ्जनचूर्णपुञ्जश्यामं शार्वरं तमः स्त्यायते ॥ ४७ ॥

पद्यगन्धिगद्ये वृत्तगन्धौ मध्या जातिगन्धौ द्रुतमध्या यथा,

पातालतालुतलवासिषु दानवेषु ॥

---

दुन्दुभय इति । अत्रापि प्रतिपादं पूर्वं मध्या ततो विलम्बिता च खण्डशः प्रतिभासते इति दर्शयति । सेयमिति । इमामेव व्यवस्थाम् अर्द्धमध्यमादिषु अपि अतिदिशते इति दिङ्मात्रमुदाहरति एवमिति ॥ ४४ ॥ ४५ ॥ ४६ ॥

उत्कलिकाप्रायेति । उच्चावचभावेन प्रतिभासमानम् उत्कलिका । यथा । सलीलकरकमलतालिकातरलयावलीकमिति । तथैव तदपि प्रकृतोदाहरणमिति व्यक्तम् । पातालेत्यादौ वसन्ततिलकाभाग इव हर इव इत्यादौ आर्याभाग इव प्रतिभातीति ॥ ४७ ॥

हर इव जितमन्मथो गुह इवाप्रतिहतशक्तिः ॥ इति ॥४८॥

गद्यादौ मिश्रे गद्यपद्ययोर्द्रुतमध्या यथा,

हन्त पुण्यवानस्मि यदहमतर्कितोपनतदर्शनोल्लसितनयन-
नयानया ।

अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतवर्षेणेव सान्द्रेण सिक्तः ॥ ४९ ॥

पद्यादौ मिश्रे द्रुतविलम्बिता यथा,

असौ विद्याधारः शिशुरपि विनिर्गत्य भवना-
दिहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः ।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥

अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकी-
मधीते स एव माधवो नाम इति ॥ ५० ॥

---

वृत्तगन्धौ जातिगन्धाविति । तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य इति पुंवद्भावेन नुम्न भवति ॥ ४८ ॥

हन्तेति । आश्चर्यस्तिमितस्य हन्तेत्येव वागनुभावस्ततोऽभिमानोन्मेषे पुण्य-वान् अस्मीति अनन्तरं लोकोत्तरविभाववर्णनात्वरितस्य यदहम् इत्यादिगद्यापर्यव-सान एव अविरलमित्यादि वृत्तसाविरासीदिति मध्ये विच्छेदकारणानुपपत्तौ गद्य-पद्याभ्यामेकवाक्यम् ॥ ४९ ॥

असाविति । दूतीकल्पे कयाचित् प्रच्छन्नप्रार्थनीयया आसम्भोगमुन्नयेदिति आम्नातम् । तदिह उत्प्रेक्षा मनोहरग्राम्यमालोकनमुक्तम् । तेन एकस्मिन् वर्ण-नीयवस्तुनि वृत्तप्रपञ्चेन उक्ते प्रकृतसङ्गतिमात्रं गद्येन कृतवतीति युक्तेयमानुपूर्वी-वाक्यैकवाक्यता चेति ॥ ५० ॥

वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।
रीङ् गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥ ५१ ॥
वैदर्भी साथ पाञ्चाली गौडीयावन्तिका तथा ।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥ ५२ ॥
तत्रासमासा निःशेषश्लेषादिगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥ ५३ ॥
समस्तपञ्चषपदामोजःकान्तिविवर्जिताम् ।

---

वैदर्भादीति । गुणवत्पदरचना रीतिः । गुणाः श्लेषादयः काव्यव्यभिचारिणो नव । तेषाम् अन्योन्यमीलनचमतया पानकरस इव गुडमरिचादीन् खाण्डव इव मधुराम्लादीना यत्सम्मूर्च्छनरूपावस्थान्तरगमन वतत्संस्कारादेव हि लोकशास्त्रपदरचनातः काव्यरूपा च रचना व्यावर्त्तते । अतएव मृग्यते कविभि. आसंसारमिति मार्गपदेन उच्यते । वैदर्भादयो विदर्भादिदेशप्रभवास्तैः कृतः सुख हेतुवाग्गोचरतया प्रकटितो न तु तत्तद्देशैः काव्यस्य किञ्चिदुपक्रियते । पन्था इति । प्रतिष्ठन्ते हि महाकविपदवीलाभार्थिन इति । ईदृशमेव रीतिलक्षणम् आनन्दवर्द्धनादीनामपि मतमेतत् उपलक्षणतया सूत्रं व्याख्यातम् । कथं पुनः उक्तम् उपमादे रीतिपद प्रवृत्तम् इत्यत आह । रीङ्गताविति । रियन्ते परम्परया गच्छन्ति अनयेति करणसाधनोऽय रीतिशब्दो मार्गपर्य्याय इत्यर्थ' ॥ ५१ ॥

एव सिद्धे सामान्यलक्षणे विभागमाह । वैदर्भीति ॥ ५२ ॥

वक्ष्यमाणरीत्या वैदर्भीप्राधान्यम् अभिप्रेत्याह । तत्रेति । असमासा अनुल्लिखितसमासाः । निःशेषश्लेषादीति । श्लेषादयो नवगुणास्तैर्गुम्फिता । मिथो मिलनेन समूर्च्छितैः अनुपलभ्यमानान्यतमस्वात्मकैः अपि परस्परविभक्तस्वरूपभावेन सहृदयहृदयसंवादगोचरैः आरब्धा । एवं विपञ्चीस्वरसौभाग्या । विपञ्ची वाग्रूपा सरस्वती विम्बप्रतिविम्बभावेन द्विविधा । प्रतिविम्बाधिष्ठानतया दार्वादियन्त्रमपि विपञ्चीत्युच्यते तदीयाः स्वराः तन्त्रीकण्ठोत्थिताः स्थानक्रमवैपरीत्यानुमेयशारीराः प्रतिविम्बभावाः षड्जादयस्तेषु श्रुतिसमूर्च्छनरूपेषु अपि मिथो विभक्ता' श्रुतयः श्रोत्ररञ्जकस्वरावस्थामापन्ना' समस्तगान्धर्ववित्साक्षिका प्रकाशन्ते । अतएव वीणा एव प्रधान समस्तस्य स्वरजातस्य तत्रैव श्रुतिमण्डलीन्मेषादिति ॥ ५३ ॥

मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः ॥ ५४ ॥
समस्तात्युद्भटपदामोजःकान्तिगुणान्विताम्।
गौडीयेति विजानन्ति रीतिं रीतिविचक्षणाः ॥ ५५ ॥
अन्तराले तु पाञ्चालीवैदर्भ्योर्याऽवतिष्ठते।
सावन्तिका समस्तैः स्याद्द्वित्रैस्त्रिचतुरैः पदैः ॥ ५६ ॥
समस्तरीतिर्व्यामिश्रा लाटीया रीतिरिष्यते।
पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी ॥ ५७ ॥

तासु वैदर्भी यथा,

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्त्रिणः ॥

---

यदा तु पानकादिन्यायेन कश्चिदंश उद्रिक्तो भवति तदा रीत्यन्तरमुक्ति-त्रतीत्याह। समस्तेति। ओज. कान्तिविवर्जिताम्। ओजः कान्त्योः विशेषेण वर्जिताम्। न्यग्भूतौजः कान्ति गुणामिति यावत्। यतः तत् प्रतिद्वन्द्विनो' माधुर्य्यसौकुमार्य्ययो' तत्र उद्भवः तदेतदाह। मधुरा सुकुमारा चेति। अतएवौजः प्रकाशकः षड्धिकेषु पदेषु समासो न क्रियते ॥ ५४ ॥

समस्तेति। अत्युद्भटानि सोल्लिखसमासानि यस्यादौन. कान्त्योरुद्भवे न्यग्भूतगुणसत्त्वेय रीति. ॥ ५५ ॥

अन्तराल इति। माधुर्य्यसौकुमार्य्ययोः किञ्चिदुद्भवेन निमीलनाङ्ग-प्राधान्येन वाऽन्तरालकल्पना। ता व्यनक्ति। द्वित्रैरिति। द्वे त्रीणि वा त्रीणि चत्वारि वेति वाऽर्थे बहुव्रीहिः ॥ ५६ ॥

समस्तेति। यद्यपि उपक्रान्तरीत्यनिर्वाह' अत्रापि अस्ति तथापि तिलतण्डुल-वद्यावद्विभक्तरीतिसवलनस्य कविसरभगोचरस्य उत्तररीतेः पृथग्भाव'। पूर्वरीते-रिति। एका रीतिमुपक्रम्य यदन्यया सन्दर्भनिर्वहणमसावन्य एव प्रकारः। न च अनिर्वाहो दोषश्छायावैरूप्याभावात्। रीतिखण्डनेऽपि हि सन्दर्भसौभाग्य-सम्पत्ति शक्तिमेव आविष्करोति ॥ ५७ ॥

मनीषिता इति। अत्र दीर्घसमासाभावे कथमोज इति कस्यचित् कुदेश्य-

सेयमसमस्तपदा समस्तश्लेषादिगुणवती वैदर्भी रीतिः ॥५८॥

पाञ्चाली यथा,

गात्राभिघातदलिताङ्गदजर्जराणां
गण्डस्थलीलुलितकुण्डलताड़ितानाम् ।
क्षोभस्फुटन्मुकुटकोटिविघट्टितानां
नादोऽभवज्झणझणामुखरो मणीनाम् ॥

सेयमोजःकान्त्यभावात् आश्लिष्टश्लथभावपुराणच्छाया माधुर्य्यसौकुमार्य्यवती समस्तपञ्चषपदा पाञ्चाली रीतिः ॥ ५९ ॥

गौडीया यथा,

यस्यावस्कन्दलीलाचलितबलपरिस्पन्दखर्वीकृतोर्वी-
सरम्भोत्तम्भनायोन्नमितभरनमत्कन्धरासन्धिरासीत् ।
शेषो विस्फारपुञ्जस्फुटपृथुलफणापूत्कृताग्निस्फुलिङ्ग-
स्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नखण्डः ॥

सेयमोजःकान्तिमती समस्तोद्भटभूरिपदा च गौडीया रीतिः ॥ ६० ॥

आवन्तिका यथा,

एतानि निःसहतनोरसमञ्जसानि

---

अपरीतिमत्प्रकरण एवेत्यपास्तम् । एतेन गुणनवकस्य समकक्षतया सम्भेदोक्षण इति । असमस्तपदेत्यनुल्लेखसमासपदेत्यर्थः । समग्रानवगुणवतीति नित्ययोगे मतुप् ॥ ५८ ॥

गात्राभिघातेति । अत्राद्यतृतीययोः षड्द्वितीये च पञ्चपदानि समस्तानि । ओज· कान्त्यभावादिति । ईषदर्थे नञ् । अतएव माधुर्य्यसौकुमार्य्ययोरुन्मेषः आश्लिष्टा प्राप्ता यथासंख्यमोज.कान्तिनिमीलनलब्धप्रादुर्भावा श्लथभावा पुराणी च छाया यथेति विग्रहः ॥ ५९ ॥

समस्तोद्भटभूरिपदेति । उद्भटता प्रौढिप्रकर्षः ॥ ६० ॥

शून्यं मनः पिशुनयन्ति पदानि तस्याः ।
एते च वर्त्मतरवः प्रथयन्ति ताप-
मालिङ्गितोज्झितपरिग्लपितैः प्रवालैः ॥

सेयं समस्तद्वित्रिचतुष्पदा वैदर्भीपाञ्चाल्योरन्तरालवर्त्तिनी आवन्तिका नाम रीतिः ॥ ६१ ॥

लाटीया यथा,

अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्
उदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥

सेयं समस्तरीतिमिश्रा लाटीया नाम रीतिः ॥ ६२ ॥

मागधी यथा,

करिकवलनशिष्टैः शाकशाखाग्रपत्रैः
अरुणसरण्योऽमी सर्वतो भीषयन्ते ।
चलितशबरसेनादत्तगोशृङ्गचण्ड-
ध्वनिचकितवराहव्याकुला विन्ध्यपादाः ॥

सेयमारब्धरीतेरनिर्वाहात् खण्डरीतिर्मागधी ॥ ६३ ॥

---

एतानीति । नि सहृतनोः असमञ्जसानि मार्गतरव इति द्वे द्वे पदे आलम्बिते इत्यादौ त्रीणि पदानि समस्तानि माधुर्य्यसौकुमार्य्ययोः मनागुन्मेष पाञ्चालीभागः । इतरेषां समकाचता वैदर्भीभागः । अनयोः सम्भेदेन अन्तरालकल्पना व्यक्तैव ॥ ६१ ॥

अयमिति । मुद्राभञ्जन इति द्वाभ्या समस्ताभ्याम् आवन्ती । उदयगिरीत्यादिना पञ्चकेन पाञ्चाली । प्रौढिप्रकर्षेण गौडीया । अयमुदयति इत्याद्यसमासेन वैदर्भी च प्रत्यभिज्ञायते इति पूर्वोक्तसमस्तरीतिसम्भेद इति ॥ ६२ ॥

करिकवलनेति । अत्र पूर्वार्द्धे यथोक्ताम् आवन्तीम् उपक्रम्य चरमार्द्धे गौड़ीदा-

या विकाशेऽथ विक्षेपे सङ्कोचे विस्तरे तथा।
चेतसो वर्त्तयित्री स्यात् सा वृत्तिः सापि षड्विधा ॥ ६४ ॥
कैशिक्यारभटी चैव भारती सात्वती परा।
मध्यमारभटी चैव तथा मध्यमकैशिकी ॥ ६५ ॥

---

परिग्रहात् उपक्रान्तरीतेः अनिर्वाहः खण्डन तथापि च न छायावैरूप्यमिति कविशक्तिव्यञ्जकत्वात् अलङ्कारभाव इति। शाकी वृत्तविशेषः ॥ ६३ ॥

या विकाश इति। वृत्तिर्वर्त्तन रसविषयो व्यापारः काव्यस्य रसप्रवणत्वात्। स च व्यापारः सत्वाद्युद्रिक्तलक्षणो जन्मान्तरानुभवभावितवासनासमुत्थः परिपूर्णीभविष्यद्रसास्वादसर्वस्वायमानचित्तावस्थनिदानभूतोऽर्थगतः पञ्चमेऽभिध्यास्यते। शब्दगतः पुनरत्र सङ्गतः सन्दर्भस्य रसप्रकाशकारणेषु प्रधानत्वात्। यदाह। कविवागभिनेयश्च तदुपायो विधेष्यते। वस्तुशक्तिमहिम्ना तु प्रथमोऽत्र विशिष्यते। वर्त्तते न याचितमिति करणसाधनोऽयं वृत्तिशब्द इति वर्त्तयित्रीत्यनेन प्रयोजकव्यापारप्रधानेन दर्शितम्। तत्र विषयवैचित्र्याद्विकाशाद्याः चतस्रः चित्तावस्थाविषयो हि दीप्तमसृणमध्यमभेदेन त्रिविधः। विभावाद्युपधानमहिम्ना तन्मयीभवनयोग्यं हि चेतः कदाचिद्विकसति। सत्वाविर्भावो विकासः। न्यग्भूतरजस्तमो गुणं हि चेतः सत्वोद्रेकात्प्रकाशानन्दमयसंविद्विश्रान्तिमासादयति। ततः सत्वभागप्रतिष्ठितः शृङ्गारस्तदाभासोऽपि तामेव भूमिकामालम्बते। अतएव शुक्तिरजतवद्भावोदयेऽपि दोषमहिम्नैव काव्यमहिम्ना तद्व्यञ्जनात्। तत्समानभूमिकया हास्योरसः प्रादुर्भवतीत्यभिसन्धायाह "शृङ्गाराद्धि भवेद्धास्यमिति" भरतमुनिः। तेन विकासभूमिकौ शृङ्गारहास्यौ। विकासात् प्रच्युतमप्राप्तगुणान्तरप्रादुर्भावं विक्षिप्तं चित्तमुच्यते। तत्र उचितविभावादिवैचित्र्यादाविर्भवद्रजोगुणस्य चेतसो विक्षेपप्रच्युतिदशाया रौद्ररसोन्मेषः। अतएव समानभूमिकया रौद्राच्च करुणो रस इत्याह। यदा तु सत्वतमो निमीलनेन केवलरजःप्रतिष्ठश्चेतस्तदा बहुमुखव्यापारोन्मेषाद्विस्तराख्याम् अवस्थामासादयति। तद्भूमिको वीररसस्तदवस्थामेवावस्थाया अद्भुतोऽपि प्रथत इति वीराच्चैव अद्भुतोत्पत्तिरित्युक्तं न्यग्भूतरजोगुणस्य प्रवृद्धतमसश्चेतसो अवस्थाविशेषः ससङ्कोचः तमालम्ब्य बीभत्सः प्रादुरास्ते तदेकभूमिकश्च भयानक इति बीभत्साच्च भयानक इत्याह। तेऽमी चत्वारश्चित्तावस्थाविशेषाः ॥ ६४ ॥

कथमविशेषणादेव सन्दर्भाद्भवन्तीत्याशङ्क्य विभागेन उत्तरमाह। कैशिकीति। शुद्धिसङ्कराभ्या रीतिवदत्रापि षट्प्रकाराः ॥ ६५ ॥

सुकुमारार्थसन्दर्भा कैशिकी तासु कथ्यते ।
या तु प्रौढार्थसन्दर्भा वृत्तिरारभटीति सा ॥ ६६ ॥
कोमलप्रौढसन्दर्भा कोमलार्थाथ भारती ।
प्रौढार्थां कोमलप्रौढसन्दर्भां सात्वतीं विदुः ॥ ६७ ॥
कोमले प्रौढसन्दर्भा त्वर्थे मध्यमकैशिकी ।
प्रौढार्था कोमले बन्धे मध्यमारभटीष्यते ॥ ६८ ॥

तत्र कैशिकी यथा,

शशिरुचिषु दलेषु नागवल्ल्या
विचकिलदामनि चन्दने च हृद्ये ।
कुवलयिनि पुराणसीधुपाते
तरलदृशामपतन् दृशः प्रिये च ॥

सेयमर्थस्य च सन्दर्भस्य च सौकुमार्यात् कैशिकी नाम वृत्तिः ॥ ६९ ॥

---

सुकुमारेति । चित्तद्रुतिकारित्वं सौकुमार्यं सुकुमारौ अर्थसन्दर्भौ यस्यामिति विग्रहः एवं प्रौढार्थसन्दर्भेऽपि । चित्तदीप्तिविधायिता प्रौढिः । अर्थ-सौकुमार्यादिना विशेषणात्सन्दर्भे सुकुमारत्वादि मन्दालङ्कारता प्रयोजयति । कोमलप्रौढौ मध्यमः प्रकारान्तरविरहात् मध्यमभारत्यादयो न सम्भवन्ति ॥ ६६ ॥ ६७ ॥ ६८ ॥

शशिरुचिष्विति । निर्यान्तितादिषु शुभ्राङ्गनानुन्मनरसोत्सुकानाम् अति-मनोज्ञाधररागसमर्पकेषु नागलतादलेषु ततो मानपरिहारैर्वलितचारित्र्यन विशेषायिनीनां काचयङ्गसौभाग्यसुन्दरे मल्लिकादामनि तत सर्वाङ्गीणाश्लेषसौभाग्या-र्थकचन्दनरसे अनन्तरलोपारोपणासनानि.शेषकेऽपि यत्नपरतोत्कण्ठितानां सौधु-पाते । तत सर्वोपकरणजीवितसर्वस्वे प्रियतमे समकालतयैव दृष्टय पेतुरिति । कुवलयिनीति युक्तः पाठः । कुवलयितेति पाठे विशेषणाङ्गभावाद्विवक्षाया लभाते गुणीभावस्य अनुचितत्वात् । सेयं कैशिकीलक्षणे शृङ्गारादौ विनियुज्यत इति ॥ ६९ ॥

आरभटी यथा,

योयः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्
योयः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
योयः यत् कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥

सेयं प्रौढ़ार्थसन्दर्भा आरभटी नाम वृत्तिः॥ ७०॥

भारती यथा,

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकवरीभारमंसे वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥

सेयमतिसुकुमारार्थे नातिसुकुमारसन्दर्भा भारती नाम वृत्तिः॥ ७१॥

सात्वती यथा,

वन्द्यौ द्वावपि तावनार्य्यचरितप्राप्तप्रतापोदयौ
भीमो भीमपराक्रमः स च मुनिर्भास्वत्कुठारायुधः।
एकेनासृतवद्विदार्य्य करजैः पीतान्यसृञ्जि द्विषाम्
अन्येनापि हताहितासृसरसि स्नातं क्रुधः शान्तये॥

सेयं प्रौढ़ार्थानातिप्रौढसन्दर्भा सात्वती नाम वृत्तिः॥ ७२॥

---

योय इति। ओजःप्रधानतया प्रौढ सन्दर्भः। यस्मादियमारभटी दीप्ते रौद्रादौ विनियुक्ता तेन युक्तं शब्दार्थयोः प्रौढत्वमिति॥ ७०॥

उत्तिष्ठन्त्या इति। सर्वाङ्गीणाश्लेषसमुत्सुके प्रियतमे वहिर्व्यावर्त्तनम् अन्तरनुवर्त्तनञ्च मुग्धाङ्गनाजातिरिति न्यायेन नीवीबन्धकेशपाशसंयमार्थिन्या

मध्यमकैशिकी यथा,

> किं द्वारि दैवहतके सहकारकेण
> संवर्द्धितेन विषपादप एष पापः।
> अस्मिन् मनागपि विकाशविकारभाजि
> भीमा भवन्ति मदनज्वरसन्निपाताः॥

सेयं सुकुमारेऽर्थे प्रौढसन्दर्भा मध्यमकैशिकी नाम वृत्तिः॥७३॥

मध्यमारभटी यथा,

> त्वं नागराज वहुमस्य नितम्बभाग
> भोगेन गाढ़मुपवेष्टय मन्दराद्रेः।
> सोढ़ा विषह्य वृषवाहनयोगलीला-
> पर्य्यङ्कवन्धनविधिस्तव कोऽतिभारः॥

सेयं प्रौढेऽर्थे सुकुमारसन्दर्भा मध्यमारभटी नाम वृत्तिः॥७४॥

अन्योक्तीनामनुक्तिश्छाया सापीह षड्विधा।

---

निर्भरकेलिखिदेन भुजलतालसं लसत्येव न तु व्यापारयितुमपि शक्नोति तत्कालि-कोऽतिपोष। अत्र मसृणेऽपि रसे वृत्त्यौचित्येन सन्दर्भस्य प्रौढिरुचितैव। दीर्घसमासो हि शृङ्गारादौ निषिद्धो न तु प्रौढि। रेफहकारादिवर्णनिवेशात्तु कोमलता सन्दर्भस्येति। एवमुत्तरोदाहरणेषु अपि विशेषः स्वयमूहनीय इति॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥

अन्योक्तीनामिति। लोके विम्बप्रतिविम्बयोः प्रतिविम्बं चमत्कारितया प्रसिद्धम् अतएव अत्यापिरित्य न्याय इत्याह। शब्दालङ्कारकाण्डे वाक्यानुकरण-मेव प्रतिविम्बवाचिना छायापदेन गुणवृत्तेन आख्यायते। तदेतत् अनुकरणमनु-कार्य्यभेदादेव षोढा व्यवतिष्ठत इत्याह। छेकेति। छेकादीना लोकविशेषाणाम् एव शोभाकारित्वेन पृथगुपादाने अर्थात्तदितरानेकविचित्रतत्तदनुकार्य्यपरो लोकशब्दः। छेका विदग्धाः। पोटा स्त्रीपुंसलक्षणा। सहजकेलिरिति प्रसिद्धा-पोटा। भुजिष्या दासीत्यन्ये। अत्र केचिदन्यच्छायायोनिनमपि काव्य छाया-

लोकच्छेकार्भकोन्मत्तपोटामत्तोक्तिभेदतः ॥ ७५ ॥

तासु लोकोक्तिच्छाया यथा,

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ

---

शृङ्गारव्यवहारभूमिमाहुः । प्रकृतिपरिणामः, परपुरप्रवेशः, खण्डसङ्घात्य चूडिका, परिमल, इति पञ्चयोनिजकाव्यभेदास्तत्र किञ्चित् विकृतार्थः प्रकृतिपरिणामः । यथा । धुअमेह महुअरा अणुव्वणसमअहि अओ ण अविमुक्काओ । णहअाअवसाहाओोणिअ अव्वाणवअडिगअाओदिसाओ । यथा च । सिसिरपडिरहसुक्कपरिहुत्त पअ अवलि अक्कम् । इह रह अरया अलिर्प्प विल्थरदिदिसाहिं कट्ठिअ वणह अलम् । अत्र प्राकाशदिशा विस्तारलक्षण मनाग्विकृतमुपलक्ष्यत इति प्रकृतिपरिणामनामायं योनिजकाव्यभेदः । भाषामात्रभिन्नः परपुरप्रवेशो यथा । देवाधिपो वा भुजगाधिपो वा धराधिपो वा यदि हैहयः स्याम् । सन्दर्शनं ते गुणकीर्त्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् । यथा च । सविसो अणज्जुणमिण्ण अमहिन्दसवासुइण्ण अप्पाणम् । सेवञ्जालदसणगुणकहासुतइजणूप्ज्जत्तम् । अत्र भाषामात्र भिन्नमिति परपुरप्रवेशनामायं योनिजकाव्य भेदः । विकीर्णसमाहार. खण्डसङ्घात्यम् । यथा । हित्वाम्बुजिनी दलानि सरसामुत्सङ्गमध्यासते लीलां किंशुकशाखिनस्त्रिचतुरानाबिभ्रते कोरकान् । गर्भग्रन्थिषु पञ्चषा सुमनसो बध्नन्ति चूतद्रुमा उन्मात्राः प्रकटीभवन्ति कुररीकण्ठेषु कूजोर्मयः । अत्र काव्यचतुष्कात् उच्छिद्य पादचतुष्टय ग्रथितमिति खण्डसङ्घात्यनामायं योनिजकाव्यदेदः । तावन्तमर्थम् उपादायाधिको वापश्चूलिका । यथा । बालमनन्तमसि तत्र च कुवलये तानि कनकलतिकायाम् । सा च सुकुमारसुभगेति उत्पातपरम्परा केयम् । तथाच । उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो. तदूर्ध्वं रत्नाश्मस्थलमपि दुरूह किमपि यत् । ततः कुम्भौ पश्चाद्बिसकिसलये कन्दलमथो तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् । अत्र स्थाने स्थानेऽधिकावापस्य प्रत्यभिज्ञानाच्चूडिकानामायं योनिजकाव्यभेदः । वन्धच्छायामात्रसवादी परिमल. । यथा । अनेन यूना सह पार्थिवेन रम्भोरु । कच्चिन्मनसो रुचिस्ते । सिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु । यथा च । याचाप्रसङ्गादुपवीणयन्ती तस्या महाकालमविप्रतिष्ठम् । क्वशाङ्गि । वीणागुणसारणासु चिरात् कलाभ्यासफलं लभेथाः । अत्र सन्दर्भच्छायामात्रम् अनुकृतमिति परिमलनामायं योनिनकाव्यभेदः ॥ ७५ ॥

मासानेतान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥

सेयं लोचने मीलयित्वेति लोकोक्तेरनुकृतिर्लोकोक्तिच्छाया ॥ ७६ ॥

छेकोक्तिच्छाया यथा,

यो हि दोर्वलितास्य विलासललितस्तु यः ।
कान्तासुखस्यावगमस्तस्मै नृपशवे नमः ॥

सेयं तस्मै नृपशवे नम इति विदग्धोक्तेरनुकृतिश्छेकोक्तिच्छाया ॥ ७७ ॥

अर्भकोक्तिच्छाया यथा,

किं सः स्वर्गतरुः कोऽपि यस्य पुष्पं निशाकरः ।
ते वृक्षाः कीदृशा मातर्येषां मुक्ताफलं फलम् ॥

सेयमव्युत्पन्नशिशुजनोक्तेरनुकृतिरर्भकोक्तिच्छाया ॥ ७८ ॥

उन्मत्तोक्तिच्छाया यथा,

इह कायं हुतनु किं कुरुते निरस्तु-

---

मासानिति । लोचने मीलयित्वेत्येव लोकोक्तिरनुकृता [illegible] [illegible] प्रतिपाद्यते । तथाच [illegible] [illegible] [illegible] [illegible] [illegible] । [illegible] चतुरो मासानिमान् लोकोक्तिरिति ॥ ७६ ॥

यो हीति । [illegible] [illegible] [illegible] [illegible] विद्ग्धः ॥ ७७ ॥

किं स इति । [illegible] [illegible] [illegible] इत्यादि ॥ ७८ ॥

वार्त्तां स पृच्छति शृणोति निवेद्यमानाम् ।
आस्तां किमस्य कथया कथयाशु तावद्
अत्रागमिष्यति न वा खलु सोऽभिमानी ॥

सेयमसमञ्जसाया उन्मत्तोक्तेरनुकृतिरुन्मत्तोक्तिच्छाया ॥७९॥

पोटोक्तिच्छाया यथा,

तिलकमसहास्मि सोढुं घनसारेणातिसारो दोषो मे ।
लम्भयति च दौर्बल्यं कुङ्कुमरागो ममाङ्गानि ॥

सेयमुत्तमपदारोपितनीचयुवत्युक्तेरनुकृतिः पोटोक्तिच्छाया ॥ ८० ॥

मत्तोक्तिच्छाया यथा,

पि पि प्रिय स स स्वयं मु मु मुखासवं देहि मे
त त त्यज दु दु द्रुतं भ भ भ भाजनं काञ्चनम् ।
इति स्खलितजल्पितं मदवशात् कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥

सेय स्खलन्त्या मत्तोक्तेरनुकृतिर्मत्तोक्तिच्छाया ॥ ८१ ॥

साभिप्रायस्य वाक्ये यद्वचसो विनिवेशनम् ।
मुद्रां तां मुत्प्रदायित्वात् काव्यमुद्राविदो विदुः ॥ ८२ ॥

---

दृष्ट इति । कथमित्यादिना तदेकतानतामाविष्कृत्य सहसा एव आस्तामित्यादिसम्प्रहाण कथय तावदित्यादिना च पुनरादानमसमञ्जसम् ॥ ७९ ॥

उत्तमपदस्थानीययुवतिम् अनुकुर्वाणा उत्तमपदारोपितनीचयुवतिः ॥ ८० ॥

पि पि प्रियेति । अव्यक्तावृत्तिरूप स्खलितजल्पितम् ॥ ८१ ॥

साभिप्रायेति । यद्यपि सम्पूर्णमेव काव्यं वक्त्रभिप्रायप्रतिच्छन्दकभूतम् । उक्तञ्च । वक्त्रभिप्राय सूचयेयुरिति । तथापि न अस्मिन् इतरसाधारणतया वाक्यार्थगोचरमभिप्रायमावेदयत्येव काव्यसनाथीकरणचमवक्त्रभिप्रायविशेषप्रतिरूपक एक-

सास्मिन् पदस्य वाक्यस्य विभक्तेर्वचनस्य च।
समुच्चयस्य संवृत्त्या षोढ़ा न्यासेन जायते ॥ ८३ ॥

तासु पदमुद्रा यथा,

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलः।
सङ्गीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः
सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥

अत्र निर्माल्य दासः सनाभ्यञ्चल उच्छिष्टमिति पदानां गौणवृत्तिव्यपाश्रयेण मुत्प्रदायिनां साभिप्रायनिवेशादियं पदमुद्रा ॥ ८४ ॥

वाक्यमुद्रा यथा,

यत् स्वच्छे सलिलात्मनि प्रतिफलद्देवे त्रियामापतौ

---

देशनिवेशो दृश्यते। अतएव अङ्गुलीयादिमुद्रेव मुद्रा इत्युच्यते। निरुक्तिमाह। मुत्प्रदायित्वादिति। मुद्युपपदेरातेर्दानकर्मणः के रूपम्। मुद्रेव पदादिप्रकाश्यध्वनिव्यवहारभूमिरन्येषाम् ॥ ८२ ॥

सास्मिन्निति पदं प्रातिपदिकं कृत्तद्धितसमासरूपम्। विभक्तिवचनयोः सामान्यविशेषभावेऽपि पृथक् पृथगभिप्रायव्यञ्जकतया निर्देशः। आसाम् इत्यादिवचनसङ्कोचं सवृति ॥ ८३ ॥

गौणवृत्तिव्यपाश्रयेणेति। निर्माल्यादिपदानाम् अत्यन्ततिरस्कृतवाच्यानाम् अतिविच्छायत्वादिलक्षणाद्वारेण लावण्यविशेषध्वननात् सहृदयहृदयावर्जकानां निवेशो दृश्यते। एवम्। ताला जा अन्तिगुणा जाला ते सहिअ एहिं घेप्पन्ति। रविकिरणाणुग्गहिआइं होन्ति कमलाइं कमलाइम्। तथा। अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि। इत्यादावर्थान्तरसङ्क्रमणादिना तत्प्रकाश्यो ध्वनिरनुसन्धेयः ॥ ८४ ॥

यत् स्वच्छ इति। आदित्यकला एव प्रतिफलिताः चन्द्रव्यपदेशं लभन्ते

पीयूषाकृतिपर्य्यवस्यति किल ज्योत्स्नेति तत्त्वान्तरम् ।
तिग्मं धाम चिरं चकास्ति दिवि यत् तत्रास्ति दिव्यः पुमान्
य विज्ञातवतां त्रुटन्ति निखिला भूयो भवग्रन्थयः ॥

अत्र तत्रास्ति दिव्यः पुमानित्यादेर्वाक्यान्तरस्य पूर्ववाक्योपकारित्वेन सुसम्प्रदायकस्याभिप्रायपूर्वं निवेशादियं वाक्यमुद्रा ॥ ८५ ॥

विभक्तिमुद्रा यथा,

श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥

अत्र प्रदुग्धे रुणद्धि सूते प्रमार्ष्टि पुनीते इति लिङ्गविभक्तीनां दुहिपच्योः सकर्मकयोरुपसंख्यानं रुधादिभ्यः श्नम् इत्या-

---

इत्यागमः । तदाह । सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । दलयन्ति दर्पणोदरविहता इव मन्दिरस्यान्तरिति । पूर्ववाक्योपकारित्वेन इति । द्वे पीयूषकृति तत्त्वान्तर तिग्मधाम चकास्तीति च पदगाधतया तर्कितमिति किलशब्दकटाक्षितमभिधानम् । तत्र किं तत्त्वमित्याकाङ्क्षाविपूरकं तत्रास्ति इत्यादिवाक्यम् । तथाहि य एष आदित्यपथं व्याप्य पुरुषो दीप्यत इत्याद्युपनिषदर्थनिवेशनमभिप्रायपूर्वकमाभासते । एतेन अन्येऽपि वाक्यप्रकाशप्रकाराः परिगृहीता बोद्धव्याः । पूर्वं वाक्येऽन्तर्भावितद्वित्वमवसेयमिति ॥ ८५ ॥

श्रिय इति । बुद्धिरूपा कामधेनुः श्रियः प्रथयतीत्युक्तेन तथा प्रकर्षो यथोक्तो तु विशिष्टः कवेरभिप्राय उन्नीयते । तथाहि । यथोदुम्बरः सलोहितः फलं पच्यत इति कर्मकर्त्तरि फलोदुम्बरयोरैकात्म्यमवसीयते तथा इहापि श्रीरूपमात्मानं बुद्धिं प्रकाशयतीति । अतएव हि दुहिपच्योः सकर्मकयोः इति वाच्यकर्मविशिष्टस्यैव कर्त्तुः कर्मवद्भावं शिष्यते । नदुहस्नुनमां यक्चिणौ इति यगभावोऽपि विशेषाभिप्रायनियत एव रुणद्धीत्यागमरूपः । सूते इति लुप्तं प्रमार्ष्टीति वृद्धियोजकः पुनीते इति स्वरूपेण विकृतश्च विकरणः । आत्मनेपदपरस्मैपदयोः

दिभिर्विशेषलक्षणवतीनां योगैः परस्मैपदात्मनेपदपर्य्यायेण निवेशो दृश्यते । श्रियो विपदो यशांसि सलिलं संस्कार-शौचेनेति च सुब्विभक्तीनाम् अचि श्नुधातुभ्रुवां य्वोरियङुवङावित्यादिविशेषलक्षणवतीनां विकृताविकृतानां मङ्गला-मङ्गलार्थपरत्वेन मङ्गलाद्यर्थानामभिप्रायतः प्रयोगो लक्ष्यते तेनेयं विभक्तिमुद्रा भवति ॥ ८६ ॥

वचनमुद्रा यथा,

विश्वम्भरा भगवती भवतीमसूत
राजाप्रजापतिसमो जनकः पिता ते ।
तेषां वधूस्त्वमसि नन्दिनि ! पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयञ्च ॥

अत्र वयमित्यात्मनि बहुवचनेन सविता चेति सवितरि एकवचनेन सवितुरप्यहं बहुमत इत्यभिप्रायो वक्तुः इति इयं वचनमुद्रा ॥ ८७ ॥

समुच्चयमुद्रा यथा,

जातश्चायं मुखेन्दुस्ते भ्रुकुटिप्रणयी पुरः ।

---

एकान्तरितो निवेशः श्रिय इति प्रकृतिभागे इयङादेशो विकारी विभक्तावपि विकारी विपद इति प्रकृतिरविकृता । विभक्तिस्तु रुत्वेन विकृता । यशांसीति द्वे अपि विकृते । सलिलमिति वैकल्पिकपरसवर्णविधौ द्वयमविकृतम् । संस्कारशौचेन इति प्रकृतिरविकृता । प्रत्ययस्त्विनादेशेन विकृतः । यथा श्रिय इति मङ्गल्यम् । विपद इति विपरीतमिति क्रमेण शुद्धा वृद्धिः कामधेनुरिति मङ्गलपरम्परा-निवेशनेनोपसंहारश्चिवांशुकोज्ज्वल इव प्रतिभासमानोऽनुविस्वमिव कामपि कान्तिमभिव्यञ्जयन्नुपलक्ष्यते । मङ्गलामङ्गलार्थपदपरत्वेनेति । मङ्गलामङ्गलेभ्यः पदेभ्यः परवर्त्तित्वेन इत्यर्थः ॥ ८६ ॥

विश्वम्भरेति । अहङ्कारपरीहस्य पूर्वं गुणप्रयोजकत्वमुक्तम् । इह तु कवेरभि

गतश्च वसुदेवस्य कुलं नामावशेषताम् ॥

अत्राशंसायां भूतवच्चेति भूतवद्भावस्य हयग्रीवप्रभावाति-यशंसिनः समुच्चयद्वारेण निवेशादियं समुच्चयमुद्रा ॥ ८८ ॥

संवृतिमुद्रा यथा,

मणिरत्नं प्रसेनस्य तच्चानार्य्येण विष्णुना ।
लब्धं येनाद्य योगेन तेन किं कीर्त्तितेन वः ॥

अत्र "कथापि खलु पापानामलमश्रेयसे यतः" ततः किं तेन वः कीर्त्तितेनेति साभिप्रायसंवृतिकरणादियं संवृति-मुद्रा ॥ ८९ ॥

विधिद्वारेण वा यत्र निषेधेनाथ वा पुनः ।
प्रतीयते विशिष्टोऽर्थः सोक्तिरत्राभिधीयते ॥ ९० ॥
विधेरथ निषेधात् स्यादधिकाराद्विकल्पतः ।
नियमात् परिसङ्ख्याया उपाधेः सेह षड्विधा ॥ ९१ ॥

---

शायविशेषस्य अलङ्कारघटकतेति विभागः । अत्राशंसायामिति । गतमिति निष्ठाप्रत्ययेन भूततायोतनादाशंसाप्रतीतावपि कथं प्रकृतपोष इत्यत उक्तं समुच्चय-द्वारेणेति । तेन हि तुल्यकक्षताप्रतीतौ त्वच्चेदङ्गीकृतरोप तदा सिद्धमेव समीहितमिति । वक्तुरध्यवसायविशेषप्रतीतौ समुच्चय एव मुद्रापदवीमारोह-तीति । शेषं सुबोधम् ॥ ८७ ॥ ८८ ॥ ८९ ॥

विधीति । उक्तिरभिधा । सा द्वयीभावाभावविषयत्वात् । तर्हि गौरपत्य-मयङ्गैरित्यत. को भेद इत्याशङ्क्य विधिद्वारेण वा इत्यादि । भावज्ञानं विधिः अभावज्ञानं निषेधो लोके गृहीतव्युत्पत्तिवलेन भावाभावान्यतरसविस्तरणिमात्रकाव्यैकगोचरे रसाद्यात्मनि पर्य्यवस्यन्ती भवत्युक्तिरलङ्कार इति भावः ॥ ९० ॥

सोऽयं भावादिप्रपञ्चेन षोढा विधिः प्रथत इत्याह । विधेरिति । उपाधि-र्विशेषणं विध्यधिकारौ शुद्धभावभेदौ निषेधनियमौ शुद्धप्रतिषेधभेदौ । विकल्प-परिसङ्ख्ये सङ्कीर्णभेदाविति । तत्राप्राप्तप्रापणो विधिः प्रसक्तप्रतिषेधो निषधः

तासु विध्युक्तिर्यथा,

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने

अत्राप्राप्तौ प्रापणवचनं विधिः ॥ ९२ ॥

निषेधोक्तिर्यथा,

भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ॥

अत्र प्राप्तौ निवारणं निषेधः ॥ ९३ ॥

अधिकारोक्तिर्यथा,

भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी

यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

अत्र विधिनिषेधज्ञानाद्विधिनिषेधे योग्यताधिकारः ॥ ९४ ॥

विकल्पोक्तिर्यथा,

एको नेता क्षत्रियो वा द्विजो वा

एका विद्याध्यात्मिकी वा त्रयी वा ।

एका भार्य्या वंशजा वा प्रिया वा

एकं मित्रं भूपतिर्वा यतिर्वा ॥

---

क्रियाफलसम्बन्धः अधिकारः तुल्यकक्षयोः एकबाधेन अन्यसम्बन्धो विकल्पोव्यावृत्तिफलको विधिर्नियमः शेषविधिनिषेधनान्तरीयकौ विशेषनिषेधविधी परिसंख्या ॥ ९१ ॥

अप्राप्तौ प्रापणवचनमिति । अप्रवृत्तप्रवर्त्तनात्मको हि विधि कथमितरा पेक्षत्वे सङ्गच्छते । अतएव उच्यते । विधिरत्यन्तमप्राप्ताविति ॥ ९२ ॥

प्राप्तौ निवारणमिति । रोषेण प्रसजत्प्रतीपाचरणात् निवार्य्यते ॥ ९३ ॥

विधिनिषेधज्ञानादिति । विहितनिषिद्धक्रियाज्ञानेन तत्फलसम्बन्धयोग्यत्वमधिकारः ॥ ९४ ॥

शुश्रूषस्वेति भूयिष्ठं भव दक्षिणेति द्वे विहिते मास्म प्रतीपङ्गम इति भोगेषु अनुत्सेकिनीति द्वे निषिद्धे । विधिनिषेधयोग्यता विधिनिषेधफलसम्बन्धयोग्यत्व

सोऽयं जातिक्रियागुणद्रव्यावलम्बी चतुर्विधो विकल्पः ॥ ९५ ॥

नियमोक्तिर्यथा,

विवादोऽपार्थ एवायं पार्थ एव धनुर्धरः ।
यो न केवलमात्मीयैः परैरप्यभिनन्द्यते ॥

सोऽयमयोगान्ययोगात्यन्तायोगव्यवच्छेदलक्षणस्त्रिप्रकारो नियमः ॥ ९६ ॥

परिसङ्ख्योक्तिर्यथा,

पञ्च पञ्चनखा भक्ष्याः वामेनाक्ष्णा न पश्यति ।
काठिन्यमस्याः कुचयोः किमसद्‌ यन्न रोचते ॥

तदिदं विधिनिषेधाभ्यां विशेषाभ्यनुज्ञानं परिसङ्ख्येत्युच्यते ॥ ९७ ॥

अयुज्यमानस्य मिथः शब्दस्यार्थस्य वा पुनः ।

---

रद्दिणीपदप्राप्तिर्विहितक्रियाफलम् । सोऽयमिति । जात्यादय एव पदार्थास्ते च विकल्पन्ते । कुतो जात्यादिना तद्व्यवस्था । वाशब्द. पाक्षिकभावमाहेति भावाभावसङ्करः ॥ ९५ ॥

अपार्थ एवेति । विशेषणसङ्गत एवकारः केवलविशेषणयोगस्यासम्भवे व्युत्पत्तिवशेन तदभाव व्यवच्छिन्दन् योग्यव्यावृत्तौ अवतिष्ठते । पार्थ एवेति विशेष्यसङ्गत एव शब्दस्तदन्यस्य धनुर्धरतारूप विशेषण व्यावर्त्तयन अन्ययोगव्यवच्छेदद्योतको भवति। केवलमिति । अभिनन्दनस्य नायोगं न वा अन्ययोग व्यवच्छिनत्ति । किन्तु तत्सम्बन्ध बोधयन्नात्यन्तिकमयोगमत्यन्तायोगव्यवच्छेदोऽभिधीयते ॥ ९६ ॥

पञ्चपञ्चेति । पञ्चनखेषु पञ्च भक्ष्या नान्ये । कुचयोरस्या' काठिन्य न वचनादाविति विशेषनिषेधमनुजानीत. । वामेन न पश्यति दक्षिणेन तु पश्यत्येव । किमसत् किमशोभनम् । यदस्मै न रोचते इतरत्तु सदेवेति विशेषनिषेधौ शेष विध्यभ्यनुज्ञातिषयाविति ॥ ९७ ॥

अयुज्यमानस्येति । पूर्वं पदैकवाक्यता ततो वाक्यैकवाक्यत्वमनन्तर प्रकरणैक-

योजना क्रियते यासौ युक्तिरित्युच्यते बुधैः ॥ ९८ ॥

पदञ्चैव पदार्थश्च वाक्यं वाक्यार्थ एव च ।

विषयोऽस्याः प्रकरणं प्रबन्धश्चाभिधीयते ॥ ९९ ॥

तत्र, योगकारणपर्य्यायाङ्गाङ्गिभावपरम्पराः ।

पदयुक्तेर्निमित्तं स्युर्निरूढाः पदसिद्धये ॥ १०० ॥

विरुद्धानां पदार्थानां जात्यादीनां परस्परम् ।

योजनायेह तां युक्तिं पदार्थविषयां विदुः ॥ १०१ ॥

गर्भः सह निगर्भेण संवृतिः ससमुच्चया ।

हेतवो वाक्ययुक्तीनां क्रियन्तामेवमादयः ॥ १०२ ॥

---

वाक्यत्वमिति प्रबन्धनिर्वहण यावत् कविव्यापारः । तत्र नामभ्याज ग्रन्था दण्ड-नैत्यादीना लोके गृहीतव्युत्पत्तीनामेव यद्यपि काव्यानुप्रवेशस्तथापि भङ्गीभणिति-सनाथा अन्येत्र काव्यपद्धतिमभ्यासते इत्यप्रहतानामुपादेयत्वे यत्रापातत' परस्पर-मन्वयो न प्रतिभासते तत्र अवश्य कविना स्वाभिप्रायप्रतिच्छन्दकभूतविशेष-निवेशनेन विवक्षितवाक्यार्थप्रतीत्यस्खलन विधेयम् अतएव वैचित्र्यादलङ्कारता । तदिदमुक्तम् । अयुज्यमानस्येति । आपातत इति शेष' । योजना अन्वयौ-पयिकरञ्जकविशेषनिवेशन तस्य विषयः । शब्दार्थौ शब्द पद वाक्य प्रकरण प्रबन्धोऽर्थः पदार्थो वाक्यार्थश्च ॥ ९८ ॥

विषयभेदात् षोढायुक्तिरित्याह । पदञ्चैवेति ॥ ९९ ॥

योगेत्यादौ द्वन्द्वपरवर्त्ती परम्पराशब्द' प्रत्येकमन्वीयते । योगो योगरूढिः कारण कार्य्यकारणभावः । निरूढाः प्रथिताः । पदसिद्धये । पदसमुदाया-त्मकवाक्यैकदेशतासिद्धये ॥१०० ॥

यद्यपि पदानामर्थद्वारक एव सम्बन्धः तथापि तदौपयिकविशेष' क्वचित् पदेषु एव साक्षादवसीयते क्वचित् पदार्थेषु इत्यभिप्रेत्याह । विरुद्धानामिति । एव वाक्यवाक्यार्थयोरपि वाक्यमध्यवर्त्तिप्रकृतरसानुगुणरससमर्पक वाक्यान्तरम् ॥१०१॥

गर्भस्तस्यैकदेशभूतस्तथाभूतो निगर्भः । उक्तोपसंहारवचन संवृतिः । तुल्य-प्रधानभावाना युगपदेकार्थसम्बन्धः समुच्चयः । आदिपदादन्वाचयादयः ॥ १०२ ॥

यत्तदादेरुपादानं क्रियाभ्याससमुच्चयौ ।
क्रियासमभिहारश्च वाक्यार्थान् युञ्जते मिथः ॥ १०३ ॥
यदश्रद्धेयशैलादिवर्णनाभ्युपपत्तये ।
वाक्यं सेह प्रकरणविषया युक्तिरिष्यते ॥
प्रबन्धविषयाप्येवं युक्तिरुक्ता मनीषिभिः ।
उदाहरणमालैषा रूपव्यक्त्यै निदर्श्यते ॥ १०४ ॥

अत्र योगरूढ़िपरम्परादिनिमित्ता पदयुक्तिर्यथा,

प्राच्यां निर्जितजम्भजिद्द्विपशिरःसिन्दूरशोभ दिशि
प्रत्याख्यातहयाङ्गनास्यहुतभुग्ज्योतिः प्रतीच्यर्णवे ।
प्रातर्जातमदोन्मिषत्कमलिनीकिञ्जल्ककल्कोद्भटं
भानोः घूर्णनभःकटाहकुहरक्रोड महः पातु वः ॥

अत्र जम्भजिद्द्विप इति योगरूढिपरम्परा, हयाङ्गनास्यहुतभुगिति पर्य्यायपरम्परा, प्रातर्जातमदोन्मिषत्कमलिनीकिञ्जल्ककल्कोद्भटमिति हेतुपरम्परा, नभःकटाहकुहरक्रोड़मित्यङ्गाङ्गिभावपरम्परा च परिस्फुरन्ती दृश्यते ॥ १०५ ॥

---

यत्तदोः उद्देश्यविधेयगामिनोरादिग्रहणादिदमेतदोस्। क्रियाणामावृत्तिरभ्यास.। विजतीयानामेकदा एकत्रसम्बन्धः समुच्चय.। समभिहारो भृशत्व प्रकर्ष इति यावत् ॥ १०३ ॥

अतिमात्रतया प्रतिभासमानत्वमश्रद्धेयता। तदेतासां युक्तीनामतिदुरूहत्वादाह। उदाहरणमेवेति ॥ १०४ ॥

- जम्भजित्पद कृदन्तत्वाद्यौगिकम्। तथा जम्भजिद्द्विप इत्यपि समासत्वात्। तदेतदुभय योगेनातिप्रयुज्यमान निरूढिद्वयेन विवचितैरावतरूपे वस्तुनि नियम्यते। हयाङ्गनेति। वडवापर्य्याय। आस्यमिति मुखपर्य्यायः। हुतभुगित्यनलपर्य्यायः सेय पदपरम्परापर्य्यायताप्रतिसन्धानेन अभिमतवडवामुखानलप्रतीतिं करोति। मदस्य किञ्जल्कोन्मेषे तस्य कल्के तस्यापि उद्भटतायां हेतुभाव इति

विरुद्धजात्यादियोगनिमित्ता पदार्थयुक्तिर्यथा,

तन्नागेन्द्रकरोरुदोः करिशिरःपीनस्तनांसं वपुः
स्त्रीपुंसाकृति यत् पितुस्तव मुखे रम्योग्रमीत्तामहे।
वाराह्या इति नर्मणीभवदनः पश्यन् यदास्या मुखं
नाभिष्टौति हसन्न निन्दति तदा श्लिष्टोऽम्बया पातु वः॥

अत्र स्त्रीपुंसाकृति इति विरुद्धजातियोजना, नाभिष्टौति न निन्दतीति विरुद्धक्रियायोजना, रम्योग्रमिति विरुद्धगुणयोजना, मुखे वपुरीत्तामहे इति विरुद्धद्रव्ययोजना च लक्ष्यते॥ १०६॥

वाक्यगर्भादिविषया वाक्ययुक्तिर्यथा,

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत।

---

कार्य्यकारणपरम्परा। नभः कटाहोऽङ्गी। तस्याङ्गमेकदेशः कुहरं तस्यापि क्रोड इत्यङ्गाङ्गिपरम्परा च यथाभिमतपदैकवाक्यतानिदानमिति तदेतद् व्याचष्टे। अत्रेति। परिस्फुरन्ती कविशक्तिव्यञ्जकतया सहृदयहृदयेषु प्रतिफलन्ती॥ १०५॥

नागेन्द्रकरवदूरू पार्वतीभागे दीर्बाहुश्च देवभागे करिकुम्भत्पीनः स्तनौ देवीभागे। अंसः स्कन्धश्च देवभागे। एवं विधत्वत्पितुरीश्वरस्य वपुः त्वन्मुखे। एकविषाणतया करिकरिणीसमाहारात्मनि वीक्ष्यामहे इति वाराह्या परिहासोक्तिः। वाराही वराहप्रकृतिभूता मातृविशेषः। इभवदनो विनायकः। स्त्रीत्वपुंस्त्वयोः परस्परपरिहारेण उपलम्भाद्विरुद्धयोरपि त्वत्पितुरित्यनेन स्तुतिनिन्दयोः प्रतिषेधेन रम्यताभीषणतयोर्भागव्यवस्थया मुखवपुषोः सादृश्येनाभितोऽभिप्रायप्रतिविम्बितेन योजना विहिता इति तत्प्रतिपादकानां पदानामेकवाक्यतासिद्धिः। तदिदमाह। अत्रेति॥ १०६॥

जातिक्रियेत्यादिना क्रमेण विरोधप्रसिद्धेर्गुणविरोधम् उल्लङ्घ्य क्रियाविरोधो व्याख्यातः। आघाटः सीमा। गर्भो विहतपूर्वस्तत्रैव आश्चर्यरसाविष्टस्य वक्तुः

विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥

अत्र वदन्त एव हि वयं रोमाञ्चिताः पश्यतेति वाक्यगर्भः। तत्रैव पश्यतेति वाक्यान्तरे भावाविष्कारवाचा निगर्भः, किमपरं रामाय तस्मै नम इति वाक्यसंवृतिः, यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतमिति वाक्यसमुच्चयः। सेयमेतेषां योजनाद्वाक्यविषया युक्तिर्भवति ॥१०७॥

यत्तदाद्युपादाननिमित्ता वाक्यार्थयुक्तिर्यथा,

तिष्ठ द्वारि भवाङ्गने व्रज बहिः सद्मेति वर्त्मेक्षते
शालामञ्च तमङ्गमञ्च वलभीमञ्चेति वेश्माञ्चति।
दूतीं सन्दिश सन्दिशेति बहुशः सन्दिश्य सास्ते तथा

---

पश्यतेति वाक्यान्तरं निगर्भः। गर्भवाक्येन समर्प्यमाणप्रकृतरसान्वयिनि रसे प्रकर्षाधायको निगूढो गर्भो निगर्भ इत्युच्यते। तदिदं भावाविष्कारवाचेत्युक्तम्। विप्राय प्रतिपाद्यते सम्पत् न स्वयं भुज्यत इत्यादिवक्त्र्ये किमपरमित्यस्य संवृतित्वेन योजना। एवं हि कियदस्य महानुभावस्य तादृशमाचरितं प्राप्यते तदिह मौनसेवोचितमिति भूयान् प्रकर्षोऽवसीयते। यस्मादाविरभूत्कथाद्भुतमिदं यत्र एव च अस्तङ्गतमिति वाक्यद्वयस्य पूर्ववाक्यगततत्कार्यसमुच्चयवाचिना चकारेण योजना व्यक्तैव। एवमादय इति। तद्यथा। वीथ्यङ्गानि त्रयोदशप्रस्तावनापरिचेयानि। सन्ध्यङ्गानि विलासाद्यानि चतुःषष्टिसन्ध्यश्च रूपकावयवभूता मुखप्रतिमुखगर्भविमर्षनिर्वहणाख्याः पञ्च। प्रकृतरसावस्थारूपाणि च पञ्चैव। बीजबिन्दुपताकाप्रकरीकार्याणि तत्तत् प्रकरणप्रबन्धरूपवाक्यैकदेशयोजनानि अवगन्तव्यानि ॥ १०७ ॥

तिष्ठेति। उपस्थितिसमयसीमामतिक्रामति प्रियतमे तत्कालद्विगुणितौत्कण्ठातरलितान्तःकरणा कदाचित् प्रागिव गर्भगृहद्वारि तिष्ठति। ततस्तम् अनवलोकमाना गृहाङ्गणे भवति। तदनन्तरं वेश्मनो बहिर्व्रजति। सोऽयं विजातीयक्रियार्थनानाधातुगोचरः सर्वकालेषु समुच्चयेऽन्यतरस्याम् इति लोटो हि-

तल्पे कल्पमयीव निष्टुरेण। यथा नान्तं निशा गच्छति॥

अत्र प्रथमपादे क्रियासमुच्चयः द्वितीये क्रियाभ्यासस्तृतीये दूतीं सन्दिश सन्दिशेति यावत् क्रियासमभिहारः। शेषे तु तथा सास्ते यथा निशान्तं न गच्छति इति यत्तदोरुपादानं वाक्यार्थयुक्तेर्हेतुः प्रतीयते। सेयमुक्तलक्षणा वाक्यार्थयुक्तिर्भवति॥ १०८॥

अश्रद्धेयपर्वतादिवर्णनोपपत्तिहेतुः प्रकरणविषया यथा,

मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः।
भवन्ति नोद्दामगिरां कवीनामुच्छ्राय सौन्दर्य्यगुणा मृषोद्याः॥
॥ १०९॥

प्रबन्धव्यापि वस्तूपपत्तेर्हेतुस्तु प्रबन्धविषया युक्तिर्भवति यथा, धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु॥ ११०॥

---

रनुशिष्यते। अतएव दर्शनावच्छेदभूतद्वारावस्थानादिसामान्यवचनः समुच्चये सामान्यवचनस्य इति अनुशासनान्नियमितप्रयुक्तिरीक्षतिरनुप्रयुज्यते। नायकस्य सर्वथा हृदयवैशसं सर्वथैवाश्रद्दधाना दूरदूरतरदूरतमरथ्याभागावलोकनार्थिनी शाला गृहमारोहति। ततः तस्मात् उच्चैस्तमङ्गमट्टालकम् अनन्तर तस्मात् उच्चतरा वलभीमुपरितनकुटीमिति। अतएव अच्छनक्रियैव आवर्त्तते इति क्रिया समभिहारे लोट्लोटो हि स्वौ वा च तध्वमोः इति अनुशिष्यते। अतएव च यथा विध्यनुप्रयोगः पूर्वस्मिन् इति तस्यैव धातोरनुप्रयोगोऽपि। एवमप्यनागच्छति नायके दूतीव्यापार शरण यत् कुण्ठनाया स्वय वा तत्र गमनमित्युपदिश्यते तेन तत् तदभिप्रायसत्त्वैकमन्देशप्रकर्षः सोऽयमाभीक्ष्ण्यादिरूपतया व्यज्यते। अतएव लोट समभिव्याहारो विषयो न तु घञादिवदभिधेय इति पूर्वाचार्य्याः।

उक्तिप्रकारो भणितिः सम्भवेऽसम्भवे च सा।
विशेषसंवृत्त्याश्चर्यकल्पनासु च कल्पते ॥ १११ ॥

तत्र सम्भवभणितिर्यथा,

सद्योद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती

---

इति शब्दादधिकं चतुर्थवाक्यानुप्रविष्टमिति यावत् शब्देनावच्छिन्नमिति सन्दिग्ध-सन्दिग्धेति यावदिति दिक् ॥ १०८ ॥ १०९ ॥ ११० ॥

उक्तीति। उक्तिरभिधानम् उच्चारणक्रिया लक्षणक्रिया सा सर्ववाक्यसाधारणी कथमलङ्कार इत्याशङ्क्य प्रकारपदम्। प्रकारो भङ्गीरूपता। लौकिकशास्त्रीय-वचनातिगामी विशेषः स एव कैश्चिद्व्याप्तिमिमनुसन्दधानैः अलङ्कारसामान्ये उक्तः। उक्तिरूपत्वाविशेषे कथमयमेव सङ्कुचतामित्यतो विभागप्रदर्शनव्याजेन विषयविशेषादेव तद्रूपताम् उपपादयति। सम्भव इत्यादि। तत्र बहिरसम्भाव्यमानस्यापि प्रतिभानिर्मितचित्रतुरगवत्प्रतीतिः सम्भवसामर्थ्यन्ती सम्भावनात्मिका भणिति सैव हि किन्तु अस्ति काचिदपरापि पदानुपूर्वी यस्या न किञ्चिदपि किञ्चिदिवावभातीति न्यायेन तत् तदर्थनिर्माणप्रवीणा "यथास्मै रोचते विश्वं तथैव परिवर्तते" इति व्यवहारकारणं भवतीति तथाविध एव विषये शास्त्र-प्रसिद्धप्रकारवैपरीत्येन बाधवर्णनमसम्भावना। तदुच्यते। इह तेन अन्तिक दृणोजअमिणमोजाणसअलपरिणामम्। बाआसुठिअं दीसइ आमी अवण वतुच्छव। अतएव इय निषेधरूपा। तज्जातीयव्यावृत्तो धर्मो विशेषस्त क्वचिद्विदधाना कवेरभिप्रायविशेषसर्पयन्ती निषेधप्रसङ्गे विशेषभणितिर्विधिरूपा भवतीति तामवलम्बमाना चमत्कारकारिणी विशेषे पर्यवस्यन्ती वर्णनापल्लवप्रसङ्गे सङ्कोच-ममवगाहमाना विधौ निषेधरूपा पर्यवस्यति। अतर्कितोपनतं विस्मयजनकम् आश्चर्यं ;तस्य निषेधे विधातव्ये यत्किञ्चिद्विधानं तदाश्चर्यरूपताम् अन्तरेण काव्यकक्षामारोढुं न क्षमत इति नूनमनया विस्मयार्पणमेव सर्वस्वभूतम् अवलम्ब-नीयमिति निषेधविधिप्रसङ्गे निषेधरूपाभणितिर्बहिरसम्भाविनः क्वचिदसतो विशेषस्य उत्प्रेक्षाकल्पना। तामाश्रयन्ती विधाननिषेधमात्रेण चरितार्था किञ्चि-द्विशेष विदधाति इति विधिनिषेधप्रसङ्गे सामान्यतः प्रतिषेधति विशेषतश्च विधत्ते इति निषेधविधिरूपा कल्पनाभणिति ॥ १११ ॥

सद्य इति। केतकोदरदलानां द्रावण ततः स्रोतोरूपता ततस्तेन उप-

धैर्यं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्।
उत्सेक्या कलशीभिरञ्जलिपुटैर्मेया मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा वर्त्तते चन्द्रिका॥

अत्र ज्योत्स्नायाः सद्योद्रावितकेतकोदरदलस्रोतःसादृश्यादि-सम्भवादियं सम्भवभणितिर्विधिरूपा॥ ११२॥

असम्भवभणितिर्यथा,

क्व पेयं ज्योत्स्नाम्भो वदत विषवल्लीसरणिभि-
र्मृणालीतन्तुभ्यः सिचयरचना कुत्र भवति।
क्व वा पारीमेयो वत वकुलदाम्नां परिमलः
कथं स्वप्नः साचात् कुवलयदृशं कल्पयतु ताम्॥

अत्र ज्योत्स्नादीनां मृणालादिभिः पेयत्वादेरसम्भवादि-यमसम्भवभणितिः॥ ११३॥

निषेधरूपा विशेषभणितिर्यथा,

रेवतीदशनोच्छिष्टपरिपूतपुटे दृशौ।
वहन् हली मदक्षीवः पानगोष्ठ्यां पुनातु वः॥

अत्र रेवतीदशनोच्छिष्टयोरपि हलिदृशोर्यत् पूतत्वं मद-

---

मिताया बहलतरवहिर्भागस्य कलशीभिरुत्सेचनम् अनन्तर किञ्चिदल्पीभूतमध्य-भागस्य करतलाञ्जलिपुटैर्मान ततः शेषीभवत. सारभागस्य मृणालाङ्कुरैः पान-मिति बहिरसम्भाविन एव श्रिय विभतीति निदर्शनया योग्यपदेन उत्सेक्ये-त्यादिभि चमत्कारिणी सम्भावना जायते॥ ११२॥

क्व पेयमिति। स्वप्नस्य साचात्कल्पने सामर्थ्यम् असम्भावित तद्दैन्यमेव उच्यमानं तथा शोभामुन्मीलयतीति क्व पेयम् इत्यादिप्रतिवस्तुना निर्देशव्यङ्गारक्तिसुषमा-विस्तार कुर्वाणा भवति असम्भवभणितिः। पारी भाण्डभेदः॥ ११३॥

रेवतीति। दशनोच्छिष्ट चुम्बितम्। उच्छिष्टक्षीवयोः न कचित् पूतत्वं

क्षीवस्यापि हलिनो यत् पावनत्वमसौ विशेष इतीयं विशेष-भणितिर्निषेधे विधिरूपा ॥ ११४ ॥

संवृतिभणितिर्यथा,

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे ! प्रत्युपमानं वपुस्तस्याः ॥

अत्र प्रसिद्धवर्णनाप्रपञ्चविधेराभरणस्याभरण वपुः इत्यादि वाक्यैः संवरणादियं संवृतिभणितिर्विधौ निषेधरूपा ॥ ११५ ॥

आश्चर्य्यभणितिर्यथा,

ज्योतिर्य्यस्तदिदं तमः समुदितं जातोऽयमदृश्यः शिखी
पीयूषादिदमुत्थितं विषमयं छायामजन्मातपः ।
को नामास्य विधिः प्रशान्तिषु भवेद् वाढं दृढीयानयं
ग्रन्थिर्यत् प्रियतोऽपि विप्रियमिदं सख्यः कृतं सान्त्वनैः ॥

अत्र ज्योतिःप्रभृतिभ्यस्तमःप्रभृतीनामुत्पत्तेराश्चर्य्यरूपत्वादियमाश्चर्य्यभणितिर्निषेधविधौ विधिनिषेधरूपा ॥११६॥

---

पावनत्वं वा दृष्टचरमिति हलिनेवपुटहलिनोर्विधीयमानं देवताचरितस्य लोकोत्तरता गमयतीति निषेधप्रसङ्गे विधिरूपेय भणितिः ॥ ११४ ॥

आभरणस्येति । अत्र चन्द्रमुखी दुग्धधवलनयना बिम्बोष्ठी करिकुम्भस्तनीत्यादिकविसमयप्रसिद्धवर्णना प्रपञ्चप्रसङ्गे यथोक्तरूपेण तस्य सङ्कोचो निषेधः तत्प्रतिष्ठाभणिति, अलङ्करणमेव अनया क्रियत इति कान्तिविशेषं व्यञ्जयन्ती विधौ प्रसक्ते निषेधरूपा भवति ॥ ११५ ॥

ज्योतिर्य्य इति । प्रियो हि न अप्रियमाचरतीति उत्सर्गसिद्धाप्रियानाचरणं दैवगत्या शठे सम्भाव्यमानम् आश्चर्य्यमुन्मुद्रयत् सामान्यपरम्परया प्रेमाविष्टम् अन्तःकरणमावेदयति । यदि ज्योतिरादेस्तम· प्रभृतीनामुद्गम· स्यादपि प्रियादप्रियमिति सर्वथैव निषेधे विधातव्ये प्रत्यक्षपरिकल्पितस्य अन्यथा कर्त्तुमशक्यत्वात् प्रमेयविरोधमसहमाना विधत्ते च निषेधति चेति निषेधविधिप्रसङ्गे विधिनिषेधरूपा भणितिर्भवति ॥ ११६ ॥

कल्पनाभणितिर्यथा,

दृश्यं दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च।

सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवः स्वदते॥

अत्र वयोरामणीयकातिशयस्य दृक्सहस्रादिभिरेवावलोकनीयत्वादियोग्यताकल्पनादियं कल्पनाभणितिर्विधिनिषेधे निषेधविधिरूपा॥ ११७॥

वाक्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृता।

शब्दार्थक्रमपर्य्याय पदवाक्यकृता च सा॥ ११८॥

तासु शब्दकृता यथा,

रामाभिषेके मदविह्वलायाः कराच्च्युतो हेमघटस्तरुण्याः।

सोपानमासाद्य चकार शब्दं ठं ठं ठ ठं ठं ठ ठ ठं ठ ठं ठः॥

---

दृश्यमिति। यद्यपि द्वाभ्यामेकेनाल्पीयसा च नेत्राभ्यां मनसा सुकृतेन च वयसो यौवनस्य दृश्यत्वविभावनीयत्वभोग्यत्वानि प्रतीतिं सुखमवतीर्णानि तथापि जीवितसर्वस्वभूतायामितरकामिनीसाधारण्यामितरसाधारण्यमसहमानो दृगादिसामान्ये सहस्रत्वादिकं कल्पयन् साधारणधर्मनिषेधसरणिमारुह्य विशेषं विधत्ते। सेयं भणितिर्विधिनिषेधप्रसङ्गे निषेधघटकद्वाराविधिरूपा भवतीति आस्तां विस्तरः॥ ११७॥

वाक्य इति। एकार्थप्रतिपादनावच्छिन्नः शब्दसमुदायो वाक्यं तस्मिन् विषयभूते आनुपूर्व्येण ग्रथनं रचना सा कथमतिप्रसक्तापि अलङ्कार इत्यत आह। सम्यगिति। प्रकृतपरिपोषाधानलक्षणम् औचित्यमापन्न इत्यर्थः। वाक्यत्वमर्थशब्दाभ्यां विशेषणविशेष्याभ्यां व्यवतिष्ठते। तेन द्वयोः एव गुम्फना समाप्यत इत्याशयेन शब्दार्थयोरित्युक्तम्। तत्र शब्दो द्विविधो वाच्य उपाधिश्च। प्रतिपादकशब्दो द्विरूपः पदवाक्यभेदात्। पदं द्विधा पर्य्यायभूतरूपम् अतथा रूपञ्च। तदेतत् विवक्षावैचित्र्यम् अङ्गीकृत्य विभजते। शब्द इति। अप्रतिपादकः शब्दः शब्दपदेनोक्तः। अर्थो वाच्यः। क्रमग्रहणमुपाध्युपलक्षणम्॥ ११८॥

रामेति। राज्याभिषेकोत्सवजातहर्षायाः करात् प्रच्युतस्य सोपानपर-

सेयं ठं ठमित्यादेर्निरर्थकस्य श्लोकपादस्यार्थानुगुण्येन वाक्ये रचितत्वाच्छब्दरचना ॥ ११९ ॥

अर्थकृता यथा,

दिक्कालात्मसमैव यस्य विभुता, यस्तत्र विद्योतते
यत्रामुष्य सुधीभवन्ति किरणा, राशेः स यासामभूत् ।
यस्तत्पित्तमुषःसु योऽस्य हविषे, यस्तस्य जीवातवे
वोढा यद्गुणमेष मन्मथरिपोस्ताः पान्तु वो मूर्त्तयः ॥

सेयं व्योमादीनामष्टानामपि महेशमूर्त्तिलक्षणानामर्थानामुत्तरोत्तरसङ्कलनया रचितत्वादर्थरचना ॥ १२० ॥

क्रमकृता यथा,

नीलाब्जानां नयनयुगलद्राघिमा दत्तपत्रः

---

म्परासु स्खलतः काञ्चनकलशस्य भूभागप्राप्ति यावत् क्रमेणोच्चरन्तशब्दमालानुकृतेति प्रकृतार्थानुगुण्यम् । एव हि करच्युतमपि न सम्भावयतीति कोऽपि मदप्रकर्षो व्यज्यते ॥ ११९ ॥

दिक्कालेति । दिक्कालात्मतुल्य सर्वमूर्त्तसंयोगाश्रयतालक्षण विभुत्वमाकाशस्यैव तस्मिन्नर्थाच्चिप्ते यच्छब्दोऽयमुद्देश्यगामी निविशते तमुपजीव्य तच्छब्देन प्रतिनिर्देशो युक्तः । आकाशे विशेषेण चन्द्रतारादितेजोऽभिभवसामर्थ्यलक्षणेन द्योतते भगवान् आदित्य इति यच्छब्देन तमुद्दिश्योत्तरवाक्ये अदसाप्रतिनिर्दिष्टवान् । कर्णगत्याप्रतिफलिताः सूर्यकिरणाः सलिलमये शशिन्येव सुधाव्यपदेशं लभन्ते तत्र एव यच्छब्दो निविष्टस्तदुपनीतमर्थमुत्तरः तच्छब्दो विषयीकरोति इत्यादि अपामेव राशिश्चन्द्रो जातस्तासा पित्त वह्निस्तस्य साय प्रातराहुतये यजमानः स वायुना जीवति । स च पृथिवीगुणं गन्धं वहतीति पूर्वपूर्वसङ्कलनेन उत्तर वाक्यार्थरचनाविहितेति । यद्यपि चार्थगुम्फो शब्दगुम्फो ध्रुवभावी तथापि प्रथमानुसन्धेयम् अर्थगुम्फनमेव अत्र प्रधानमिति तेन एव व्यपदेशो युक्त इत्याशयवान् व्याचष्टे । अत्रेति । यदि इय शृङ्खला न प्रतिसन्धीयते कथं परमेश्वरमूर्त्तयोऽष्टौ लभ्यन्त इति भाव. ॥ १२० ॥

कुम्भावेभौ कुचपरिकरः पूर्वपक्षीचकार ।
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादीद्
वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥

अत्र पत्रप्रदानपूर्वपक्षोपन्यासानुवाददूषणोद्भावनानां बुध-जनप्रसिद्धक्रमेण रचितत्वादियं क्रमरचना ॥ १२१ ॥

पर्य्यायक्रता यथा,

कण्टइल्लिच्चिअ जाणइ कुन्तपलत्ताइ कीरसंलविरी ।
पूसअभासं सुच्च स ण हु रे हं धिठंवाआडी ॥ (प)

सेयं शुकनामपर्य्यायाणामर्थानुगुणरचितत्वात् पर्य्याय-रचना ॥ १२२ ॥

---

(प) शुक्येव जानाति शुकप्रलपितानि कीरसलापिनी ।
कीरभाषा सुच्च सा न खलु रेऽह धृष्टशुकी ॥

---

नीलाब्जेति । पत्रदाने स्पर्द्धा व्यज्यते । सा च सादृश्यपर्य्यवसायिनी इति प्रतीयमानोपमा । इभकुम्भपूर्वपक्षीकरणेन कुचाभोगस्य सिद्धान्तभावोऽवगम्यते । तथाच व्यतिरेको ध्वनितः । अनुवादेनापि उपमा प्रतीयते दूषणेन व्यतिरेक इति प्रकृतपर्य्यवसाने समासोक्त्या पत्रदानादीनां विद्वदादिप्रसिद्धानां शब्दा-नभिधेय एव क्रम उपाधिभूतो ग्रथित इत्युदाहरणव्याख्यानपन्थार्थः ॥ १२१ ॥

कण्टइल्लिच्चिअ । केनचिद्विटेन शुकभाषामनुकुर्वता प्रियाया परिहास आरब्धः सा तस्य दुर्विदग्धत्वमाकलयन्ती तदुचितमुत्तरमदात् । शुकप्रलपितानि किल शुकी जानाति नान्या न च अहं शुकी । ततो विफलस्तवाय प्रयास इत्यर्थः । अत्र कुन्तकीरपूसशब्दाः शुकपर्य्यायाः । कण्टइल्लीवाआडीशब्दौ शुकीपर्य्यायौ । तत्रापि कीरशब्दः तत्सम. । अन्ये देशीरूपा. । तदेतेषां पर्य्यायाणां यथोक्त-रूपानुगुणानामेकवाक्ये गुम्फनमेव कविसरस्वगोचर इति ॥ १२२ ॥

पदकृता यथा,

लोलल्लाङ्गूलवल्लीवलयितवकुलानोकहस्कन्धलोलै-
र्गोलाङ्गूलैर्नदद्भिः प्रतिरसितजरत्कन्दरामन्दिरेषु ।
षण्डेषूद्दण्डपिण्डीतगरतरलनाः प्रापिरे येन वेला-
मालम्ब्योत्तालतल्लस्फुटितपुटकिनीबन्धवो गन्धवाहाः ॥

अत्र लाङ्गूलवलयितवकुलैर्नदद्भिर्गोलाङ्गूलैः प्रतिरसितजरत्कन्दरामन्दिरेषु षण्डेषु उद्दण्डपिण्डीतगरतरलनाः पुटकिनीबन्धवो गन्धवाहा वेलामालम्ब्य येन प्रापिरे[]इत्यतोऽधिकानामपुष्टार्थानामपि पदानामनुप्रासाय छन्दःपूरणाय चार्थानुगुण्येन रचितत्वादियं पदरचना ॥ १२३ ॥

वाक्यकृता यथा,

पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे ।
इतरेषु तु पाञ्चाल्यास्त्रितयं त्रितयं त्रिषु ॥

इह महतोऽर्थस्याल्पीयसा ग्रन्थेनाभिधानमिति व्युत्क्रमेणापि ग्रन्थलाघवाय वाक्यार्थो रचित इतीयं वाक्यरचना ॥ १२४ ॥

---

लोलल्लाङ्गूलवल्लीति । लाङ्गूलवलयितेत्यादि यथोक्तवाक्यविरचनमात्रेण एव प्रयोजनपरिग्रहे सिद्धे यदधिकाना लोलद्वल्लीप्रभृतिपदानामावापस्तेन विना न उचितानुप्राससिद्धिर्न च तया विना वृत्तौचिती समाप्यते । न वा तामन्तरेण लाङ्गूलादीनामभिमतास्ते विशेषा' प्रतीयन्त इति पल्लवप्रतिष्ठा एव हि सरस्वतीसहृदयानावर्जयतीति । वाक्यप्रतीतिमात्रार्थानुपात्तेषु पदेषु यः । उपस्कारः पदैरन्यैः पल्लवं त प्रचक्षते । अपल्लवन्तु यद्वाक्यं कविभ्यस्तन्न रोचते । प्रयुज्यते तथाभूतमुदीच्यैः कविगर्हितम् । तदिदमाह । अत्र इत्यादि ॥ १२३ ॥

वाक्यरचना तु महावाक्य एव भवतीति । तथाहि । पतिश्वशुरतेत्यादिकमल्पाक्षरमेव वाक्यं महतोऽर्थराशेः समर्पकमिति भावयता सहृदयाना कवि-

अर्थैत्याहुः पर्थानां घटनायां परस्परम् ।
सा प्रक्रान्तेन कस्मिंश्चिदप्रक्रान्तेन कुत्रचित् ॥ १२५ ॥
अतिक्रान्तेन कुत्रापि पदार्थवर्णयोः क्वचित् ।
वाक्यार्थवाक्ययोः क्वापि प्रकीर्णानाञ्च दृश्यते ॥ १२६ ॥

तासु प्रक्रान्तघटना यथा,

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥

सेयं सप्तर्षीणामागमनस्य प्रक्रान्तस्यैव घटनात् प्रक्रान्तघटना ॥ १२७ ॥

अप्रक्रान्तघटना यथा,

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निषादस्य च संवादमृषेः संवरणस्य च ॥

सेयमप्रक्रान्तस्य निषादसंवरणसंवादस्य घटनादप्रक्रान्तघटना ॥ १२८ ॥

---

त्वशक्तिरप्रत्यूहैव प्रकाशते। अतएव शक्तितिरस्कारादाद्यन्तौ अभिधाय मध्यमाभिधाने क्रमभङ्गोऽपि तिरस्क्रियत इत्याह। अत्रेति ॥ १२४ ॥

अर्थेति। किञ्चिदेकं वस्तु बुद्धौ समाधाय तदधिकारप्रबन्धरचनायाम् अधिकस्य अन्तरान्तरा प्रक्षेपे योजना शय्या। पदार्थानां प्रस्तुताप्रस्तुतवस्तूनाम्। तच्च योजनीयं शब्दार्थभेदेन द्विविधम्। तत्र वस्तुवाक्ययोरेव योजना महाकविप्रबन्धेषु दृश्यते। अर्थस्तु प्राकरणिकार्थोपयोगी तदनुयोगी चेति द्विविधः। द्वितीयोऽपि अतिक्रान्तो तथाभूतश्चेति पूर्ववद्विभागवाक्यं व्याख्येयम् ॥ १२५ ॥

पदार्थं पदसिद्ध्यर्थमेव वाक्यार्थमिति ॥ १२६ ॥

सेयं सप्तर्षीणामिति। गौरीपरिणयप्रापकतया प्रकरणसङ्गतसप्तर्षिवृत्तान्तः ॥ १२७ ॥

इयमप्रक्रान्तस्येति। संवरणनिषादसंवादस्य पूर्वापरप्रकरणानुपयोगेऽपि इतिहासरूपेण सङ्गतिः ॥ १२८ ॥

अतिक्रान्तघटना यथा,

तस्य चक्षुश्चमत्कारं व्यतीतसमया अपि ।
स्मितार्द्रमुकुलोद्भेदाः कदम्बवनराजयः ॥

इयमतिक्रान्तस्यापि कदम्बवनराजीनामार्द्रमुकुलोद्भेदस्य विरहिमनश्चमत्कारकारिणो रामस्य स्मृतिद्वारेण घटनादतिक्रान्तघटना ॥ १२९ ॥

पदघटना यथा,

छिन्नेनापतता वह्नौ यन्मुखेन हठात् क्षते ।
स्वेति हेति हरेणोक्ते स्वाहासीत् सैष रावणः ॥

इयं स्वेति हेति वर्णाभ्यां स्वाहेति पदस्य घटितत्वात् पदघटना ॥ १३० ॥

वाक्यघटना यथा,

हंस प्रयच्छ मे कान्तां गतिरस्यास्त्वया हृता ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

इयं पूर्वशास्त्रनिबद्धस्योत्तरार्द्धस्य तदर्थाननुयायिनापि प्रस्तुतार्थाविरुद्धेन पूर्वार्द्धेनैकवाक्यतया एव घटितत्वाद्वाक्यघटना ॥ १३१ ॥

---

इयमतिक्रान्तस्यापीति । कदम्बकुसुमोद्भेदस्य प्रत्यक्षस्य एव विरहिजनतातङ्कदायित्वं सम्भवतीति कथमतीतस्य तद्वयस्य इत्युक्तं "स्मृतिद्वारेणेति । सङ्कल्पवशेन प्रत्यक्षायमाणस्य इत्यर्थं । एवमनागतयोजनापि गुणादिना बोद्धव्या ॥ १२९ ॥

इय स्वेति । स्वाहाकारप्रदानो होमस्तत्र सद्यश्छिन्नेन शिरसा प्राणशेषयोगात्पदार्द्धमात्रे निष्पादिते तदैव भूतकरुणासन्तानशान्तात्मना परमेश्वरेण खेदाविष्कारवाची हाशब्दःप्रयुक्तस्तेनैव निरन्तरमुच्चरता स्वाहापदं सिद्धमिति ॥१३०॥

इयं पूर्वशास्त्रेत्यादि सुगमम् ॥ १३१ ॥

प्रकीर्णघटना यथा,

एक्कहिं अच्छिहि सावणु अन्नहि भद्दवउ।
माहउ महिअलसत्थरि गण्डस्थले सरउ॥
अङ्गहि गिम्ह सुहच्छिइ तिलवणे मग्गसिउ।
मुद्धिहि मुहपङ्कअसरि आवासिउ सिसिरु॥ (फ)

अत्र श्रावणादीनामयुगपद्भावित्वेन विप्रकीर्णानां घटना-दियं प्रकीर्णघटना॥ प्रकीर्णशब्दश्चायं शेषवाची तेनान्यासा-मपि प्रकीर्णघटनानामिहावकाशो भवति। तेन या इमा महाकविप्रबन्धेषु मुख्या गौणी लक्षणा तद्भावापत्तिरुपचरिता

---

(फ) एकस्मिन् अक्ष्णि श्रावणः अन्यस्मिन् भाद्रपदः
माधवो महीतलस्तरे गण्डस्थले शरत्।
अङ्गे ग्रीष्मः सुखासिका तिलवने मार्गशीर्षः
मुग्धाया मुखपङ्कजसरसि आवासितः शिशिरः॥

---

अत्र श्रावणादीनामिति। प्रकीर्णं विकीर्णमनेकत्र प्रतीतमिति यावत्। तद्द्विविधं कालतो देशतश्च। अत्र हि श्रावणादिमासचतुष्टयस्य युगपदसम्भवत एकत्र विरहिणीशरीरे युगपद्भावी निबन्धः सगुणवृत्तिव्यपाश्रयेण श्रावणादिपदे प्रतिपाद्यमानः प्रवासविप्रलम्भप्रकर्षमावेदयतीति। एवं देशविकीर्णघटनापि उदाहार्य्या। यथा। अमृतममृतं चन्द्रश्चन्द्रः तथाम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि। इति न भजते वस्तुप्रायं परस्परसङ्करं तदियमबला धत्ते भावान् कथं सकलात्मकान्। यस्तु अत्र लिङ्गादिभेदः कश्चि-दुपवर्णितः स तथा न चमत्कारकारीति ग्रन्थगौरवभयादुपेक्षितोऽस्माभिः। तत्तदनेकासाधारणरूपाणि अपि प्रकीर्णानि प्रकीर्णपदेन ग्राह्याणि। तेषा-मनुक्तान्यतया वा उपग्रहोऽपि प्रयुज्यत इत्याह। प्रकीर्णशब्दश्चायमिति। व्याख्यानान्तरप्रयोजनमाह। तेनेति। शब्दस्यार्थप्रतिपादनशक्तिरभिधा। सा

लक्षितलक्षणेतिशब्दवृत्तयस्ता अपीह श्रूयन्ते। तत्रादितः षट्स्वाधारवचनेषु मुग्धाया इति सम्बन्धिपदे च मुख्या, शेषयोर्द्वयोराधारवचनयोर्गौणी, श्रावणादिषु चतुर्षु मासवचनेषु लक्षणा, षट्स्वपि चाधेयवचनेषु वर्षादिषु लक्षिताभिहितेषु अपि युगपदसम्भवत्सु श्रुतार्थापत्तिलभ्या तावत् भावापत्तिः, आवासित इति क्रियापदे चोपचरिता व्यक्तमेव प्रतीयते। लक्षितलक्षणापि चैतास्वेव व्याख्यानत उन्मिषति। तथाहि आवासितशब्दोऽयमभिमतप्रदेशनिवेशितसहापरि-

---

त्रिधा मुख्या गौणी लक्षणा च। तासु मुखमिव प्रथमं यस्यामर्थः प्रतीयते सा मुख्या तथाभूतार्था तद्भावापत्तिश्च। तत्रावान्तरार्थसम्बन्धविषया तथाभूतार्था। यथा। खात्मेन्दुवह्निपवनार्कमहीपयोभिरष्टाभिरेव तनुभिर्भवता समस्ते। व्याप्ते जगत्यपरमिच्छति योऽत्र वक्तुं कोऽन्योगतत्रपतया सदृशोऽस्ति तेन। सैवार्थान्तरस्वार्थसम्बन्धविषया तद्भावापत्तिः। अतथाभूतस्य तथात्वापादनं हि सा। अत एव स्वतोऽन्यतो वा स्वार्थावच्छिन्नस्य साक्षादभिधानशक्तिरेव मुख्येत्याचार्याः। यथा। कमला अवसणिआ हंसाउड्डाविआणअपिउच्छा। केण विगामतडाए अब्भ उत्ताणअं वूढम्। गुणव्यवहितार्था गौणी। गुणनिमित्ता उपचारनिमित्ता च। तत्र द्वयोर्यत्र द्रव्यवचनयोः सामानाधिकरण्येन वैयधिकरण्येन वा प्रयोगे विशेषणविशेष्यभावान्यथानुपपत्त्या प्रतीयमानाभिधीयमानगुणद्वारकसम्बन्धो भवति सा गुणनिमित्ता। यथा। पडिवक्खमण्णुपुञ्जे लावण्णउडे अणङ्गगअकुम्भे। पुरिससअहिअअधरिए कीस थणन्ती थणे वहसि। मुख्यया गौण्या वान्यविशेषणस्यान्यत्र प्रयोग उपचरिता सापि गुणयोगमुपजीवन्ती गुणवृत्तिरेव। एतावांस्तु विशेषो यद्गुणनिमित्तायाम् अभिधेयगुणयोग इह तु स्वाभिधेयविशेष्यगुणयोग इति। यथा। परार्थे यः पीडामनुभवति निर्व्याजमधुरो यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः। न सम्प्राप्तो वृद्धिं सपदि भ्रष्टमक्षेत्रपतितः किमिक्षोर्दोषो यत् न पुनरगुणाया मरुभुवः। स्वार्थसम्बन्धव्यवहिता लक्षणा। तदुक्तम्। अभिधेया विना भूतप्रतीतिर्लक्षणेति या। सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते॥ सा द्विधा। शुद्धा, लक्षित-

च्छदे महाराजादौ निरूढ़ाभिधानशक्तिः। स चोपचारेण श्रावणादिषु प्रयुज्यमानस्तेषामपि महत्त्वमभिलक्ष्य महापरिच्छदतां महारम्भत्वञ्च लक्षयन् प्रस्तुताया अपि प्रवृत्तेर्महान्तमनुबन्धं लक्षयति। ते च युगपल्लोचनादावनुपपद्यमानस्थितयः स्वशब्दशक्तिभिस्तत्र तत्र निवेश्यमानाः स्वधर्मसम्पदः प्रत्यासन्नायां तद्धर्मसम्पदमुपलक्षयन्ति। असावसौ विरहवत्या अपि वियोगवेदनातिशयं लक्षयन्ती कमितरि स्नेहातिशय लक्षयति। तत्र श्रावणो भाद्रपद इत्युभाभ्यामवयवाभ्यां वर्षर्त्तुर्लक्ष्यते। स च लोचनयोरनुपपद्यमानस्थितिरपि विभक्तिश्रुत्या निवेशितः पयःपृषत् प्रवाहलक्ष-

---

लक्षणा च। तत्र साक्षात स्वार्थसम्बन्ध्य विना भूतविषया शुद्धा। यथा। यत्तालीदलपाकपाण्डुवदनम्, अभिनवकरिदन्तच्छेदपाण्डु कपोल इति। यया पूर्वपूर्वलक्षितमेव लक्ष्यते सा लक्षितलक्षणेति केचित्। यथा। मधु द्विरेफः कुसुमैकपात्रे, भीमो भीमपराक्रम इति। अत्र हि द्विरेफादिना शब्देन लक्षित एव भ्रमरप्रभृतिर्लक्ष्यते न तु कुररादिः। अन्ये तु लक्षणा व्यवहिता लक्षणा लक्षितलक्षणेत्याहुः। यथा। सुवर्णपुष्पा पृथिवी चिन्वते पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्। तद्भावापत्त्यादिविशेषसमभिव्याहारेण मुख्यादिशब्दाः तदितर तथा भूतत्वागोचरा इति पूर्ववद्व्याख्येयम्। क्व पुन पदैकावृत्तिरित्यत आह। अत्रेति। एक्कहि अच्छिहिम् असाहिम्महि अलसत्थरे गण्डत्थले अङ्गहिम्। इत्यादि षडाधारवचना। अत्र यद्यपि गण्डस्थलपद गौणमेव तथापि अनादिप्रयोगयोगितया मुख्यकल्पमिति षट्सु आधारवचनेषु इत्युक्तम्। अङ्गादिपदानि च स्वार्थविशिष्टान्यपराण्येव प्रयुक्तानीति मुख्यैव वृत्तिः। एव मुग्धाया इति सम्बन्धिपदेऽपि। मुहच्छितिलवणे मुहपङ्क असरि इति द्वावाधारवचनौ शेषौ। अत्र तिलवनसरः पदयो स्नेहनिर्भरलसरसललक्षणगुणद्वारकैव मुखासिकामुखपङ्कजयोर्वृत्तिः। मुखपङ्कजसरसीत्यत्र यद्यपि पदद्वय गौण तथापि पङ्कजपदस्य वृत्तिरभिधातुल्येति न कविसरम्भगोचरस्तेन व्यवहारो युक्त। सावणभद्दवअभाहवमग्गसिर इति चत्वारो मासवचनाः। ते च स्वार्थसम्बन्धव्यवहिते

णाया: स्वधर्मसम्पद: प्रत्यासन्नामविच्छिन्नाश्रुप्रवाहसम्पदमुप-लक्षयन् समागमोत्कायाः उत्कण्ठातिशयं लक्षयति; माधव इत्युत्तरावयवेन वसन्तो लक्ष्यते। सोऽपि महीतलस्रस्तरेऽनुपपद्यमानस्थिति: प्राग्वदेव शब्दशक्त्या निवेशित: कुसुमकिशलयमृणालकमलिनीदलादिकाया: स्वधर्मसम्पद: समासन्नां शिशिरोपकरणसामग्रीमुपलक्षयन् कामवत्या: शरीरान्त:-सन्तापं लक्षयति। शरदित्यनेन ऋतुविशेषोऽभिधीयते। सा गण्डयोरनुपपद्यमानस्थिति: प्रशंसावचनस्यापि स्थलशब्दस्यानुस्मरणशक्त्या समाकृष्यमाण: काशकुसुमहंसागमनकुमुदसर:-प्रसादचन्द्रातपादिकाया: स्वधर्मसम्पद: समासन्नां गण्डयो:

---

वर्षाप्रभृतिसमुदाय लक्षयन्तीति। वक्ष्यमाणरीत्या वर्षादय: षडाधेयवचनास्ते च विरहवतीशरीरे युगपच्चासम्भवदवस्थितयो नक्षादिसम्पदादिस्वस्वप्रवृत्तिनिमित्ताध्यासेन प्रयुज्यमानास्तद्भावापत्तिरूपां वृत्तिमासादयन्ति। अस्याश्च विवर्तपरिणामाध्यासादय: षट् प्रकारा गौरवभिया न दर्शिता:। श्रुतार्थानुपपत्तिमूला कल्पना-श्रुतार्थापत्ति:। राजादेरासिते आवासितशब्दो मुख्यवृत्त्यैव विशेषणतया रूढ:। स स्वविशेषणगुणव्यवहितेऽर्थान्तरेऽप्रयुक्तो गौणीवृत्तिमनुत्पवन् वसन्तादेरपि विशेषणतामासादयति। लक्षणा व्यवहिता लक्षणा लक्षितलक्षणा। सा कथमावासितेति शब्दे सम्पद्यत इत्यत आह। स उपचारेणेति। कथञ्चित् सारूप्येण श्रावणादिषु प्रयोगादुपचारस्तमुपजीव्य प्रयुक्त: स्वार्थाविनाभूत महत्त्वादिक प्रकृतेषु लक्षणया सङ्क्रामयतीति। आद्या लक्षणा तदव्यवहिता द्वितीयामाह। प्रस्तुताया अपीति। आवासितस्यापि हि यथोक्तविशेषणस्य परदुर्गग्रहणादौ सहानुबन्धो दृष्ट: स इह प्रस्तुताया विरहवतीसन्तापलक्षणाया प्रवृत्तौ लक्ष्यते इत्येकलक्षणाव्यवधानेनैव लक्षणा। एव लक्षणाद्वयव्यवधानेनापि भवतीत्याह। ते चेति। श्रावणादय: स्वधर्मसम्पदो निरन्तरवर्षणादे: स्वार्थाविना भावेन लक्षिताया: प्रत्यासन्ना सदृशी तेषां लोचनादीना धर्मसम्पदश्रुप्रभावादिलक्षणा लक्ष्यत इति द्वितीया लक्षणा। तत् पुर:सरा तृतीयामाह।

पाण्डुतां लक्षयन् मृगीक्षणाया विरहक्षामतामुपलक्षयति। ग्रीष्म इत्यनेनापि ऋतुविशेष एव उच्यते। सोऽपि अङ्गनाङ्गेऽनुपपद्यमानः सूर्य्यांशुकार्कश्य प्रतप्तपांशुतापरुषोष्णानिलत्वदावाग्निकालुष्यादेः स्वधर्मसम्पदः समानानीकभूताभूतपूर्वानङ्गज्वरलिङ्गसम्पदमुपयन्नष्टमीं कामावस्थां लक्षयति। मार्गशीर्ष इत्यनेन तु पूर्वावयवेन हेमन्तो लक्ष्यते। तेन च यथा हेमन्ते तिलवन लूयते तथा तस्याः सुखासिका साम्प्रतं लूयते इति लक्ष्यते। तेनातिशयिनी मनःपीडोपलक्षिता भवति। का पुनः सुखासिकातिलवनयोः समानधर्मता। येय स्नेह-

---

असावसाविति। एव लक्षणावयपूर्वापि लक्षणा बोद्धव्येत्याह। कमित रीति। स्नेहप्रतीत्या तु विभावादिसवलितया रसो व्यज्यते न तु लक्ष्यत इत्यन्यत्र विस्तरः। कस्या पुन' स्वधर्मसम्पद. प्रत्यासन्ना का तद्धर्मसम्पदित्यतो विवेचयति॥ तत्रेति। यदि श्रावणादिपदेषु समुदायलक्षणा न स्यात् तदा मासानुपक्रम्य ऋतूनामभिधाने प्रक्रमभेदो भवेत्। न भवेत् च तत्तत् ऋतुप्रतीत ऋतुसम्पत्प्रतीति क्वचिदिति युक्तैव समुदायलक्षणा। एताभ्यामिति। प्रत्येक न तु पदद्वये लक्षणा सम्भवति। विभक्तिश्रुत्येति। सप्तमी प्रथमाविभक्तिभ्यामाधाराधेयभाव स्वशक्त्या प्रतिपाद्यते तदनुपपत्त्या अर्थान्तरलक्षणा प्रादुर्भवति। एव चैत्रवैशाखसमुदायात्मनो वसन्तस्य उत्तरावयवो वैशाखः तद्वाचकेऽपि माधवपदे समुदायलक्षणाद्वारेण लक्षणा भवति। प्रशंसावचनस्यापीति। गर्भीकृतसारूप्याद्धि व्याघ्रादय उपमेयवाचिभि' समस्यन्ते। तच्च सारूप्य प्रकर्षलक्षणमेवेति प्रशंसापरत्वे स्थितेनाभिधेयमप्रतीत्यसारूप्य वा रूपान्तर वा प्रत्येतु' न शक्यत इत्यभिधेयप्रतीत्यनुनिष्पादिनीघण्टानुस्वानसोदरास्वधर्मसम्पद्यथोक्ता प्रतीयते। स्वने किल शरदाकाशकुसुमहसादिका स्वसम्पद्विस्तार्य्यते। न मुखचन्द्रादिवत्सुखासिकातिलवनयो सादृश्यप्रतीतिर्न च तदभिधीयमान किञ्चिदवास्तीति पृच्छति। का पुनरिति। माभूत् तथा प्रसिद्धि. कवेरभिप्राया रूढा तु प्रतीयत इत्युत्तरमाह। येयमिति। न स्नेहो नाम द्वयोरेक.कश्चिदस्ति न च अनभिधीयमानमपि सादृश्य शब्दसामान्यमाश्रयत इत्यतः प्रकारान्तर-

निर्भरता नाम। अभिसारिकाणां च प्रायेण तिलवनाब्जिनी-षण्डयोरेव बहुमानप्रसिद्धिः। यदित्थमाह।

अत्तान्तहरमणिज्जं अम्हं गामस्स मण्डणीहूअं।
लुअ तिलवाड़िसरिच्छं सिसिरेण कअम्भिसिणिसण्डम्॥ (ब)

अतएवायमुत्तरवाक्ये कमलसरःशब्देनाब्जिनीखण्डमपि निर्दिशति। तद् यथा,

मुद्धिहि मुहपङ्कअसरि आवासिउ सिसिरु॥

तत्र शिशिर इत्यनेन ऋतुविशेषेण मुग्धामुखेऽपि पद्मसर-सीव शब्दशक्त्याभिनिवेशितेन कमलवनोपप्लवादेः स्वधर्म-सम्पदो लोकप्रतीतायाः प्रत्यासन्ना मुग्धामुखाम्बुरुहलोचनोत्-पलस्मितकुसुमदशनकेशरादेश्छायापरिम्लानिर्लक्ष्यमाणा विप्र-लम्भानुभावप्रकर्षमुपलक्षयति। शिशिरलक्ष्मीवर्णनप्रस्तावाच्च मुखमङ्गं शरीरस्य सर्वं वा मुखमुच्यत इति स्थानप्राधान्य-

(ब) अत्यन्तरमणीयम् अस्माकं ग्रामस्य मण्डनीभूतम्।
लून तिलवाटीसदृश शिशिरेण कृतमब्जिनीषण्डम्॥

माह। अभिसारिकाणाञ्चेति। कथमेतदवगतमित्यत आह। यदित्थमिति। ननु कमलिनीशब्दस्य अत्र बहुमानगोचरता प्रतिपादिता न तु तिलवनस्येत्यत आह। अतएवेति। उपमानोपमेययोः द्वयोरपि कामिनी बहुमानगोच-रता वितरन्ती शिशिरेण साम्प्रत तिलवाटिकालवनमपि वर्त्तत इत्यभिप्रेतीति भावः। मुखमङ्गं शरीरस्य इत्यादिन्यायेन मुखशब्दः प्राधान्यं लक्षयति ततो मुखपङ्कजसरसि शिशिर इति तद्भावापत्त्या हेमन्तस् अपि ऋतुषु प्रथमतया

लक्षणया सर्वर्त्तुभ्यः शिशिर एवेह प्रधानमित्यपि सूचितं भवति ॥ १३२ ॥

काकुस्वरपदच्छेदभेदाभिनयकान्तिभिः।
पाठो योऽर्थविशेषाय पठितिः सेह षड्विधा ॥

तत्र काक्वा यथा,

यदि मे वल्लभा दूती तदाहमपि वल्लभा।
यदि तस्याः प्रिया वाचस्तन्ममापि प्रियप्रियाः ॥

अत्रैकया काक्वा विधिरन्यया तु निषेधः प्रतीयते ॥१३३॥

स्वरेण यथा,

सुभ्रू स्त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः।

---

प्राधान्यमेव द्योतितमिति। तदुक्तम्। षडिक सद्दूपेसणमाणग्गहणे सुभासुरपहुप्यन्तो। हेमन्ति ओसुहाअ इमलिणमिअङ्को विलासिणीणअसोसी ॥ १३२ ॥

काकुस्वरेति। किञ्चिदेकपरतया प्रवृत्तमुच्चारणम् अर्थान्तरविवक्षया यदन्यथा क्रियते सा पठिति.। अन्यथाकरणञ्च काकुप्रभृतिभिः षड्भिरिति। तत्र। भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते। सा द्विधा। विधिकाकुर्निषेधकाकुश्च तयोर्निषेधे परोच्चारणान्यथाकरणेन विधिपर्य्यवसायिनी विधिकाकु। यथा। अल्पमपि स्खलदन्त. सोढुं शक्येत हालहलदिग्धम्। धीरैर्न पुनरकारणकुपितखलालीककटुवचनम्। एवविधिपरोच्चारणान्यथाकरणेन निषेध व्यञ्जिकानिषेधकाकुस्ताम् उदाहरति। यदीति। यदि दूतीप्रिया तदाहमपि प्रियेत्यादि ऋजूक्त्या शठनायकविषया कविना प्रीतिः प्रतीयते काक्वा तु तत्रैव नाहं प्रियेतीर्ष्यारोष.॥ १३३ ॥

स्वरा' प्लुतादय उदात्तादयश्च। नामीषा वेद इव काव्ये भूयान् प्रयोग इति किञ्चित् उदाहरति। सुभ्रूस्त्वमिति। चरणतलाग्रपतिते मयि दृष्टे सति 'त्वं प्रसीदेति दीर्घमात्रोच्चारणे कुपितकान्ताप्रसादपरत्व यथोक्तप्लुतकरणे तु दूरा-

रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः ॥

अत्र दृष्टे इत्यत्र प्लुतस्वरकरणात् कुपितकान्ताप्रसादनपरमपि इदं वाक्यमुत्कुपितदृष्टिप्रसादनपरतां प्रतिपद्यते ॥१३४॥

पदच्छेदेन यथा,

सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥

अत्र मया विरहितेत्येतावति पदच्छेदे पुरूरवसस्त्वया इत्येतावति तु पर्वतस्य वाक्यभेदो भवति ॥ १३५ ॥

---

ह्वानादौ तदनुभाषणात् कुपितदृष्टिसम्बोधनबुद्धिरुपजायते। अञ्जनादयो हि द्वयोः साधारणा एवेति श्लेषोपादानमेवेति। एवं ह्रस्वस्य दीर्घकरणेन दीर्घस्य ह्रस्वकरणेन अर्थान्तरप्रतीतिः अवसेया। यथा विश्वामित्रो विश्वानर इति ऋषिराजर्षिविशेषौ प्रतीयेते। यथा युवतीति सम्बोधनप्रतीतिः। एवमुदात्तादयोऽपि यथा दर्शनमुत्प्रेक्षणीयाः ॥ १३४ ॥

शृङ्खलाभङ्गः परिवर्तकश्चूर्णमिति चत्वारः छेदाः। तत्र पूर्वापरवर्णानाम् अन्योन्यसङ्कलनया स्थितिः शृङ्खला। यथा। कान्तारतरुतलाश्रितमृगयुवरचितान्तरेति पठितेः तदा प्रियासम्भोगमथितहर्षितलुब्धकप्रचुरच्छन्नमध्येति प्रतीयते। सेयमन्योन्य वर्णसङ्कलनया शृङ्खलेत्युच्यते। एकस्य शब्दस्य मध्ये विच्छेदेन द्वैधीकरणमात्रं भङ्गः। तमुदाहरति। सर्वेति। मया विरहितेत्येतावति समुदाये मद्वियोगवती त्वया दृष्टेत्यष्टमकामावस्थाविष्टस्य पुरूरवसः पर्वतविषय प्रश्नवाक्य भवति। यदा तु मयेति विच्छिद्य पूर्ववाक्यसम्बन्धिक्रियते तदा त्वया विरहिता सती मया दृष्टेति पर्वतस्य उत्तरवाक्य सम्पद्यते। वर्णान्तरकल्पनापरिवर्त्तं। यथा कलिकामधुगर्हणेति। अत्र यथा श्रुतवर्णपरिग्रहे कलिकामधुनो गर्हणानिन्देति प्रतीयते। यदा तु कलिकामधुग् अर्हणेति वर्णान्तरकल्पनया छेदस्तदा पूजैव कलौ कामधेनुरिति। पिण्डाक्षरविभागश्चूर्णम्। यथा। पश्य सलिल पयोधेर्दूरसमुन्मुक्तशुक्तिमीनाङ्कान्तमिति। अत्र यथा श्रुते दुःखेन रसनीयमुद्भ्रान्तशुक्तिकोषं मत्स्याङ्कितपर्यन्तमिति प्रतीयते। यदा तु

पदभेदेन यथा,

> येन ध्वस्तमनो भवेन बलिजित्कायः पुरास्त्रीकृतो
> यो गङ्गां विदधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः।
> यस्याहुः शशिमच्छिरोहर इति स्तुत्यञ्च नामामराः।
> सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां सर्वदो माधवः॥

अत्र येन ध्वस्तमनोभवेनेत्यादेर्येन ध्वस्तम् अनोऽभवेनेत्यादेश्च पदभेदादुमाधवो माधव इत्यर्थद्वय प्रतीयते। तयोश्च द्वयोरपि प्राधान्येनोपादानादङ्गाङ्गिभावेन प्रकृताप्रकृतरूपतया चानवस्थानात् परस्परमसम्बन्धेनायं श्लेषः। पदभेदेन

---

दूरसमुन्मुक्तशुक्तिसीनाक्रान्तमिति पिण्डचूर्णनेन केदस्तदा अत्यन्तहर्षयुक्तेति त्वक्ता श्रीकेति च सम्बोधनद्वय क्रमाख्य प्रतीयते॥ १३५॥

येनेति। ध्वस्तमनोभवेन दग्धकामेन बलिजितो नारायणस्य कायः पुरा 'त्रिपुरदाहव्यतिकरेऽस्त्रीकृत' शरतानीत, गङ्गा भागीरथी दधे। अन्धको दैत्यविशेषस्तस्य क्षयो विनाशो बर्हिपत्रो मयूरवाहन' कार्त्तिकेय शशिमच्चन्द्रकलाङ्कितं शिरो विश्वमोहच्छिदुरस्य हर इति स्तुत्यञ्च नाम भुजङ्गा एव हारवलयानि यस्य सर्वदा सर्वकालमिति उमाधवपक्षे। माधवपक्षे तु। येन ध्वस्त विनाशितमन'शकटमभवेन ससारबन्धरहितेन बलि जितवान् यः काय स पूर्वं समुद्रमथनावसरे अमृतग्रहणालुदैत्यव्यामोहनाय स्त्रीरूपतानीतो अगङ्गोवर्द्धनाख्यङ्गा पृथिवीम् एकार्णवमग्नामुद्धृतवान् अन्धका यदुविशेषास्तेषा क्षयो निवास। बर्हिणो मयूरस्य पत्र पिच्छ' तत् प्रियो बर्हि पत्रकृतापीडमिति गोपालध्याने गौतमेनाभिधानात्। शशिन मथ्नातीति क्विप् शशिमद्राहुस्तस्य शिरो हर इति स्तुत्यञ्च नाम। भुजङ्गहा गरुड स इष्टो यस्य। रवे शब्दब्रह्मणि लयो यस्य स तथा सर्वदो यावदभिमतप्रद इति। ननु विभिन्नरूपाणा शब्दानामुच्चारणे तन्त्रतया श्लेष एव अयं न पठितिरित्यत आह। तयोश्चेति। श्लेषो हि श्लिष्यमाणयो परस्परसम्बन्धे भवति। स च सम्बन्धो रूपतात्पर्यसम्बन्धलक्षणो वा अङ्गाङ्गिभावो वा उपमानोपमेय भावो वा यथाग्रे वक्ष्यते। न च अयमेकोऽत्राभिमत किन्तु एकपरश्लेषोच्चारणे पदभेदेनार्थान्तर गमयतीति पठितिरेवेयम्। एतेन समाध्युक्ति

तु पाठे पर्य्यायतोऽर्थद्वयप्रतीतेरियं श्लेषोपसर्जनात् पदभेद-पठितिः ॥ १३६ ॥

अभिनयेन यथा,

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिम् ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअहेहिं ॥ (भ)

अत्र इयन्मात्रस्तनीत्यादीनां तथाभूतहस्ताभिनयैः सह पठनात् तथाविधार्थविशेषो गम्यते ॥

अपदेशोऽप्यभिनयविशेष एव यथा,

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।

इत्यात्मानमपदिश्य ब्रूते ॥ १३७ ॥

---

(भ) एतावन्मात्रस्तनी एतावन्मात्राभ्यामच्छिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥

---

समासोक्तिभ्यामपि भेद उक्त'। तत् किमुच्चारणतन्त्रता नास्त्येवेत्यत आह। श्लेषोपसर्जनेति। यत्र हि यस्य प्राधान्येन विवक्षा तत्र तेन व्यपदेशो युक्तः। अतएव विवक्षान्तरेण श्लेषव्यवहारोऽपि अत्र समर्थनीय एव ॥ १३६ ॥

एद्दहमेत्तेति। अत्र सर्वपदानाम् अर्थान्तरसाधारणतया न तावदभिमत परिमाणविशेषप्रतीतिरुपजायते यावत उच्चारणसहकारिभूतप्रसारितकर-द्वयकोषप्रस्तुतिभिदङ्गुलिप्रसारिताङ्गुलीगणनारूपाभिनयप्रतिसन्धान न भवति। तेन अभिनयपठितिरिय साक्षादिव वस्तु स्वरूपबोधिकाक्रियाभिमुख्यनयनात् अभिनय इत्युच्यते। तदिदमाह। तथाभूतेत्यादि। अपदेशोऽपीति। आत्मनिर्देशिका क्रियापदेशः। अस्य अभिनयविशेषत्वेऽपि कान्तिकरतया पृथगुपादानम्। यावच्च स्वरूपसमुच्चारणविशेषण न अनुसन्धीयते न तावच्छ्रीप्राप्तिक्ष-ययोः कारणविशेषः प्रतीयत इति ॥ १३७ ॥

कान्त्या यथा,

यस्यारिजातं नृपतेरपश्यदवलम्बनम्।
ययौ निर्झरसम्भोगैरपश्यदवलम्बनम्॥

अत्रावलम्बनमवलं वनमिति पदे पदद्वये वा द्वितीय-चतुर्थस्थानयोर्यौ वकारबकारौ तयोरन्तःस्थपवर्गाभ्यां पवर्गान्तःस्थाभ्यां वा कान्तिमतिपाठेऽर्थभेदो जायते॥ १३८॥

अपरे पुनः पठितिमन्यथा कथयन्ति।

पदपादार्द्धभागाणामन्यथाकरणेन यः।
पाठः पूर्वोक्तसूक्तस्य पठितिं तां प्रचक्षते॥

तत्र पदान्यथाकरणं द्विधा प्रकृतितो विभक्तितश्च॥१३९॥

---

यस्यारिजातमिति। कान्तिच्छाया सा अप्रतिहतरूपा पदवद्वर्णेषु न सम्भवतीति श्रुतिरूपा गृह्यते। तथा हि। अवलम्बनमिति अत्र द्वितीय-चतुर्थस्थानस्थयोर्वकारबकारयोः क्रमेणान्तस्थपवर्गभावानुसन्धाने अवलम्बन-मित्येकपदतया त्राणहेतुमपश्यदित्यर्थः प्रतीयते। यदा तु द्वितीये अवलम्बनम् इत्यत्र तयोरेव पवर्गान्तःस्थभावानुसन्धानं भवति तदा बलं वनमिति छेदेन पदद्वयसम्पत्तौ बलरहितं सवनमरण्यं ययौ इत्यर्थान्तरप्रतीतिरुपजायते। तदिद-मुक्तम्। पदे पदद्वये चेति। अपश्यत्। अयनभोजनशून्यं अयनं गौरदनमत्। निर्झरसम्भोगैः निर्झरजलमात्रोपयोगैः अतएव बलरहितम्। अत्र च यमकेन संसृष्टिरस्य बोद्धव्या। आवृत्तिमादाय यमकमन्यथा भविष्यति॥ १३८॥

अपरे पुनरिति। अन्यथेत्यतः परमपि शब्दोऽध्याहार्य्यः। पादाद्यन्यथा-करणेन अपि हि प्रकृतमुच्चारणमेव विशिष्यते। यदाह। पूर्वोक्तसूक्तस्येति। अतएव श्लोकान्यथाकरणेन पठितिर्न सम्भवति। तेन प्रागुक्तभेदैः सह द्वादश-प्रकारा पठितिरिति तात्पर्य्यम्। यद्यपि च पादाद्यन्यथाकरणमपि पदभेदप्रकार एव तथापि न तत्र पूर्वोक्तत्याग इह तु तत्परित्यागेन पदान्तरकल्पनमित्येतावान् विशेषः॥ १३९॥

तत्र प्रकृतितो यथा,

असकलहसितत्वात् क्षालितानीव कान्त्या
मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि ।
पिबतु मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः ॥

अत्र त्वयि इत्यस्य स्थाने यदा मयि इति पठ्यते तदैतत् प्रार्थनावाक्यमपि अनुमतिवाक्यं भवति ॥ १४० ॥

विभक्तितो यथा,

सह भृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम् ॥

अत्र यदा पाण्डुसुतः सुयोधनमित्यस्य स्थाने पाण्डुसुत सुयोधन इति पठ्यते तदैतदमङ्गलार्थमपि सुयोधने मङ्गलार्थं भवति ॥ १४१ ॥

पादान्यथाकरणेन यथा,

एकान्ते विजने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापह्नवने चैव दिव्या सम्भवति क्रिया ॥

अत्र यदा तृतीयपादस्थाने तन्वङ्गी यदि लभ्येतेति पाठो भवति तदैतत् परीक्षौपयिकमपि कामौपयिकं भवति ॥ १४२ ॥

---

तत्र पद विभक्त्यन्त विशेषणविशेष्यभेदेन द्विधा क्रियते इत्याह । पदान्यथाकरण द्वेधेति ॥ १४० ॥ १४१ ॥

एकान्त इति । साहसे प्रच्छन्नाभिसारलक्षणे । प्रकाशात् प्रच्छन्नो गरीयानिति न्यायात् । दिव्या स्वभोगसोदरा क्रियावलक्षणा ॥ १४२ ॥

अर्द्धान्यथाकरणेन यथा,

तत्तावदेव शशिनः स्फुरितं गरीयो
यावन्न तिग्मरुचिमण्डलमभ्युदेति।
अभ्युद्यते सकलधामनिधौ तु तस्मिन्
इन्दोः सिताभ्रशकलस्य च को विशेषः॥

अत्र यदा मध्यमपादयोः स्थाने "यावन्न ताः किमपि गौरितरा हसन्ति ताभिः पुनर्विहसिताननपङ्कजाभिः" इति पठ्यते तदेतद्वीरार्थोक्तिरूपमपि शृङ्गारोक्तिरूपं सम्पद्यते॥१४३॥

पादत्रयान्यथाकरणेन यथा,

त्यागेन युक्ता दिवमुत्पतन्ति
त्यागेन हीना नरकं व्रजन्ति।
न त्यागिना दुष्करमस्ति किञ्चित्
त्यागो हि सर्वव्यसनानि हन्ति॥

अत्र यदा तुरीयपादमेवादाय पादत्रयान्यथाकरणेन वक्ष्यमाणः पाठो भवति तदेतत्त्यागप्रशंसार्थमपि त्यागनिन्दार्थं जायते॥

तद् यथा,

त्यागो हि सर्वव्यसनानि हन्ती-
त्यलीकमेतद् भुवि संप्रतीतम्।
जातानि सर्वव्यसनानि तस्या-
स्त्यागेन मे मुग्धविलोचनायाः॥ १४४॥

---

गौरितरेति। घरूपेत्यादिना पूर्वपदह्रस्वः॥ १४३॥

एतेषाञ्च पदाद्यन्यथाकरणानां परस्परसङ्करोऽपि भवतीत्यपि द्रष्टव्यम्। मात्- त्रयस्य चेति॥ १४४॥

भाषान्यथाकरणेन यथा,

किं तादेण णरेन्दसेहरसिहालीढग्गपादेण मे
किं वा मे ससुरेण वासवसहासींहासणद्धासिणा ।
ते देशा गिरिणो अ ते वणमही स च्चेअ मे वल्लहा
कोसल्लातणअस्स जत्थ चलणे वन्दे अ णन्दामि अ ॥

अत्र यदि भाषान्तरेण पठ्यते तदेतच्छौरसेनीभाषया सीतावाक्यं संस्कृतभाषया सुमन्त्रेण दशरथाय निवेदितं भवति ॥

तद् यथा,

किं तातेन नरेन्द्रशेखरशिखालीढाग्रपादेन मे
किं वा मे श्वशुरेण वासवसभासिंहासनार्द्धासिना ।
ते देशा गिरयश्च ते वनमही सा चैव मे वल्लभा
कौशल्यातनयस्य यत्र चरणौ वन्दे च नन्दामि च ॥

सेयमेवंप्रकारा पठितिः ॥ १४५ ॥

विभिन्नार्थैकरूपाया या वृत्तिर्वर्णसंहतेः ।
अव्यपेतव्यपेतात्मा यमकं तन्निगद्यते ॥ १४६ ॥

---

भाषाभेदेन कथं स्त्रीपुंसवचनता गम्यत इत्यत आह । तदेतच्छौरसेनीति । विभागन्यूनतामाशङ्क्य यथोक्तप्रकारेण समाधानमभिसन्धायाह । सेयमेवप्रकारा पठितिरिति ॥ १४५ ॥

अथावृत्त्युपजीविन अलङ्कारा लक्षयितव्यास्तेषां समग्रकाव्यपर्यन्तावृत्तिसमाश्रयणाद्यमकं प्रधानमित्याशयेनाह । विभिन्नेति । विभिन्नार्थेति अर्थभेदव्यतिरेकपरम् । तेन द्वयोरेकस्य वा निरर्थकत्वेऽपि यमकमुपगृहीतं भवति । एवमपि सरोरस इत्यादौ अतिप्रसङ्ग इत्यत उक्तमेकरूपेति । रूपमानुपूर्वी विभिन्नार्था चासौ एकरूपा चेति विग्रहः । विविधधरेत्यादौ एकवर्णावृत्तौ अपि

तदव्यपेतयमकं व्यपेतयमकं तथा।
स्थानास्थानविभागाभ्यां पादभेदाच्च भिद्यते ॥ १४७ ॥
तत्र पादादिमध्यान्ताः स्थानं तेषूपकल्प्यते।
यदव्यपेतमन्यद्वा तत् स्थानयमकं विदुः ॥ १४८ ॥
चतुस्त्रिद्व्येकपादेषु यमकानां विकल्पना।
आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥ १४९ ॥
अत्यन्त बहवस्तेषां भेदाः सम्भेदयोनयः।
सुकरा दुष्कराश्चैव दर्श्यन्ते तत्र केचन ॥ १५० ॥

तत्र चतुष्पादयमकेषु अव्यपेतमादिमकं यथा,

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णन्ततिभिस्तरूणाम्।

---

आवृत्तिसमुदाय एव यमकक्रमसुल्लिखतीत्यभिसन्धाय संहते' इत्युक्तम्। विभिन्नार्थैकरूपाया वर्णसंहतेर्या आवृत्ति सा यमकमिति व्यवहितेनान्वय. ॥ १४६ ॥

आवृत्तिर्द्विधा अनावृत्ता व्यवहिता अव्यवहिता चेति ॥ १४७ ॥

सामान्यतो विभजते। अव्यपेतेति। व्यवायो व्यवधानम्। तदेत[illegible] मपि स्थानादिभेदेन त्रिधा भवतीति पूर्वोक्तानुवादपूर्वकमवान्तरवि[illegible] तदिति। पाद आदिमध्यान्ता अर्धादितेषु विशेषतोऽनुल्लिखद[illegible] भवति। एतदपि द्विधा ॥ १४८ ॥

चतुरादिपादविकल्पेन विषयतो भिद्यत इत्याह। चतु[illegible] मध्यश्चान्तश्चेति आदिमध्यान्तास्त्रय. शुद्धा'। मध्यान्तौ [illegible] मध्यान्ताश्चेति मिलित्वा चत्वार. सङ्कीर्णा.। सर्वत [illegible] स्मि ॥ १४९ ॥

एव पादविकल्पानामाद्यादिविकल्पानाञ्च [illegible] प्रकारा ग्रन्थगौरवकारिणो भवन्तीत्याह। [illegible] अवश्यवक्तव्य इत्याह। दुष्करा इति। [illegible] इत्याह। तत्र केचनेति ॥ १५० ॥

राजीवराजीपद्मपङ्क्ति तद्वश [illegible]

कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥
॥ १५१ ॥

तदेव मध्ययमकं यथा,

दधतमाकरिभिः करिभिः क्षतैः समवतारसमैरसमैस्तटैः ।
विविधकामहिता महिताम्भसः स्फुटसरोजवना जवना नदीः ॥
॥ १५२ ॥

तदेवान्तयमकं यथा,

व्यथितसिन्धुमनीरशनैः शनैरमरलोकवधूजघनैर्घनैः ।
फणभृतामभितो विततं ततं दयितरम्यलतावकुलैः कुलैः ॥ १५३

आदिमध्ययमकं यथा,

घना घनाभस्य महो महीयसः
सुरासुराणां दयितस्य तस्य सा ।
धराधराकारगृहा गृहार्थिनो
बभूव भूमेर्नगरी गरीयसी ॥ १५४ ॥

---

पङ्क्तिभिरुष्ण घर्मं मुष्णन्तमपहरन्तम् । कान्तो मनोज्ञोऽलकाग्रसूर्णकुन्तलच्छटा यासां ताः । यस्मात् रक्षोभि. राक्षसैरक्षोभितमधर्षितम् । अत्र प्रथमे पादे पूर्वं सार्थकमपरमनर्थकं द्वितीयादिषु द्वयमपि अनर्थकम् । एवम् अन्यत्रापि यथायथमवगन्तव्यम् ॥ १५१ ॥

आकरीभिः प्रशस्ताकारयुक्तै. करिभिः परिणतिक्रीडासक्तैः । विविधेभ्यः कामेभ्यो हिता' । महित पूजितं जवना वेगवती ॥ १५२ ॥

नीरशनै' न निर्गता दूरीभूता रशनाः क्षुद्रघण्टिका येभ्यः काञ्चीगुणयुक्तैः । तेन स्फुटकर्कशरवादिरचनया सिन्धुव्यथा पोष' शनैर्मन्द घनैर्मांसलैः अभितोविततं सर्वतो विस्तीर्णम् । फलभृताङ्कुलैस्तत व्याप्तम् । लवङ्गवकुलमालतीसुरभिशीतलतया फणभृत्प्रियत्वम् ॥ १५३ ॥

घनाघनो मेघस्तदाभः श्यामो महो पृथ्वी तस्यां महीयान् पूज्यः । धराधरः पर्वतस्तदाकारगृहा. ॥ १५४ ॥

आद्यन्तयमकं यथा,

द्रुतं द्रुत वह्निसमागतं गतं महीमहीनद्युतिरोचितं चितम्।
समं समन्तादपगोपुरं पुरं परैः परैरप्यनिराकृतं कृतम् ॥१५५॥

मध्यान्तयमकं यथा,

उदयि ते दयिते जघनं घनं स्तनवती नवतीर्थतनुस्तनुः।
सुमनसामनसा सदृशौ दृशौ द्युकुरु मे कुरु मेऽभिमुख मुखम्॥
॥ १५६ ॥

आदिमध्यान्तयमकं यथा,

सीमासी मानभूमिः फणिवलवलनोद्भावि राजीविराजी
हारी हारीतवद्भिः परिसरसरणावस्तमालैस्तमालैः।
देवादेवासरत्नः कृतभव भवतोऽग्रे न दीनो नदीनो
मुक्तामुक्ताच्छरत्नः सितरुचिरुचिरोल्लाससुद्रः समुद्रः ॥ १५७ ॥

---

वह्निसमागत सद्द्रुत विलीनम् अतएव द्रुत शीघ्रं मही गत पृथिव्या विस्तीर्य्य पतितमहीनया द्युत्या रोचित शोभितम्। चित निविडेन सन्निवेशेन स्थापित समन्तात् सर्वत' सम सलक्ष्मीकमस्फुट वा। परै शत्रुभिः परै. श्रेष्ठैः अनिराकृत यदासीत् तदेव वह्निना हिममय पुरमपगोपुरम् अपगतद्वार मही गतञ्च कृतमिति सम्बन्ध ॥ १५५ ॥

उदय उद्भवो विस्तारवत्त्वरूपस्तद्युक्तमुदयि। घन मांसलम्। नवेन तीर्थेन रजसा तनूकृता। स्त्रीरज. शास्त्रयो तीर्थम्। सुमनसा कुसुमानाम् अन. शकट तेन। सदृशौ सुमनसा मनसामिति पाठे सुमनस सहृदयास्तन्मनसा सदृशौ सवादिन्यौ। द्यौश्च कुश्च द्युकू द्यावा पृथिव्यौ तयो रमालवणाकरी-लावण्यविश्रान्तिस्थानत्वात् ॥ १५६ ॥

सीमा मर्य्यादा तस्यामासनशील। मान परिमाणातिशयो मान' पूजा वा तद्भूमि। फणिवल भुजङ्गसमुदायस्तस्य यद्वलन तेन उद्भाविनी या राजी रेखा तया विराजनशील'। हारीता. पक्षिविशेषास्तद्युक्ते। परिसरसरणिस्तीर-मार्गस्तत्र अस्तमालै. छिन्नमालासन्निवेशैः खण्डरूपतामापन्नैः इति यावत्। दूरदृशैः

त्रिपादयमकेषु अव्यपेतयमकं यथा,

विशदा विशदामत्तसारसे सारसे जले ।
कुरुते कुरुते नेयं हंसी मामन्तकामिषम् ॥

नास्य प्रचुरः प्रयोग इति शेषभेदा नोदाह्रियन्ते ॥ १५८ ॥

द्विपादयमकेषु अव्यपेतमादियमकं यथा,

करोति सहकारस्य कलिकोत्कलिकोत्तरम् ।
मन्मनो मन्मनोऽप्येष मत्तकोकिलनिःस्वनः ॥ १५९ ॥

तदेव मध्ययमकं यथा,

तुलयति स्म विलोचनतारकाः कुरवकस्तवकव्यतिषङ्गिणि ।
गुणवदाश्रयलब्धगुणोदये मलिनिमालिनि माधवयोषिताम् ॥
॥ १६० ॥

---

तमाले' हारी मनोहर इति सम्बन्धः । देवादेवाः देवासुरा' तैः अमृतलाभेनान्तर-वस्थानेन च आमाऽरचा यस्मात् स तथा कृतभवः सम्पादितोद्भवो नदीनामिनः स्वामी समुद्रो भवतोऽग्रे नदीन' कान्त्या दीन एव । मुक्ताभि असुक्तानि अच्छानि रत्नानि यत्र स तथा । सितरुचिश्चन्द्रस्तेन रुचिरा मनोहरा उल्लासमुद्रा हृद्धि-काष्ठा यस्य स । तदेतेषाम् उदाहरणाना चतुर्षु अपि पादेषु यथोक्त यमकम-स्तीति चतुष्पादयमकप्रपञ्चोऽयम् ॥ ५७ ॥

एव त्रिपादयमकप्रपञ्चोऽपि भवतीत्याह । त्रिपादयमकेष्विति । विशदा धवला विशन्त आमत्ताः सारसा यत्र तस्मिन् । सारसं सरःसम्बन्धि । मन्म-थोन्मादयायितया कुत्सितं रुत कुरुतम् । मध्यान्तादीनि त्रिपादयमकानि किमिति न उदाहृतानि इत्यत आह । नास्येति ॥ १५८ ॥

उत्कण्ठा उत्कलिका तदुत्तर तटं कूलम् । मन्मनो अव्यक्तमधुरो मन्मनो मदीयं मनः ॥ १५९ ॥

मलिनि यो मलिनिमा कज्जलाभत्व' समल' माधवयोषितां यादवस्त्रीणां विलोचनतारकास्तुलयति स्मेति सम्बन्धः ॥ १६० ॥

अन्त्ययमकं यथा,

खण्डिताशंसया तेषां पराङ्मुखतया तया।
आविवेश कृपा केतूकृतोच्चैर्वानरं नरम् ॥

एवमादिमध्यादीन्यपि द्रष्टव्यानि। एकपादयमकेषु अव्यपेतमाद्यन्तयोरनुल्लेखीति नोदाह्रियन्ते ॥ १६१ ॥

मध्ययमकन्तु चतुर्थपाद एव उल्लिखति यथा,

विलुलितालकसंहतिरामृशन् मृगदृशा श्रमवारि ललाटजम्।
तनु तरङ्गततीः सरसा दलत्कुवलय वलयन् मरुदाववौ॥१६२॥

एवमावृत्त्याधिक्येऽप्यव्यपेतमुदाहार्य्यं यथा,

वियद्‌वियद्दृष्टिपरम्परं परं घनाघनाली रसिता सितासिता।

---

केतूकृतो ध्वजतान्नीतः। उच्चैर्वानरो हनूमान्। नरोऽर्जुनः ॥ १६१ ॥

आद्यन्तयोरनुल्लेखीति। महाकविप्रयोगेषु विशेषशोभाकरतया प्रसिद्धेरभावोऽनुल्लेखो न तु असम्भव एव। एव मध्ययमकन्तु इत्यादौ बोद्धव्यम्। आमर्शन मोञ्छनम्। दलत्कुवलयमिति क्रियाविशेषणम्। तरङ्गाणामिततत्तीवलनेन प्रौढतरकुवलयकलिकास्फुटनजाति' ॥ १६२ ॥

आवृत्ति सकृदावर्त्तनेनैव निर्वहति। तत् किम् असकृदावृत्तौ यमक न भवति इत्यत आह। एवमिति। आवृत्तिसामान्यमधिकमनधिक वा द्वयमपि आवृत्तिपदेन अभिमतमित्यर्थः। वियदाकाशम्। वियती अपगच्छन्ती दृष्टिपरम्परा यस्मात् तत्तया परमुत्कृष्टरमणीयम्। घनाघनाली मेघपङ्क्ति'। रसिते स्तनिते आसिता अवलम्बिता। सिता शुभ्रा। सरासि च सरस्यश्च सरः सरस्यः खरसारास्तत्कालोन्मीषितकूजितकान्तिप्रधाना, सारसाः पक्षिणो यत्र ता, तथा भूता' सभागृहरूपा' जलसमुदायो वा। सभाः सदीप्तिः ताराणा तारता निर्मलता प्रकर्ष, किञ्चित् घनरोधसद्भावादीषत्तारता यस्या सा तथा ॥ १६३ ॥

आवृत्तीति। यज्जातीयमाद्यपादे पदमावृत्त तज्जातीयमेव द्वितीयादिपादेषु अपि यथा स्थानमावर्त्तत इति प्रकारान्तरमपि आवृत्तिपदेनैव संगृहीतमित्यर्थ.। यामत्रयाधीनाया मया। प्रहरत्रयविश्रान्ति यावत् दीर्घताप्रका-

सरःसरस्य: सरसारसारसा: सभा सभा रात्रिरतारतारता ॥ १६३ ॥

आवृत्त्येकरूपतायामपि तत्रादियमकं यथा,

याम यामत्रयाधीनायामया मरणं निशा।
यामयाम धियाऽस्वर्त्याया मया मथितेव सा ॥ १६४ ॥

तदेव मध्ययमकं यथा,

स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान्।
अमायतेयतेऽप्यभूत् सुखाय तेऽयते क्षयम् ॥ १६५ ॥

तदेवान्तयमकं यथा,

भवादृशा नाथ न जानते नते रसं विरुद्धे खलु सन्नतेनते।
य एव दीना: शिरसा नतेन ते चरन्त्यलं दैन्यरसेन तेन ते ॥

तदेतत्सर्वमप्यव्यवहितावृत्तेरव्यपेतयमकं भवति ॥ १६६ ॥

---

रया। निशा रात्र्या मरणं यासीति वियोगखिन्नस्य प्रार्थना। किमित्येवममङ्गलमाशास्यत इत्यत आह। यामिति। धिया बुद्ध्या यामया जीवितसर्वस्वाभिमानगोचरतामनैषम्। सा अनया कल्पकोटिशताय मानया मया रजन्या असूना प्राणानामार्त्ति: पीडा तया द्वारभूतया प्रायेण मथितैव भविष्यतीति सुकुमारतरकान्ता जीवितानध्यवसायोक्तिरियम्। अत्र यामेत्येव पदं पादचतुष्टयेऽप्यावृत्तमेवमुत्तरत्र ॥ १६४ ॥

आयतिरुत्तरकालविशुद्धि:। जितेन्द्रियो विजितेन्द्रियग्राम एवंभूतो भवान् यते: न हीयते यतितुल्य एव भवतीत्यर्थ:। अपि शब्दोऽभिन्नक्रम:। अमायता मायाशून्यत्वं सापि तव इयत्तं परिच्छेत्तुमशक्याय क्षयं विनाशमयते अगच्छते सुखाय अभूत् ॥ १६५ ॥

नते: कुपितकामिनीप्रसादरूपाया रसो विप्रलम्भपृष्ठभावी मधुरतर: सम्भोग' किमिति तादृशा रसं न जानते यस्मात् सन्नता अवसादयोगित्वमिनता प्रभुता एते द्वे विरुद्धे नैकत्र सम्भवतो न हि प्रभवो नमन्ति। एतदेव व्यतिरेकेण द्रढयति। य एवेति। ये दीनास्त एव नतेन शिरसा लक्षिता:। तेन हेतुना दैन्यरसेन अत्यन्तं चरन्ति व्यवहरन्तीति। अव्यपेतपदार्थं व्याचष्टे। तदेतत् सर्वम् स्फुटम् ॥ १६६ ॥

अथ चतुर्षु पादेषु व्यपेतमादियमकं यथा,

काञ्चिप्रतोलीमनु कामिनीनां
काञ्चित्स्रवन्ती वनमातरिश्वा।
काञ्चिप्रभृत्याभरणोज्झितानां
काञ्चिल्लुनीते सुरतश्रमार्त्तिम् ॥ १६७ ॥

तदेव मध्ययमकं यथा,

मदनदारुण उत्थित उच्छिखो मधुमदारुणहृणमुखच्छविः।
तरुणिदारुण एष दिशः समं मम हृदारुणदास्रवणानलः ॥१६८॥

अन्तयमकं यथा,

तव प्रिया सच्चरिता प्रमत्तया विभूषणं धार्य्यमिहांशुमत्तया।
रतोत्सवामोदविशेषमत्तया न मे फलं किञ्चन कान्तिमत्तया ॥
॥ १६९ ॥

---

क्रमप्राप्तं व्यपेतमुदाहर्त्तव्यमित्याह। अथेति। काञ्चिर्नगरी तस्याः प्रतोली राजरथ्या तामनु लक्षीकृत्य। केन पानीयेनाञ्जनशीलाया स्रवन्ती नदी तद्वनमातरिश्वा वायुः। काञ्चिप्रभृतीनि मेखलाप्रमुखानि। काञ्चित् सर्वाङ्गीणालसभावसमर्पिकाम् अतएव मेखलाप्रभृतिभूषणत्यागः। अत्र प्रतिपादं काञ्ची काञ्चीत्यादिनैरन्तर्य्येण आवर्त्तते नव्यपेतम्। सान्तरत्वेन पुनरादिमध्ययमकमेव स्यादिति पादभेदेनैव अस्य सम्भवः ॥ १६७ ॥

मदन एव दारु काष्ठं तत उत्थितः शिखामञ्जरीच्छटाज्वाला च। स्वभावतास्रमेव मधुमदेन यद्विगुणमरुणं हृणमुखं तच्छविर्दारुणी भयङ्करी मम हृदासम दिशः अरुणत् रुद्धवान्। आस्रवणमेव तापकारितयाऽनलो वह्निः। अत्र यद्यपि प्रतिपादमपि व्यवायेन मध्ययमकं सम्भवति तथापि न तथोल्लिखितीति पूर्वापरसदृशमेव उदाहृतम् ॥ १६८ ॥

सच्चरिताप्रमत्तेति। सोत्प्रासं सम्बोधनद्वयम्। या तव प्रिया रतोत्सवामोदविशेषेण रतिकेलिहर्षप्रकर्षेण मत्ता तयेदमंशुमन्मणिकिरणकरम्बितं भूषणं धार्य्यम्। अहं त्वत्यः। त्वया किमिति न धार्य्यमित्यत आह। न मे भूषण-

आदिमध्ययमकं यथा,

घनगिरीन्द्रविलङ्घनशालिना वनगता वनजद्युतिलोचना ।
जनमता ददृशे जनकात्मजा तरुमृगेण तरुस्थलशायिनी ॥ १७०

आद्यन्तयमकं यथा,

विहगाः कदम्बसुरभाविह गाः कलयन्त्यनुक्षणमनेकलयम् ।
भ्रमयन्नुपैति मुहुरभ्रमयं पवनश्च धूतनवनीपवनः ॥ १७१ ॥

मध्यान्तयमकं यथा,

मितमवददुदारं तां हनूमान् मुदारं
रघुवृषभसकाशं यामि देवि प्रकाशम् ।
तव विदितविषादो दृष्टकृत्स्नामिषादः
श्रियमनिशमवन्तं पर्वतं माल्यवन्तम् ॥ १७२ ॥

---

सम्पाद्यया कान्त्या किञ्चन फलम् । कामिना मण्डनशीर्षं जति हि सफलत्व वल्लभालोकनेन इति न्यायात् ॥ १६९ ॥

अत्रापि सान्तरनिरन्तरप्रसङ्गे पादभेद एव सङ्करः सङ्कीर्णव्यपेतानि तु प्रतिपादमेव सम्भवन्तीत्युदाहरति । आदिमध्येति । घना गिरीन्द्रा माल्यवन्तमारभ्य सुवेल यावद्गिरिपरम्परावनज पद्म जनाना मता सम्मता । तरुमृग' शाखामृगो हनूमान् । अत्र घनेत्यादिशब्दभाग पादचतुष्टयेऽपि गिरीन्द्रेत्याद्यनावृत्तव्यवहित एव आदिमध्ययोरावर्त्तत इति ॥ १७० ॥

गाः कूजितानि कदम्बसौरभानीतवर्षर्तुपयोदा' कलयन्ति कलरूपता नयन्ति । कूजितक्रियान्तरालकालो द्रुतमध्यविलम्बितात्मा अनेको लय, । अभ्र मेघ' नीप कदम्बः । कदम्बवनधूननेन सर्वतः सौरभसञ्चारोपपत्ति' । अत्र विहगा इत्यादिकं प्रतिपादमाद्यन्तयो अनावृत्तवर्णषट्कव्यवहितमेव आवर्त्तते ॥ १७१ ॥

मितमल्पाक्षरसरमत्यर्थमुदारमल्पाक्षरव्यञ्जकं मुदा हर्षेण रघुवृषभो रामस्तस्य सकाशो वासभूमिस्तया पुरस्कृत' । आमिषादा राक्षसाः । अत्र दारमित्यादिप्रतिपाद मध्यान्तयोः एव अनावृत्तवर्णपञ्चकव्यपेतमावर्त्तते ॥ १७२ ॥

आदिमध्यान्तयमकं यथा,

समं स सैन्येन समन्ततः समं पुरन्दरश्रीः पुरमुच्चगोपुरम् ।
मदालसां तां प्रमदां सुसम्मदा ययौ निधायाच्वययौवनं ययौ ॥
॥ १७३ ॥

———मकेषु व्यपेतमादियमकं यथा,

करेण ते रणेष्वन्तकरेण द्विषतां हताः ।
करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव ॥

अस्यापि नातिप्रचुरः प्रयोग इति शेषभेदा नोदाह्रियन्ते ॥ १७४ ॥

द्विपादयमकेषु व्यपेतमादियमकं यथा,

मुदा रमणमन्वीतमुदारमणिभूषणाः ।
मदभ्रमदृशः कर्त्तुमदभ्रजघना क्षमाः ॥

मध्ययमकं पुनरनुल्लेखीति परिह्रियते ॥ १७५ ॥

अन्तयमकं यथा,

इह मुहुर्मुदितैः कलभैरवः प्रतिदिशं क्रियते कलभैरवः ।

---

सम सह सम सश्रीक सम्मदी हर्षः । ययुरश्वमेधीयोऽश्व । अत्र प्रतिपादं समसित्यादिकमादिमध्यान्तेषु यथोक्तानामक्षरवर्णव्यवहितमावर्त्तन्ते ॥ १७३ ॥

द्विषतां शत्रूणाम् अन्तकरेण विनाशकारिणा करेण हस्तेन । करेणवो हस्तिनः । एवं द्वितीयादिपादगोचरं मध्यादियमकञ्च किमिति न उदाह्रियत इत्यत आह । अस्यापीति ॥ १७४ ॥

रमणं वल्लभं मुदा हर्षेण अन्वीतं सङ्गतं कर्त्तुं क्षमा इत्यन्वयः । उदारम् उत्कृष्टम् । मदेन भ्रमन्ती दृक् यासां ताः अदभ्रं विपुलम् । अत्र यद्यपि चतुर्षु पादेषु यमकमस्ति तथापि द्वयोः द्वयोरेवावृत्तिः पर्य्यवस्यतीत्युदाहरणद्वयमिदं द्रष्टव्यमेव प्रथमतृतीययोः प्रथमचतुर्थयोः द्वितीयतृतीययोः द्वितीयचतुर्थयोश्च व्यपेतमादियमकमवसेयम् । अनुल्लेखी व्याख्यात एव ॥ १७५ ॥

कलभाः करिशावकाः रवः शब्दः कलो मधुराव्यक्तो भैरवो भयङ्करः । अनु-

स्फुरति चानुवनं चमरीचयः कनकरत्नभुवां च मरीचयः ॥१७६॥

एकपादयमकमिह शुद्धं न सम्भवति। तस्य स्थाने द्विपादयमकमेव उदाह्रियते ॥

तदादियमकं यथा,

मधुरेणदृशां मानं मधुरेण सुगन्धिना।
सहकारोद्गमेनैव कथाशेषं करिष्यति ॥ १७७ ॥

इहापि मध्ययमकमनुल्लेखीति परिह्रियते ॥

अन्त्ययमकं यथा,

यस्याहुरतिगम्भीरजलदप्रतिमं गलम्।
स वः करोतु निःसङ्गमुदयं प्रति मङ्गलम् ॥ १७८ ॥

एवमावृत्ताधिक्येऽपि यथा,

अवसितं हसितं प्रसितं मुदा
विलसितं ह्रसितं स्मरभासितम्।

---

वनमिति वीप्सायामव्ययीभावः। चमरी चमरगवी। चयः समूहः। मरीचयः किरणाः। अत्रापि पूर्ववदेव द्विपादयमकं व्याख्येयमिति ॥ १७६ ॥

एकपादयमकमिति। नैरन्तर्येणावृत्तावव्यपेतत्वम्। सान्तरत्वे तु आदिमध्यादिभावप्रसङ्ग इति शुद्धं न भवति तत् किमनुदाहरणीयमेव एतदित्यत आह। तस्येति। आवृत्तिरेकत्र एव सम्भवतीति एकपादगोचरता। सा तु प्रतियोगितया द्वितीयमपेक्षत इति पादान्तरस्वीकार इति कथञ्चित् प्रकृतिगणनासमाधानमेतत्। मधुरेणेव'। अनेन पूर्वावयवेन वसन्तो लक्ष्यते। एणदृशां हरिणलोचनानां मधुरेण मधुरास्वादेन सहकारोद्गमेन एव इत्येवकारेणासतासतीव तावद्विख्यातप्रभावातिशयाः पिककूजनादयः सहकारप्रथमोद्भेदमात्रेण एव तु मानिनीमानग्रहवार्त्तानिरवशेषिते अत्युद्दीपनता प्रकर्षो ध्वन्यते ॥ १७७ ॥

गम्भीरो मांसलो गलः कण्ठो मङ्गलं कल्याणम्। निःसङ्गमप्रत्यूहमुदयः सम्पत् तं प्रति ॥ १७८ ॥

न समदाः प्रमदा हतसंमदाः
पुरहितं विहितं न समीहितम् ॥ १७९ ॥

आद्यन्तैकरूपतायामपि तत्रादियमकं यथा,

सारयन्तमुरसा रमयन्ती सारभूतमुरुसारधरा तम्।
सारसानुकृतसारसकाञ्चिः सा रसायनमसारमवैति ॥ १८० ॥

मध्यान्तयमकं यथा,

लीलास्मितेन शुचिना मृदुनोदितेन
व्यालोकितेन लघुना गुरुणा गतेन।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥ १८१ ॥

आद्यन्तयमकमादिमध्यान्तयमकं च इह अस्थानयमकत्व-प्रसङ्गात् न लक्ष्यते। आदिमध्यान्तयमकानि तु प्रथममेव उदाहृतानि ॥

---

अवसितं समाप्तं मुदा प्रसितमनुबद्धं हसितं सितं भ्रष्टं स्मरेण भासितं शोभितं सम्मदो हर्षः। अत्र प्रतिपादं सितं सितमित्यादिद्वाभ्यामेव यमकं निर्व्यूढम्। तृतीयन्तु सितमित्यादिकमाधिक्यमेव प्रयोजयति तच्च सर्वमनावृत्तिव्यवहितमिति व्यपेतयमकमेव भवति ॥ १७९ ॥

सारयन्तम् आत्मसमीपम् आनयन्तम्। उरसा घनतरस्तनाढ्येन सारभूतं जीवितसर्वस्वतामापन्नमुरुर्महान् सारः उत्कर्षः। अनुकृतसारसा सारसकूजित-सम्वादिनी। सारसा सशब्दा काञ्चिर्मेखला यस्याः सा तथा। सारसानुकृतेति जातिकालसुखादिभ्यः परा वक्तव्येति निष्ठायाः परनिपातः। रसायनं सर्वोप-द्रवहरं भेषजम् ॥ १८० ॥

शुचिना कान्तेन मृदुना कोमलेन उदितं भाषितं लघुना तरलेन गुरुणा स्तनजघनभारालसेन व्याजृम्भितेन प्रकटीभूतविस्तारप्रकर्षेण। अत्र तेन तेनेति मध्यान्तयोरावृत्तम् ॥ १८१ ॥

आवृत्त्येकरूपतायामावृत्त्याधिक्ये च मध्ययमकं यथा,

सभासु राजन्नसुराहतैर्मुखै-
र्महीसुराणां वसुराजितैः स्तुताः ।
न भासुरा यान्ति सुरान् न ते गुणाः
प्रजासु रागात्मसु राशितां गताः ॥

तदेतत् सर्वमपि व्यवहिताव्वृत्तेर्व्यपेतमादियमकं भवति ॥१८२॥

नादौ न मध्ये नान्ते यत् सन्धौ वा यत् प्रकाशते ।
अव्यपेतव्यपेतं तदस्थानयमकं विदुः ॥ १८३ ॥

पादे श्लोके च तत् प्रायः पादसन्धौ च बध्यते ।
स्वभेदे चान्यभेदे च स्थूलं सूक्ष्मं च सूरिभिः ॥ १८४ ॥

---

इह इति आवृत्त्येकरूपतायामेकस्य आदौ इतरस्य अन्ते वर्तमानमेकरूप सन्निपातित्वादस्थानयमकमेव भवति। एवमादिमध्यान्तयमकमपि नात्र सङ्गच्छते तर्हि सन्धिविनाकृतम् उदाह्रियतामित्यत आह। आदिमध्यान्तेति। आवृत्त्याधिक्य इति। एकैकस्मिन् पादे तृतीयाद्यावृत्त्यापूर्वमाधिक्य पादान्तरावृत्तिसरूपतया सारूप्य चोक्तम्। इह तु सरूपावृत्त्यैवाधिक्य निरूप्यत इति सङ्करप्रकारोपलक्षणमिदम्। सभासु जनसमवायेषु असुराहतैः मदिरापानपराभूतैः महीसुराणा ब्राह्मणाना वसुना तेजसा राजितैः शोभितैः भासुरा दीप्ताः सुरान् देवान् न न यान्ति निषेधद्वयेन यान्त्येवेत्यर्थः। रागोऽनुरागस्तत्प्रधान आत्मा यासा तासु प्रजासु राशिता पुञ्जता गता'। व्यपेतम् उपसंहरति। तदेतदिति ॥ १८२ ॥

क्रमप्राप्तमस्थानयमक लक्षयति। नादाविति। आदावेव इत्यादिनियमेन स्थानयमकमुक्तं तदभावे त्वस्थानयमक भवति। तत् किमाद्यादिस्थानमिद नाश्रयत एव नेत्याह। सन्धौ वेति। सन्धौ पादसन्दंशे एकस्यादि अपरस्य अन्त इति। नेद स्थानयमकं तद्धि प्रतिपाद स्थाननियमेन निरूप्यत इत्युक्तप्रायम्। अव्यपेतव्यपेतमिति। द्वाभ्यामपि अन्वीयते ॥ १८३ ॥

तत् प्रथम पादश्लोकतया द्विविधमित्याह। पादे श्लोके चेति। पादसन्धौ च यद्बध्यते तत् स्वभेदे च अन्यभेदे च स्थूल सूक्ष्म च भवतीत्यर्थः। एतत् यथास्थान

तत्र पादे स्थूलमव्यपेतं यथा,

वीनां वृन्दञ्चैतत् कूटे समरुति
सुतरुणि समरुति सुतरुणि।
चित्तं वातेन क्रोडेऽस्मिन् सुरमणि-
गुणरुचि सुरमणि गुणरुचि॥

अत्र स्थूलेनैवावृत्तिद्वयेन श्लोकपादयोर्व्याप्तत्वादादिमध्यान्तता न सम्भवति इति अस्थानयमकमिदं स्थूलाव्यपेतमुच्यते॥ १८५॥

पाद एव सूक्ष्ममव्यपेतं यथा,

स्वस्थः शैले पश्यास्तेऽसौ रुरुरु-
रतिरतितनुतनु मतिमति।
लोको यद्वद्दैत्यानीकं गुरु गुरु-
मयि मयि तरितरि सति सति॥

---

विवरिष्यते। स्थूल सूक्ष्मं चेति। पूर्वेणापि सम्बध्यते। वहुवर्णावृत्ति स्थूलम् अवहुवर्णावृत्ति सूक्ष्मम्॥ १८४॥

वीना पक्षिणा वृन्द कूटे शृङ्गे समरुति मारुतसहिते। सुतरुणि शोभन वृक्षे कूटविशेषणद्वयमिदं समरुति समानकूजिते सुतरुणीति प्रियासम्बोधनम्। वाशब्द इवार्थे। सुरमणीना देवमणीना गुणेन दाम्ना रोचते शोभत इति क्विप्। तस्मिन् क्रोडे सुरमणीति सम्बोधनम्। गुणेषु रुचिर्यस्य तद्गुणरुचि चित्तम्। अत्र समरुति सुतरुणि सुरमणिगुणरुचीति द्वितीयचतुर्थ पादयोर्वर्णाष्टकावृत्तिद्वयमिति पादव्यापकमव्यपेतमुच्यते॥ १८५॥

रुरुर्महाशृङ्गो मृग उरुरतिरुपचितप्रीति। अतितनु अतिकृशा तनुर्यस्या इति सम्बोधनञ्च। मति मति मतिरुचितज्ञान तद्वतीत्यपि सम्बोधनम्। पश्येति वाक्यार्थकर्मकम्। गुरु विपुलम्। गुरु शुक्रो मयो दैत्यविशेषः तद्युक्त तरि तरि विजयमाने मयि सति। सतीति सम्बोधनम्। सती शोभना। यथा मयदैत्यानीकविजये लोकोऽय सुखमास्ते तथा असौ रुरुरिति वाक्यार्थोऽभि

अत्र पुनः सूक्ष्मेणावृत्त्यष्टकेन श्लोकपादौ व्याप्ताविति अस्थानयमकमिदं सूक्ष्माव्यपेतमुच्यते ॥ १८६ ॥

श्लोके स्थूलमव्यपेतं यथा,

नगजा न गजा दयिता दयिता
विगतं विगतं ललितं ललितम् ।
प्रमदाऽप्रमदाऽमहता महता-
मरणं मरणं समयात् समयात् ॥

अत्रावृत्त्यष्टकेन श्लोकोऽपि व्याप्त इति अस्थानयमकमिदं श्लोके स्थूलमव्यपेतमुच्यते ॥ १८७ ॥

श्लोक एव सूक्ष्ममव्यपेतं यथा,

विविधधववना नागगर्द्धनाना-
विविततगगनाऽनाम मज्जनाऽना ।
रुरुशशललना नावबन्धुन्धुनाना
मम हि हिततनाऽनाननस्वस्वनाना ॥

बलभद्रं प्रति कृष्णवाक्यं समुद्रतीरभूवर्णनपरम् ।

विविधानि धवानां तरुभेदानां वनानि यस्यां सा नागर्द्धं

---

मतः । तदिदं वर्णद्वयावृत्त्या सूक्ष्मं न च अन्योन्यव्यवहितमव्यवहितमित्यव्यपेत च भवति । तदेतदेकस्मिन्नपि पादे चतुष्कद्वयादिपादविकल्पेन च बोद्धव्यम् ॥१८६॥

नगजा पर्वतजा दयिता वल्लभा । एवंविधा अपि हस्तिनी न दयिता न रक्षिता । वीनां हंसप्रभृतीनां पक्षिणां गतं चङ्क्रमणं विगतमपगतं ललितं विलसितं ललितं भ्रष्टम् । प्रमदा कान्ता अप्रमदा हर्षशून्या । आमश्चित्तव्यथारूपी रोगस्तेन हता महता प्रकर्षशालिनाम् अरणं संग्रामवर्जितं मरणं विनाशः समयात् दैवात् समयात् सङ्गतमासीत् ॥ १८७ ॥

विविधानि धववनानि यस्यां सा तथा । धवो विट्खदिरः । नागान् सर्पान् हस्तिनो वा गर्द्धयन्ति अभिलषन्तीति नागगर्द्धाः । अद्धा उपचिता नानावयो

सर्पेषु गर्द्धेनाभिलाषेण बुभुक्षया ऋद्धैः समृद्धैर्नानाविधैर्विभिः पक्षिभिर्विततं व्याप्तं गगनं यस्यां सा। अनामेन अनमनेन मज्जन्तो जना यस्यां सा। बह्वुदकेत्यर्थः। यद्वा। अस्य विष्णोर्नामनि मज्जन्तस्तत्परा इति यावत्। तादृशा जना यस्यां सा। अविद्यमाना नरोऽर्वाचीना मनुष्या यस्यां सा। समासान्तविधेरनित्यत्वात् नद्यृतश्चेति न कप्। यद्वा। अविद्यमान अोविष्णुर्यस्या सा। यद्वा। अनामनि विष्णुनामनि मज्जद्भ्यस्तत्परेभ्यो जातं नानं यस्या सान ज्ञान तत्वज्ञानमिति यावत्। न नमऽन न अनं नाल रुरुणा शशानां चलन क्रीडन यत्र सा। नौ आवयोरबन्धुं वैरिणं धुनाना नाशयन्तो हि निश्चित मम हित तनोति सा। अविद्यमानमाननं सुख यस्य सः। सुख विनैव जायमान इत्यर्थः। ईदृशो यः स्वस्वनः शब्दस्तत्र अनाः प्राणा यस्यां सा। उदकशब्दवतीत्यर्थः। अत्र सूक्ष्मतराभिरष्टाविंशत्या वृत्तिभिः श्लोको व्याप्त इति अस्थानयमकमिदं श्लोके सूक्ष्माव्यपेतमुच्यते॥ १८८॥

---

विचित्रा. पक्षिण. तैर्विंतत व्याप्त गगन यस्या सा तथा। कल्लोलपरम्पराभिरनाम नमनशून्यम्। मज्जन्तः स्नान्तो जना यस्या सा। अना स्त्रीरूपा। रुरूणां शशाना चलनमुत्फालो यस्या सा तथाभूता नौ आवयोरबन्धुं शत्रुं धुनाना क्षिपन्ती। हरिप्रबोधे बलभद्रस्य कृष्णं प्रत्युक्तिः। यस्मात् मम हिततना हित तनोति। अनाननो सुखशून्यो य. स्व आत्मा। तेन स्वनाना शब्दायमाना। शीरो चानश्। अनित्यमागमशासनमिति सुगभावः। यदि वा अनाननो सुख विनाक्षत. स्वकीयः स्वनो यस्याः सा। अनितीत्यना प्राणयुक्ता। अन्तर्णीतिवार्य चैतत्। वर्णद्वयपर्यन्तमावृत्तिः सूक्ष्मता। सा एव एकवर्णगोचरा सूक्ष्मतरा॥ १८८॥

पादसन्धौ अन्यभेदोच्छेदेन स्थूलं यथा,

उपोढरागाप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता।
न योजितात्मानमनङ्गतापिता
गतापि तापाय ममास नेयते॥

अत्रान्तादिसन्दंशादव्यपेतं प्रवर्त्तते। व्यपेतं तु पादसन्धिषु निवर्त्तत इति अस्थानयमकमिदं स्थूलावृत्तेः सन्धिस्थूलाव्यपेतमुच्यते॥ १८९॥

अन्यभेदानुच्छेदेन सूक्ष्मं यथा,

मताधुनानारमतामकामतामतापलब्धाग्रिमतानुलोमता।
मतावयत्युत्तमताविलोमतामताम्यतस्ते समता न वामता॥

---

पादसन्धाविति। स्वभेदे च अन्यभेदे च अन्यत्र व्यपेताव्यपेतयोः स्वत्वमन्यत्व च व्याख्येय प्रकरणात्। तत्र प्रसङ्गे च यथासम्भवं सप्तमी योजनीया। मदेन प्राप्तरागापि तत एव मन्मथोन्माथेन तापिता उत्ताप गतापि यदात्मानमबलान योजितवती तं नूनं मदेन सा मदीयदुरितेन भूयोऽपि मानरस प्रापिता स्यात्। अतएवेयते वक्तुमशक्याय सन्तापाय नासेति काक्वा तापप्रकर्षभणनम्। योजितेति। योजयतेर्गत्यर्थत्वमाश्रित्य कर्त्तरि क्तः। गत्यर्था कर्मकेत्यादौ चकारस्यानुक्तसमुच्चयार्थत्वाद्वा। अत्र प्रथमद्वितीययोस्तृतीयचतुर्थयोश्चान्तरतो विच्छिद्यपाठे क्रियमाणे सन्धिषु व्यपेतसङ्ग स्यात्। निरन्तरपठितौ तु स निवर्त्तते। यथैव च वृत्तौचितीवशात् सौभाग्यमुन्मिषति। तेन व्यपेतबाधादव्यपेतपुरस्कारस्तदिदमाह। अत्रेत्यादि। सन्दंश. सन्धानम्॥ १८९॥

मता सम्मतासारमता योगिनामकामता वीतरागता धुनानाऽधः कुर्वाणा अतायीमायासस्तेन लब्धोऽग्रिमतानुलोमते श्रेष्ठतानुकूल्ये यया सा। अतएवोत्तमताया विलोमतामतिरेकमयती न गच्छन्ती ईदृशी तवाताम्यतः ससारखेदेनाक्लिश्यमानस्य मतौ समता न तु वामता वैषम्यमिति॥ अत्र प्रतिपादमादिमध्यान्तेषु व्यपेतयमकमुपलभ्यते। सन्धिषु च सन्दंशपाठादस्थानयमकमव्यपेतञ्च।

अत्र व्यपेतानुच्छेदेनैव पादसन्धिषु अव्यपेतमुत्पद्यत इति अस्य।नयमकमिदं सूक्ष्मावृत्तेः सन्धिसूक्ष्माव्यपेतमुच्यते ॥१९०॥

स्वभेदे पूर्वभेदानुच्छेदेन स्थूलं यथा,

सतमाः सतमालो यः पारापारायतः सदावोऽदावः।
लोकालोकानुकृतिः सह्यः स ह्ययमनभ्रकूटैः कूटैः॥

अत्र विषमपादयोः समपादावन्तेऽवतिष्ठमानावादियमकाद्यन्तयमकयोरादिमध्यान्तयमकतामापदयतः। पारापारेति सह्यः सह्य इत्यावृत्तौ स्थूले एवादिमध्ययमकव्यपदेशञ्च लभेते इति अस्यानयमकमिदं स्वभेदे पूर्वभेदानुच्छेदि स्थूलाव्यपेतमुच्यते ॥ १९१ ॥

तदेव स्वान्यभेदोच्छेदि सूक्ष्मं यथा,

सनाकवनित नितम्बरुचिरं चिरं सुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतो रसपरा परास्तवसुधा सुधाऽधिवसति ॥

---

न च पूर्वोपलब्ध बाध्यते। न वा सन्धौ विरतिरिति प्रसङ्ग सङ्गच्छते। तेन व्यपेतानुच्छेदकमेतदव्यपेतम्। अत्रापि वृत्तौचिती सर्वखायते ॥ १९० ॥

तमोऽत्र गहनता तया सतमाः सान्धकारः पारा नाम नदी तस्याः पारे आयतो विस्तीर्णो दावो वनं तद्बहुलत्वाददावो वनवह्निप्रभावरहितो लोकालोकं चक्रवालाख्यं पर्वतं तदनुकृतिं तत्सदृशो यः सोऽयं सह्यनामा गिरिरभ्रकूटशून्ये कूटे शृङ्गैर्लचितः। हिशब्दो वाक्यालङ्कारे। अत्र प्रथमतृतीययोरादौ द्वितीयचतुर्थयोराद्यन्तयोर्व्यपेतयमकमेव वर्त्तते। तदनुच्छेदेनैव सन्दश पाठादियमकयोराद्यन्तयमकयोश्चाव्यपेतादिमध्यान्तयमकता प्रकाशते। यतो द्वितीयचतुर्थपादयोरादिमध्यान्तयमकमेव मध्यमयमकभूमिकामवगाहते। अत्रापि वृत्तौचिती गवेषणीया। तदेतद्विवरणे व्यक्तमेवेति ॥ १९१ ॥

नाकवनिताः स्वर्गस्त्रियः ताभिः सहितं यतो नितम्बे स्वच्छन्दविहरणोचिते रुचिरं मनोज्ञं सुनिनदैः शोभनशब्दैर्महाफणवान् वासुकिरवतो रचतो रसपरा

अत्र पादान्तादिषु व्यपेतं यदा मध्येषु अव्यपेतं तदु भयमपि पादान्तादिसंहियामव्यपेतमभिन्नजातीयं जायते। न च प्राचीनां मध्ययमकतां जहातीत्यस्थानयमकमिदं सूक्ष्मावृत्तेरन्यतो भेदेन स्वभेदानुच्छेदि सूक्ष्माव्यपेतमुच्यते। तदुभयमप्येवंविध एव छन्दसि द्रष्टव्यम् ॥ १९२ ॥

पादे स्थूलव्यपेतं यथा,

अखिद्यतासन्नमुदग्रतापं रविं दधानेऽप्यरविन्दधाने।
भृङ्गावलिर्यस्य तटे निपीतरसा नमत्तामरसा न मत्ता॥

अत्र माभूदव्यपेतप्रसङ्ग इत्येकमेवाक्षरं विहाय स्थूलावृत्तिद्वयेन श्लोकपादयोर्व्याप्तत्वादादिमध्यान्तता न सम्भवति इति अस्थानयमकमिदं स्थूलव्यपेतमुच्यते ॥ १९३ ॥

पाद एव सूक्ष्मं यथा,

करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रशः।

---

रसनीयेषु श्रेष्ठा। परास्तवसुधा त्यक्तभूभागा सुधा पीयूषम्। अत्र प्रतिपाद नित नितमित्यादिकमव्यपेतम्। सन्धिषु च विरतिपाठे चिर चिरमित्यादि-व्यपेत प्रतीयते। तत्र सन्दर्भे क्रियमाणे व्यपेत निवर्त्तते। अव्यपेत तु मध्य-यमकमवतिष्ठतएव। तत् सर्वमिदमव्यपेतमेव जायते। अत्रापि वृत्तौचिती पूर्ववदेव शरणमित्युपसंहारे दर्शयति। उभयमपि चैतदिति। स्थूलसूक्ष्म-भावेन सन्धियमकमुभयम् ॥ १९२ ॥

यस्य गिरेस्तटे रविमादित्यमुदग्रतापं दधानेऽपि भृङ्गावलिर्भ्रमरमाला न अखिद्यत। यतोऽरवि दधाने पद्मानां निधानभूते निपीतरसा आस्वादितमकरन्दा अतएव मत्ता नमन्ति तामरसानि यस्याः सकाशात् सा तथा। भरनमितपद्म कुहरप्रवेशात् मधुरससेवया च भ्रमरमालया खेदो नाधिगतः। अत्र द्वितीय-चतुर्थपादयोः रविन्दधाने रविन्दधाने इति रसा न मत्ता रसानमत्ता इति द्वाभ्यामेव वृत्तिभ्यां व्याप्तत्वात् आद्यादिविभागासम्भवे अस्थानयमकमेवेद व्यपेतन्तु कथं भवतीत्यत आह। माभूदिति ॥ १९३ ॥

करेऽणुः शीकरी जज्ञे रेणुस्तेन शमं ययौ ॥

अत्र विषमपादयोः करेणुः करेणुरित्यादावावृत्तं समपादयोस्तु रेणुः रेणुरिति । तत्तु स्वापेक्षया न मध्यमन्यापेक्षया नादिः इति अस्थानयमकमिदं सूक्ष्मव्यपेतमुच्यते ॥ १९४ ॥

श्लोके स्थूलव्यपेतं यथा,

जयन्ति ! ते सदा देहं नमस्यन्ति जयन्ति ते ।
भवान्यतो नमस्यन्ति सदादेहं भवान्यतः ॥

अत्र स्थूलव्यपेतावृत्तिचतुष्टयेन श्लोकोऽपि व्याप्त इत्यादिमध्यान्ताभावात् अस्थानयमकमिदं स्थूलव्यपेतमुच्यते ॥ १९५ ॥

स्थूल एव सूक्ष्मव्यपेतं यथा,

यामानीता नीतायामा लोकाधीराऽधीरालोका ।

---

करेणुः हस्ती प्रस्थितश्चलित ... न घण्टा रेणु अध्वदायन्त । सहसा इति क्रियाविशेषणम् । करे स्थूलहस्तेऽणु शीत्कारविकीर्णतया परमाणुसाङ्गतस्तेन शीकरेण । ननु विषमपादयो आद्यक्षरविनाऽकरणेन मध्ये समपादयोः पुनरादावेव रेणुरित्यावृत्तिरस्ति तत् कथमस्थानयमकमिदमित्यत आह । तत्त्विति । अन्ते आवृत्तेरसम्भावितत्वादादौ मध्ये वा सा वाच्या । न चेयमपि सम्भवति । रेणु रेणुरिति शब्दभागमपेक्ष्य प्रवृत्तायामावृत्तौ तद्विरहात् ॥ १९४ ॥

हे जयन्ति ! ये तव देह दुर्गातारादिरूपेण प्रपद्यमाना मूर्त्तिं सदा नमस्यन्ति ते जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । यतस्त एव भवान् संसारसरणिमस्यन्ति क्षिपन्ति । भवात् परमेश्वरादन्यताभेदस्ते नो नमतः श्रेयस आदान ग्रहण यत्र तादृशी ईहा चेष्टा यत्रेति द्वयमसनक्रियाविशेषणम् । अत्र जयन्ति त इति प्रथमद्वितीययोराद्यन्तौ सदा देहमिति प्रथमचतुर्थयोरन्तादौ नमस्यन्तीति द्वितीयतृतीययोः भवान्यत इति च तृतीयचतुर्थयोराद्यन्तौ च स्थूलावृत्त्या व्याप्ताविति अनावृत्तभागाभावात् श्लोके स्थूलव्यपेतमस्थानयमकमिदम् ॥ १९५ ॥

मानिभिरिवा सङ्गता । यद्वा यामेन प्रहरमात्रेण अनीता प्रापिता अकून्

सेनासन्ना सन्ना सेना सारं हत्वाह त्वा सारम् ॥

अत्र यद्यपि यामायामित्यादौ व्यपेतमाद्यन्तयमकं, नीतानीतेत्यादौ च मध्ययमकमव्यपेतं विद्यते, तथापि मण्डूकप्लुतिन्यायेन गतप्रत्यागतैर्यतेश्च नैतदुल्लिखति अपि तु श्लोकोऽपि द्वाभ्यां द्वाभ्यामक्षराभ्यां सूक्ष्मावृत्त्या व्याप्त इव लक्ष्यते। तेनास्थानयमकमिदमादिमध्यान्तानामभावात् सूक्ष्मावृत्तेः सूक्ष्मव्यपेतमुच्यते ॥ १९६ ॥

पादसन्धौ स्थूलव्यपेतं यथा,

हठपीतमहाराष्ट्रीदष्टनच्छदपाटला।
पाटलाकलिकानेकैरेकैका लिलिहेऽलिभिः ॥

---

जिलेत्यर्थं। आनीत' प्रापित आयामो वृद्धिर्यस्या' सा तथा। पालनेन लोकानामाधिमीरयति क्षिपतीति लोकाधीराधीरै' अप्राप्तसमरसम्भ्रमै' आलोक्यत इति धीरा लोका: सह इना,सेनान्यावर्त्तत इति सेना असन्ना अवमादरहिता एवम्भूता या सेना सा आसन्ना निकटवर्त्तिनी सती आरमरिसमूह हत्वा स्वा स्वा सारं कार्य्यसिद्धि ब्रवीति। ननु यामामायामालोकालोकेत्यादिकमाद्यन्तयोर्नीतानीतेत्यादिक तु पदचतुष्टयस्यापि मध्य इति व्यपेतमाद्यन्तव्यपेतयमक तु मध्ययमकमिति स्थानयमकमेवेद सङ्करोऽपि न पृथग् यमकता प्रयोजयतीत्यत आह। अत्र यद्यपीति। यामित्यादिकमादौ अनुसन्धाय वर्णचतुष्कव्यवधिना पादान्तेऽनुसन्धीयमान मण्डूकप्लुति प्रयोजयतीति न तथा सोल्लेखम्। यामानीतेत्यादिस्थूलचतुष्कप्रत्यागतेन नीतायामेत्यादिना अत्यन्तमुद्भटेन यमकच्छाया तिरोधीयत इति च न सोल्लेखम्। मध्यादिकमव्यपेत सोल्लेखमित्यपि न वाच्यम्। यामानीतेत्यादिवन्धच्छायार्पकयतिवारणेनानुल्लेखत्वात्। श्लोकस्तु द्वाभ्या द्वाभ्यामावृत्तिभ्या व्याप्त इति समुदायसोल्लेखतैव। तदिदमुक्त मण्डूकप्लुत्यागतप्रत्यागतैर्यतेश्चेति। मध्ये यतिकृतो व्यवायो बोद्धव्य। अत्रापि वृत्तौचित्यमनुसरणीयम् ॥ १९६ ॥

'' हठयानेन ताम्बूलरागो नि.शेषितस्तेन प्राप्तपरभागसहजरागोन्मेष.। 'व्यव

अत्रापि प्राग्वदेव यतिविच्छेदात् पूर्वोत्तरार्धयोः असंहितायां पाटलापाटलेत्यावृत्तेर्नाव्यपेतयमकत्वम्। न चैतत् पादयोः आदावन्ते च शक्यते वक्तुमपि तु एकस्य आदौ अन्यस्य चान्ते इति अस्थानयमकमिदं स्थूलावृत्तेः स्थूलव्यपेतमुच्यते। न चैतद्वाच्यमुपोढरागेत्यादौ काञ्चियमकेऽप्ययं न्याय इति तस्यैव तथाभूतलक्षणत्वात्॥ १८७॥

काञ्चियमक एवाव्यपेतास्थानयमकभेदे सूक्ष्मव्यपेतं यथा,

धराधराकारधरा धराभुजा
भुजा महीं पातुमहीनविक्रमाः।
क्रमात् सहन्ते सहसा हतारयो
रयोद्धुरा यानधुरा वलम्बिनः॥

अत्रान्त्यपादे धुराधुरेति सूक्ष्मव्यपेतं वर्त्तते॥ १८८॥

स्वभेदान्यभेदयोः स्थूलसूक्ष्मञ्च यथा,

सालं वहन्ती सुरतापनीयं साऽलं तडिद्भासुरतापनीयम्।
रक्षोभरक्षोभरसत्रिकूटा लङ्का कलङ्काकलिकाद्रिकूटा॥

अत्र सालं सालमिति स्वभेदे सुरतापनीयं सुरतापनीयमिति स्थूलः रक्षोभरक्षोभेति लङ्का कलङ्केति अन्यभेदे कूटाकूटेति

---

वाचकशब्दाभावे कथमिदं व्यपेतमित्यत आह। अत्र प्राग्वदिति। ननु उपोढरागेत्यादौ पूर्वोदाहृतेऽपि यतिविच्छेदादस्ति व्यवधानात् कोऽस्य विशेष इत्याशङ्क्याह। न चेति॥ १८७॥

धराधर' शेषो महीं पातुं वहत इत्यन्वयः॥ १८८॥

सालः प्राकारः सुराणां तापनं सन्तापजननं तयोर्हि तमलमत्यर्थं सा लङ्का। तपनीयं सुवर्णं तापनीयं च तद्भास्वरं चेति कर्मधारयः। रक्ष साम्भरः समूहः तस्य क्षोभः प्रकर्षजः कोलाहलः। त्रिकूटः सुवेलोऽकलङ्का

सूक्ष्मव्यपेते भेदो दृश्यते तदिदमस्थानयमकं स्थूलसूक्ष्म-व्यपेतमुच्यते ॥ १९९ ॥

यत् सूक्ष्मभागं बह्वावृत्ति तदपि स्थूलसूक्ष्ममेव। यथा,

मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया।

मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥२००॥

स्थानास्थानविभागोऽयमव्यपेतव्यपेतयोः।

क्रमेणोक्तस्तयोरेव पादभेदोऽथ कथ्यते ॥ २०१ ॥

तत्र व्यपेतभेदेषु प्रथमपादयोरावृत्तिर्यथा,

न मन्दया वर्जितमानसात्मया

नमन् दयावर्जितमानसात्मया।

उरस्युपास्तीर्णपयोधरद्वयं

मया समालिङ्ग्यत जीवितेश्वरः ॥ २०२ ॥

अत्रैव द्वितीयतृतीययोर्यथा,

दृश्यस्त्वयायं पुरतः पयस्वानानाकलाली रुचिरेण नेत्रा।

नानाकलालीरुचिरेणनेत्रा देवी यदस्मादजनि स्वयं श्रीः ॥

॥ २०३ ॥

---

दोषरहिता अकलिकानि कलिरहितानि अद्रिकूटानि सुवेलशिखराणि यस्या सा तथा ॥ १९९ ॥

यत् सूक्ष्मभागमिति। भागशो विविच्यमानं सूक्ष्ममेव वृत्तिभूय' तथा तु स्थूलमिव प्रथत इति सूक्ष्मोऽधिकयाभिधानम् ॥ २०० ॥

क्रमप्राप्तमिदानीं पादयमकमुदक्रियत इत्याह। स्थानास्थानेति ॥ २०१ ॥

मन्दया तत्कालौचिते प्रतिपत्तिविधुरया आवर्जितौ मान ईर्ष्यारोषलक्षणो यया सा तथा। सात्मा आत्मवती अनयोः कर्मधारय.। नमन् पादान्ते लुठन्नपि दयावर्जितौ मानसात्मानौ यस्या इति बहुव्रीहेर्ङीप् ॥ २०२ ॥

आनाकं स्वर्गावधिललनमुल्लासः तच्छीली रुचिरेण मनोहरेण नेत्रा नायकेन

एवं तृतीयचतुर्थयोरपि यथा,

स्मरानलो मानविवर्द्धितो यः स निर्वृतिं ते किमपाकरोति।
समन्ततस्तामरसेक्षणे न समं ततस्तामरसेक्षणेन॥ २०४॥

व्यपेतभेदेषु प्रथमतृतीययोर्यथा,

सभा सुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्मलैः।
स भासुराणामबला विभूषिता
विहारयन्निर्विश सम्पदः पुराम्॥ २०५॥

तत्रैव प्रथमचतुर्थयोर्यथा,

कलङ्कमुक्तं तनुमध्यनामिका स्तनद्वयी च त्वदृते न हन्त्यतः।
न याति भूतं गणने भवन्मुखे कलङ्कमुक्तं तनुमध्यनामिका॥

॥ २०६॥

---

नानाकलानां चतुःषष्टिकानाम् आली परम्परा। एणनेत्रा हरिणलोचना। द्वयमपि स्त्रीविशेषणम्॥ २०३॥

स्मर स्मरकाल क्षणेन ततो विस्तीर्णस्तामरसभवैकसाधिचिन्तानुवृत्तिलक्षणान् निर्वृत्तिमरत्से इति सोपालम्भसम्बोधनम्। समन्ततः सर्वतस्तामरसेक्षणे कमलनेत्रे न किमपाकरोतीति पूर्वेण सम्बन्धः। अथवा। बलाख्येन दानवेन रहिता विभुना शक्रेणाध्यासिता सुराणां देवानां सभा मृणालनिर्मलैः तव गुणैः आरोहि यतोऽतः सत्वं पुरस्त्रबला विभूषितास्त्रियोऽलङ्कृता विहारयन् भासुराणां सतां सम्पदो निर्विश इति आशंसा॥ २०४॥ २०५॥

कलं मधुराव्यक्तं भाषितम्। तनोर्मध्यस्य भरेण घनामिकास्तनद्वयी च त्वां विहाय कं नायकं न हन्ति वशीकरोति। अतो जितेन्द्रियेषु प्रथमगणनीये त्वयि सति कलङ्कमुक्तं निर्दोषं तनुमधि शरीरमधिकृत्य भूतमनामिकाङ्गुली नयातिपरस्य त्वत्सदृशस्य अभावात्। निर्दोषो हि लोके कनिष्ठाङ्गुल्या निर्दिश्यते॥ २०६॥

एवं द्वितीयचतुर्थयोरपि यथा,

या बिभर्त्ति कलवल्लकीगुणस्वानमानमतिकालिमालया।
नात्र कान्तमुपगीतया तया स्वानमानमतिकालिमालया॥

॥ २०७ ॥

अर्द्धाभ्यासः समुद्गः स्यात्तस्य भेदास्त्रयो मताः।
व्यपेतश्चाव्यपेतश्च उभयात्मा च सूरिभिः॥ २०८॥

तेषु व्यपेतो यथा,

अनेकपादभ्रमदभ्रशालं मान्येऽद्दृशाभीरुपतत्त्रिकूटम्।
अनेकपादभ्रमदभ्रशाल मान्ये दृशा भीरु पत त्रिकूटम्॥२०९॥

अव्यपेतो यथा,

घन विदार्य्यार्जुनबाणपूगं घनं विदार्य्यार्जुनबाणपूगम्।
ससार बाणो युगलोचनस्य स सारबाणोऽयुगलोचनस्य॥ २१०॥

---

वल्लकीगुणस्वानो वीणाशब्दः तस्य मानं या बिभर्त्ति कालिम्ना श्यामतया आलया। कज्जलप्रभृतीनतीत्य वर्णप्रकर्षेण या स्थिता तया गातुमुपक्रान्तया भ्रमरमालया हेतुभूतया का नाम अत्र पर्वते कान्तं न नमति न प्रणमतीति न सुखेन नास्यते इति अस्वानमाया प्रागासीत् सापि उद्दीपनप्रकर्षे नि शेषितमाना नमतीत्यर्थः॥ २०७॥ २०८॥

अनेकेषु पादेषु प्रत्यन्तपर्वतेषु भ्रमन्ति अभ्राणि मेघा एव सालो वरणः प्राकारोऽन्या. पूजार्हा ईदृशा यथादृश्य तथैव मनोहारिणोऽभीरवो भयरहिता. पतत्त्रिकूटा. पक्षिसङ्घा अनेकपा हस्तिनस्तेषामदभ्र उत्कटो मद. त भरन्ति धारयन्तीति मूलविभुजादित्वात् कप्रत्यये अनेकपादभ्रमदभ्राः साला वृक्षा यत्र। मान्येभीर्वितिसम्बोधनद्वयम्। मानः शृङ्गारभाव. तदर्हादृशा त्रिकूट पर्वतयया ईकयेति। विदारी कन्दभेद.॥ २०९॥

मुठनपि ईंन ककुभो बाणो गुल्मविशेषो पूगो गुवाको द्वन्द्वत्वात् पाक्षिक एकमानाक अर्जुन. पार्थ. तस्य बाणपूग शरसमूहः त विदार्य भित्वा। अयुग

व्यपेताव्यपेतौ यथा,

कलापिनां चारुतयोपयान्ति वृन्दानि लापोढघनागमानाम् ।
वृन्दानिलापोढघनागमानां कलापिनां चारुतयोऽपयान्ति ॥

पादत्रयाभ्यासस्तु नातिसुन्दर इति तद्भेदा नोदाह्रियन्ते ॥ २११ ॥

एकाकारचतुष्पाद महायमकमुच्यते ।
श्लोकाभ्यासश्च तत्राद्यं पुनरभ्यासमर्हति ॥ २१२ ॥

तत्राव्यपेतभेदे प्रथम महायमकं यथा,

सभासमाना सहसा परागात् सभासमाना सहसापरागात् ।
सभासमाना सहसापरागात् सभासमाना सहसापरागात् ॥
॥ २१३ ॥

---

लोचन त्रिनेत्र किरातरूपधर तस्य स सारगत सारस्राण उत्कृष्टशब्देन सहितोऽयुगद्वितीयोऽलोचनस्य दुर्ज्ञानस्य । २१० ।

के पानीये लपनशीला हंसास्तेषां वृन्दानि चारुतया मनोज्ञभावेनोपयान्ति सङ्गच्छन्ते । लापेन परस्परसल्लापमात्रेणोढ प्राप्तो घनो निरन्तर आगम आगमन येषां वृन्दानिलो वात्या तेनापोढौ निराकृतौ घनागमौ मेघदुर्दिन कलापिनौ मयूरा आरुतय समन्तत केकयितानि अपयान्ति तिरोभवन्ति । एकश्लोके पादत्रयाभ्यासस्य असम्भवात् श्लोकान्तरे च तथा सौन्दर्य्याभावात् पादत्रयाभ्यासो न चिन्तनीय इत्यत आह पादत्रयेति ॥ २११ ॥

इदानी क्रमप्राप्त महायमक लक्षयन्नाह । एकाकारेति । द्विविधमेकाकार भवति । एकमावृत्तिचतुष्कं ण अपरमावृत्त्यष्टकेन तदिदमुक्तमाद्य पुनरनावृत्तमिति । प्रतिपादमवान्तरावृत्तिभेदेनैव अष्टकनिर्वाहात ॥ २१२ ॥

भास' कान्तिर्मानश्चित्तसमुन्नति पूजा वा भास शकुविधूनन हंस स्वैरता । एतै सह वर्त्तते इति सभासमाना सहसा । यतोऽपराग चित्तकालुष्यमत्ति । भासमानै. शोभमानै सह वर्त्तते । सभासमाना । सहसा मार्गशीर्षेण हेतुना प्रावृड्विच्छेद प्रादुर्भूतान् परागान् रज कणान् अतति प्राप्नोति परागात् । भाकान्तिस्तया समाना सरूपास्तै सहवर्त्तत इति सभासमाना । षोऽन्तकर्मणि । स्यन्ति परानिति ते सास्तै सहवर्त्तत इति सहसा एवम्भूता असमाना अनुपमा

व्यपेतभेदे द्वितीयं महायमकं यथा,

प्रणवमदभ्रमदचलद्विपराजितमूढविमलमहिततरङ्गम् ।
विरसं सदातिमिश्रितमच्युतधाम प्रतीतशिखिचरितवनम् ॥
॥ २१४ ॥

अव्यपेतभेदे पादस्य पुनरभ्यासो यथा,

समानयास मानया समानयासमानया ।
समानयास मानया समान या समानया ॥ २१५ ॥
एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः ।

---

सभाजनसमवायोऽपरागादपरस्मात् पर्वतात् सहसा शीघ्रं परागात् परागतेति ॥ २१३ ॥

प्रवणं प्रकृष्टतरवनं प्रनिरन्तः शरित्यादिना णत्वम् । अदभ्रेण महता मदेन दर्पेण चलन्तो ये वयः पक्षिणस्ते. पराजिता मूढवयो बालाः पक्षिणो यत्र तमलमत्यर्थं पूर्वोक्तरूपानमूढान् वीन् पक्षिणो मलते धारयतीति वा । अहिततरगं भुजङ्गव्याप्तावर्त्तस्थान विरसमतलस्पर्शं तथा भूभागरहितं सदा सर्वकाल तिमिभिर्महामत्स्यैः श्रितमाश्रितमच्युतस्य भगवतो नारायणस्य धाम विश्रान्तिस्थानं प्रतीतः प्रख्यातः शिखी वडवानलस्तेन चरितवनं भक्षितजलोत्पीडमिति प्रथमश्लोकार्थः । प्रवणमदाः मदायत्तदर्पाः. सततनिस्यन्दमानमदजलाश्च भ्रमन्तो ये सैनाकप्रभृतयः अचला द्विपा करिमकराश्च तैः शोभितम् । ऊढा विमला स्वभावनिर्मलाः महिता पूजिताः तरङ्गा येन तम् । विरस क्षारम् । सतीभिः शोभनाभिरातिभिः पक्षिविशेषैः. मिश्रित करम्बित न च्युत धाम तेजो यस्य तं प्रतीताः प्रत्यागताः शिखिनो मयूराः तैश्चरितवनं भ्रान्ततीरकाननं समुद्रं पश्येति वाक्यान्तरवर्त्तिक्रियया सम्बन्ध इति द्वितीयश्लोकार्थः ॥ २१४ ॥

समानयेति । हे समान सखि या असमानया अविनयवतीनां धुरि गणनीयया अनयोः समानया समानया यास यः प्रयत्नोमान ईर्ष्यारोषस्तौ समानौ यस्या तया तथा समानया चित्तानुस्मृतिसारूप्य भजमानया पूजा सहितया असमानया अनुपमया सत्व मा मासमानय सङ्गमयेति मन्मथोन्मादाविष्टस्य कस्यचिद्वयस्यप्रार्थना ॥ २१५ ॥

तन्त्रेण यत् स शब्दज्ञैः श्लेष इत्यभिशब्दितः॥ २१६॥
प्रकृतिप्रत्ययोत्थौ द्वौ विभक्तिवचनाश्रयौ।
पदभाषोद्भवौ चेति शब्दश्लेषा भवन्ति षट्॥ २१७॥

तेषु प्रकृतिश्लेषो यथा,

आत्मनश्च परेषाञ्च प्रतापस्तव कीर्त्तिनुत्।
भयकृन्नृपते बाहुर्द्विषाञ्च सुहृदाञ्च ते॥

अत्र कीर्त्तिनुदित्यत्र नौतिनुदत्योर्भयकृदित्यत्र करोति कृन्तत्योश्च प्रकृत्योः क्विपि तुल्यं रूपमिति प्रकृतिश्लेषोऽयम्॥ २१८॥

लिङ्गश्लेषोऽपि प्रकृतिश्लेष एव स यथा,

कुवलयदलच्युतासौ दृशा च वपुषा च कं न दर्शयते।
अधरीकृतप्रवालश्रियाञ्चिताऽऽस्येन च नतभ्रूः॥

---

वर्णावृत्तिसामान्याद्यमकानन्तरं श्लेषं लक्षयति। एकरूपेणेति। अर्थभेदेन शब्दा भिद्यन्त इति नये कथमेकेन वाक्येन द्वयोरुक्तिरित्यत आह। तन्त्रेणेति। श्लेषो हि सर्वं दलक्षणः स चाच भिन्नानामपि शब्दानाम् उच्चारणं साम्येन प्रवर्त्तते। अनेकसम्बन्धा नामैकरूप्येण वर्त्तनं तन्त्रमित्युच्यते॥ २१६॥

द्वयोरिति सङ्ख्या न विवक्षिता। त्रिप्रकृतीनामपि श्लेषसम्भवात्। विभासवाक्ये विभक्तीनां साक्षात् उपादानात् प्रत्ययपदं तदन्यपरं विशेषशोभाकरत्वं च विशेषोपादानप्रयोजनम्॥ २१७॥

आत्मनः कीर्त्तिं नौति स्तौति परेषां शत्रूणां च नुदति क्षिपति द्विषां भयङ्करोति जनयति सुहृदां च भिनत्तीति धातुरूपप्रकृतिभेदादेवार्थभेदः क्विप्प्रत्ययस्य साधारण्यात्॥ २१८॥

ननु वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानामिति कैश्चित्परिसङ्ख्यातं ततश्चाष्टधा श्लेषो भविष्यतीत्यत आह। लिङ्गश्लेषोऽपीति। तदिदमुदाहरणीयमित्याह। स यथेति। दर्शयत इत्यात्मनेपदेन तटस्थमपि कं न इठाद्दर्शनाय प्रेरयति इति व्यज्यते। अधरीकृता जिता अधरत्वमापादिता च।

अत्र दृग्वपुषोरास्यचरणयोश्च कुवलयद्युतेत्यधरीकृतप्रवालश्रियेति च लिङ्गभेदेऽपि तुल्यरूपे विशेषणे इति लिङ्गश्लेषोऽयम् ॥ २१९ ॥

प्रत्ययश्लेषः सोद्भेदो निरुद्भेदश्च तयोराद्यो यथा,

तस्या विनापि हारेण निसर्गादेव हारिणौ ।
जनयामासतुः कस्य विस्मयं न पयोधरौ ॥

अत्र हारिणाविति इनिणिनिप्रत्यययोरेकरूपत्वाद्विनापि हारेणेति च मत्वर्थीयोद्भेदात् सोद्भेदः प्रत्ययश्लेषोऽयम् ॥२२०॥

द्वितीयो यथा,

त्वदुद्धृता मयस्थानरूढव्रणकिणाकृतिः ।
विभाति हरिणीभूता शशिनो लाञ्छनच्छविः ॥

अत्र हरिणीभूतेति च्विङीपश्च तुल्यरूपतायां तदुद्भेदो नास्तीत्यनुद्भेदः प्रत्ययश्लेषोऽयम् ॥ २२१ ॥

---

ननु च कुवलयदलद्युतेति अधरीकृतप्रवालश्रियेति च प्रकृतिभागो न भिद्यते । तत्कथमय प्रकृतिश्लेष इति । नैतत् । आविष्टलिङ्गद्वयविशेष्यलिङ्गद्वयसन्निधानात् अनाविष्टलिङ्ग विशेषणमवश्यम् उभयलिङ्गग्राहि वाच्यम् । पञ्चकप्रातिपदिकार्थपक्षे विभक्तिर्द्योतिकैव तथाच लिङ्गभेद इति विभिन्ने विशेषणप्रकृती मिथः सश्लिष्टे इति । अत्रेत्यादि ॥ २१९ ॥

तद्वाक्यस्थशब्दान्तरप्रकाशितः सोद्भेदो तथाभूतो निरुद्भेदः । मत्वर्थीये निप्रत्यये हारवन्तौ हारिणौ । अवश्यकार्थणिनिप्रत्यये सहृदयाना मनोहरत इति हारिणौ आनन्दघनरसचर्वणारूपो विस्मयो अद्भुतं च । अपिशब्देन विरोधद्योतकेन हारहीनयोरपि हारसम्बन्धो विस्मयरसार्पक इति मत्वर्थीयोन्मुद्रणात् सोद्भेदः । प्रत्ययश्लेषस्तु कथ भवतीत्यत आह । णिनिप्रत्यययोरिति ॥ २२० ॥

व्रणरूढिस्थान श्यामं भवतीति लाञ्छनच्छायाभूता कीदृशी हरिणी हरिता वर्णादनुदात्तात्तोपधाण्णीन इति ङीपि नादेशे च रूपम् । सेयं प्रतीयमान

विभक्तिश्लेषो द्विधा भिन्नजातीययोः अभिन्नजातीययोश्च।

तयोराद्यो यथा,

विषं निजगले येन बभ्रे च भुजगप्रभुः।
देहे येनाङ्गजो दध्रे जाया च स जयत्यजः॥

अत्र येन विषं निजगले भुजगराजश्च निजगले बभ्रे अङ्गजो देहे जाया च देहे दध्रे इति लिडात्मनेपदप्रथमपुरुषैकवचनसप्तम्येकवचनान्तयोः एकरूपत्वात् विभिन्नार्थत्वात् भिन्नजातीसुप्तिङ् विभक्तिश्लेषोऽयम्॥ २२२॥

द्वितीयो यथा,

त्वमेव धातुः पूर्वोऽसि त्वमेव प्रत्ययः परः।
अनाख्यातं न ते किञ्चिन्नाथ केनोपमीयसे॥

अत्र धातुरिति प्रथमान्तस्य षष्ठ्यन्तस्य च एकरूपत्वात् भिन्नार्थत्वात् च अभिन्नजातीयसुब्विभक्तिश्लेषोऽयम्॥ २२३॥

---

गुणा नोत्प्रेक्षा। अहरिणरूपापि व्यवहारारूढहरिणतामापन्नेति च्विप्रत्यये च हरिणीभूते रूपम्। अत्र ङीपश्च्वेर्वा न किञ्चिद्भेदकं निषद्धमिति निरुद्भेदः प्रत्ययश्लेषोऽयम्। हरितहरिणरूपे प्रकृती अपि सभिन्ने एव। सङ्करस्य अदूषणत्वात्। एवं पूर्वोदाहरणेऽपि॥ २२१॥

निजगल इति गिरतेः कर्मणि लिटि रूपम्। येन विषं कालकूटाख्यं निगीर्णं निजे च गले कण्ठे भुजगराजो धृतो देह इति दहते तत्रैव रूपम्। अङ्गजः कामो येन दग्धः निजे च देहे शरीरे जाया पार्वती धृता स जयतीति। विवरणग्रन्थ सुबोध एव॥ २२२॥

धातुः जगन्निर्मातुरपि पूर्वं इत्यनेनादित्वमुक्तम्। परः प्रत्ययः कारणत्रयरूप न किञ्चिदनाख्यातम्। श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धावदानत्वात्। द्वितीयस्य अभावात् न केनचित् उपमानम्। अर्थान्तरे तु धातुः क्रियावचनशब्दरूपः पूर्वं एव प्रकृतित्वात् ततः परः प्रत्ययः तिङादिरतः सर्वमाख्यातमेव पदं निष्पद्यते तेन च कथमुपमा न हि तिङन्तेनोपमानमस्ति भिन्नार्थत्वाच्चेति शब्दभेद-

वचनश्लेषो द्विधा सोद्भेदो निरुद्भेदश्च ।

तयोः सोद्भेदो यथा,

प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ।
मुक्तात्मानः शिवं नेमिरन्येऽपि ददतां जिनाः ॥

अत्र नेमिः इत्यन्येऽपीति एकवचनबहुवचनाभ्यां ददतामित्यत्र तिङन्ते प्राज्यप्रभावः प्रभव इत्यादिषु च सुबन्तेषु एकवचनबहुवचनयोः उद्भेद इत्ययं सोद्भेदो नाम वचनश्लेषः ॥ २२४ ॥

निरुद्भेदो यथा,

तनुत्वरमणीयस्य मध्यस्य च भुजस्य च ।
अभवन्नितरां तस्या वलयः कान्तिवृद्धये ॥

अत्राभवन्निति वलय इति पदयोस्तिङन्तसुबन्तयोः एकवचनबहुवचने अनुद्भिन्ने एव श्लिष्येते इत्ययं निरुद्भेदो नाम वचनश्लेषः ॥ २२५ ॥

पदश्लेषो यथा,

अरिभिदः पलाशश्च बाहुः कल्पद्रुमश्च ते ।

---

दृढीकरणार्थमुक्तम् । एवं तिङामपि सभेद उदाहरणीयो यथा । माद्यन्तु नाम कवयस्तथापि विदितश्रमाः । वेदविद्यापतिर्वाचामह वाचीरिवान्तरम् । अत्र वेदेति प्रथमोत्तमयोः पुरुषयोरेकवचने श्लिष्येते ॥ २२३ ॥

अत्र नेमिरिति । एकवचनबहुवचनाभ्यां विशेषणेषु सम्बन्धयोग्यताक्षेपात् तिङ्वचनेषु सुब्वचनेषु च यथायथमर्थद्वयोन्मीलनाच्छब्दरूपद्वयोद्भेदः । एकवचनेन वलयः कङ्कणं बहुवचनेन च मध्यरेखा इति सुबन्तपदे । एतदौचित्ये तिङन्तपदे च अभवन्निति वचनद्वयलाभः । न च अनयो' किञ्चिदुद्भेदकं निबद्धमिति निरुद्भेदोऽयं तदेतदाह । अत्रेत्यादि ॥ २२४ ॥ २२५ ॥

बालेवोद्यानमालेयं सालकाननशोभिनी ॥

अत्र प्रकृतिप्रत्ययविभक्तिवचनानां पृथगभिधानादभिधानमालोक्तानि प्रातिपदिकान्येव पदशब्देन उच्यन्ते। तेन पूर्वार्द्धे शत्रुमेदोमांसादस्ते बाहुरित्यर्थेनारिमेदपलाशाख्यद्रुमनाम्नीति श्लिष्येते॥ उत्तरार्द्धे सालानां काननेन शोभते इत्येवंशीलेयमुद्यानमालेव द्वार्थेन सालकेन आननेन शोभत इत्येवंशीला बालेत्युपमानार्थः श्लिष्यते स एष पदश्लेषो नाम शब्दश्लेषः॥ २२६ ॥

वर्णश्लेषोऽपि पदश्लेष एव। स यथा,

> त्वमेव देव पातालमाशानां त्वं निबन्धनम्।
> त्वञ्चामरमरुद्भूमिरेको लोकत्रयात्मकः॥

अत्र त्वमेव पातालमित्यकारः पाश्चात्ये, त्वं च अमरमरु-

---

अरीणां मेदः शरीरधातुभेदः पलं मांसमश्नाति यः स तथा चकार उत्तरवाक्यापेक्षया। अरिमेदो विट्खदिरः पलाशः किंशुकः शालास्तरुविशेषाः तेषां काननमलकाश्चूर्णकुन्तलाः तत्सहितमाननञ्च। पूर्वोत्तरार्द्धयोः न एकवाक्यत्वमुदाहरणत्वात्। ननु विभक्त्यन्तात् नान्यत्पदं तत्र पूर्वभागेन प्रकृतिश्लेष उत्तरभागेन च प्रत्ययश्लेष उद्दिष्ट एव तत् कोऽन्यः पदश्लेष इत्यत आह। अत्रेति। प्रकृतिप्रत्ययभावविवक्षाविरहेनामामालोक्तानि प्रातिपदिकान्येव अवशिष्यन्त इत्यर्थः ॥२२६॥

"अलङ्कारः शङ्काकरनरकपाल परिजनो विशीर्णाङ्गो भृङ्गीवसु च वृष एको बहुवयाः। अवस्थेयं स्थाणोरपि भवति सर्वामरगुरोर्विधौ वक्रे मूर्ध्नि स्थितवति वय के पुनरमी। इति वर्णश्लेष. काश्मीरकैः पृथगुदाहृत अत आह। वर्णश्लेषोऽपीति। अवयवाभेदे समुदायभेदासम्भवादवयवभेदे च समुदायभेदध्रौव्यात्पदश्लेषव्यवस्थितौ तत्रैवास्य अन्तर्भावो युक्त इति भावः। अथमर्थः पाताले रक्षिता आशाना निबन्धन मनोरथसफलीकरणबीजमाशानां दिशां सश्लेषस्थानं चामरमरुद्भूमिः स्वर्लोको अमराणाम् इन्द्रादीना भूमिरमराणां वन्यादिर्मरुतां च विवहादीना.भूतिर्वैमानिकपथश्च अमरमरुद्भूमिश्च अमरभवमरुतामाश्रयश्च। कथमत्र

ङ्गुमिरिति चकारः पौरस्त्येऽम्बरे श्लिष्टः पातालञ्चामरेति च पदं रचयति। सोऽयं पदश्लेष एव वर्णश्लेष उच्यते ॥ २२७ ॥

भाषाश्लेषो यथा,

कुरु लालसभूलेहे महिमोहहरे तुहारिविच्छिन्ने।
हरिणारिसारदेहे वरे वरं हर उमे भावम् ॥

अत्र, "ध्यानानीताञ्चरुद्राणीं कान्ताञ्च पुरतः स्थिताम्। रणेच्छुः कश्चिदानर्चे दिव्यप्राकृतया गिरा ॥" तत्र रुद्राणीपक्षे हे उमे हरे भवे वर श्रेष्ठ भावं कुरु किंभूते लालसभूलेहे लालसभूः कामस्तं लेढि यस्तस्मिन् तथा महिम्ना प्रभावेण ऊह वितर्कमपहरति यस्तस्मिन् महिमोहहरे महेश्वरसन्निधौ हि सर्वज्ञानाभिभव इति श्रूयते। अतएव तोहन्ति अर्दयन्ति ये अरयस्तैर्विच्छिन्ने विरहिते अपरमध्यरीणां विच्छेदकारण-माह। हरिणारिसारदेहे हरिणारिः सिंहस्तस्य सारो बलं स देहे यस्य तस्मिन् वरे परिश्लेतरीति। उमाया एव वा

---

वर्णश्लेष इत्यत आह। अत्रेत्यादि। पतिचण्डिभ्यामालञ् इति पतेरालञ्-प्रत्यये पातालमिति रूपसिद्धावाकार एव मध्यवर्त्तिवर्णस्तत्रैव पुनरेकदेशप्रतिसन्धाने पातालमित्याकारश्च प्रतीयते। अत्र चैकः पूर्वपरयोरितिवचनादाकार एव श्रूयते तेनोत्तरः पौरस्त्येन सभिन्नः। एवं चकारस्य उत्तरसम्बन्धौ व्याख्येय. ॥ २२७ ॥

दिव्या संस्कृता कृत्रिमा प्राकृता महाराष्ट्री भावश्चेतसो लयो लालस इच्छा तस्मात् भवतीति लालस भूः सङ्कल्पयोनित्वात्कामस्त लेढीति कर्मण्यण्। ऊहस्तर्क संशयपृष्टभावी विपरीतप्रत्ययविशेष.। कथ न हरतीत्यत आह। महेश्वर-सन्निधौ इति। सन्निधिः साक्षात्काररूप' सर्वज्ञानानि संस्कारप्रवर्त्तकानि। तुहिर् अर्दने तोहतीति इगुपधत्वात् कप्रत्यये तुहा अरयो द्विधा आन्तरा बाह्याश्च। आन्तरा मदमानादयः षट्। बाह्याः चौरापहारकादयः। तत्र पूर्वविच्छेदे

इमानि सम्बोधनविशेषणानि। कान्तापक्षे तु हे कान्ते तव योऽयं हरिनार्य्याः श्रियाः सार उत्कृष्टो देहस्तत्र यद्वरं श्रेष्ठं विलोचनाननस्तनजघनादि तन्मे भावमभिलाषं हरतु कामं पूरयतु इत्यर्थः। किम्भूते देहे, कुटिलालसम्भूलेखे महिमोह-हरे महे हारिणि विच्छिन्ने च तनुमध्यत्वादिभिरिति ॥२२८॥

यथा वा,

रुचिरं जितारिहेति जननमितं सामकायमकलङ्कम्।
सन्तमसितञ्च मानय कमलासनमभिविराजन्तम् ॥
भूतसंस्कृतभाषाभ्यां द्विर्नमस्कृत्य माधवम्।
जगाम समरं कोऽपि कस्य श्रेयसि तत्परः ॥

तत्र भूतभाषायां यथा, रुचिरं मनोहरं जितारिहेतिं भग्नसपत्नायुधं जनैर्नमितं श्यामकायमकलङ्कं शान्तं शान्त-रूपम् असितम् अनन्तं च समुच्चये कमलासनं ब्रह्माणम्

---

च हरिणारिसारदेहत्व हेतुकी हरिणारिसार इव सारो यस्य इति उत्तरपदलोपे-हरिणारिसारो देहो यस्येति विग्रहवाक्यमवसेयम्। यथा श्रुत्यथकथनमात्र-सुमाया एवेत्यत्र जातस भूतिह इत्यच्प्रत्यये व्याख्येयम्। तुशब्दस्त्वर्थे। तुतुवतु मतुब्मतुभ्याञ्च इति सूत्रणात्। हरिनारी लक्ष्मी तस्याः सकाशात् सारः प्रकर्षशाली देहः। पञ्चमीति योगविभागात् समासः। कुरलाश्चूर्णकुन्तलाः। महीशब्देन भूगोलवर्त्तिनः प्राणिनोऽभिमता तेषां मोहगृह इति व्याख्येयम् विच्छिन्नो विभक्तावयवः ॥ २२८ ॥

एवं पैशाचादिभिरपि संस्कृतस्य प्राकृतादेश्च परस्परसम्भेदनात् श्लेषो गवे-षणीय इत्याशयवानाह। यथावेति। अकलङ्कं दोषरहितं मानयेति धात्व-र्थस्य भाव्यत्वेन अन्वयात् पूजां कुर्वित्यर्थः। ब्रह्माणमभिलक्षीकृत्येति। रुचय आत्मीया अरा विद्यन्ते यस्य तदरिचक्रं हेतयः किरणाः जननं जन्म सामानि कायति कीर्त्तयतीति अपवादविषये क्वचित् उत्सर्गः प्रवर्त्तत इति कर्मण्यण्। कला अवयवाः प्रसिद्धौ। वीनां पक्षिणां राजा गरुडस्तमभि इतं गतं कमला

अभिलक्ष्मीकृत्य विराजन्तं शोभमानं मानय पूजयेति ॥ संस्कृतभाषायां यथा। रुचिभिः रञ्जिता अरिहेतयः चक्रदीप्तयः येन तं, जननैः दशभिरवतारैर्मितं परिच्छिन्नं, सामानि कायति गायति यः स सामकायः तं, न विद्यते कला यस्य सोऽकलस्तं, कं सन्तं ब्रह्माणं सन्तम्, अं विष्णुम् इतं गतम्, अभि विराजं तं गरुत्मन्तमभिसन्तं तं प्रसिद्धं कमलासनं श्रिया संसक्तं मा नय मा प्रापयेति ॥ २२९ ॥

आवृत्तिर्या तु वर्णानां नातिदूरान्तरस्थिता।
अलङ्कारस्य विद्वद्भिरनुप्रासः प्रदर्श्यते ॥ २३० ॥
श्रुतिभिर्वृत्तिभिर्वर्णैः पदैर्नाम्नि द्विरुक्तिभिः।

---

लक्ष्मीस्तस्या आसनमधिष्ठानं मा नानयेति ॥ अनुप्रासावृत्ते र्चित्रात् उत्कटावृत्तिमनुप्रासं पूर्वं लक्षयति। आवृत्तिरिति। वर्णानामिति। वचनमतन्त्रम्। मार. सारस्वतीसूक्तिरित्यादौ एकवर्णावृत्तेरपि अनुप्रासत्वात्। तेन यमकव्यतिरिक्ता वर्णावृत्तिरनुप्रास इति लक्षणमुक्तं भवति। न च श्लेषेति प्रसङ्गः। तन्त्राभ्यां विशेषात्। पूर्वजातिप्रतिबिम्बनेन तत्पश्चायार्थकतयानुप्रासं अलङ्कारपदवीमध्यास्ते। न च निर्निमित्तमेव प्रतिबिम्बनमत आह। नातिदूरेति। अस्ति कश्चिदुच्चारणस्य ज्ञानस्य वा विशेषो यः शीघ्रमेव संस्कारमुद्बोधयतीति तद्वती वर्णावृत्तिः अभिप्रेता। अतएव प्राचीनवर्णजात्यनुगत. सहृदयावर्जकतया प्रकृष्टस्य वर्णानामनुप्रास इति काश्मीरिका निरुक्तिः ॥ २२९ ॥

एवं स्थिते सामान्यलक्षणविभागमाह। श्रुतिभिरिति। आवृत्तिर्द्विधा। वर्णमात्रावलम्बिनी समुदायगोचरा च। आद्यापि द्वयी। सामान्यतो रूपतश्च। सामान्यमपि द्विधा। स्थानतो व्यापारतश्च। तत्र स्थानं कण्ठादिलक्षणमेव श्रुतिः। श्रूयते हि तयाभिव्यक्तो वर्णो व्यापारोऽभिव्यञ्जनरूपः स एव रसविषये वर्तन वृत्तिरुच्यते। श्रुतिभिरित्यादौ इत्थम्भूतलक्षणे तृतीया प्रायेणेति ॥ २३० ॥

श्रुत्यनुप्रासो हि श्लेषघटकं श्लेषस्य गुणान्तरसमकक्षतया अवतिष्ठमानो... प्रयोजयति। अनुप्रासान्तरं तु प्रौढिं वा माधुर्यं वा प्रकर्षयतीति न

लाटानामुक्तिभिश्चायं षट्प्रकारः प्रकाशते ॥ २३१ ॥
प्रायेण श्रुत्यनुप्रासस्तेष्वनुप्राससनाथया ।
सनाथेव हि वैदर्भी भाति तेन विचित्रिता ॥ २३२ ॥
निवेशयति वाग्देवी प्रतिभानवतः कवेः ।
पुण्यैरसुमनुप्रासं रससमाधिनि चेतसि ॥ २३३ ॥

स त्रिधा ग्राम्यो नागर उपनागरश्च। तेषु ग्राम्यश्चतुर्धा मसृणो वर्णमसृणो वर्णोत्कटो वर्णानुत्कटश्च ॥

तेषां मसृणो यथा,

एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः ।

---

तथानुकूल्य कविशक्तिवशात् क्वचित् तदपि प्रयोगयतीति प्रायपदेन सूचितम् । स्थितिप्रयोजको लोकनाथ इत्युच्यते तेषु नायक इत्येव वक्ष्ये पुनरनुप्रासपदमनुप्रासान्तरसाधारण्येनैव शब्दालङ्कारत्वं दर्शयितुम् अभिसमाधेयम् । विचित्रिता आलेख्यमिव लेखया चमत्कारकारित्वमानीता ॥ २३१

कथ पुनरस्य अनुप्रासस्य पृथक्प्रयत्नानुसन्धेयस्यापि रसप्रकाशसामर्थ्यानन्तर्भाव इत्यत आह । निवेशयतीति । अक्लिष्टपदवाक्याद्यस्फुरणं प्रतिभानं तदेव कथमित्यत आह । स समाधिनीति । पुण्यैरिति । तेन रसवत्त्वे व्यवस्थितस्य कवेरेष पूर्विकाक्रष्टोऽनुप्रासो न पृथक्प्रयत्ननिर्वर्त्य इति तात्पर्यम् । ग्राम्यादिभेदोऽग्रे विवरिष्यते ॥ २३२ ॥

एकपदप्रतिभाससमावानुमेयो मसृणः । रूपसाजात्येऽपि मसृणतान्यग्भूतो वर्णमसृणः । उद्भटरूपसाजात्यानुविद्धो वर्णोत्कटः । अनुद्भटसाजात्यानुरोधेन किञ्चित् अभिभूतमसृणभावो वर्णानुत्कटः । एष राजेत्यादौ उदाहरणे षकाररेफौ मूर्द्धन्यौ । जकारयकारौ तालव्यौ दकारलकारौ दन्त्याविति प्रथमपादे तकारदकारौ दन्त्यौ पकारभकारावोष्ठ्यौ नकारधकारौ दन्त्याविति तृतीयपादे च निरन्तर द्वितीयपादे रेफणकारौ मूर्द्धन्यौ चतुर्थपादे लकारसकारौ दन्त्यादिविनाक्रमेण सान्तरमावर्त्तन नवरूपसाजात्यं क्वचिदुल्लिखतीति मसृण एवायम् ॥ २३३ ॥

अचित्रतन्तुमयः पटः । एकजातीयकुसुमग्रथनात् माक्स्थिता इत्यादि ॥

तदा प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥

अत्र स्थानतः समानश्रुतीनां मूर्द्धन्यतालव्यदन्त्योष्ठ्यकण्ठ्य-वर्णानां प्रथमतृतीयपादयोर्निरन्तरा द्वितीयचतुर्थपादयोश्च सान्तरा पट इव स्रग्दाम्नीव वा वर्णप्रदानान्मसृणैवावृत्तिः। सोऽयं श्रुत्यनुप्रासो मसृण इत्युच्यते ॥ २३४ ॥

वर्णमसृणो यथा,

> स्थिता क्षणं पक्ष्मसु ताडिताधराः
> पयोधरोत्सेधनिपातचूर्णिताः।
> वलीषु तस्याः स्खलिताः प्रपेदिरे
> चिरेण नाभिं प्रथमोदबिन्दवः ॥

अत्र दन्त्यौ मूर्द्धन्यावोष्ठ्यौ डलयोरैक्येन दन्त्यपञ्चकं मूर्द्धन्य इत्यादिक्रमेण यद्यपि पूर्ववत् स्थानतः समानश्रुतितया मसृणैवावृत्तिः तथापि चित्रपट इव माल्यग्रथन इव वा। योऽय क्षण पक्ष्मसु ताडिताधराः पयोधरो वली स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दव इति नानावर्णात्मकः

---

अत्र थकारतकारादी दन्त्यौ। षकारणकारौ मूर्द्धन्यौ। पकारमकारौ ओष्ठ्यौ। ताडितेत्यत्र डकारे लकारकल्पनया। स्तनतटपा. पञ्च दन्त्याश्च रेफो मूर्द्धन्य इति प्रथमपादे। द्वितीयपादे च थकारसकारौ नकारतकारौ दन्त्यौ इत्यादिना क्रमेण सान्तरा निरन्तरा च श्रुतित एव वर्णावृत्तिः पूर्ववत् उपलभ्यते। किन्तु तकारादीनां रूपतोऽपि स्थाने स्थाने पूर्वसवर्णता न्यग्भूतैव प्रावृत्तिस्तेनायं वर्णमसृणः श्रुतिसाजात्यं च न क्वचिद्विघटते। अत्रैव निदर्शनद्वयम्। विलुच्येति। हारोचितसन्निवेशयोरपि स्तनयोरनुचितवल्कलबन्धसम्भावने हेतुरहार्यनिश्चयेति। अतएव मा मा कोऽपि वारयेदिति कातरता प्रादुर्भावादितस्ततो विलोलदृष्टिः। अत्र भकारमकारौ ओष्ठ्यौ। चकारयकारौ तालव्यौ इत्यादिना क्रमेण मसृणा इकारादीनां रूपसाजात्येऽपि मसृणता माधा-

सूत्रान्तरस्येव पुष्पान्तरस्येव वा स्थानभेदेन मसृण एव निवेशः । तेनैष श्रुत्यनुप्रासो वर्णमसृण इत्युच्यते ॥ २३५ ॥

वर्णोत्कटो यथा,

विमुच्य सा हारमहार्य्यनिश्चया विलोलदृष्टिः प्रविलुप्तचन्दना ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥

अत्र सर्वं पूर्ववत् । किन्तु तृतीयपादे बबन्ध बालारुणबभ्रु-वल्कलमिति वर्णाधिक्ययोगः । सोऽयं वर्णोत्कटो नाम श्रुत्यनुप्रासः ॥ २३६ ॥

वर्णानुत्कटो यथा,

ततः प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥

अत्र दन्त्यवर्णप्रायतया अतिमसृणत्वे शिलातलेषु इति दन्त्यवर्णाभ्यासेव वर्णस्तोमो दत्तः । सोऽयं वर्णानुत्कटो नाम श्रुत्यनुप्रासः । तेऽमी चत्वारः अपि अतिप्रसिद्धतया ग्राम्या उच्यन्ते ॥ २३७ ॥

---

न्याद्वर्णमसृणा च आवृत्तिरित्याह । अत्र सर्वमिति । वर्णोत्कटत्व व्याचष्टे । वर्णाधिक्ययोग इति । उद्भट हि रूपसाजात्य वर्णोत्कटत्वम् । तच्च सदृपवर्णावृत्त्याधिक्येन इतीत्यर्थः ॥ २३४ ॥ २३५ ॥

तत' प्रभृतीति । तापोद्रिकावृत्त' दत्तमेव चन्दनमाम्लानभावेन रेणुभिरलकच्छटासु विशीर्य्यत इति द्वितीयकामावेशो ध्वनितः । अत्र तकारनकारौ दकारनकारौ इत्यादिना क्रमेण श्लोकसमाप्ति यावत् बहवो दन्त्याः तेनैकश्रुतिव्याप्तस्य सन्दर्भस्य मसृणतायामतिशय । शिलातलेति रूपसाजात्येन लकारौ उदभूतश्रुतिकौ न च अधिकावृत्तिः अत्र असत्यनुत्कटता । न च श्रुते. उद्भवेऽपि मसृणता

ग्राम्यवैपरीत्येन नातिप्रसिद्धो नागरः। यथोच्यते,

एकत्वबुद्धिर्भेदेऽपि तत्त्वेऽप्येकत्वनिह्नवः।
यस्य वर्णस्य तं प्राहुरनुप्रासस्य जीवितम्॥

तत्र भेदेऽप्येकत्वबुद्ध्या समानस्थानयोर्यथा,

हरेर्लङ्घितघर्मांशुर्व्योम्नि दीर्घेण रंहसा।
बलिबन्धनघोरोऽङ्घ्रिरंहःसङ्घं निहन्तु वः॥

अत्र हकारस्य तुल्यस्थानेन घकारेण सह भेदेऽपि एकत्वबुद्धेस्तुल्यश्रुतित्वमिति भेदेऽपि एकत्वबुद्ध्या नागरानुप्रासोऽयम्॥ २३८॥

तथैवासमस्थानयोर्यथा,

उच्छलन्मत्स्यपुच्छाग्रदण्डपाताहताम्भसि।

---

न प्रक्षीयत इति वर्णानुत्कटोऽयम्। ग्राम्यत्वं व्याचष्टे। तेऽमीचत्वारोऽपीति। श्रुतिसाजात्यस्य ग्रन्थानुप्रासनेऽपि प्रसिद्धेरतिप्रसिद्धत्वम्॥ २३६॥ २३७॥

ग्राम्यवैपरीत्येनेति। ग्राम्यविरुद्धस्वभावो हि लोके नागर इत्युच्यते। अतिप्रसिद्धेरभावो विरोधः तेनालङ्कारसमयोपजीविपक्षप्रसिद्धिः अनतिप्रसिद्धिः इत्युक्तं भवति। एतदेव पूर्वाचार्यमतेन विशदयति। यथोच्यत इति। एकश्रुतिकतया मानं हि श्रुतिसाजात्यमभिमतम्। श्रुतिश्च वास्तवीप्रतिपादनमात्रारूढा वेति न कश्चिद्विशेषः ततो भेदेऽपि एकत्वबुध्यानुप्राससिद्धिः। तत्त्वे एकत्वे। आपाततः साजात्यानवभासेऽपि सहृदयप्रणिधानेनावभासनं श्रुत्यनुप्रासप्रयोजकमेव। अनुप्रासस्य। अनुप्रासवतः सन्दर्भस्येत्यर्थः। विजातीययोरैकजात्यप्रतिबिम्बनं द्विधा भवति। स्थानसाम्ये तदसाम्ये च तयोराद्यमुदाहरति। तत्रेति। दीर्घेण रंहसेति। घोरोऽङ्घ्रिरिति। रंहः सङ्घमिति घकारहकाराणां स्थानसाम्येऽपि वैजात्यमस्त्येव। तथा पठितौ तुल्यवच्छ्रुतिः प्रतिभातीति सहृदयहृदयसाक्षिकोऽयमर्थः॥ २३८॥

अत्र त्सच्छकारयोरिति। चछौ तालव्यौ तसौ दन्त्याविति स्थानभेदः

जगदुद्यानमम्भोधावुन्ममज्ज ममज्ज च ॥

अत्र उच्छलन्मत्स्यपुच्छाग्रेति अत्र छकारयोरिव त्सकारस्यापि तुल्यश्रुतित्वमिति असमानस्थानत्वेन भेदेऽपि एकत्वबुद्ध्या नागरानुप्रासोऽयम् ॥ २३९ ॥

तत्त्वेऽप्येकत्वनिह्नवेन डकारवकारयकाराणां यथा,

क्रोड़े मा डिम्भमादाय चण्डि पीड़य वच्चसा।
कर्णे ब्रूहि वयस्याया युवा यदयमुच्यते ॥

अत्र डकारादीनामीषत्स्पृष्टतादिभिरेकत्वेऽपि भेदावभास इति तत्त्वेऽपि एकत्वनिह्नवेन नागरानुप्रासोऽयम् ॥ २४० ॥

तथैव ढकारवकारलकाराणां यथा,

नवोढ़े त्वं कुचाढ्यापि नोपगूढ़ाय ढौकसे।
वहन् वाहुलते क्षीणो वरः पुलकलञ्छिते ॥

---

प्रकाश एव। तथापि पिण्डीभूताभ्यां च सम्मीभूतमध्यपतितौ तसौ समानश्रुतिकाविति पठितौ सौभाग्यमर्पयतः तेनायमसमानस्थानयोरेकत्वबुद्ध्या नागरानु प्रास इति ॥ २३९ ॥

तत्त्वेऽपीति। द्रुतादौ वृत्तिमात्रं भिद्यते न तु रूपमिति महाभाष्यकारोक्तदिशा येषामेकस्थानत्वेऽपि ईषत्स्पृष्टतरत्वादिकृताभेदप्रथाते डकारादयः कतिपयेऽस्य विषयास्तानुद्दिश्य क्रमेणोदाहरति। क्रोड इत्यादि। अङ्कगतस्य बालकस्य वचसा पीडनं सङ्क्रान्तकर्णालिङ्गनमामनन्ति। अनेन किल प्रच्छन्नप्रियगोचरो गाढालिङ्गनमनोरथः प्रकटितो भवति। कर्णयोरुपांशु यदभिधीयते तेन तुल्यमिदमिति विदग्धसहचरीपरिहासोक्तिरियम्। अत्र च क्रोडडिम्भेत्यादौ डकारवकारयकाराणामीषत्स्पृष्टतरत्वादिभेदः श्रुतिसाम्यं च सुप्रसिद्धमेवेति ॥ २४० ॥

ढकारवकारलकाराणामिति। वकारोदाहरणं दत्तमपि वर्णान्तरसरलतया पुनर्दीयते। उपगूढमालिङ्गनम्। अपिशब्दो भिन्नक्रमः। उपगूढायापि

अत्र ढकारादीनामीषत्स्पृष्टतादिभिरेकत्वेऽपि भेदावभास इति तत्त्वेऽपि एकत्वनिह्नवेन नागरानुप्रासोऽयम् ॥ २४१ ॥

उभयगुणयोगात् न अतिप्रसिद्ध उपनागरः। यथोच्यते,

डलयोरैक्यमित्यादिवाक्यैर्यस्यानुमीयते।
समानश्रुतितान्योन्यं सोऽनुप्रासः प्रशस्यते॥

स डलयोरैक्येन यथा,

शयने यस्य शेषाहिः सनीडे वडवानलः।
महासाहसिनामग्र्यं तमीडे जड़शायिनम्॥

सोऽयमुपनागरः श्रुत्यनुप्रासः॥ २४२ ॥

नणयोरैक्येन यथा,

बाणैः क्षुसेषु सैन्येषु त्वया देव रणाङ्गणे।
हतशेषाः श्रयन्ती मे शून्यारण्यानि विद्विषः॥

अत्र क्षुसेषु सैन्येषु शून्यारण्यानि इति नकारणकारयोः स्वल्पश्रुतित्वमेकत्वं वा भासत इति उपनागरोऽय श्रुत्यनुप्रासः॥ २४३ ॥

---

नटीकरो दूरे पततः कच ग्रहादिकेलिषु प्रवृत्तिर्लङ्घनेन सर्वाङ्गीणः पुलकोद्भेदो वहिर्व्यावर्त्तनमन्तरनुवर्त्तनं च मुग्धाङ्गना जातिः। अत्रापि ढकारादीनामीषत्स्पृष्टतादिभेदः सुबोध एव॥ २४१ ॥

उभयगुणयोगादिति। प्रसिद्धाप्रसिद्धौ द्वौ गुणौ। प्रत्यचानुमानरूपोपायभेदादविरोधः तदेतदन्यमतेन विवृणोति। डलयोरैक्यमिति। सनीड, समीपं जलमज्जनशेषाहिवडवानलानामनर्थनिदानतया प्रख्यातानामपि सेवया महासाहसिकानामग्र्यता। अत्र डकारलकारयोर्भिन्नश्रुतिताप्रत्यचत एव। श्रुतिसाम्यं पुनरनुमानात् प्रतीयते। एवमुत्तरोदाहरणेषु अपि बोद्धव्यम्॥ २४२ ॥

क्षुर्ण्णेषु सैन्येष्विति। ग्रन्थिमहिम्ना नकारणकारयोः साम्यप्रतिभासः। रणाङ्गण इति। मध्यवर्त्तिना गयोगेन साम्योन्मुद्रणम्। अङ्गणशब्दोऽधिकरण-

रलयोरैक्येन यथा,

विभिन्नवर्णा गरुड़ाग्रजेन सूर्य्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥

अत्र करीरनीलैरिति रेफलकारयोरैक्येन तुल्यश्रुत्या चतुर्ष्वपि पादेषु अनुप्रासनिर्वहणमित्युपनागरोऽयं श्रुत्यनुप्रासः॥ २४४॥

दन्त्यतालव्यानामैक्येन यथा,

विद्यास्यन्दो वाग्विदां यः प्रसन्नः
पुण्यां वाचं देवतां तां नमामः।
यां ब्रह्माणश्चिन्तयन्तो विशोकाः
सा नो देयात् सूनृतासूनृतानि॥

अत्र दन्त्यतालव्यानामैक्येन तुल्यश्रुतितेत्युपनागरोऽयं श्रुत्यनुप्रासः॥ सर्वेऽपि चानुप्रासाः प्रायेण विसदृशवर्णान्तरिता एव स्वदन्ते। इति ओष्ठ्यकण्ठ्यादीनामिहानुप्रवेशो भवति॥ २४५॥

---

त्युदन्त। पृषोदरादित्वात्साधुव्युत्पादनमनार्षम्। एवं शून्यारण्यानीत्यत्र व्याख्येयम्। आद्यन्तव्याख्यानमुपलक्षणमवसेयम्॥ २४३॥

निरन्तररेफग्रथनावीढस्यैव लकारस्य श्रुतिसाजात्यमुल्लिखतीति तदिदमाह। अत्र करीरनीलैरिति। एतदनुप्राससिद्ध्या चतुर्ष्वपि पादेषु रेफानुप्रासनिर्वहणमपि कविशक्तिव्युत्पत्तिव्यञ्जकमुपपन्नं भवति इत्याह। चतुर्ष्वपीति॥ २४४॥

विद्यास्यन्दः सारस्वतप्रवाहः सैव वाग्देवता शब्दब्रह्मरूपा तच्चिन्तया परब्रह्माधिगमनिःश्रेणीभूतया शोकस्य दृष्टहानिजखेदस्य विच्छेदः। अत्र स्यन्दः प्रसन्न इति दन्त्यौ सकारौ ब्रह्माणश्चिन्तयन्तो विशोका इत्यादिशानादिशौ शकारौ तालव्यौ। पुनरन्ते सा सूनृतानीति त्रयो दन्त्याः, सर्वेषां सम्भूय पाठे तुल्य श्रुति-

यथा ज्योत्स्ना चन्द्रमसं यथा लावण्यमङ्गनाम् ।
अनुप्रासस्तथा काव्यमलङ्कर्त्तुमयं क्षमः ॥ २४६ ॥
अनुप्रासः कविगिरां पदवर्णमयोऽपि यः ।
सोऽप्यनेन स्तवकितः श्रियं कामपि पुष्यति ॥ २४७ ॥
मुहुरावर्त्त्यमानेषु यः स्ववर्गेषु वर्त्तते ।
काव्यव्यापी स सन्दर्भो वृत्तिरित्यभिधीयते ॥ २४८ ॥
कार्णाटी कौन्तली कौङ्की कौङ्कणी वानवासिका ।
द्राविडी माथुरी मात्सी मागधी ताम्रलिप्तिका ॥ २४९ ॥
औड्री पौण्ड्रीति विद्वद्भिः सा द्वादशविधेष्यते ।
अथ लक्षणमेतासां सोदाहरणमुच्यते ॥ २५० ॥

---

तैव प्रतिभासत इति । ननु सजातीयाना निरन्तरभावापे कर्त्तव्ये किमिति विजातीयव्यवहिते आवृत्तिरुदाक्रियत इति अत आह । सर्वेऽपि चेति ॥ २४५ ॥

श्लेषनिर्वाहकतया श्रुत्यनुप्रासोऽलङ्कार इत्युक्तं तच्च सन्दर्भव्यापकतयैव निर्वहतीत्याह । यथेति । ज्योत्स्नालावण्ययोः सर्वाङ्गीणा श्लेषसुभगयोरेवालङ्कारताप्रसिद्धि' ॥ २४६ ॥

नन्वेव मनुप्रासान्तरविषयेऽपि श्रुत्यनुप्रासः प्रसक्तस्तत्र च किमनेन करिष्यत इत्यत आह । अनुप्रासः कविगिरामिति । उक्तं हि "न घटनामन्तरेण काव्यभावः । न च काव्यसपहाय वर्णानुप्रासादीनामात्मलाभ" इति ॥ २४७ ॥

स्ववर्ग्येषु इति । स्वशब्द आत्मीयवचनः स्ववर्गे भवा' स्ववर्ग्या, क च टतपान्तस्थोष्मोपलक्षिताः सप्तवर्गाः स्ववर्ग्येषु वर्त्तत इत्यर्थकथनम् । माणिक्यस्तवकितहारलतावदन्योन्यालम्बनेन परभागलाभ इत्यभिप्रायतया च काव्यव्यापकेनैव सन्दर्भेण निरूप्यमाणा वर्ग्यावृत्तिर्वृत्त्यनुप्रास इति पर्यवसितोऽर्थः । वर्णानुप्रासाङ्गेदो वक्ष्यते ॥ २४८ ॥

कर्णाटादिप्रभवकविहितुवाग्गोचराः कार्णाटीप्रभृतयो न तु वृत्तीना देशैः कश्चिदुपकार. । वनवासनामा दक्षिणापथे रत्ना भगवती चिह्निता देशः । सप्तम्यातोरिति । विधमिति इति परायणम् ॥ २४९ ॥ २५० ॥

तासु कवर्गानुप्रासवती कार्णाटी यथा,

कान्ते कुटिलमालोक्य कर्णकण्डूयनेन किम् ।
कामं कथय कल्याणि किङ्करः करवाणि किम् ॥ २५१ ॥

चवर्गानुप्रासवती कौन्तली यथा,

ज्वलज्जटिलदीपार्च्चिरञ्जनोच्चयचारवः ।
चम्पकेषु चकोराक्षि चञ्चरीकाश्चकासति ॥ २५२ ॥

टवर्गानुप्रासवती कौङ्की यथा,

कुम्भकूटाट्टकुट्टाककुटिलोत्कटपाणिरुट् ।
हरिः करटिपेटेन न द्रष्टुमपि चेष्टते ॥ २५३ ॥

तवर्गानुप्रासवती कौङ्कणी यथा,

मधुर्मधूनि गान्धर्वमन्दिरे मदिरेक्षणा ।
इन्दुरैन्दीवरं दाम काममानन्दयन्ति नः ॥ २५४ ॥

पवर्गानुप्रासवती वानवासिका यथा,

प्रिया प्रगल्भा ताम्बूलं परिस्रुत् फुल्लमुत्पलम् ।
पृषत्काः पञ्चबाणस्य पञ्चमः पञ्चमध्वनिः ॥ २५५ ॥

अन्तःस्थानुप्रासवती द्राविडी यथा,

प्रियालवल्लीतालतमालैलावनावली ।

---

अवहित्थप्रस्तावे कर्णकण्डूयितमोट्टायिताख्यः शृङ्गारभावजो विकारः ॥ २५१ ॥
२५२ ॥

कुम्भकूटं कुम्भाग्रं तदेव अट्टोऽट्टालकः । रुषहिंसायां यथोक्तेन पाणिना रुष-
तीति क्विप् । पेटः समूहः ॥ २५३ ॥

मधुर्वसन्तो गान्धर्वं गीतम् । अत्र धकारदकारानुप्रासैरासमाप्तिनिर्वह-
णम् ॥ २५४ ॥

परिस्रुन्मदिरा । पृषत्का बाणाः पञ्चमः स्वरविशेषः तद्भूयिष्ठो ध्वनिः पञ्चमध्वनिः ॥ २५५ ॥

भाति पत्रलहिन्तालकृतपुण्ड्रा वधूरिव ॥ २५६ ॥

ऊष्मानुप्रासवती माथुरी यथा,

पुष्णती पुष्पधनुषं मुष्णती प्लोषविप्रुषः ।
मिषन्ती निर्निमिषेण चक्षुषा मानुषी न सा ॥ २५७ ॥

द्वित्रिवर्गानुप्रासवती मात्सी यथा,

कोकिलालापवाचालो मामेति मलयानिलः ।
उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥ २५८ ॥

द्वाभ्यां विदर्भितैकवर्ग्या मागधी यथा,

अघोघं नो नृसिंहस्य घनाघनघनध्वनिः ।
हन्याद् घुरघुराघोरः सुदीर्घो घोरघर्घरः ॥ २५९ ॥

स्वान्त्यसंयोगिवर्ग्या ताम्रलिप्तिका यथा,

शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः ।
कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः ॥ २६० ॥

---

पत्रलाः सान्द्रपत्राः सिध्मादेः आकृतिगणत्वाल्लच् । पुण्ड्रन्तिलकः । अत्र लकारवकारानुप्रासाभ्यां सन्दर्भनिर्वाहः ॥ २५६ ॥

प्लोषो विरहदाहस्तस्य विप्रुषस्तीक्ष्णा भागास्तेऽमी समशुद्धा एव वृत्त्यनुप्रासाः ॥ २५७ ॥

सङ्कीर्णाः पुनरन्ये पञ्च भवन्ति । तत्र सङ्करो द्विधा । विजातीयसवर्णमिश्रणं सम्भेदेन संयोगरूपता च । कोकिलालापेत्यादौ कवर्गान्तस्थचवर्गानुप्रासाः स्फुटा एव । संयोगस्तु विद्यमानोऽपि न विवक्षितः ॥ २५८ ॥

विदर्भितः स्वान्तरायेण वैदर्भीं प्रपञ्चशोभामानीतः । घुरघुरेत्यव्यक्तानुकरणम् । अत्र आसमाप्तिकवर्गानुप्रासस्तवर्गान्तस्थानुप्रासाभ्यां विदर्भितः । एवमन्यत्रापि वैदर्भी गवेषणीया ॥ २५९ ॥

संयोगो द्विविधः सजातीयेनान्येन च । आद्यस्त्रिविधः स्ववर्ग्यान्तसरूपतदन्यसंयोगभेदात् । एते यथाक्रमं हन्तिवयं मर्थोलयन्तीत्यादि । स्वान्त्येत्यादि ।

सरूपसंयोगग्रथिता औड्री यथा,

सल्लतापल्लवोल्लासो चित्तवित्तहरो नृणाम्।
मज्जतीज्जलसज्जासु नदीषु मलयानिलः ॥ २६१ ॥

असरूपसंयोगग्रथिता पौण्ड्री यथा,

अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा।
पीनस्तनस्थिता ताम्रकम्रवस्त्रेव वारुणी ॥ २६२ ॥
अकठोराक्षरादानं नातिनिर्वहणेषिता।
अशैथिल्यञ्च सत् कर्त्तुं इत्यनुप्रासशोभते ॥ २६३ ॥
क्वचिदस्ति क्वचिन्नास्ति क्वचिदस्ति च नास्ति च।
वर्णानुप्रास एषा तु सर्वतोऽस्तीति भिद्यते ॥ २६४ ॥

---

शिञ्जाना मधुरं मन्दायमाना मञ्जीरा नूपुराः। अत्र पूर्वार्द्धे स्वान्त्यसंयोगिनौ चवर्गौ। उत्तरार्द्धे तु कवर्गाविति ॥ २६० ॥

सन्तः कमनीया लतानां पल्लवाः तदुल्लासनमात्रप्रवीणतया तीव्रता व्यतिरेकः। अतएव नृणां विदग्धमिथुनानां चित्तमेव सर्वस्वभूतं हरतीति। कुञ्जला निचुलाले सञ्जाः सम्बद्धा निचुलनिकुञ्जसम्बद्धनदीमज्जनेन शीतलत्वमुन्मीलितम् ॥ २६१ ॥

मदोऽल्लासवत् कत्र कमनीयम् ॥ २६२ ॥

इत्यनुप्रासरसिकस्य कवेः प्रसज्यमानं दोषमपाकर्तुं शिक्षामाह। अकठोरेति। तदुक्तम्। 'परुषाभिधायिवचनात् अनुकरणाच्च अपरत्र नो परुषम्। रचयेद्यथागतिः स्यात् तत्रापि क्षादयो ज्ञेयाः'। अतिनिर्वाहे व्यक्तमेव वैरस्यं तदुक्तं 'सर्वं एवानुप्रासो प्रायेणेत्यादि'। कोमलमात्रवर्णनिर्वहणे तु शैथिल्यसम्भावनेति ॥ २६३ ॥

नन्वनुप्रासादस्यास्य को विशेष इत्यत आह। क्वचिदिति। क्वचिदस्ति-स्थाने परपदायात्मके भवत्येव क्वचित् पुनः अग्रभेदेन भवति न भवति च। तावतैव तस्य पदद्वारत्वं कृतिशरीरव्यापकतया निरवधानादस्य वर्णान्तोऽन्य एवायं वर्णानुप्रासादित्यनुप्रास इत्यर्थः ॥ २६४ ॥

अन्ये पुनरन्यथा वृत्तिं व्याचक्षते।

स्पर्शादीनामसम्बन्धः सम्बन्धो वापि यो मिथः।
स्फुटादिबन्धसंसिद्धै सेह वृत्तिर्निगद्यते॥ २६५॥
काव्यव्यापी च सन्दर्भो वृत्तिरित्यभिधीयते।
सौकुमार्य्यमथ प्रौढ़िर्मध्यमत्वं च तद्गुणाः॥ २६६॥
गम्भीरौजस्विनी प्रौढ़ा मधुरा निष्ठुरा तथा।
कठोरा कोमला मिश्रा परुषा ललिता मिता॥ २६७॥
इति द्वादशधा भिन्ना कविभिः परिपठ्यते।
कारणं पुनरुत्पत्तेस्त एवासां विजानते॥ २६८॥

तासु गम्भीरा यथा,

अप्फन्दन्तेण णहं महिं च तडिडड्ढमाविअदिसेण।
दुन्दहिगम्भीररवं दुन्दभिअं अवुवाहेण॥ (म)

---

(म) आस्पन्दता (व्याप्नुवता) नभो महीं च तडिद्व्याप्तदिशा।
दुन्दुभिगम्भीररव दुन्दुभितमम्बुवाहेन॥

---

अन्ये पुनरिति। वर्णानां वर्त्तनं वर्त्तनाधिष्ठानं च वृत्तिपदेनाभिमत-माद्य सङ्घटनविघटनाभ्यां द्विधा। समस्तव्यस्तभेदेन सङ्घटनविघटने द्विधा। कादयो मावसानाः स्पर्शाः। आदिग्रहणादन्तस्थोष्मणोः सङ्घटनबहुलः सन्दर्भः। प्रस्फुटः विघटनबहुलं कोमलं उभयबहुल उन्मिश्रः॥ २६५॥

द्वितीय वृत्तिशब्दार्थमाह। काव्यव्यापी चेति। अत्रापि दोषप्रसङ्गापाकर-णार्थमाह। सौकुमार्य्यमिति। अतएव गुणाः। शैथिल्यपरुषत्वे तु दोषा-वित्यर्थः॥ २६६॥ २६७॥

योगायोगयोः प्रतियोगिव्यवस्थाविरहात् कथं द्वादशप्रकारता व्यवस्थिते-रित्याशङ्कावानाह। कारणं पुनरिति॥ २६८॥

दूषणप्रतिपत्तिसौकर्य्यात् तत्प्रसिद्धैव पृथगुदाह्रियत इत्याह। तास्विति।

सैषा प्रायस्तवर्गपवर्गयोस्तृतीयचतुर्थानां पकारफकार-
योश्च स्वसंयोगविन्दुयोगाभ्यां जायते ॥ २६९ ॥

ओजस्विनी यथा,

पत्ताअ सीकराहअधाउसिलाअलणिसस्सराजिअजलअं।
सज्झं ओज्झरपहसिददरिमुहणिम्महिअवउलमइरासोअं॥ (य)

सेयं मूर्द्धन्यानां प्रथमचतुर्थपञ्चमद्वित्वैस्तदावृत्त्या च प्रायो
जायते ॥ २७० ॥

प्रौढा यथा,

कृत्वा पुंवत् पातमुच्चैर्भृगुभ्यो मूर्ध्नि ग्राव्णां जर्जरा निर्झरौघाः।
कुर्वन्ति द्यामुत्पतन्तः स्मरार्त्तं स्वर्लोकस्त्रीगात्रनिर्वाणमत्र ॥

सैषा प्रायेण मूर्द्धन्यानामन्तःस्थानां सयोगात् पूर्वगुरुत्वेन
जायते ॥ २७१ ॥

---

(य) प्राप्ताश्च शीकराहतधातुशिलाजलनिषण्णराजितजलदम्।
सह्यं निर्झरप्रहसितदरीमुखनिर्मथितवकुलमदिरामोदम्॥

---

मस्फुरन्तेण व्याप्तवता। उद्गता विश्वं व्याप्तम्। दुन्दुभिरन्तर्गतकाश्यभाजनो
नि स्थानविशेषो दुन्दुभिश्च शब्दायितम्। यकारघकारौ तवर्गस्य वकारभकारौ
पवर्गस्य तृतीयचतुर्थौ ॥ २६९ ॥

सततशीकरसिच्यमानगैरिकशिलातललुण्ठनेन जलदाना रञ्जनम्। विशीर्य-
पतनेनात्यन्तधवला निर्झरा एव हासो यस्य तादृशेन दरीमुखेनान्त प्ररूढवकुल
कुसुमामोदनि सरणरञ्जितजलधरप्रतिविम्बभूततान्नयनोन्मुद्रणात्। हासवकु-
लामोदाभ्यां च जीवतारोपरूपासमासोक्तिर्ध्वन्यत इत्याराध्या। ओज्झरैर्निर्झरो
निम्नदिश स्मितम् ॥ २७० ॥

भगवमटा नगुपातस्य सुरस्त्रीसन्दर्शनं फलम्। अत्र कुर्वन् स्वर्लोकनिर्वल्देतेषु
मूर्द्धन्यानामन्तःस्थसंयोगा वनौ शब्द इत्यादौ स्वभावगुरुत्वानपि पूर्वदपूरकोर-
वनिषी काराविनिषी भवतीत्याह, केचित् ॥ २७१ ॥

मधुरा यथा,

किञ्जल्कसङ्गी शिञ्जानभृङ्गलाञ्छितचम्पकः ।
अयं मधुरुपैति त्वां चण्डि पङ्कजदन्तुरः ॥

सैषा प्रायोऽनुस्वारपुरोवर्त्तिस्पर्शतया जायते ॥ २७२ ॥

निष्ठुरा यथा,

स्वाङ्गश्लिष्टाद्रिजन्मानं मैत्रार्च्चिः प्लुष्टमन्मथम् ।
स्तौमि तत्र्यक्षं द्युषज्ज्येष्ठं दैत्यश्रेण्यार्च्चिताङ्घ्रिकम् ॥

सैषा प्रायःसंयोगभूयस्त्वेनोत्पद्यते ॥ २७३ ॥

श्लथा यथा,

दयितजनविरहविगलितनयनोदकधौतहरिणमदतिलकम् ।
वदनमपगतमृगमदशशिकरणं वहति लोलदृशः ॥

सेयं प्रायो व्यञ्जनानामसंयोगेन जन्यते ॥ २७४ ॥

कठोरा यथा,

निसर्गनिर्गतानर्घघर्घरध्वनिहास्तिकम् ।
चक्रे चक्रं युधि क्रामन्नलर्कः कर्कशार्करुक् ॥

सैषा प्रायः कण्ठ्यरेफादिसंयोगादुत्पद्यते ॥ २७५ ॥

कोमला यथा,

दारुणरणे रणन्तं करिदारणकारणं कृपाण ते ।

---

अनुस्वारपुरोवर्त्तीति । अनुस्वारस्वरूपतदादेशौ अनुस्वारपदेन गृह्यते । तेन भ्रमितहासीत्यादावनुस्वाराभावेऽपि न लक्षणमुदाहरणम् ॥ २७२ ॥

स्वाङ्गेति । दिवि सीदन्तीति द्युषदो देवाः सुषमादित्वात् षत्वम् । अनेकान्तरिताः संयोगाः सन्दर्भव्यापकाः प्रतीयन्ते । सोऽयमस्याः संयुज्यमाना विशिष्टेऽपि वृत्त्यन्तरादिविशेषो निष्ठुरावैपरीत्येन स्पष्टोदाहरण सुगमम् ॥ २७३ ॥

तरणिः सादृश्यम् ॥ २७४ ॥

रमणकृते रणरणकी पश्यति तरुणीजनो दिश्यः ॥

सेयं रेफणकाराद्यसंयुक्तकोमलवर्णविरचनया निष्पद्यते ॥ २७६ ॥

मिश्रा यथा,

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

सैषा प्रायः कठोराणामोष्ठ्यकण्ठ्यमूर्द्धन्यानां बाहुल्यादिभिरुपलभ्यते ॥ २७७ ॥

परुषा यथा,

जह्ने निह्नादिह्लादोऽसौ कह्लाराह्लादितह्रदः ।
प्रसह्य मत्वा गर्ह्यत्वमर्हणार्हः शरन्मरुत् ॥

सैषा प्रायेणोष्मणामन्तःस्थादिसंयोगैरवस्थाप्यते ॥ २७८ ॥

ललिता यथा,

द्राविडीनां ध्रुवं लीलारेचितभ्रूलते मुखे ।
आमन्त्र्य राज्यभारं स्वं सुखं स्वपिति मन्मथः ॥

सैषा प्रायेण दन्त्यौष्ठ्यतालव्यानां मध्येऽन्तःस्थादिसंयोगैः स्थाप्यते ॥ २७९ ॥

अमिता यथा,

बकुलकलिकाललामनि कलकण्ठीकलकलाकुले काले ।

---

[illegible] इति । [illegible] क्वचिदन्यस्यापि [illegible]
[illegible] २७६ ।

[illegible] बाहुल्यादिभिरिति । [illegible] [illegible]

[illegible] इति । [illegible] रचितम् । [illegible]

[illegible]

कलया कलावतोऽपि हि कलयति कलिकास्तां मदनः ॥

सेयममितयोरेव ककारलकारबन्धयोरनुप्रासेन प्रसूयते ॥२८०॥

इति द्वादशधा वृत्तिः कैश्चिद् या कथितेह सा ।
न गुणेभ्यो न वृत्तिभ्यः पृथक्त्वेनावभासते ॥ २८१ ॥

श्रुत्यनुप्रासवर्णानुप्रासयोरपि दुष्कराः ।
क्वचिद्भेदाः पृथक्कर्तुमस्यास्तेनेह नेष्यते ॥ २८२ ॥

यथाम्रातकपुष्पादि स्रगादेर्वर्ण उच्यते ।
वर्णावृत्तिस्तथा वाचां वर्णानुप्रास उच्यते ॥ २८३ ॥

स तु स्तवकवान् स्थानी गर्भो विवृतसंवृतः ।
गृहीतमुक्तः क्रमवान् विपर्यस्तोऽथ संपुटः ॥ २८४ ॥

मिथुनं वेणिका चित्रो विचित्रश्चेति वर्ण्यते ।
वर्णावृत्तिः प्रयोगेभ्यस्तेभ्यस्तेभ्यो मनीषिभिः ॥ २८५ ॥

तेषु स्थाने स्थानेऽनुप्रासविन्यासतः स्तवकवान् यथा,

यस्यावासीकृतहिमगिरेर्गुञ्जतां कुञ्जराणा-
माविश्चक्रे वनगजमदाघ्राणघोरायितानि ।

---

तदेतत् सर्वेषां मतं दूषयति । न गुणेभ्य इति । समता सौकुमार्यादि-गुणेषु भारतीप्रभृतिषु च वृत्तिषु यथायथमन्तर्भावः अवगन्तव्यः ॥ २८१ ॥

श्रुत्यनुप्रासवर्णानुप्रासयोरिति विषयसप्तमी । वर्णावृत्तेः वृत्त्यनुप्राससाधारण-त्वात् ॥ २८२ ॥

ततो वर्णानुप्रासं विशेषयन्नाह । यथाम्रातकेति । स्रगादेर्वर्णस्थानीया वर्णावृत्तिर्वर्णानुप्रासः । तत्र उपमानभूतवर्णविवरणं समानजातीयकुसुमादिविर-चितमालापटप्रभृतिषु यदन्तरान्तराविजातीयाम्रातकुसुमादिसन्निवेशनं तद्वर्ण इत्युच्यते । तद्वत्या वाचां वर्णावृत्तिः । सा वर्णानुप्रास इति सूत्रार्थः । स द्विधा । संयुक्तासंयुक्तवर्णनिरूप्यत्वात् । यथायथमेतत् उभयप्रपञ्चनम् ॥ २८३ ॥

स्तवकवदादयो द्वादशप्रकारास्तेषु क्वचित् क्वचित् संयोगावृत्तिःस्तवकवान् । अनुप्रासविन्यासादिति संयोगानुप्रासविन्यासतः ॥ २८४ ॥

दर्पोत्फुल्लस्फुरणविकटाकाण्डकण्डूलगण्ड-
स्वेच्छाकाषक्षणितसरलानोकहस्कन्धगन्धः ॥

अत्र गुञ्जतां कुञ्जराणामित्यादेर्वर्णस्तवकस्य स्थाने स्थाने विन्यासादयं वर्णानुप्रासः स्तवकवानित्युच्यते ॥ २८६ ॥

नियतविवक्षितस्थानविशेषः स्थानी यथा,—

बाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं त्वं पक्ष्मान्तरालैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेर्व्योमलग्ना मलिनयति दिशां मण्डलं धूमलेखा ॥

अत्र पादप्रथमत्रिभागस्थानेषु बाले मालेयमित्यादि-नियमेन वृत्तिः सोऽयं वर्णानुप्रासः स्थानीत्युच्यते ॥ २८७ ॥

आवृत्तेर्वर्णान्तराश्रयेण गर्भो यथा,

कालं कपालमालाङ्कमेकमन्धकसूदनम्।
वन्दे वरदमीशानं शासनं पुष्पधन्वनः ॥

अत्र कालं कपालमालेत्यङ्कमेकमिति वन्दे वरदमीशानं शासनमित्यादिषु पकारवकारमकाररेफककारगर्भाधानादयं वर्णानुप्रासो गर्भ इत्युच्यते ॥ २८८ ॥

---

गुञ्जता कुञ्जराणामकाण्डकण्डूलगण्डस्कन्धगन्ध इत्यत्र आवृत्तिचतुष्कोण स्तवक-निर्वाह। स्थानीति ॥ २८५ ॥ २८६ ॥

श्लोकपादेऽपि प्रथमादिभागकल्पनया स्थाननियमविवक्षा। तथाहि। बाले मालेयमिति प्रथमोभागो नीनो इति प्रतिभासाद्ध, तृतीयादिप्रथमपादे। एव पक्ष्मान्तरालमलिनमुधामश्रुप्रभृतीना द्वितीयादिपादेषु प्रथमादिभागकल्पनाऽवसेया ॥ २८७ ॥

काल कालस्वरूप एकमद्वितीयम्। काल कपालेत्यत्र लकारावृत्ति, कका-रेण व्यवधाने सङ्गते कपालेत्यत्र पकारो वर्णान्तरगर्भायमाण उपलक्ष्यते। एवं

स्थाने स्थाने विकाससङ्कोचाभ्यां विवृतसंवृतो यथा,

न मालतीदाम विमर्दयोग्यं न प्रेम नव्यं सहतेऽपराधान्।
म्लानापि न म्लायति केसरस्रग् देवी न खण्डप्रणया कथञ्चित्॥

अत्र प्रथमपादेन मालतीदामेत्यादिभिर्विकासः। द्वितीयपादे प्रेमेत्येकावृत्त्या सङ्कोचः। तृतीयपादे म्लानापि न म्लायतीत्येताभ्यां केशरस्रगित्येताभ्याञ्च विकाशः। चतुर्थेनेति सङ्कोचः। सोऽयं वर्णानुप्रासो विवृतसंवृत इत्युच्यते॥ २८९॥

चक्रबालबद्धानोपादानाभ्यां गृहीतमुक्तो यथा,

> लोलल्लवङ्गलवलीवलया निकुञ्ज-
> कूजत् कपिञ्जलकुलायकुलावनद्धाः।
> अध्यूषिरे कनकचम्पकराजिकान्ता
> येनापरान्तविजये जलधेरुपान्ताः॥

अत्र अक्रबालक्रमः सुव्यक्त एव। सोऽयं वर्णानुप्रासो गृहीतमुक्त इत्युच्यते॥ २९०॥

क्रमेण द्वित्राणां त्रिचतुराणां वर्णानामसंयोगस्वराणामावृत्तिः क्रमवान् यथा,

---

मालाङ्गमित्यादौ लकारादिगर्भीकरणमवसेयम्। विवृतसंवृतौ निगदेनैव व्याख्यात एव॥ २८८॥

न मालतीदामेत्यादौ प्रथमपादे मकारावृत्तिद्वयेन विवरण द्वितीयपादे सकृत्प्रयोगेण तस्यैव संवृतिस्तृतीयपादे नकारसकारयोः आवृत्त्या विवृतिश्चतुर्थे तु नेति संवरणम्। तदिह भूयो विकाशकिञ्चित्सङ्कोचकिञ्चित्विकाशसर्वथा सङ्कोचपरिपाट्या सन्दर्भनिर्वहण शोभाकरमिति व्याचष्टे। अत्रेति॥ २८९॥

लोलदिति। कपिञ्जलो गौरतित्तिरिः। अपरान्तो देशविशेष पूर्ववलनेन उत्तरग्रहण चक्रवालम्। व्यञ्जनमात्रवलनमभिप्रेत तेन वलीवलेत्यत्रापि चक्रवालसिद्धिः॥ २९०॥

नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविमोकमग्नौ॥

अत्र गुर्वी गुरुणा प्रयुक्तेति वधूर्विधातृ इति चकार चकोरेति लज्जावती लाजेति विमोकमग्नौ इति द्वयोस्त्रयाणां च स्वरसंयोगवर्णानां क्रमेणावृत्तिः। सोऽयं वर्णानुप्रासः क्रमवानित्युच्यते॥ २९१॥

क्रमवता विपर्ययोपन्यासाद्विपर्ययो यथा,

प्रणवः प्रणवो यत्र प्रथमः प्रमथेषु यः।
रणवान् वारणमुखः स वः पातु विनायकः॥

अत्र व्युत्क्रमो व्यक्त एव सोऽयं वर्णानुप्रासो विपर्यय इत्युच्यते॥ २९२॥

स्वाद्यवर्णवर्त्तिना स्वरेण सह पादमध्यान्तयोरनुप्रासः संपुटम्।
यथा, स्थिरापायः कायः प्रणयिषु सुखं स्थैर्यविमुखं
महारोगा भोगाः कुवलयदृशः सर्पसदृशः।

---

एवमुत्तरत्र। क्रमेणेति। द्वौ आरभ्य क्रमशश्चैव ऊर्ध्वं चतुर्भ्यो विरसायते। तेन पक्षपाणामित्यादिनोक्तसंयोगस्वराणामिति अविवक्षितसंयोगस्वराणाम्। गुरुणेति अनुलङ्घनीयाज्ञता। तथा चलत्प्रयुक्त्या दुर्वहनितम्बभारालसाया अपि कथञ्चित् पदविन्यासेन कान्तिविशेषो ध्वन्यते। स्वभावतास्त्रयोरपि नेत्रयोः तत्काले धूमाश्लेषाद् द्विगुणो राग इति उपमाने मत्तपदपोषः पूर्वार्द्धे द्वयोर्द्वयोः उत्तरार्द्धे त्रयाणामनुल्लङ्घितक्रमाणामेव व्यञ्जनानामावृत्तिरिति स्फुटं विवरणम्॥ २९१॥

क्रमवतामुपक्रान्तं किञ्चित्क्रमाणामावृत्तौ तत् क्रमविपर्यासो व्युत्क्रमः॥२९२॥

स्वाद्येति। आवर्त्तनीयो वर्णं स्वपदेनाभिमतं तस्य पूर्वो यो वर्णस्तद्वर्त्तिना स्वरेण सह तस्यावृत्तिः। पादमध्यान्तयोरेवेति। मध्यसंश्लिष्टोपरितनभागघटितसमुद्गकतुल्यतया सम्पुटोऽनुप्रासः॥ २९३॥

गृहाविष्टः क्लेशः प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि न हितं कर्म विहितम् ॥

तदेतल्लक्षणेनैव व्याख्यातम्। सोऽयं वर्णानुप्रासः संपुटमित्युच्यते ॥ २९३ ॥

अन्तःपादमुपसंहारोपक्रमयोर्विवक्षितस्वरानुप्रासो मिथुनं यथा,

त्यज मनसि सदाहे हे स्मर स्थानमस्मिन्
ननु शिरसि शरीरे रे किमिन्दोर्मयूखान्।
अयि परिहर वायो योगमङ्गैर्मदीयैः
प्रणयिनि समवेते ते भवन्तः सखायः ॥

तदेतन्निगदेनैव व्याख्यातम्। सोऽयं वर्णानुप्रासो मिथुनमित्युच्यते ॥ २९४ ॥

आवाक्यपरिसमाप्तेर्वर्णानुप्रासनिर्वाहो वेणिका यथा,

विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुवेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥

तदेतन्नातिदुर्बोधम्। सोऽयं वर्णानुप्रासो वेणिकेत्युच्यते ॥ २९५ ॥

---

अन्तःपादमिति। वृत्तौचितीवशात् च द्विखण्डलब्धशोभाविशेषेषु पादेषु मिथुनसिद्धिरवसेया। तदिदमुक्तमुपक्रमोपसंहारयोरिति। मिथुनं द्वन्द्वम् ॥२९४॥

विद्राण इति। उपघ्न आश्रयो निघ्नं परवशः। अनुप्रासजातेरासमाप्तिनिर्वाहोऽभिमतः। व्यक्तयः पुनरन्या अन्या एवाभिमतास्तेन वृत्त्यनुप्रासाद्भेदोऽत एव वेणीतुल्यता। तत्र हि किल केशग्रथनाभिर्व्यूढैव भक्तिः पुनरन्यान्येति ॥२९५॥

उक्तलक्षणेभ्योऽन्यश्चित्रः । यथा,

नीते निर्व्याजदीर्घामघवति मघवद्वज्रनिद्रानिदाने
निद्रां द्रागेव देवद्विषि मुषितरुषः संस्मरन्त्याः स्वभावम् ।
देव्या दृग्भ्रस्तिसृभ्यस्त्रय इव गलिता राशयो रक्तताया
रक्षन्तु त्वां त्रिशूलक्षतिकुहरभुवो लोहिताम्भःसमुद्राः ।

एवमन्येऽपि द्रष्टव्याः ॥ २९६ ॥

एकवर्णावृत्तेर्वृत्त्यनुप्रासस्य वर्णान्तरवैचित्र्येण विचित्रो यथा,

चञ्चत्काञ्चनकाञ्चयो लयचलच्चोलाञ्चलैर्वञ्चिता-
श्चारीसञ्चरणैकचारुचरणाः सिञ्चन्ति चित्त मम ।
लोलाचञ्चुरचञ्चरीकरुचिभिश्चूलालकैश्चर्चिताः
किञ्चिच्चन्दनचन्द्रचम्पकरुचा चौर्य्यो मृगीलोचनाः ॥२९७॥

अन्ये पुनरन्यथा चित्रविचित्रयोर्लक्षणं व्याचक्षते । तत्र यमकच्छायानुकारी चित्रः, स सवर्णानुप्रासवान् विचित्र इति ।

---

उक्तलक्षणेभ्य इति । पूर्वोक्तवर्णानुप्रासेभ्य इति । तथा हि प्रकृतोदाहरणे स्थाने स्थाने स्तवका विवक्षाया न स्तवकवान् विभागपरिहारेण न स्थानीवर्णान्तरायानुपपत्तौ न गर्भः सङ्कोचविकाशाभावेन न विवृतसंवृतः चक्रवालक्रमाभावेन न गृहीतमुक्त । एव क्रमविपर्य्यस्तमिथुनवद्विभावोऽवगन्तव्य । आसमाप्तिनिर्वहणाभावे वेणीभेद. स्फुट एव ॥ २९६ ॥

एकवर्णावृत्तेरिति । वर्ग्यावृत्तौ हि कदाचित् एकवर्णावृत्तिरपि सन्दर्भव्यापिनी सम्भाव्यते । तस्या प्रतीयमानायामेव अन्तरान्तरा नानाजातीये वर्णावृत्तिश्चित्रशोभादायिनी विचित्रानुप्रास इत्युच्यते । तथाहि । प्रकृतोदाहरणे सन्दर्भसमाप्ति यावदावर्त्तमाने एव चकारे काञ्चनकाञ्चेति लयचलदित्यादिषु ककारलकाराद्यनुप्रासोद्भटभावेनैव वर्णावृत्तेर्न्यग्भाव इव प्रकाशते । चारीसञ्चरणप्रकारा भौमी आकाशी च । चञ्चुरी मनोहर. चञ्चरीको भ्रमर. ॥२९७॥

अन्ये पुनरिति । विभिन्नार्थैकरूपत्व स्थानविभागालम्बनं व्यपेताव्यपेत-

तत्र चित्रो यथा,

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ज्येष्ठे मासि खरार्कतेजसि कथं पान्थ व्रजन् जीवसि ॥२९८॥

विचित्रो यथा,

उद्यद्बर्हिषि दर्दुरारवपुषि प्रक्षीणपान्थायुषि
द्योतद्विप्रुषि चन्द्ररुङ्मुषि सखे हंसद्विषि प्रावृषि ।
मा मुञ्चोच्चकुचान्तसन्ततगलद्बाष्पाकुलां बालिकां
काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥ २९९ ॥

वर्णावृत्तिरनुप्रास इति यः कृतलक्षणः ।
सोऽयं द्वादशधा भेदैः प्रविभज्य प्रदर्शितः ॥ ३०० ॥
समग्रमसमग्रं वा यस्मिन्नावर्त्तते पदम् ।
पदाश्रयेण स प्रायः पदानुप्रास उच्यते ॥ ३०१ ॥
विसर्गविन्दुसंयोगस्वरस्थानाविवक्षया ।

---

भावश्च यमकच्छायावर्णानुप्रासवानिति । अतिशायने मतुप् । सर्वाशारु-धीत्यादौ धिप्रभृतीनां विभिन्नार्थैकरूपाणां व्यपेतानामेव पादमध्यान्तयोः अव-स्थितिः । एवमव्यपेतमप्युन्नेयम् । न अत्र वर्णानुप्रास उत्कट इति विचित्रात् भेदः ॥ २९८ ॥

अतएव उत्तरत्र स्फुटवर्णानुप्रासमुदाहरति ॥ २९९ ॥

तेऽमी शुद्धवर्णावृत्तिप्रकाराः षट्त्रिंशल्लक्षिताः साम्प्रतं द्वादशतापन्नवर्णावृत्तयो लक्ष्यन्त इत्याह । वर्णावृत्तिरनुप्रास इति । द्वादशधेति । वीप्सा द्रष्टव्या ॥ ३०० ॥

समग्रमिति । पदालम्बनोऽनुप्रासः पदानुप्रासः तेन पदावयवमात्रालम्बनो-ऽपि पदालम्बन एव । तदिदमाह । पदाश्रयेणेति ॥ ३०१ ॥

आनिर्वाहाच्च स प्रायो यमकेभ्यो विभिद्यते ॥ २०२ ॥

मसृणो दन्तुरः श्लक्ष्णः संपुट संपुटावली।

खिन्नः स्तवकवान् स्थानो मिथुन मिथुनावली ॥ २०३ ॥

गृहीतमुक्तनामान्यस्ततोऽन्यः पुनरुक्तिमान्।

इति द्वादशभेदोऽयं मनीषिभिरिहेष्यते ॥ २०४ ॥

तेषु मसृणो यथा,

स रणे वारणास्यस्य दशनेऽशनिसन्निभे।

चकार वलयाकार भुज भुजगभीषणम् ॥

सोऽयमसयुक्तवर्णावृत्तेः पदानुप्रासो मसृण इत्युच्यते ॥ २०५॥

दन्तुरो यथा,

स नैषधस्याधिपतेः सुतायामुत्पादयामास निषिद्धशत्रुः।

अनूनसारं निषधान्नगेन्द्रात् पुत्रं यमाहुर्निषधाख्यमेव ॥

अत्र निषिद्धशत्रुरिति पदे सयोगाधिक्येन दन्तुरता।

सोऽय पदानुप्रासो दन्तुर इत्युच्यते ॥ २०६ ॥

श्लक्ष्णो यथा,

अप्येहि कान्ते वैदेहि देहि प्रतिवचो मम।

अरविन्दाक्षि दाक्षिण्यमलङ्कारो हि योषिताम् ॥

---

ननु यदि पदावृत्तिः अभिन्नार्था तदा पुनरुक्तिरेव भिन्नार्था चेत् यमकान्न भिद्यत इत्यत आह। विसर्गेति। विन्दुः अनुस्वारः स्थानं कण्ठादिकम्। वृत्तेः पादादियमकताभावो निर्वाह प्रायो निर्वाह इति योजना ॥२०२॥२०३॥२०४॥

वारणास्यो विनायकः। अत्र रणे रणेति शनेऽशनीति कार कारमिति भुजं भुजेति पद तदेकदेशावृत्तिः स्फुटमुपलभ्यते। मसृणा तु कथमित्यत आह। सोऽयमिति ॥ २०५ ॥

अत्र स्वरेण सहावृत्तेः श्लक्ष्णता। सोऽयं पदानुप्रासः श्लक्ष्ण इत्युच्यते॥ २०७॥

संपुटं यथा,

सदर्प इव कन्दर्पस्तरला मादृशां मतिः।
असार इव संसारः कुरुष्व मदनुग्रहम्॥

अत्र इवशब्दस्यापवादत्वेनाव्यवधायकत्वादनुप्रासोऽयं संपुटमित्युच्यते॥ २०८॥

संपुटावली यथा,

करोति किं किरातोऽपि समाकृष्य शिलीमुखान्।
शिलीमुखान् समाकृष्य किङ्किरातः करोति यत्॥

अत्र करोतीत्येकं संपुटं, किं किरातः किङ्किरात इति द्वितीयं, समाकृष्य समाकृष्येति तृतीय, शिलीमुखान् शिलीमुखानिति चतुर्थम्। सोऽयं पदानुप्रासः संपुटावलीत्युच्यते॥ २०९॥

खिन्नो यथा,

कुलजातिसमाकुलीकृतानां सुखदसुखाशयमूढचेतनानाम्।

---

सनैषधेत्यादौ निषधरूपो वर्णसमुदायः पदैकदेशतामापन्न साधारण एव। तदत्र दन्तुरता कीदृशीत्यत आह। अत्र निषिद्धेति॥ २०६॥ २०७॥

सम्पुटवदेकरूपस्यैव खण्डस्य निरन्तरमावर्त्तनं सम्पुटम्। तत्कथमिव कं सशब्दैरन्तराये सम्पद्यत इत्यत आह। अत्र इव शब्दस्येति॥ २०८॥

करोति किङ्किरातोऽयमित्यादौ मध्ये शिलीमुखान् शिलीमुखानिति प्रथमं सम्पुटम्। तस्य बहिरावरणभूतं समाकृष्य समाकृष्येति द्वितीयं तस्यापि किङ्किरात किङ्किरातेति तृतीयं तस्यापि करोति करोतीति चतुर्थम्। तदेतद्विपरीत व्याख्यया व्यञ्जयन्नाह। अत्र करोतीत्यादि॥ २०९॥

कुलेति। अत्र प्रथमपादे कुलेति अविवक्षितस्वरादिवर्णयुग्मसञ्चरचतुष्टय-

अभवविभवलाभलोलुभानां भव भवबन्धविभेदनाय भूयः॥

अत्र रीतेरनिर्वाहात् खिन्नता। सोऽयं पदानुप्रासः खिन्न इत्युच्यते॥ ३१०॥

स्तवकवान् यथा,

भासयत्यपि भाषादौ कविवर्गे जगत्त्रयीम्।
के न यान्ति निबद्धारः कालिदासस्य दासताम्॥

सोऽय वर्णानुप्रासवत् पदानुप्रासोऽपि स्थाने स्थाने निवेशात् स्तवकवानित्युच्यते॥ ३११॥

स्थानी यथा,

परं जोण्हा उण्हा गरलसरिसो चन्दणरसो
खदक्खारो हारो मलअपवणा देहतवणा।
मुणाली वाणाली जलदिअ जलद्दा तणुलदा
वरिट्ठा जं दिट्ठा कमलवअणा सा सुणअणा॥ (२)

सोऽय पदानुप्रासः स्थाननियमात् स्थानीत्युच्यते॥ ३१२॥

---

(२) पर ज्योत्स्ना उष्णा गरलसदृशश्चन्दनरस',
क्षतक्षारो हारो मलयपवना देहतपना'।
मृणाली वाणाली ज्वलति च जलार्द्रा तनुलता,
वरिष्ठा यद् दृष्टा कमलवदना सा सुनयना।

---

व्यवधानेन कुलीत्यावृत्ति द्वितीयतृतीयपादयोस्तु सुखदसुखेति अभवविभवेति चैकवर्णव्यवधानेन आवृत्तिश्चतुर्थपादे तु भवभवेति रीतिभङ्गो न च दोषः। प्रतीत्यव्यवधानात्॥ ३१०॥

वैचित्रीविशेषेण अलङ्कारभावो भासयतीत्यादौ आद्यन्तयोः दूरान्तरितैव आवृत्ति.। स्थाननियमस्तु न विवक्षितः। तदिदमुक्तं स्थाने स्थाने इति॥ ३११॥

जोण्हा उण्हा रिसो रसो इत्यादिका प्रतिपाद मध्यान्तस्थाननियमेन आवृत्तिः। क्षतोऽर्पितः क्षारः जलार्द्रा जलार्द्रे वस्त्रे॥ ३१२॥

मिथुनं यथा,

पुरः पारापारा तटभुवि विहारः पुरवरं
ततः सिन्धुः सिन्धुः फणिपतिवनं पावनमतः।
तदग्रे तूदग्रो गिरिरिति गिरेस्तस्य पुरतो
विशाला शालाभिर्ललितललनाभिर्विजयते॥

तदेतत् प्रतिपादं द्वयोर्द्वयोः पदानुप्रासयोर्विन्यासान्मिथुनम्॥ २१३॥

मिथुनावली यथा,

शिरसि शरभः क्रोडे क्रोडः करी करटे रटन्
उरसि च रुरुर्मर्मण्येणः शिखी मुखरो मुखे।
कपिरपि हृदि क्रादी दूराद्धरिर्द्विपजिद्धतो
धनुषि लघुता लब्धे पूर्वो जयोऽस्य यशस्विनः॥

सेयं द्वयोर्द्वयोः पदानुप्रासयोर्निरन्तरमावृत्तिर्मिथुनावलीत्युच्यते॥ २१४॥

गृहीतमुक्तो यथा,

पुन्नागनागकेशरकेशरपरिवासवासनासुरभिः।

---

पाराभिधाना नदी। अपारा पाररहिता। सिन्धुर्नदी सिन्धु नामा। विशाला उज्जयिनी। शालाभिरिति इत्थम्भूतलक्षणे तृतीया। अत्र 'पारापारेति सिन्धुसिन्धुरिति। दग्रे दग्रे इति शाला शालेति क्रमेण प्रथमादिपादेषु द्वयोरेव अनुप्रासयोर्विन्यास। यद्यपि तृतीयपादे गिरिगिरीति द्वितीयमपि मिथुन सम्भवति तथापि वर्णद्वयव्यवधानात् अनुलेखीति उपेक्षितवान्॥ २१३॥

शिरसीति। शरभोऽष्टापदः क्रोडो वराहो रुरुर्बहुशृङ्गो मृगो हरिः सिंहः। स्वरभागा विवक्षाया व्यञ्जनयुगलावृत्तिर्मिथुनम्। तदेव आवृत्तिभूम्ना मिथुनावली। शरशरेति क्रोड क्रोडेति करकरेति दवदवेत्यादिना क्रमेण सुप्रत्यभिज्ञानैव॥ २१४॥

सुरभिर्मधुरमधुप्रियषट्चरणाचरणवान् प्रासः ॥

सोऽयं चक्रबालवत् पदानुप्रासो गृहीतमुक्त इत्युच्यते ॥ ३१५ ॥

पुनरुक्तिमान् यथा,

धूमाइ धूमकलुसे जलइ जलन्तात्तहत्तजीश्राबन्धे ।
पडिरश्रपडिउरसदिसे रसइ रसन्त सिहरे धणुम्मि णहश्रलं ॥

(ल)

अत्र धूमादीनां पुनर्वचनात् पदानुप्रासोऽयं पुनरुक्तिमानित्युच्यते ॥ ३१६ ॥

वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।
पूर्वानुभवसंस्कारबोधिनी यद्यदूरता ॥ ३१७ ॥

---

(ल) धूमायते धूमकलुषे ज्वलति ज्वलदात्तहस्तजीवाबन्धे ।
प्रतिरवप्रतिपूर्णदिशि रसति रसच्छिखरे धनुषि नभस्तलम् ॥

---

गृहीतमुक्तो यथेति । पुन्नाग पुङ्ग इति प्रसिद्ध केसरी वकुलो भावना वासना सुरभिर्वसन्तो नानामधुपानलालसानाम् इतस्ततः षट्चरणानां चरण भ्रमणम् । अत्र चक्रवालक्रमो व्यक्त एव । आवृत्त्याधिक्याभावाच्च गृहीतमात्रस्यैव मोचनम् ॥ ३१५ ॥

पुनरुक्तिमानिति । वाच्याभेदात् पुनरुक्ति सा यस्मिन्नावृत्तिलक्षणेन अनुप्रासे स पुनरुक्तिमान् । तात्पर्य्यभेदात् च न दोष । धूमज्वलनरसनानामाकाशदेशव्यापितया धनुःप्रकर्षद्वारेण रामभद्रगतोत्साहशक्तिध्वननात् प्रकृतवीररसपोष । अत्र धूमधूमेत्यादिना वाच्यभेद. ॥ ३१६ ॥

ननु वर्णावृत्तिरनुप्राससामान्यलक्षणयुक्ता न चासौ पदाद्यावृत्तावस्तीत्यत आह । वर्णावृत्तिरिति । समुदायावृत्तिरपि वर्णावृत्तिरेव । न हि वर्णातिरिक्तः समुदायो नाम । इयान्तु विशेषो यत्पूर्वजातीयतानुसन्धानमलङ्कारता प्रयो-

लाटानुप्रासवर्गस्य यावद्भावलक्ष्यते गतिः।
पदानुप्रासवर्गोऽपि तावद्देव प्रपञ्च्यते॥ ३१८॥
स्वभावतश्च गौण्या च वीप्साभीक्ष्ण्यादिभिश्च सा।
नाम्ना द्विरुक्तिभिर्वाक्ये तदनुप्रास उच्यते॥ ३१९॥

सा स्वभावतो यथा,

कुर्वन्तोऽमी कलकलं मारुतेन चलाचलाः।
प्रातर्गुलुगुलायन्ते गजा इव घनाघनाः॥

अत्र कलकलमित्यादिषु स्वाभाविकी पुनरुक्तिरुपदिश्यते॥ ३२०॥

गौण्या यथा,

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि।

---

जयति। तत्र च कार्य्यानुमेयः समयसन्निकर्षविशेष एव प्रयोजक इति। तदिदं दिङ्मात्रमुक्तम्॥ ३१७॥

अन्येऽपि पदानुप्रासप्रकाराः स्वयमुत्प्रेक्षितव्या इत्याह। लाटेति। गतिः प्रकारः॥ ३१८॥

क्रमप्राप्तं नाम द्विरुक्त्यनुप्रासं विभजते। स्वभावत इति। यद्यपि पदानुप्रासादौ नाम द्विरुक्तिरतिव्यापिका तथापि अर्थोपक्षेपोपनिपातिनी सह विवक्षिता। अर्थो द्विविधः। आभिधानिक उपाधिश्च। आद्यो गौणमुख्यभेदेन द्विप्रकारो द्वितीयोऽपि वीप्साभीक्ष्ण्यादिरनेकविधो द्विरुक्तिरपि नाम शरीरसम्पादिका नाम्न. सतश्चेति द्वयी बोद्धव्या। अतएव द्विरुक्तस्यैवाभिधाशक्तियोगात् स्वभावत इत्युक्तम्॥ ३१९॥

कुर्वन्त इति। चलाचला चञ्चला। चलतेरच्प्रत्ययेऽभ्यासस्य अकि रूपम्। गुलु इत्यव्यक्तानुकरणस्य डाचि द्विर्वचने च गुलुगुलेति नामसिद्धिः। अत्र कलकलादिपदानामर्थवत्त्वाभावात् द्विरुक्तिशरीरतया स्वभावत एव यथोक्तरूपव्यवस्थितिः॥ ३२०॥

इति न भजते वस्तु प्रायः परस्परसङ्करं
तदियमबला कान्तिं धत्ते कुतः सकलात्मिकाम् ॥

अत्रामृतममृतमित्यादिषु अभेदेऽपि भेदोपचारेण विशेषणविशेष्यभावः सामान्यविशेषभावाद् भवन् पुनरुक्तिवद्भासते ॥ २२१ ॥

वीप्सा यथा,

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
देशे देशे न विद्वांसश्चन्दनं न वने वने ॥

सेयं द्रव्यवीप्सायां द्विरुक्तिः । एवं गुणजातिक्रियावीप्सायामपि द्रष्टव्यम् ॥ २२२ ॥

प्रकारे गुणवचनस्येत्यादिरपि वीप्साप्रकार एव । यथा,
मानिनीजनविलोचनपातानुष्णवाष्पकलुषान् प्रतिगृह्णन् ।

---

अमृतमिति । अत्र द्वितीयानाममृतादिपदानां द्विरुक्तिदोषेण तात्पर्य्यापर्य्यवसानादमृतादिगुणपरत्वे कल्पनीयेऽपि निष्कृष्टगुणपराणां सामानाधिकरण्यानुपपत्तेः तत्तदसाधारणगुणोपबृंहितामृतादिनिष्ठानामाद्यपदोपात्तसामान्यापेक्षो विशेष्यभावश्च विशेषणत्वं च निर्वहति । न च पर्य्यायानिवेशेऽर्थान्तरसङ्क्रमितवाच्यता सम्भवतीति पूर्वाचार्य्याः । सेयं नीप्सार्थपरत्वेशा नाम द्विरुक्तिः ॥ २२१ ॥

वीप्सेति । नानार्थानां युगपदेकैकेन पदेन केनचित् वक्तुर्व्याप्तिविवक्षा वीप्सा । सा प्रयोक्तृधर्मो द्विरुक्त्या व्यज्यते । अतएव या काचिदर्थसामर्थ्याकृष्टा द्विरुक्तिः सा सप्तवर्णादिवन्नाम द्विरुक्तिसमाख्यया प्रतिपाद्यते । शैले शैल इति । अत्र कश्चित् एकमसाधारणगुणाश्रयं विवक्षन् तदितरस्य तज्जातीयस्य गुणसंस्पर्शमसहमानः अप्रस्तुतमेव शैलादिकं प्रस्तुतवान् । रोहणादिव्यतिरिक्तासु व्यक्तिषु माणिक्याद्यभावगुणव्याप्तिर्युगपदेव विवक्षिता । शब्दादुपसर्जनतया प्रतीयमानः सिद्धस्वभावः पदार्थो गुण इत्युच्यते । एवं क्रिययापि व्याप्तिरवसेया । सेयं द्रव्यवीप्सेति । शैलादीनां द्रव्याणामेकेन गुणादिना व्याप्तुमिच्छेत्यर्थः ॥ २२२ ॥

प्रकारे गुणवचनस्येति । प्रकारः सादृश्यं तत्पूर्णगुणेन न्यूनगुणस्य साधा-

मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः ॥२२३॥

आभीक्ष्ण्ये यथा,

श्लेषं श्लेषं मृगदृशा दत्तमाननपङ्कजम्।
मया मुकुलिताक्षेण पायं पायमतृप्यत ॥

सोऽयमाभीक्ष्ण्ये णमुल् स चानुप्रयुज्यते इति पुनरुक्तिः ॥२२४॥

क्रियापदाभीक्ष्ण्याद्विरुक्तौ तु पुनरुक्तेरपि पुनरुक्तिर्यथा,

जयति जयति देवः श्यामकण्ठः पिनाकी
जयति जयति देवी लोकमाता भवानी।
जयति जयति धन्यः सोऽपि भक्तस्तयोर्यः
किमपरमिह धन्य वर्ण्यते तावदेव ॥ २२५ ॥

---

रणगुणान्वयी भवति। एव च अस्ति समानशब्दाभिधेयत्वं च व्याप्तिः। इयांस्तु विशेषो यदेकत्र सिद्धस्य अन्यत्र प्रतिबिम्बन सादृश्यं शुद्धवीप्सायां तु युगपदेकस्य नानापदार्थसम्बन्ध इति। सोऽयं वीप्साप्रकारशब्दार्थः। अतएव प्रकारे गुणवचनस्येति पृथक् सूत्रितम्। इह तु वीप्सापदेनैव अयमर्थ उपग्राह्य इत्यभिप्राय। मन्द मन्दमिव उदित इति क्रियाविशेषणमुपमितमेव भीतभीत इति कर्तृविशेषणमपि सादृश्यलक्षणगुणोत्प्रेक्षायामिव शब्द ॥ २२३ ॥

आभीक्ष्ण्येनेति। नित्यवीप्सयोः इत्यनेन नित्यत्वमाभीक्ष्ण्यमुक्तम्। या किल क्रिया कर्त्रा प्राधान्येनानुपरत्या च कर्तुमिच्छति तद्रूपमाभीक्ष्ण्यम् अतएव तिङ व्ययक्तता च द्विरुक्तिरियमसाधारणी। उभयत्रैव क्रियाप्राधान्यप्रतीतेः। सिद्धे हि वस्तुनि पौनःपुन्यप्रतीतिः क्रियोपाधित एव न स्वरूपेण। ननु णमुलैवाभीक्ष्ण्याभिधानात् किं द्विरुक्तिः करिष्यत इत्यत आह। सेयमिति। न च आभीक्ष्ण्यं णमुलो वाच्यम्। तत्कार्ये तस्याभिधानात्। द्विरुक्तिसहितस्यैव तस्यानुपरतिव्यञ्जकत्वात्। स्वरूपार्थाभ्यामन्तरतमशब्दद्वयरूप आदेशो वा द्विरुच्चारण वा द्विरुक्तिशब्दार्थः ॥ २२४ ॥

न च अवश्य द्वौ एवशब्दौ प्रयोक्तव्यौ किन्तु यावद्भिः अभिमतोऽर्थः प्रतीयते तावन्त आभीक्ष्ण्यशब्दाः प्रयोक्तव्या, तेनाव्ययकृत्सुदृश्यन्ते किन्तु तिङ्पदेषु एवेत्याह।

आदिग्रहणेन निमूलसम्भ्रमादयः परिगृह्यन्ते। तेषु निमूलादि यथा,

निमूलकाषं कषति श्वान्तमन्तः स्मरज्वरे।
लाजस्फोटं स्फुटन्त्याशु हृदये हारयष्टयः॥ ३२६॥

सम्भ्रमेण यथा,

अस्थीन्यस्थीन्यजिनमजिनं भस्म भस्मेन्दुरिन्दु-
र्गङ्गा गङ्गोरग उरग इत्याकुलाः सम्भ्रमेण।
भूषावेशोपकरणगणप्रापणव्यापृतानां
नृत्यारम्भप्रणयिनि शिवे पान्तु वाचो गणानाम्॥ ३२७॥

हर्षावेशविस्मयादयोऽपि सम्भ्रमस्य उपाधयो भवन्ति। तेषु हर्षसम्भ्रमेण यथा,

रुरुधुः कौतुकोत्तालास्ततस्तामसरावतीम्।

---

क्रियापदेति। यद्यपि एकैकवाक्यार्थसङ्गत्या क्रियापदस्य द्वयमेव उच्चारणं तथापि काव्यापेक्षया बाहुल्यमवसेयम्॥ ३२५॥

आदिग्रहणेनेति। तत् तदितरप्रकरणप्रापितानां द्विरुक्तिप्रकाराणामादिपदेन उपग्रहो विधेय। तद्यथा। अर्वागर्वाग्जलवदुपलग्रन्थय. चैत्रशैला दूरे दूरे मणिमयतटप्रेमखलो रत्नसानु। आरादारान्निविरयमपां यद्दवीयो दवीयान् दुग्धाम्भोधिस्तदयमसदृक्छिल्प एवादिशिल्पी। अत्रानुपूर्व्ये द्वे भवत इति द्विरुक्ति। एव स्वार्थे अवधार्य्यमाणे इत्यादयोऽपि द्विरुक्तिप्रकाराः स्वयमवसेया इत्याशयवानुपलक्षणतया किञ्चित् उदाहरति। निमूलकाषमिति। कषादिषु यथाविध्यनुप्रयोग इति तस्मिन्नेव प्रयुक्ते द्विरुक्तिसिद्धिः॥ ३२६॥

सम्भ्रमेणेति। भयसवेगादरात्मक' सम्भ्रमः सवेगत्वरा। स एव प्रकृतोदाहरणे द्विरुक्ति प्रयोजयति॥ ३२७॥

ननु हर्षादिना महाकविप्रबन्धेषु द्विरुक्तिरुपलभ्यते। सा कथमुपपद्यत्येत आह। हर्षेति। हर्षादयोऽपि सम्भ्रमप्रयोजकास्ते. असाधारणतामापन्नैः

क्वार्जुनः क्वार्जुन इति ब्रुवत्यो नाकयोषितः ॥ ३२८ ॥

आवेगसम्भ्रमेण यथा,

कञ्चुकं कञ्चुकं मुञ्च हारं हारं परित्यज ।
हा हा दहति दावाग्निर्वस्त्रं वस्त्रमपाकुरु ॥

अत्र मुञ्च परित्यज दहति अपाकुरु इति क्रियापदेषु आवेगसम्भ्रमाभावात् न द्विरुक्तिः । तथाहि अरण्यानीप्रविष्टे विजिगीषुद्विषो योषिद्दावाग्निसम्भ्रमावेगात् कयाप्येवमुच्यते ॥ तत्र प्रथमं कञ्चुक एवावेगसम्भ्रमः । स हि आगते दावाग्नौ उत्तारयितुमशक्यः । ततस्तद्व्यासङ्गहेतौ हारे, अनन्तरं पराप्रतितदावाग्निदीप्ते वाससीति ॥ ३२९ ॥

विस्मयसम्भ्रमेण यथा,

अहो रूपमहोरूपमहो मुखमहो मुखम् ।
अहो मध्यमहो मध्यमस्याः सारङ्गचक्षुषः ॥

एतेषु समस्तेषु अपि सम्भ्रमेषु यावद् बोधमिति द्विरुक्तिः ॥ ३३० ॥

एवं त्रिरुक्तिरपि द्रष्टव्या,

जय जय जय श्रीमन् भोज प्रभाति विभावरी
वद वद वद सूक्तं विद्वन्निदं ह्यवधीयते ।

---

अवच्छिद्यमानः सम्भ्रमः अन्योऽन्यो भवति न च सम्भ्रमता जहातीति सम्भ्रमद्विरुक्तिप्रकार एवायमित्यर्थः ॥ ३२८ ॥

निगूढगम्भीर उद्वेग आवेगः । ननु कञ्चुक कञ्चुकमिति तन्मुञ्चेत्यादिकमावेगसम्भ्रमप्रभवमेव तत् कथं न द्विरुच्यत इत्यत आह । अत्रेति । कञ्चुकस्य हारेण हारस्योत्तरीयवाससा व्यासङ्गसम्भावनासम्भ्रमहेतुः ॥३२९॥३३०॥

सम्भ्रमे यावद्बोधमिति यावच्छब्दार्थमाविष्कुर्वाणः पूर्वोक्तमभिप्रेत्याह ।

शृणु शृणु शृणु त्वदत् सूर्य्योऽनुरज्यति मण्डलं
नहि नहि नहि क्षामामार्त्तण्डः क्षणेन विरज्यते ॥ २२१ ॥
क्रियासमभिहारश्च क्रियाभ्यासश्च यः पुरा।
युक्तावुदाहृतः सोऽपि नामानुप्रास उच्यते ॥ २२२ ॥
जायते न च दोषाय काव्येऽलङ्कारसङ्करः।
विभूषयति हारोऽपि स्तनौ ग्रीवां स्रगौष्ठ्याम्॥ २२३ ॥
अर्थाभेदे पदावृत्तिः प्रवृत्त्या भिन्नयेह या।
स सूरिभिरनुप्रासो लाटीय इति गीयते ॥ २२४ ॥
स चाव्यवहितो व्यस्तः समस्त उभयः पुनः।
उभयश्चक्रवालश्च गर्भश्चैवाभिधीयते ॥ २२५ ॥
यस्तु व्यवहितो नाम नेयत्ता तस्य शक्यते।

---

एव विरक्तिरपीति। उपलक्षणञ्चेदम्। चतुरादिद्विरुक्तिः अदण्डवारिता एव ॥ २२१ ॥

समभिहारो भृशत्वम् ॥ २२२ ॥

ननु वाक्यार्थप्रयुक्त्यैव काव्यस्य सनाथीकरणात् किमनुप्रासेनेत्यत आह। जायते न चेति। उदाहरणेन अलङ्कार्य्यसङ्करवदलङ्कारसङ्करोऽपि लोकप्रसिद्ध एव शोभाहेतुरित्यभिमतमिति ॥ २२३ ॥

क्रमप्राप्तं लाटानुप्रासं लक्षयति। अर्थाभेदे इति। लाटजनवल्लभोऽनुप्रासो लाटानुप्रासः। अर्थाभेदे कथं न पुनरुक्तिदोष इत्यत उक्तम् प्रवृत्त्या भिन्नयेति। तात्पर्य्यभेदेन इत्यर्थः। अतएव यमकाद्भेदः ॥ २२४ ॥

स चेत्यनुक्तव्यवहितसमुच्चये चकारः। लाटानुप्रासः सामान्यतो द्विधा। अव्यवहितो व्यवहितश्च। अनावृत्तशब्दानन्तरितोऽव्यवहितः तदन्तरितश्च व्यवहितः। तयोरव्यवहितः षोढा भवति। व्यस्तः समस्तो द्वौ उभयाविति तावत् चत्वारस्तत्र उभयद्वयं द्विप्रकारकमिति सामान्यविशेषभावाभ्यां षड्भेदा व्याख्येयाः। उभयः पुनरिति। पुनः शब्दो व्यावृत्तौ पूर्वस्मादन्य एवायमेक-शब्दाभिलप्य इत्यर्थः आद्योभयद्वयमग्रे वक्ष्यते ॥ २२५ ॥

कर्त्तुमेकादिगणना पदद्वयादिभङ्गिभिः ॥ २३६ ॥

तेषु अव्यहितभेदेषु व्यस्तो यथा,

उअहिस्स जसेण जसं धीरं धीरेण गुरुअआ गरुअं ।
रामो ठिइअ वि ठिइं भणइ रवेण अ रवं समुप्फुदन्तो ॥ (व)

अत्राव्ययानां द्योतकत्वादिभिर्व्यवधानं नाश्रीयते । न हि इवादेः शाकल्येऽपि पृथक्पदत्वम् अस्ति । यद्येवमिदमिहो-दाहरणं युज्यते ॥

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्त्तिरिव मूर्त्तिस्ते त्वमिव त्वं कृशोदरि ! ॥ इति ।

अस्त्येवैतत् । किन्तु यथा, "अमृतममृतं चन्द्रश्चन्द्रः" इत्यादिकमभेदेऽपि भेदोपचारान्नासद्विरुक्तिस्तथेयमित्युत्प्रेक्ष्यते ॥ २३७ ॥

---

(व) उदधेर्यशसा यशः धैर्यं धैर्येण गुरुतया गुरुताम् ।
रामःस्थित्यापि स्थितिं भणति रवेण च रवं समभिक्रामन् ॥

---

द्वितीयं तु चक्रवाल गर्भमित्युक्ताव्यवहितस्य तर्हि कियन्तोभेदाः अत आह यस्त्विति । तेन बहुभावावान्तरविभिन्नतया नायं समशीर्षिकया गणित इत्यर्थः ॥ २३६ ॥

तेषु इति । द्विरुक्तशब्दरूपेषु पूर्वपरयोर्नैकमपि समासान्तर्गतमिति व्यस्तः । एतेन समस्तादयो व्याख्याताः धैर्यगुरुताः इति गाम्भीर्याद्यनुनिष्पादी वागनुभावो रस पूर्णकुम्भोच्छलनन्यायेन साक्षादिव तत्तत्प्रकर्षमर्पयन् शोभाविकाशहेतुः । समुप्फुन्दन्तो । समभिक्रामन् । ननु जसेण धीरेण गुरुअआ ठिइअ रवेण अ इति पदपञ्चके विभक्त्या तत् उत्तरयो. चकारद्वयेन च व्यवधानात् कथम

समस्तो यथा,

अपहस्तितान्यकिशलयकिशलयशोभं विलोकयाशोकम्।
सखि विजिता पुरसुमनः सुमनः सुभगञ्च मधुतिलकम्॥

अत्र किशलय किशलय इति, सुमनः सुमन इति च समस्तानामेवाव्यवधानादयं लाटीयानुप्रासोऽव्यवहितसमस्तः पूर्वः पुनरव्यवहितव्यस्त इत्युच्यते॥ ३३८॥

उभयस्तु द्विधा प्रथमः असमस्तोऽपरो व्यस्तः प्रथमो व्यस्तोऽपरः समस्त इति च।

तयोः प्रथमो यथा,

जितलाटाङ्गनावक्त्रं वक्त्रं तस्याः स्मितोज्ज्वलः।
कस्य न क्षोभजनकं जनकः पुष्पधन्वनः॥

तदिदं लक्षणेनैव व्याख्यातम्॥ ३३९॥

द्वितीयो यथा,

नलिनी नलिनीनाथ! करसन्ततिसङ्गमात्।
विकचा विकचास्याना कान्ताना हरति श्रियम्॥

अस्यापि लक्षणेनैवोक्तोऽर्थः॥ ३४०॥

---

व्यवहितभेद उदाह्रियत इत्याह। अत्रेति। अव्ययानामित्युपलक्षणम्। द्योतकत्वादिति विभक्तिसाधारणो हेतु। पञ्चरूपप्रातिपदिकार्थत्वपक्षे विभक्ति-र्द्योतिकैव शाकल्येऽपीति। अव्ययवाचकत्ववादी सोऽपि असत्त्वार्थानामिषा-दीनां स्वातन्त्र्येण वाचकत्वं न मन्यते। यतो न पृथक्पदत्वमनुशिष्टवान्। तथाच द्योतकानां परशक्तिसहकारित्वेन तदनुप्रवेशात् स्वाङ्गमव्यवधायकमिति न्यायात्। ननु विसर्ग क्लिष्टकल्पनया। अस्ति अव्यवहितोदाहरणमपि अन्यदपीति शङ्क्यते। यद्येवमिति। अत्र पूर्वार्द्धवर्त्तिद्वयमुदाहरणम् उत्तरार्द्धवर्त्तिनो द्वयस्य पूर्वतुल्यत्वात्। परिहरति। अस्तीति। अनन्वयमात्रमत्र उदाहरणम्। तत्र च अवश्यभेद-कल्पनया विशेषणविशेष्यभावो वाच्यः तथाच गौणी नाम द्विरुक्तिः स्यादिति

स्वापेक्षया व्यस्तोऽन्यापेक्षया च समस्तो द्वितीयो व्यस्तः समस्त इति स द्वितीयोभयशब्दवाच्यः। सोऽपि द्विधा प्रतिपादमन्ताद्योर्गर्भे इवानुप्रासविन्यासात्। तयोः प्रथमश्चक्रवालं यथा,

जयति क्षुण्णतिमिरस्तिमिरान्धैकवल्लभः।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः॥

अत्र तिमिरवल्लभ पूर्वाशेति शब्दास्तिमिरादिशब्दापेक्षया व्यस्ताः, यथास्व पूर्वोत्तरपदापेक्षया च समस्ताः, पादान्ताद्योर्विनिवेशिता इति यथोक्तलक्षणानुगमाल्लाटीयानुप्रासोऽयमव्यवहितो व्यस्तसमस्तचक्रवालमित्युच्यते॥ ३४१॥

एतेन पादमध्येऽनुप्रासविन्यासाद् गर्भोऽपि व्याख्यातः। यथा

समाधवा माधवदत्तदृष्टिः सकौतुका कौतुकसन्दिरेस्तात्।
सविभ्रमा विभ्रमदायिनी वः सपङ्कजा पङ्कजलोचना श्रीः॥
॥ ३४२॥

व्यवहितभेदेषु व्यस्तो यथा,

प्रकाशो यशसा देवः प्रकाशो महसा रविः।
दुःसहो विद्विषा स्वामी दुःसहस्तमसाञ्च सः॥

तदेतन्नातिदुर्बोधमिति न व्याक्रियते॥

---

सङ्करशङ्कया न उदाहृतमिति सिद्धान्ततात्पर्य्यसंक्षेपः। पूर्वं पुनरिति। समस्तानन्तर व्यस्तविवरण प्रतिपत्तिसौकर्य्यार्थम्॥ २३७—४०॥

द्वितीयमुभय विवेचयति। स्वापेक्षयेति॥ ३४१॥

तिमिरान्धा' चक्रवाका। यथा श्रुतिद्विरुक्तः पूर्वं' पूर्वेण उत्तरश्च उत्तरेण समस्त इति पूर्वस्मात विशेष। सकौतुका कृतकङ्कणबन्धादिपरिणयमङ्गला॥ ३४२॥

अनेकगुण इति। आवृत्तिद्वैगुण्यादिना अनेकगुणत्व' न च गुणनायामियत्ताऽवधारणकारणमस्ति इति अभिसन्धाय तस्य इयत्ता न शक्यते कर्त्तुमिति पूर्व-

सोऽयमेकगुणो व्यस्तश्च लाटीयानुप्रासो व्यवहित इत्युच्यते ।

व्यस्त एवानेकगुणो यथा,

किञ्चिद्वच्मि न वच्मि वच्मि यदि वा किं वच्मि वच्मीदृशम्
दृश्यन्ते न भवादृशेषु यतिषु स्वेषामदोषे दमाः ।
ते किं सन्ति न सन्ति सन्ति यदि वा के सन्ति सन्तीदृशाः
सर्वस्तेषु गुणैर्हृतीतहृदयो लोकः कुतो वर्त्तते ॥

अत्र वच्मीति सन्तीत्येतयोरनेकगुणा वृत्तिः ॥ ३४३ ॥ ३४४ ॥

समस्त एकगुणो यथा,

चन्द्रानन चन्द्रदिनं मृगलोचन मृगशिरश्च नक्षत्रम् ।
तिथिरतिथिप्रियदशमी परतस्त्वेकादशी प्रहरात् ॥

ननु इह तिथिरित्यसमस्तम् । न केवलमसमस्तं भिन्नार्थतया लाटीयानुप्रासोऽपि न संगच्छते । सगच्छते च केनचित् पदानुप्रासेन । न च लाटीयानुप्रासो वा नामानुप्रासो वा पदानुप्रासाद् भिद्यत इति ॥ ३४५ ॥

समस्तोऽनेकगुणो यथा,

ब्रह्माण्डच्छत्रदण्डः शतधृतिभुवनाम्भोरुहो नालदण्डः
क्षौणीनौकूपदण्डः क्षरदमरनदीपट्टिकाकेतुदण्डः ।

---

युक्तम् । स्वेषामात्मीयानां मध्ये यः कश्चिद्दोषः तत्र दमा दण्डप्रकारा न दृश्यन्ते इति ॥ ३४३ ॥ ३४४ ॥

यद्यपि एकपरिहाराकारोदाहरणद्वयमुचितमेव तथापि कश्चिद्विशेषं विवक्षन् व्याक्षिप्य समाधत्ते नन्विति । मा भूदत्र असमासोऽन्यथापि न इदमुदाहरणमिह सङ्गतमित्याह । न केवलमिति । तत् किमनुप्रास एवात्र न भवतीति पृच्छति । केन तर्हीति । उत्तरं पदानुप्रासेनेति । पदानुप्रासेन अर्थभेदाभेदौ विवक्षितौ । किन्तु पदाश्रयेण व्याहतिमात्र पदानुप्रासात्कथितं लाटानुप्रासेऽपि अस्तीति सङ्गत एव इदमुदाहृतमित्यर्थः । ३४५ ॥

ज्योतिश्चक्राक्षदण्डस्त्रिभुवनभवनस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥

अत्रानेकशो दण्ड इत्यस्यावृत्तिः । आभ्यां व्यस्तसमस्तभेदोऽपि व्याख्यातः ॥ ३४६ ॥

यथा,

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥

अत्रानेकधा दशशब्द आवर्तते ॥ ३४७ ॥

अव्यवहितेऽपि द्विगुण्यादेर्न विरोधः । यथा,

वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसङ्काशकाशाः
काशाभा भान्ति तासां नवपुलिनचराः श्रीनदीहंसहंसाः ।
हंसाभाम्भोदमुक्तः स्फुरदमलरुचिर्मेदिनीचन्द्रचन्द्र-
श्चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां कालकालः ॥ ३४८ ॥

व्यवहिताव्यवहितभेदोऽपि दृश्यते यथा,

धनैर्दुष्कुलीनाः कुलीनाः क्रियन्ते
धनैरेव पापान्नरा निस्तरन्ति ।

---

शतधृतिर्ब्रह्मा । तस्य भवनभूतमम्भोरुहं पद्मं कूपदण्डः गुणवृक्षः. दशस्त्वित्येको दशशब्दो व्यस्तोऽन्ये त्रय. समस्ताः ॥ ३४६ ॥ ३४७ ॥

ननु व्यवहित एव किं गुणनादिभेदो नेत्याह । अव्यवहितेऽपीति । वस्त्रायन्त इत्यादौ काशपदपरिहारेण उदाहरणम् । तत्र हि प्रथमः काशशब्दो भिन्नार्थ एव ॥ ३४८ ॥

यत्र व्यवहिताव्यवहितयो. एकवाक्यानुप्रवेशोऽस्ति तत्रापि गुणनाभेद उदाहरणीयः । दृश्यत इत्यनेन यद्वद्व्यवहिते भूयसी गुणना महाकविप्रबन्धेषु प्रतीयते न तद्वदव्यवहितेऽपीति पूर्वं व्यवहितमात्रे गुणनादिकमुपन्यस्तमिति तात्पर्यम् । धनैरिति । अत्र धनपद व्यवधानेन वह्वीर्गुणनामवलम्बमानमेव

धनेभ्यो हि कश्चित् सुहृन्नास्ति लोके
धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ३४९ ॥

योऽपि चार्द्धाभ्यासः सोऽपि व्यवहिताव्यवहितभेद एव ॥

यथा,

येस्त्वं साक्षात्कृतो नाथ तेषां कामेषु को ग्रहः।
येस्त्वसाक्षात्कृतो नाथ तेषां कामेषु को ग्रहः ॥

अत्र पादापेक्षया व्यवहितत्वमर्द्धापेक्षया पुनरव्यवहितत्वं भवति ॥ ३५० ॥

त्रिभागाभ्यासस्तु व्यवहित एव स्वदते।

यथा,—

अद्धायतौ यदि स्यातां मेधया किं प्रयोजनम्।
तावुभौ यदि न स्यातां मेधया किं प्रयोजनम् ॥ ३५१ ॥

पादाभ्यासः पुनरव्यवहितो व्यवहितश्च दृश्यते। तयोः अव्यवहितो यथा,

सन्तः शृणुध्वं हृदये निदध्व-
मुत्क्षिप्य बाहू परिरारटीमि।
न सुभ्रुवा तुल्यमिहास्ति रम्य
न सुभ्रुवा तुल्यमिहास्ति रम्यम् ॥ ३५२ ॥

---

चतुर्थपादे तु अव्यवहिता तु अनुप्रासेऽपि प्रविष्टमिति भवति व्यवहिताव्यवहित-भेदता। सोऽयं पदाभ्यासो दर्शित. ॥ ३४९ ॥

एष श्लोकार्द्धाभ्यासो व्यवहिताव्यवहितभेद एव भवतीत्याह। योऽपीति ॥ ३५० ॥

अद्धा यथावदिति। अत्र यदि स्यातामिति पादभागेन सह पादावृत्तिस्त्रि-भागादृत्तिर्भवति ॥ ३५१ ॥ ३५२ ॥

व्यवहितो यथा,

मुखेन लक्ष्मीर्जयति फुल्लपङ्कजचारुणा ।
दक्षिणेन करेणापि फुल्लपङ्कजचारुणा ॥ ३५३ ॥

इवाद्यावृत्तयोऽपि चात्रैव द्रष्टव्या यथा,

लीनेव प्रतिबिम्बितेव खचितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासन्ततितन्तुजालनिविडस्यूतेव लग्ना प्रिया ॥ ३५४ ॥

यमकानां हि यावन्त्यो वर्ण्यन्ते भेदभक्तयः ।
अनुप्रासस्य लाटानां भिदास्तावन्त्य एव हि ॥ ३५५ ॥

उपमादिवियुक्तापि राजते काव्यपद्धतिः ।
यद्यनुप्रासलेशोऽपि हन्त तत्र निवेश्यते ॥ ३५६ ॥

कुण्डलादिवियुक्तापि कान्ता किमपि शोभते ।
कुङ्कुमेनाङ्गरागश्चेत् सर्वाङ्गीणः प्रयुज्यते ॥ ३५७ ॥

---

मुखेनेति । फुल्लपङ्कजमिव चारुफुल्लेन पङ्कजेन चारुरिति यद्यपि वृत्त्यर्थो भिद्यते तथापि पदानामभिन्नार्थत्वात् उदाहरणता ॥ ३५३ ॥

अर्थाभेद इति नार्थशब्दोऽभिधेयवचनः किन्तु शब्दप्रतिपाद्यमात्रवचन इत्याशयवानाह । इवादीति ॥ ३५४ ॥

ननु अन्येऽपि पदावृत्तिप्रकारा किमिति न उदाहृता इत्यत आह । यमकानां हीति । भेदभक्तयोऽवान्तरप्रकारविच्छित्तय. स्थानास्थानपादभेदलक्षणाः श्लोकावृत्ति परमत्र नास्तीति यमकादपकर्षः ॥ ३५५ ॥

प्रकरणान्ते अनुप्रासव्युत्पादनप्रयोजनमाह । उपमादीति । अनुप्रासलेशोऽपीति । वर्णाद्यनुप्रास ॥ ३५६ ॥

श्रुतिवृत्त्यनुप्रासौ तु सन्दर्भव्यापकाविव प्रशस्तावित्युदाहरणव्याजेनाह । कुण्डलादीति ॥ ३५७ ॥

श्रुतिवर्णानुप्रासावेकविधौ कुन्तलेषु गौडेषु ।
पदयोर्निरनुप्रासो द्वेधा त्रेधा च लाटेषु ॥ ३५८ ॥

वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः ।
नियमस्तद्बुधैः षोढ़ा चित्रमित्यभिधीयते ॥ ३५९ ॥

वर्णशब्देन चात्र स्वराणां पृथङ्निर्देशाद् व्यञ्जनान्येव गृह्यन्ते । तत्र वर्णचित्रेषु चतुर्व्यञ्जनं यथा,

जजौजोजाजिजिज्जाजी तं ततोऽतिततातितुत् ।
भाभोऽभीभाभिभूभाभूरारारिररिरीररः ॥ ३६० ॥

---

एतदेव खण्डसरस्वतीषु कविषु न तथा काव्यसिद्धिरिति दर्शयन् द्रढयति । श्रुतिवर्णानुप्रासाविति ॥ ३५८ ॥

क्रमप्राप्तं चित्रलक्षणमवतारयति । वर्णेति । चित्रमालेख्यं तदिव जीवितस्थानीयध्वनिरहितं चित्रमिति काश्मीरकाः । तदसत् । ध्वनेः प्राधान्यानङ्गीकारात् प्रतीयमानमात्राभावस्य क्वचिदपि असम्भवात् । यद्वा आकृतिविशेषयुक्तं चित्रमिति तदपि न । अव्यापकत्वात् । अतो वर्णादिनियमेन महत्तमाश्चर्यकारितया चित्रमित्येव युक्तम् । वर्णा व्यञ्जनानि । स्थानं कण्ठादि । स्वरा अकारादयः । आकारः पद्माद्याकृत्युन्मुद्रणम् । गतिः पठितिभङ्गविशेषः । बन्धो विविडिति प्रभृति ॥ ३५९ ॥

पद्यप्रभृतिनियमेन तथा शक्तिव्युत्पत्त्योरुत्कर्ष इति चतुरादि गृह्णाति । तत्रेति । अवश्यं योद्धा जाजी । जनेर्युद्धार्थात् आवश्यके णिनि । जाजायुद्धशौण्डाः । तेषामोजसा जातायाऽऽजिः सङ्ग्रामस्तं जयतीति क्विप् । तं वेगुदारिणं ततोऽनन्तरं आततान् । चतुरङ्गबलेन प्राप्तविस्तारान् । आतिनः सततगमनशीलान् । तुदतीति क्विप् । भाना दीप्तताराणुरूपाणां शुक्रबृहस्पत्यादीनामाभेवाभा कान्तिः यस्येति उपमानपूर्वपदबहुव्रीहौ उत्तरपदलोपे च भाभः अभियो भयशून्यानिभानभिभवतीति क्विप् । अभीभाभिभूस्तादृशी या भा तेजस्तया भूराश्रय आर जगाम अरिः शत्रुः बलभद्र इत्यर्थः । अरीणां रो. रवरय रीढ़ताविति धातुस्मरणात् । तस्मा ईरो भूनं राति ददाति अरिरर ॥ ३६० ॥

:

त्रिव्यञ्जनं यथा,

देवानां नन्दनो देवो नोदनो वेदनिन्दिनाम्।
दिवं दुदाव नादेन दाने दानवनन्दिनः ॥ ३६१ ॥

द्विव्यञ्जनं यथा,

भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे।
भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ३६२ ॥

एकव्यञ्जनं यथा,

न नोननुन्नो नुन्नोनो नाऽना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नाऽनेनानुन्ननुन्ननुत् ॥ ३६३ ॥

क्रमस्थसर्वव्यञ्जनं यथा,

कः खगौघङचिच्छौजा झाञ्ज्ञोऽटौठीडडंढणः।

---

देवः सृष्टिस्थितिसंहारक्रीडारतः दानवनन्दी हिरण्यकशिपुः तस्य दाने खण्डने यो नादो वचः कपाटपाटनकटकटाशब्दः तेन दिवं स्वर्गं दुदाव किमेत-दित्याकस्मिकसम्भ्रमेण उपतापयामास। जगत्कण्टकनिराकरणाद् देवानां नन्दन आनन्दकृत्। वेदनिन्दिनाञ्च नोदनः प्रतिक्षेपकः। सामान्याभिप्रायेण एक-वचनम् ॥ ३६१ ॥

भूरिभिर्बहुभिर्भारिभिः प्रकृतिसारभारवाहिभिः अतिप्रमाणकायतया भुवो-भारभूतैः अन्तः काष्ठभाजनो निःस्वानो भेरी तद्वद् रेभिभिः। रेभृशब्दे इति धात्वनु-सारात्। अभ्राभैः प्रथमोन्नतमेघकान्तिभिः इभैर्दन्तिभिर्भियं रान्ति प्रयच्छन्तीति भीरा इभाः प्रतिद्विपा अभिरेभिरे अभियुक्ताः ॥ ३६२ ॥

ननौ। नानानना विविधाकारवदना गणा ऊनेन हीनेन नुन्नोजितो नानन-पुरुषः तथानुन्न इन्नः प्रभुर्यस्य सोऽपि आत्मनि जीवति पुरुषोऽपुरुष एव। यतो-ऽननुन्नेनोऽजितप्रभुर्नुन्नोऽपि अनुन्न एव। तथानुन्ननुन्नः जित इव क्षीवतया पराभूत इति प्रकारे गुणवचनस्येति द्विरुक्तिः। तमपि योऽनुदति सनानेनान-निष्पापः वश्यच्छायार्पकान्यवर्णगुरुलोन्मेषमानप्रयोनकस्तकारो न वृत्तिशरीरान्त-र्गत इति हिव्य जनता नाशङ्कनीया ॥ ३६३ ॥

क्रमस्थेति। वर्णसमाम्नाये येन क्रमेण कादयो मावसानाः पठितास्तेन

तथोदधीन् पफर्वाभीर्मयीरित्वाशिषां सह॥ २६४ ॥

छन्दोऽक्षरव्यञ्जन यथा,

सरत्सुराराति भयाय जाग्रतो
जगत्यलं स्तोत्रजनस्य जायताम्।
स्मित स्मरारेर्गिरिजास्यनीरजे
समितनेत्रत्रितयस्य भूतये॥ २६५ ॥

षड्जादिस्वरव्यञ्जन यथा,

सा ममारिधमनीनिधानिनी सामधामधनिधामसाधिनी।

---

क्रमेण व्यञ्जननिवेश,। क. खगौघस्तत्प्रसिद्धावदानपक्षिसमूहस्तमञ्चतीति क्विन्सयोगान्तलोपे कृते च खगौघाङ्विरूपम्। चित सविद् छ्यति छिनत्तीति चिच्छ यदोजस्तत् नास्ति यस्य असौ अचिच्छौजा। अमु अदने अश्नात् क्विप्। अनुनासिकस्य क्विझलो क्ङितीति उपधादीर्घो मोनो धातोरिति नकार इति अान्परत्वभघकोज पक्षितसोशुनाशुरिति नकारस्य अकार। अर्टाः सङ्ग्राअाङ्गणपर्य्यटनशीला, सुभटान्तानोठते बाधत इति क्विप्। उठगताविति धातोरूपम्। तेषामोडीश्वरः। अडच्छ्णोऽचपलः उच्छ्ण इति अव्युत्पन्नं चपलवाचिप्रातिपदिकम्। तथा अभीर्भयरहितः। एवविध, को नामायमुदधीन् पफर्व। पूरयामास इति प्रश्न। उत्तरम् अरीन् लुनन्ति या आशिषस्तासा सह चमीमयीदैत्यराज इति॥ २६४ ॥

छन्दोऽक्षरेति। म्यरसतजभनगालान्ताम्छन्दो विविति वेदिभि। दशैव वर्णा निर्णीताम्छन्दोरूपप्रसिद्धये। तन्मात्रव्यञ्जननिबद्धं छन्दोऽक्षरव्यञ्जनम्। सुबोधमुदाहरणम्॥ २६५ ॥

षड्जादीति। सरिगामपधानिश्च वर्णाः सप्त स्वरादयः। षड्जादिकृतसङ्केता दृष्टा गान्धर्ववेदिभिः। तन्मात्रव्यञ्जनमय षड्जादिव्यञ्जनम्। सह एन विष्णुना वर्त्तते इति सा लक्ष्मी,। अरीन् धमति तापयतीति धमतेर्ल्युटि बहुलवचनमन्यत्रापीति धमादेश। एवविधा मम भूयादिति शेषः। निधानिनी पद्मादिनिधानवती। साम्न, सान्त्वस्य धाम गृहम्। धनिना धामसाधनी तेजः

मानिनी सगरिमाऽपपापपा सापगा समसमागमाऽसमा ॥

॥ २६६ ॥

मुरजाक्षरव्यञ्जनं यथा,

खरगरकालितकण्ठं मथितगदं मकरकेतुमरणकरम् ।
तड़िदिति रुरुमुण्डहरं हरमन्तरह दधे घोरम् ॥ २६७ ॥

चतुःस्थानचित्रेषु निष्कण्ठ्यं यथा,

भूरिभूतिं पृथुप्रीतिमुरुमूर्त्तिं पुरुस्थितिम् ।
विरिञ्चिं सूचिरुचिधीः शुचिभिर्नुतिभिर्धिनु ॥ २६८ ॥

निस्तालव्यं यथा,

स्फुरत्कुण्डलरत्नौघ मघवद्धनुकर्वुरः ।
मेघनादोऽथ सङ्ग्रामे प्रावृट्कालवदाबभौ ॥ २६९ ॥

---

प्रसाधिका । मानिनी पूजावती सगरिमा गौरववती अपपापान् निष्कलुषान् पाति इति अपपापपा । सेति प्रसिद्धविभवा आपगा नदी तत्तुल्य. क्षणविसर्पि-भङ्गुर. समागमो यस्याः सा तथा । असमा अनुपमा ॥ २६६ ॥

मुरजेति । पाठाक्षराणि मुरजे लहकारौ तथदधाक्षसौ रेफः । नणकखग-घङाद्येत्थं षोडश भरतादिकथितानि । तन्मात्रविरचित मुरजाक्षरव्यञ्जनम् । सुबोधमुदाहरणम् ॥ २६७ ॥

वर्णवत्स्थानेषु अपि चतुरादिनियमेन चित्रम् । यद्यपि चाष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु चेति । तथापि जिह्वामूलीयस्य स्वरत्वादुरस्यनासिक्ययोः काव्यप्रवेशाभावा-द्दुरो नासिकाजिह्वामूलपर्युदासेन स्थानपञ्चके चतुरादिनिरूपणम् । हे सूचि-रुचिधीः शुचिभिः शुद्धाभिनुतिभिः स्तुतिभिर्यथोक्तविशेषण विरिञ्चिं ब्रह्माण धिनु प्रीणयेति । अकुहविसर्जनीयाः कण्ठ्याः ॥ २६८ ॥

कुण्डलरत्नौघ एव मघवतो धनुस्तेन कर्बुरो मेघनादनामा राक्षसः । इचु-यशाः तालव्याः ॥ २६९ ॥

निर्दन्त्यं यथा,

पापापहारी रणकर्मशौण्डश्चण्डीशमिश्रो मम चक्रपाणिः ।
भूयाच्छ्रियापश्रमवेच्यमाणो मोक्षाय मुख्यामरपूगपूज्यः ॥
॥ २७० ॥

निरौष्ठ्रं यथा,

नयनानन्दजनने नक्षत्रगणशालिनि ।
अघने गगने दृष्टिरङ्गने दीयतां सकृत् ॥ २७१ ॥

निर्मूर्द्धन्यं यथा,

शलभा इव धावन्तः सायकास्तस्य भूभुजः ।
निपेतुः सायकच्छिन्नास्तेन संयुगसीमनि ॥ २७२ ॥

त्रिस्थानचित्रेषु निरौष्ठ्रदन्त्यं यथा,

जीयाज्जगज्जेष्ठगरिष्ठचारुचक्रार्चिषा कृष्णकडारकायः ।
हरिर्हिरण्याक्षशरीरहारी खगेशगः श्रीश्रयणीयशय्यः ॥२७३॥

निरौष्ठ्रमूर्द्धन्यं यथा,

अलिनीलालकलतं कं न हन्ति घनस्तनि ।
आननं नलिनच्छायनयनं शशिकान्ति ते ॥ २७४ ॥

---

चण्डीशमिश्र परमेश्वरेणैकशरीरतामापन्नो मुख्यामरा ब्रह्मादयः । तुलसा-दन्त्या' ॥ २७० ॥

अघन इति । शरत्कालशोभया दृश्यतमे । उपूपध्मानीया औष्ठ्राः ॥२७१॥

तेन कथितेन राज्ञा तस्य कोसलाधिपस्य प्रसेनजितः । ऋटुरषा मूर्द्धन्याः ॥ २७२ ॥

निरौष्ठ्र दन्त्यमिति । अनेनैव चित्रान्तरपरिहारेण लोष्टप्रस्तारो गवेषणीयः ॥ २७३ ॥

वर्णोत्तरत्वापि ॥ २७४ ॥

द्विस्थानचित्रेषु दन्त्यकण्ठ्यैर्यथा,

अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना ।
सदानघ ! सदानन्द ! नताङ्गीसङ्गसङ्गत ! ॥ ३७५ ॥

एकस्थानचित्रेषु कण्ठ्यैर्यथा,

अगा गां गाङ्गकाकाक गाहकाघककाकहा ।
अहाहाङ्क खगाङ्कागकङ्कागखगकाकक ॥ ३७६ ॥

स्वरचित्रेषु ह्रस्वैकस्वरं यथा,

उरुगुं द्युगुरुं युत्सु चुक्रुशुस्तुष्टुवुः पुरु ।
लुलुभुः पुपुषुर्मुत्सु मुमुहुर्नु मुहुर्मुहुः ॥ ३७७ ॥

---

सदानघ ! अनवद्य ! सदैव प्रियालाभेनानन्दयुक्त ! हे नताङ्ग्याः कस्याश्चिदन्यस्याः सङ्गे सङ्गत ! तव सदङ्गना शोभनाङ्गना कामाक्रमणया नानारूपतया वर्तते । अतस्तामनुकम्पस्वेति सोपालम्भप्रार्थनावाक्यार्थः ॥ ३७५ ॥

गाङ्गं गङ्गासम्बन्धि जलं तस्य अकः कुटिला गतिः । अक अग कुटिलायां गताविति । तस्या ककस्य तन्मध्यस्य गाहको विलोडकः कुत्सितमघं पापमघकं स एव काकस्तं हतवानघकाकहा । अन्ये तु विसर्गान्तं पठन्ति । तदा जहातेर्विंचिरूपम् । एवंविधस्त्वङ्गा स्वर्गं अगाः याया इति । आशसायाम्भूतप्रत्ययः । कीदृशः सन् हानं हाः न हा अहास्ता जिहीते प्राप्नोतीति आह इत्यादृशमङ्कं यस्य स खगो गरुडः सूर्यौ वासोऽङ्कश्चिह्नभूतौ यस्य तादृशो गोऽर्थान्निरुक्तदर्शिनः कङ्काख्या अगखगा वृक्षनिवासिनः पक्षिणस्तेऽपि आकाकका गमनस्पृहयालवो यस्य स तथा आस्तान्तावदन्ये पतत्रिभिरपि अभिनन्दितगमन इत्यर्थः ॥ ३७६ ॥

स्वरचित्रेषु एकादिक्रमेण उपन्यासो ग्रन्थवैचित्र्यार्थः । उरुगुं विस्तीर्णवाचम् । द्युगुरुं स्वर्वासिनामाचार्यम् । युत्सु युद्धार्थनिमित्तात् कर्मयोग इति सप्तमी । गीर्वाणभटाश्चुक्रुशुरार्त्ताः शरणं ययाचिरे । अतएव पुरु बहुधा तुष्टुवुः । युद्धप्रयोजनमाह । मुत्सु हर्षेषु लुलुभुः पुपुषुः पुष्टा बभूवुः नु वितर्के । मुहुर्मुहुर्वारं वारं किं मुमुहुर्मोहमासादितवन्तः । यतः क्षोभणादीनामव्यवस्थितिभाव ॥ ३७७ ॥

दीर्घैकस्वरं यथा,

> वैधैरैनैरैशैरैन्द्रैरैजैरैलैर्जैनैः सैद्धैः ।
> मैत्रैर्नैकैर्धैर्य्यैर्वैरैर्दैः स्वैः स्वैरैर्दैवैस्तैस्तैः ॥ ३७८ ॥

ह्रस्वद्विस्वरं यथा,

> क्षितिस्थितिमितिक्षिप्तिविधिविन्निधिसिद्धिलिट् ।
> मम त्र्यक्ष नमद्दक्ष हर स्मरहर स्मर ॥ ३७९ ॥

दीर्घद्विस्वरं यथा,

> श्रीदीप्ती ह्रीकीर्त्ती धीनीती गीः प्रीती ।
> एधेते द्वे द्वे ते ये नेमे देवेशे ॥ ३८० ॥

त्रिस्वरेषु ह्रस्वस्वरं यथा,

> क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः ।
> उरु रुरुधुर्गुरु दुधुवुः स्वमरिकुलं युधि कुरवः ॥ ३८१ ॥

---

विधिर्विरिञ्चिः । ई लक्ष्मीस्तस्या इनः प्रभुर्विष्णुरीशो महादेव इन्द्रो वासव ईजः कामो लक्ष्मीपुत्रत्वात् । इला पृथ्वी जिनो बुद्धः सिद्धा देवविशेषा मित्रः सूर्यो रैदो धनदः कुबेरो देवा उक्तव्यतिरिक्ता मरुदादयः । एषां सम्बन्धिभिर्धैर्य्यैर्धृतिभिः स्वैर्वित्तैश्च नैकैरनेकविधैस्तैस्तैः प्रसिद्धरूपैरह स्वैरैः सुष्ठु आसमन्तात् समृद्धो भवानीत्याशंसा वै वाक्यालङ्कारे ॥ ३७८ ॥

क्षितिः पृथ्वी तस्याः स्थितिः पालनं मितिर्मानं क्षिप्तिः संहारस्तद्विधिं वेत्ति । निधिसिद्धी लेढीति क्विप् । नमन् भग्नतेजा दक्षो यस्मात् । स्मरहर कामदहन । त्र्यक्ष त्रिनयन हर महादेव मम स्मर । अधीगर्थयोगे कर्मणि षष्ठी । श्रीदीप्ती लक्ष्मीतेजसी । ह्रीकीर्त्ती लज्जायशसी । धीनीती बुद्धिनयौ । गीः प्रीती वाक्प्रमोदौ । इमे ये देवेशेऽपि न स्तस्ते द्वे तव एधेते वर्द्धेते ॥ ३७९ ॥ ३८० ॥

क्षितेर्विजितिर्विजयः स्थितेर्वर्णाश्रममर्य्यादालक्षणाया विहितिर्विधानं तदेव व्रतं तत्र रतिर्येषां परा श्रेष्ठा गतिर्ज्ञानं येषां ते तथा एवंविधाः कुरवः स्वद्विषां कुलमुरु विस्तीर्णं रुरुधुस्तदेव गुरु महद् दुधुवुः कम्पयामासुः ॥ ३८१ ॥

चतुःस्वरेषु दीर्घस्वरं यथा,

आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः ।
भोगो रोगो मोदो मोहो ध्येये वेच्छेत् क्षेमे देशे ॥ ३८२ ॥

प्रतिव्यञ्जनविन्यस्तस्वरं यथा,

तापेनोग्रोऽस्तु देहे नो ह्येये विल्लोभिनिन्दिना ।
जायाग्रे हि गुणिप्रेष्ठा हितोऽक्षेपोऽस्मतोक्षिणी ॥ ३८३ ॥

तदेवापास्तसमस्तस्वरं यथा,

तपनग्रस्तदहन हयवल्लभनन्दन ।
जय ग्रहगणप्रष्ठ हतचप मतक्षण ॥ ३८४ ॥

आकारचित्रेषु अष्टदलं यथा,

या श्रिता पावनतया यातनच्छिदनी च या ।
याचनीया धिया माया या माया संस्तुता श्रिया ॥

---

आम्नायाना वेदानामन्त्या वाक् उपनिषत् सा हिताहितप्रतिपादनपरा किमाह । या गीतयस्ता ईतय उपसर्गाया: प्रीतय स्ता भीतयो भयानि यो भोग' स रोगो यो मोदो हर्ष' स मोहो न परमेवमाह किन्तु यावद्ध्येये ध्यातव्ये क्षेमे क्षेमरहिते देशे विषये मोक्षलक्षणे इच्छेत् इच्छा कुर्य्यादिति । वाशब्द. समुच्चये । अन्ये चकारमेव पठन्ति ॥ ३८२ ॥

हेये ज्ञातव्ये वस्तुनि या विल्लाभो विद्लृलाभ इति धात्वनुसारात् । तत्र ये लोभिनो लोभवन्त स्तन्निन्दनशीलेन तापेन तेजसा अर्थादुग्रश्चण्डरश्मि स मम देहेऽस्तु तेजस्वीभवानीति यावत् । किमिति एव माशास्यत इत्यत आह । अस्मत्स्यन्दिनि जायाग्रे कान्ताग्रे गुणिना प्रेष्ठा प्रियतमा अक्षेपो अविलम्ब एव हितोऽर्थत समरस्य । इति दत्ताशिष कोऽपि स्वस्मै कार्मुककर्मणे । जगाम समर कर्त्तुमरिलक्ष्मीस्वयम्वरम् ॥ ३८३ ॥

ग्रस्तदहन अभिभूतपावक हयवल्लभोरैवन्त: स तनयो यस्य हतचप अपहृतरावे मतक्षण सन्मतोत्सव ॥ ३८४ ॥

याश्रितेत्यादिकमुदाहरण प्रागेव व्याख्यातमत, पर हारिहरी व्याख्या साधि

अत्र, कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु कुर्य्यादष्टदलाम्बुजे ॥ ३८५ ॥

प्रथमाष्टदलकमलबन्धः।



द्वितीयमष्टदलं यथा,

चर स्फारवर त्वारवरकार गरञ्चर।
चलस्फाल वलत्त्वालवल कालगल ज्वल ॥
अष्टधा कर्णिकावर्णः पत्रेष्वष्टौ तथापरे।

---

अत्रैव लिख्यते। तद्यथा। या देवी पवित्रत्वेनाश्रिता घनीचया तुङ्गया बुद्धग मायामस्याविद्याविस्तारस्य आयास ग्लानि विच्छिद याचनीया यती यातनं नरकानुभवनीय दुःखं छिनत्ति श्रिया स्तुता। अस्य न्यासमाह। कर्णिकायामिति। आद्यौ यावर्णं कर्णिकाया श्रितेति पावेति क्रमेण द्विक द्विकमष्टपत्रेषु। याश्रिता श्रियेत्यादौ दिग्दलेषु प्रवेशनिर्गमौ ॥ ३८५ ॥

चरस्फारेत्यादि। सञ्चरणशीलः स्फारो यो वरः तं त्वरति ददातीति। वरान् श्रेष्ठान् किरति चिपति क्षणोति हिनस्ति वेति कर्मण्यण्। गर, कालः

तेषां सन्धिषु चाप्यष्टावत्र पत्रसरोरुहे ॥ ३८६ ॥

द्वितीयाष्टपत्रबन्धः ।



द्वितीयमष्टपत्रं यथा,

न शशीश नवे भावे नमत्काम नतव्रत ।
नमामि माननमन न नुत्वानु नयं न यम् ॥

अत्र, प्राक्कर्णिकां पुनः पर्णं पर्णाग्रं पर्णकर्णिके ।

कूट. तस्य ज्वरो ज्वरणात् । ताण्डवारम्भे चलाः स्फाला यस्य बलचपवलदेहो सकलप्राप्तशक्ति कालगलनीलकण्ठज्वलदीप्यमानो भव । न्यासमाह । अष्टधेति । अत्र प्रथमार्द्धे एक एव रेफोऽष्टधा कर्णिकायाम् । अपरार्द्धस्य अन्ये अष्टौ लकारवर्ज दलेषु तेषां सन्धिषु अन्ये अष्टौ लकाराः ॥ ३८६ ॥

न शशीशेत्यादि । शशीशो चन्द्रे नवे भावे सक्तो स्थित इति शेषः । त्वामहं न नमामि काक्वा नमाम्येव । नमन् भग्न कामो यस्मात् नतमुपनतं व्रतं यस्य स्वयंनिधीरैथत्वात् माननमनं मनूणामुन्नतिनाशनं नन्विति पूजा सम्बोधने । त्वा इति त्वामनुनयनविनय कुर्वाणोऽयम् । न्यासमाह । प्राक्कर्णिकामिति । पूर्व

प्रतिपत्र' व्रजेद्धीमानिह त्वष्टदलाम्बुजे॥
एवं चतुष्पत्रषोडशपत्रे अपि द्रष्टव्ये॥ ३८७॥

तृतीयाष्टपत्रबन्धः।



तयोश्चतुष्पत्र' यथा,

सासवा त्वा सुमनसा सा नतापीवरोरसा।
सारधामेति सहसा साहसर्द्ध सुवाससा॥
कर्णिकातो नयेदूर्द्धं पत्राकाराच्चरावलीम्।

कर्णिकाया मायी नकारी ग्राह्यस्तत शेति पर्णमध्ये शीति पर्णाग्रे परावृत्य-पर्णकर्णिकयो भकारनकारी पुन कर्णिकाती दलाग्रगमागमेऽपि। अयमेव क्रमश्चतुर्दलपद्मे॥ ३८७॥

सासवेत्यादि। सासवा आस्वादितमदिरा। पीवरेण स्तनाढ्येन उरसा नता। सारधामा उत्कृष्टकान्ति' सहसा सहासा अकस्मात् वा शृङ्गारोद्दीपन-स्वभावेन मार्गशीर्षेण हेतुना शोभनेन वाससा च खचिता हि साहसर्द्धसर्वनिशी-

प्रवेशयेत् कर्णिकायां पद्ममेतत् चतुर्दलम् ॥ ३८८ ॥

---

चतुष्पत्रकमलबन्धः।



---

षोडशपत्रं यथा,

नमस्ते महिमप्रेम नमस्यामतिमद्दम।
धामसोम नमत्काम धामभीम समक्षम ॥
गोमूत्रिकाक्रमेण स्युर्वर्णाः सर्वे समाः समाः।
मध्ये मवर्णविन्यासात् पद्मोऽयं षोडशच्छदः ॥ ३८९ ॥

---

धाम्निशरणमाहसरसिक त्वामिति उपगच्छतीति। न्यासमाह। कर्णिकेति। सुबोधमेतदिति ॥ ३८८ ॥

षोडशपत्रमाह ॥ नमस्त इत्यादि। महिमनि प्रेमा यस्य तं नमस्य अमतिमती दाम्यतीति अमतिमद्दम। धाम बालामात्रेण चूडासङ्गत सोमो यस्य। नमन्भग्नः कामो यस्मात्। धाम्ना तेजसा भीम भयानक समा सकलव्युत्थानहेतु-साधारणी क्षमा यस्य असौ तानि सम्बोधनविशेषणानि ते तुभ्य नमस्कुरुते कश्चि-दिति। न्यासमाह। गोमूत्रिकेति। वर्णा मकारव्यतिरिक्ता समा. मकार-सहिता. समा समा इति वीप्सा प्रतिवर्णं मकारसाहित्यबोधनार्था ॥ ३८९ ॥

षोडशपत्रकमलबन्धः।



अष्टपत्रमेव कविनामाङ्कं यथा,

रातावद्याधिराज्या विसरररसविद् व्याजवाक् छ्मापकारा
राका पद्माभशोभा नयननयनस्था खया स्तव्यमारा।
रामा व्यस्तस्थिरत्वा तुहिननगहितुः श्रीः करच्चारधारा
राधा रक्षास्तु मह्य शिवममवशिव्यालविद्यावतारा ॥

अष्टपत्रमेव कविनामाङ्कमाह। रातावद्येति। गीर्वाणसुभटः कश्चित् युयुत्सुर्दैत्यसेनया। तत्कालकृतसान्निध्या मायादेवीपूजयत्। तथाहि। व्याजो माया सैव वाग्रूपाव्याजशब्दोपपद वागभिधान यस्या. सा मह्य रक्षा-स्त्विति सम्बन्धः। रात दत्तमवद्य दोषबहुलमाधिराज्यमवद्या आधयो यत्र तादृशं वा राज्य यया विशिष्ट सरण विसरस्त राति प्रयच्छति यो रसोऽर्थादीरस्त वेत्ति विन्दति वा या छाया पृथिव्यामपकारः पुत्रकलत्रादिरूपो यस्याः सकाशादिति

निविष्टाष्टदलन्यासमिदं पादार्द्धभक्तिभिः ।
अस्पृष्टकर्णिक कोणैः कविनामाङ्कमम्बुजम् ॥
तत्राङ्को राजशेखरकमलः। एतेन चक्रमपि व्याख्यातम् ॥२९०॥

---

अष्टदलकमलबन्धः ।



---

गमकत्वात् बहुव्रीहिः । राका पूर्णिमा द्वादशवर्षदेशीयकन्यारूपा वा । पद्माभः शरीरसलग्न. शेष' सर्पो यस्या नयनन्नीति स्तान्नयतीति य नयन दृष्टिर्ज्ञानमिति यावत् । तदेव स्वमात्मा यस्या खे व्योम्नि यातीति खया स्तव्यो मारो मारण कामो वा यस्याः सा रामा रमणीया स्त्रीरूपा वा व्यस्त विनाश्रित स्थिरत्न यया तुह्नि

चक्रं यथा,

> स त्वं मानविशिष्टमाजिरभसादालम्ब्य भव्यः पुरो
> लब्धाघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा ।
> मुक्त्वा काममपास्तभीः परमृगव्याधः स नादं हरे-
> रेकौघैः समकालमभ्रमुदयी रोपैस्तदा तस्तरे ॥
> पुरः पुरो लिखेत् पादानत्र त्रीन् षडरीकृतान् ।
> तुर्य्यन्तु भ्रमयेन्नेमौ नामाङ्कश्चक्रसंविधिः ॥

अत्राङ्कः माघकाव्यमिदं शिशुपालवधः ॥ २९१ ॥

---

न नयति प्रापयतीति नयतेर्डप्रत्यये तुहिनग' चन्द्र' तस्य नद्धितुर्जटाजूटे बन्धयितु. परमेश्वरस्य श्री शक्तिरूपा न हि अतिबध्नातीति नहेर्विचिनह स्तुतिमासादय- सीति सर्वप्रातिपदिकेभ्य. क्विब्वक्तव्य इति क्विपि टजन्तस्य रूपम् । क सुखं राति ददातीति कर तस्य घारभूता दस्यवस्तेषा खड्गादिधारेव धाराच्छेत्री राधेति देव्या. पौराणिक नाम ममेति अव्यय भावप्रधान शिवे मम त्व मान्ति परि- च्छिन्दन्ति ये वशिनो योगिनस्तेषामपि व्यालविद्या क्षुद्रविद्यामवतारयति या सा तथा । न्यासमाह । निविष्टेति ॥ अष्टभि पादार्द्धैरष्टदलविरचना । यट्- वर्णाष्टक नाम्ना उत्तिष्ठति तदाह । राजशेखरकमल । कविकाव्यनामलाभात् अविभक्तिकत्वमपि अदोष' । एतेनेति । नामाङ्कपद्मकथनेन चक्रमपि नामाङ्क- मवसेयम् ॥ २९० ॥

स त्वमित्यादि । हरेर्नाद सिंहनाद रोपैर्बाणै. आजिरभसात् सङ्ग्रामहर्षा- दुद्धुरतरश्रीवत्सभूमि उन्नतहृदय. सत्वमालम्ब्य मानेन विशिष्टमिति तद्विशेषणम् । प्राप्तपापविनाशो मुदा हर्षेण अपगतभी शत्रुहरिणव्याधोऽभ्रमाकाश पिदधे तदा तस्मिन् काले सिंहनाद मुक्त्वा इति सम्बन्ध. । न्यासमाह ॥ पुर इति । पुर. पुरो लिखित्वाऽन्यानपि लिखेद्यथा षडरा. सम्पद्यन्ते ॥ २९१ ॥

षड़रचक्रबन्धः ।



एवं चतुरङ्गमपि यथा,

शुद्धं वद्धसुरास्थिसारविषमत्वग्गुग्जयातिस्थिर
भ्रष्टोद्धर्मरजः पदं गवि गवा चोणेन चञ्चद्भ्रुवा ।

---

यथा वा शुद्धमित्यादिचक्रं से मम गवि वाचि शुद्धमकलुषं धर्मादुत्क्रान्त-सुजर्संसीहृशं यद्रजो राजसभावः तस्य पदं स्थानं तद्भ्रष्टं विनष्टं यस्मादस्ताविधि-दिग्दैवपारतन्त्र्यं यत्र तथाविध शुचा शोकेन च न वक्रीकृतसनूपहृतम् सदमसुप-

स्थ्यं चिन्तितगुप्तिरस्तविधिदिग् भेदं न चक्रं शुचा
चारोऽप्राशुरदभ्रमुग्रतनु मे रम्यो भवानीरुचा ॥
अत्राङ्कः शुभ्रतरवाचा बद्धचितिचक्रं राजगुरुणेदं सादर-
मवादि ॥ ३९२ ॥

द्वितीयषडरचक्रबन्धः ।




चित यद्वद् कल्याण तत्तनु विस्तारयेति प्रार्थना । बद्धे रचद्धारीक्षते, सुराणां ब्रह्मादीनां सार शिरसदस्थिभिर्वद्धमुण्डमालाभिर्भयानक । रुजा रोगाणां

गतिचित्रेषु गतप्रत्यागतं यथा,

वारणागगभीरा सा साराभीगगणारवा ।
कारितारिवधा सेना नासेधावरितारिका ॥

अत्रायुक्पादयोर्गतिर्युक्पादयोः प्रत्यागतिः ॥ २८३ ॥

तदक्षरगतं यथा,

निशितासिरतोऽभीकोन्येजतेऽमरणा रुचा ।
चारुणा रमते जन्ये कोभीतो रसिताशिनि ॥

अत्र गत प्रत्यागगताभ्यां स एव श्लोकः ॥ २८४ ॥

---

नयेनातिस्थिर । अर्वाचीन उपचितेन चन्द्रमुवा साह्लादेन गवा वृषेण लाञ्छित । लथ्यमिति क्रियाविशेषणम् । चिन्तिता गुप्तिर्भूताना रक्षा येन । चारुरमणीय । उग्रो महादेवस्त्वमप्राय: सर्वस्मात् उच्चैः पदे स्थितो भवानीरुचा वामार्द्धस्थित पार्वतीकान्त्या रम्यस्तन्विति सम्बन्ध. । अत्र पूर्ववदेव न्यास. । अष्टास्तु चत्वार इति विशेष: ॥ २८२ ॥

इदानी गतिचित्रप्रस्ताव: । वारणेत्यादि । वारणा एव अगा पर्वता: तै: गभीरा दुरवगाहा सारा श्रेष्ठा भिय येन यान्ति तादृशाना गणानामारवो यत्र । सारो वाभीगगणारवो यत्र । कारित कृतो रीणा वधो यया । स्वार्थे णिच् । आसेध: परै: प्रतिषेधस्तेन हीना । वरिता सुभटैर्युद्धाय्याहूता अरयो यस्या सा तथा । वर ईप्सायामिति धातो क्तप्रत्यये वरितेति रूपसिद्धि' । अत्र अयुक्पादयो प्रथमतृतीययो: आनुलोम्येन वर्णावली गृहीत्वा तत्प्रतिलोमरूपौ युक्पादौ द्वितीयचतुर्थौ गृह्येते । पठितैर्वर्णैर्द्वर्णान्तरसञ्चारो गतिस्तन्नियमनेन चित्र गतिचित्र स चात्र यथोक्तरूप एव ॥ २८३ ॥

हे अमरणा मरणरहिता निशितखड्गरतो भयशून्यस्य रुचा तेजसा न्येजते न कम्पते । यो हि भीत' स कथ' शब्दायमानाशनशीलरघ पिशाचादिसङ्कुले जन्ये सङ्ग्रामे दारुणाकारतुरगादिना रमते न कथञ्चिदित्यर्थ' । अत्र सन्दर्भसमाप्तिपर्यन्तं या वर्णमाला गृहीता सैव समाप्ति: आरभ्य प्रत्यागत्या यावदारम्भ' समाप्यत इति पूर्वम् भङ्गेन एवमिति ॥ २८४ ॥

श्लोकान्तरम्। यथा,

वाहनाऽजनि मानासे साराजावनमा ततः।
मत्तसारगराजेभे भारीहावज्जनध्वनि ॥

अत्र प्रातिलोम्येनापरः श्लोको भवति यथा,

निध्वनज्जवहारीभा भेजे रागरसात्तमः।
ततमानवजारासा सेना मानिजनाहवा ॥ २९५ ॥

भाषान्तरगतं यथा,

इह रे बहला लासे बाला राहुमलीमसा।
सालका रसलीला सा तुङ्गालारलि कलारत ॥

अत्र प्रातिलोम्येनापरः प्राकृतश्लोको भवति ॥ यथा,

तरला कलिला गातुं सालाली सरकालसा।
सामली महुरालावा सेलाला इव रेहइ ॥ २९६ ॥

---

वाहनेति। ततः अनन्तर वाहना सेना अनमा नतिशून्या अजनि जाता। आराजौ उत्कृष्टसयासे परमानासे परमानक्षेपके मत्ता सारगाः सोत्कर्षगतिशालिनी राजेभा राजदन्तिनो यत्र। भारिण. स्वामिना अर्पितसमरभराः। अतएव यथोचितचेष्टावन्त तेषा जनाना ध्वनिः सिंहनादो यत्रेति क्रियाविशेषणमित्यनुलोमश्लोकार्थ.। निध्वनन्त स्वनन्तो जवेन वेगेन हारिण इभा यत्र। ततो विस्तीर्णो मानवजारास सैनिककृत आरावः कोलाहलो यत्र। मानिजनाना साहङ्काराणा वीराणामाहवो द्वन्द्वयुद्ध यत्र। ईदृशी सेना रागरसात् परलक्ष्मीहरणरसेन तमो भेजे क्रोधमवापेति प्रतिलोमश्लोकार्थ ॥ २९५ ॥

इह रे इत्यादि। लासे नृत्ये बहला असङ्कुचिता राहुमलीमसा श्यामा सालका भूकर्णादिपरभागार्पकचूर्णकुन्तलवती रसात्शृङ्गारात्लीला यस्याः सा तथा तुङ्गा उच्चव्यवहारा एवंविधा सा बाला रे चतु षष्टिकलारत अलालिलालिता त्वयेति संस्कृतश्लोकार्थ.। कला गीतवाद्यनृत्याना सङ्गीसहिता करणपटीयसी गातुं तरला त्वरिता सालाली नानाहस्तपङ्क्ति तदीयेन स्वरकेण मधुना मधु-स्याना मधुरालापा सेला उत्तमा नारी "सेला स्यादुत्तमा नारीति देशीकोशे" .

तदर्थानुगतं यथा,

विदिते दिवि केऽनीके तं यान्तं निर्जिताजिनि ।
विगदं नवि रोद्धारो योद्धा यो नतिमेति न ॥

अत्र प्रातिलोम्येन स एव पदार्थः ॥ २९७ ॥

तुरङ्गपदं यथा,

बाला सुकालबाला सा कान्तिलालकलालिता ।
सत्वा सुतवती सारा दर्पिका व्रतगर्हिता ॥

क्रमात् पादचतुष्कोऽस्य पङ्क्तिशः परिलेखिते ।
तुरङ्गपदपातेन श्लोकोऽन्य उपजायते ॥

यथा,

बाला ललिततीव्रसत्वा सुकला रागतर्पिका ।
सुदन्तिका वर्द्धिता वा सा कालातललासका ॥ २९८ ॥

---

ऽरया मदिरया वर्त्तते सेवा बारलयोरैकत्वस्मरणादिति केचित् । तच्चिन्त्यम् । अलाभूषयितो । इवधवेति सम्बोधनम् । रेहइ राजते प्राकृतश्लोकार्थः । एवं भाषान्तराणामपि गतप्रत्यागतौ बोद्धव्ये ॥ २९६ ॥

विदित इत्यादि । विदिते स्वर्गवासिनामपि प्रसिद्धे निर्जिता परेषामाजयो युद्धानि येन तादृशि अनीके समरे प्राप्त नवि पराजानरूपाया वाचि विगद हृदयज्वररहित के नाम भटा रोद्धारो न केऽपि सन्तीत्यर्थः । तद्धि यो योद्धा सन् कथमपि नतिं नम्रतां न एति न याति । अत्र तदर्थक एव प्रतिलोमश्लोकः । स यथा । नतिं मेति न योद्धा यो रोद्धारो विगद नवि । निर्जिताजिनि यान्तं तं केऽनीके विदिते दिवि ॥ २९७ ॥

बालेत्यादि । बाला षोडशवर्षदेशीया शोभनलावण्यकेशी कान्तिमदचूर्णकुन्तल-शोभिता सत्वा आत्मसम्प्रयुक्ता सुतवती पुत्रयुक्ता उत्कृष्टा निरालम्बकरणाद्रता अभिलषितस्वविवाहादिव्रतादाङ्क्षा अत एव भवत्खेति हृदये इति शेषः । न्यास-मात्र । क्रमादिति । ललितो मनोज्ञस्तीव्र प्रवीणः स्व आत्मा यस्याः रागेण प्रेम्णा तर्पयति या शोभनदन्तयुता वर्द्धितावासा सम्पूर्णीकृतसकलस्थाना काली-

तुरङ्गपदबन्धः ।

| वा१ | ला३० | सु ९ | का२० | ल३ | वा२४ | सा११ | का२६ |
|---|---|---|---|---|---|---|---|
| का१६ | न्ति१९ | सा२ | ल२९ | वा१० | सा२७ | खि४ | ता२३ |
| स३१ | स्वा८ | सु१७ | त१४ | व२१ | ती ६ | सा२५ | रा१२ |
| द१८ | पिं१५ | का३२ | व्र ७ | त२८ | ग १३ | ङ्गिं२३ | त५ |

आहुरर्द्धभ्रमं नाम श्लोकार्द्धभ्रमणं यदि ।
तदिष्टं सर्वतोभद्रं सर्वतो भ्रमणं यदि ॥

तयोरर्द्धभ्रमं यथा,

ससत्वरतिदे नित्यं सदरामर्षनाशिनि ।
त्वराधिककसनादे रमकत्वमकर्षति ॥ ३९९ ॥

सर्वतोभद्रं यथा,

देवाकानिनि कावादे वाहिकास्वस्वकाहि वा ।
काकारेभभरे काका निस्वभव्यव्यभस्वनि ॥ ४०० ॥

---

मृषाव्याहारस्तेन सह वर्त्तते या तद्विलासका नर्त्तका यस्याः सा तथाभूता अथ-
ज्ञातसकलनर्त्तकलीलेत्यर्थः । एवम्भूता सा बाला त्वया उपभुक्तेति वाक्यार्थः ॥३९८॥

स सत्वेति । सदरा सभयास्त्वराधिकानाद्रसन् इतस्ततः सञ्चरन् नादो
यत्र अतएव वीरान् प्रतिरसकत्वमकर्षति ॥ ३९९ ॥

कनी दीप्तौ । देवानाकनितुं शीलं यस्य दूषणादौ यत्र तस्य मस्तकस्य
सन्ना सक्ता भाटीग्रहण यत्रेति वा वाहिका पर्य्यायवचनम् । पर्य्यायार्हर्णो-
त्पत्तिषु इति ण्वुच् । सैव स्व वित्तभूता येषामेवंविधा ये स्वकाः आत्मपक्षीयास्ताना-
जिहीते इति विच् । क मदञ्जलमाकिरति इति काकारस्तादृश इभभरी हासिका
यत्र हेऽकाका सालिका इति सम्बोधनम् । काका, सद्यासक्तोलुभा वा क्वचित्
कर्ण्यपि घञ् । निःस्वा निरात्मानो भव्या आधेयगुणास्तानपि व्ययन्ति स्व-

बन्धचक्रेषु द्वितुचष्कचक्रबन्धो यथा,

जय देव नरेन्द्रादे लम्बोदर विनायक।
जगदेधनचन्द्राभालङ्घिदन्त विभायते॥

इह शिखरसन्धिमालां बिभृयादर्धैं समाश्रितैर्वर्णैः।
द्विचतुष्कं चक्रबन्धे नेमिविधौ चापरं भ्रमयेत्॥ ४०१॥

द्विचतुष्कचक्रबन्धः।



तेन उपद्रवयन्ति ये ते निखिलसत्त्वाशेषा भस्मानि भर्स्नशीले "भसभर्त्सन" इत्यत. क्विप्॥ ४००॥

जयद इत्यादि। न ता इन्द्रादयो यस्मै स तथा जगता सेधनवर्धनचन्द्राभा-लङ्घिनीचन्द्रकान्तिविजयिनी दन्तप्रभाणासायति. यस्य स तथा। न्यासमाह। इहेति। शिखरमाला। सन्धिमाला च पूर्वार्धवर्णै क्रमेण 'विभृयात्पूरयेत्। नेमिविधौ चाऽपरमुत्तरार्धं भ्रमयेत्। द्वे शृङ्गाटके मिथो वैपरीत्येन यत्र शिखर द्विश्शृङ्गाटकम्॥ ४०१॥

द्विशृङ्गाटकबन्धो यथा,

करासञ्जवशी शङ्कगौरवस्य कलारसम्।
सन्धाय वलयांशङ्कामगौरीं मे वनात्मक॥
शृङ्गाद् ग्रन्थिं पुनः शृङ्गं ग्रन्थेः शृङ्गं व्रजेदिति।
द्विशृङ्गाटकबन्धेऽस्मिन्नेमिः शेषाक्षरैर्भवेत्॥

अत्राङ्को राजशेखरस्य॥ ४०२॥

द्विशृङ्गाटकचक्रबन्धः।



करे किरणे आसञ्जयतीति करासञ्ज खे व्योम्नि गौरव यस्य स तथा वनात्मकजलस्वरूपचन्द्रकलासु रसमनुराग सन्धाय कृत्वा अन्तःस्वच्छतया दृश्यमानो भागनेमिमण्डलयाकारोल्लेखिनीं मे मम अगौरीं श्यामां शङ्कामपनय। स्य इति क्रियापदम्। पूर्णो भवेति यावत्। वशिवम् आयत्तशङ्करमिति क्रियाविशेषणम्। न्यासमाह। शृङ्गादिति। शेषाक्षरैरिति। आद्यात्ककारादारभ्य यावत्सनाभिशेषं च अक्षराणि तैर्नेमिरिति न्यासः। अत्र ग्रन्थिवर्णैरेव राजशेखरस्य इति न। वर्णावली लभ्यते। ४०२।

विविडितबन्धो यथा,

सा सती जयतादत्र सरन्ती यमितालसा ।
सारं परं स च जयी शमिताऽस्यन्दनेनसा ॥
शिखरादन्यतमात् वै प्रतिपर्वं भ्रमति रेखयाद्यर्द्धम् ।
नेमौ तदितरमर्द्धं विविडितचक्राभिधे बन्धे ॥ ४०३ ॥

विविडितचक्रबन्धः ।



विविडितबन्धस्तु पञ्चशृङ्गचक्रम् । तद्देवताम्नाये दर्शितम् । कर्पूरकुन्द गौरीं तनुमतनुकार्मुकभ्रूकाम् । वरदानसुन्दरकरां विविडितचक्रस्थितां वन्दे । इति । प्रसिद्धानुभावा सती गौरी सरन्ती निरर्गलप्रसरा न क्लाम्यति इति अलसा अस्यन्दनेन स्थिरेण एनसा कल्मषेण शमिता विक्लवीभूता रहितेति यावत् । शम- वैक्लव्ये । अत्र जगति परं सारं य भगवन्तमिता सङ्गता । स च जयी महे श्वरो जयतादिति । न्यासमाह । शिखरादिति । अन्यतमाद्वा इति पाठः । अन्यतमस्मादिति पाठे तु सर्वनामत्वं चिन्त्यम् । केचित्तु किं यत्तदेकान्येभ्य इति पठित्वा डतमद्वारिका सर्वनामतामाहुः । गणे चान्यतरशब्दं न पठन्ति । अव्युत्पत्तिमात्र चेदमनिर्द्धारितैकाभिधायकः तु अन्यतमशब्दः ॥ ४०३ ॥

मुरजबन्धो यथा,

नमस्ते जगतां गात्र सदानवकुलक्षय ।
समस्तेऽज सतां नात्र मुदामवन लक्षय ॥

चतुर्ष्वपि च पादेषु पङ्क्तिशो लिखितेष्विह ।
आदेरादेस्तु रङ्गस्य पादैः पादः समाप्यते ॥ ४०४ ॥

---

मुरजबन्धः ।

| न | म | स्ते | ज | ग | तां | गा | त्र |
|---|---|---|---|---|---|---|---|
| स | दा | न | व | कु | ल | क्ष | य |
| स | म | स्ते | ज | स | ता | ना | त्र |
| मु | दा | म | व | न | ल | क्ष | य |

व्योमबन्धो यथा,

कमलावलिहारिविकासविशेषवहं जनकाङ्क
ननगामिकरं दिविसारमनारमणं जरतां न ।

---

नमस्त इत्यादि । जगतां नाम रूपप्रपञ्चस्य गात्रभूतदानवकुलक्षयेण सहित-मुदा हर्षाणां रक्षक अनविष्णो अत्र जगति सतां मध्ये न कोऽपि ते तव समस्तो लक्षय दृक्पातेन अनुगृहाण मामितिशेषः । न्यासमाह । चतुर्ष्वपीति । शेष सुबोधम् ॥ ४०४ ॥

कमलावलिषु पद्मखण्डेषु प्रशस्तेषु हारी मनोज्ञो यो विकाशस्तस्य वोढारं जनैर्लोकैस्तुत्य तदीयङ्क शिरस्तनाङ्कचिह्नभूतनमगामि कर किन्तु विस्टलरकिरण-

तमसां बलहानिविलासवशेन वरं जनकान्त
न नमामि चिरं सवितारमनादिमहं जगतां न ॥
अष्टादशशिखरचरीं गोमूत्रिकया चतुष्पदीं पश्येत् ।
यत्राद्यन्तैर्दृष्टां स ज्ञेयो व्योमबन्ध इति ॥ ४०५ ॥

व्योमबन्धः ।



सेव दिवि वैमानिकपथे सारभूत नरतां.परिणतानामनारमण न किन्तु प्रीति-
करमेव तमसा बलहानौ यो विलासवशः सन्ततो व्यापारस्तेन वरमुत्कृष्ट नन-

सुरजबन्धो यथा,

सा सेना गमनारम्भे रसेनासीदनारता।
तारनादजना मत्तधीरनागमनामया ॥
अत्र पादचतुष्केऽपि क्रमशः परिलेखिते।
श्लोकपादक्रमेण स्याद्रेखासु सुरजत्वयो ॥ ४०६ ॥

सुरजबन्धः।




ध्वान्तलोकहृदयद्रमणगतामनादिं न किन्तु आदिमेव एवंविधं भगवन्तं सवितारमहं न नमामि किन्तु नमाम्येव। न्यासमाह। अष्टादशेति। आद्य सौष्टदलानीति। पादाद्यन्तवर्णयोरैक्यादिति बोध्यम् ॥ ४०५ ॥

अनारता अविच्छिन्नप्रहरणव्यापारा आसीत्। मत्तधीरनागमिति क्रियाविशेषणम्। रसेन वीरेण। महःप्रागल्भ्यञ्जना। अत्र न्यासमाह। अत्रेति। अत्र पुटचतुष्काकल्पनया मुरजद्वयोन्मेष ॥ ४०६ ॥

एकाक्षरमुरजबन्धो यथा,

सुरानन त्वां न न ह्याननष्टये पुनः स्तुवेऽनघे घनप्लवाननम् ।
मनस्यनूनप्रधनप्रधूननं सकाननस्थाननदीननर्दनम् ॥

श्लोकस्यैतस्य पादेषु लिखितेषु चतुर्ष्वपि ।
त्रिस्तदङ्ककरीह स्याच्चतुरेकाक्षरावली ॥ ४०७ ॥

एकाक्षरमुरजबन्धः ।



सुराणां देवानामाननं मुखं तद्भूतवह्ने । ह्याननष्टये हानिनाशार्थत्वात् न न स्तुवे । किन्तु स्तौम्येव । पुनरिति देवतान्तरव्यावृत्तौ स्तुत्यावृत्तौ वा । अनघे घनौघप्राणने यस्मात् । घनपाणन इति धात्वनुसारात् । प्रणतानां मनसि यदूनमनादिभवपरम्परानुपाति प्रधनं व्यसनं तस्य धूननं प्रतिक्षेपकं सकाननेषु वनगहनेषु स्थानेषु नदीनस्य पयोराशेरिव नर्दनं कोलाहलो यस्येति । न्यासमाह । श्लोकस्य एतस्येति । प्रथमपादस्यादक्षरादारभ्य चतुर्थपादस्यमक्षरं

मुरजप्रस्तारो यथा,

तालसारप्रभा राका तारकापतिदंसिता ।
मारधामा रमाधीता वलयामास सागरम् ॥
क्रमेणैवास्य पादेषु प्रसृतेषु चतुर्ष्वपि ।
तुर्य्यान् मुरजमार्गेण श्लोकोऽयमुपजायते ॥
वरकारप्रद धीर तारधामाऽसमासिका ।
सा लतामालयाऽमाऽप ताराभाऽतिरसागता ॥ ४०८ ॥

---

मुरजप्रस्तारः ।

---




---

यावदेकजातीयाक्षरचतुष्कावली गृहीत्वा परावृत्य तज्जातीयानामेव चतुष्टयी गृह्यते । तेनैकमुरजोन्मुद्रणामपरत्रापि अनेनैव प्रकारेणान्योऽदाहरणे एकाक्षरमुरजत्रयी भवतीति न्यासार्थः ॥ ४०७ ॥

तालतरोर्यत्सारः खाद्यभागः तत्प्रभेव अवदाता प्रभा यस्याः । राका पूर्णिमा- तारकापतिना चन्द्रेण दंसिता कवलिता । सारस्य कामस्य धाम स्थानं यत्र ।

उदाहरणमात्रञ्चैतत्। तेन गतिचित्रादिगोमूत्रिकादयोऽन्येऽपि चित्रप्रकारा भवन्ति॥

गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव।
गोमूत्रिकेति तत् प्राहुर्दुष्करं चित्रवेदिनः॥

तेषु पादे गोमूत्रिका यथा,

काङ्क्षन् पुलोमतनयास्तनताडितानि
वक्षःस्थलोच्छ्रितरयाञ्चनपीडितानि।
पायादपायभयतो नमुचिप्रहारी
मायामपास्य भवतोऽम्बुमुचां प्रसारी॥

सेयमयुग्मतः पादगोमूत्रिका॥ ४०९॥

---

रमया लक्ष्म्या अधीताऽभ्यस्ता सलक्ष्मीकेत्यर्थः। वलयामास चालितवती। बलवन्तं वा चकार। त्रिन्मती लुगित्यनुशासनात। क्रमेणैवेति। तुर्याच्च पादप्रथमाक्षरात उपक्रमे येन येन मार्गेण मुरजाकृतिर्लभ्यते। तेनायमपर श्लोको भवति। वरस्य ईप्सितस्य वस्तुनः कारः कारण ततप्रद तार दीप्त धाम कान्तिः यस्याः। असमा अनन्यसाधारणी आसिका स्थितिर्यस्याः सा नायिका लतासा लया सङ्केतलतामण्डपेन असामाङ्गं आप प्राप्तवती। तारा रोहिणीप्रभृतिस्तदात्मा। तारैर्निर्मलमौक्तिकैर्वा भाति या। अतिशयिनेन रसेन पूर्णा उपगता सङ्गता। प्रकृतोदाहरणेऽष्टाक्षरप्रस्तावान्त पाती य प्रकारस्तदन्त पाती मुरजाक्षरैर्लभ्यते॥ ४०८॥

ननु यावत उदाहृतमेव किं गत्यादिचित्र तथा सति किं गोमूत्रिकादीनां पृथग्भागविभागव्याघात. स्यादित्यत आह। उदाहरणमात्र चैतदिति। गतिः पठिति सञ्चारी वर्णानामुच्चावच वा ऊर्ध्वाध.पर्यायेण प्रवृत्ता। माया संसारबन्धमपास्य दुःखभयात्पायादिति सम्बन्ध। न्यासो यथा। अयुग्मत. प्रथमात् तृतीयाच्च उपक्रम्य द्वितीयचतुर्थपादसन्दर्भेन गोमूत्रिकया प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च परस्परसुन्मेषणमितीयमयुक्पादगोमूत्रिका॥ ४ ९॥

पादगोमूत्रिकाबन्धः ।

क्वां लु स न स्त पो ता
द्व लो त या न ङि नि
व स्थ क्षि ब ज्ज पो ता

युग्मतो यथा,

देवः शशाङ्कशकलाभरणः पिनाकी
देयः शमैकविकलेभरणः सनागः ।
चित्ते महासुरजनेन शुभ विधत्तां
चित्त महासुरजनानतभङ्गधन्वा ॥ ४१० ॥

अर्द्धश्लोकगोमूत्रिका यथा,

चूडाप्रोतेन्दुभागद्युतिदलिततमस्कन्दलीचक्रवालो
देवो देयादुदार शममरजनतानन्दनोऽनन्यधामा ।
क्रीडाधूतेशभामा द्युसदनतनिमच्छेदनो च भ्रुवा नो
देहे देवी दुरीर दममरतनतानन्दिनोमान्यधामा ॥ ४११॥

---

महासुरजनेन ब्रह्मादिना चित्ते देयो धारणीय शमेनैकेन विकलीकृत इभरणो गजासुरयुद्ध येन शुभ कल्मषरहित विधत्तामविशेषेण ससारिणामेव । अत्र पूर्ववत्समपदम् उपक्रम्य विषमपादसन्दर्भेन समाप्तिरिति विशेष. तेनेय युक्पादगोमूत्रिका ॥ ४१० ॥

इन्दोर्भागः खण्ड श कल्याणम् अमरजनता देवसमूहो नास्ति अन्यद्धाम स्थान यस्य सोऽनन्यधामा । स्वात्माराम इत्यर्थ न पर देवो देवी च । भ्रुवा भ्रूविपेण दुरीर दुरपनय नोऽस्माक देहे दम देयादिति सम्बन्ध ॥ धूतेशभामाप्रणयेन अपहृतपरमेश्वरप्रणयरोषा । भामक्रोधे इति धात्वनुसारात् । द्युसदना देवा. । अरतमविश्रान्तम् । नन्दिना नता उमा गौरी अपूर्व धाम तेजो यस्या. ॥ ४११ ॥

श्लोकगोमूत्रिकायां प्रथमश्लोको यथा,

पायाद्वश्चन्द्रधारी सकलसुरशिरोलीढपादारविन्दो
देव्या रुद्धाङ्गभागः पुरदनुजदवः स्थानसंविन्निधानम्।
कन्दर्पक्षोददक्षः सरससुरवधूमण्डलीगीतगर्वो
दैत्याधीशान्धकेनानतचरणनखः शङ्करो भव्यभाव्यः॥ ४१२॥

द्वितीयो यथा,

देयान्नश्चण्डधामा सलिलहरकरो रूढकन्दारविन्दो
देहे रुग्भङ्गरागः सुरमनुजदमस्त्यागसम्पन्निधानम्।
मन्दं दिक् क्षोभदश्रीः सदसदरवधूखण्डनागीरगर्यो-
ऽदैत्ये धीबन्धहानावततरयनयः शंपरो दिव्यसेव्यः॥४१३॥

विपरीतगोमूत्रिकायां प्रथमः श्लोको यथा,

विनायकं दानसुगन्धिवक्त्रं स्मितानन मन्दचरं कथासु।
नमामि विघ्नावलिहारिसारं सतीसुतं शङ्करवल्लभं च॥

विपरीतश्लोको यथा,

चलल्लतालब्धशमं सुभासं संसारहारं बहुविप्रमान्यम्।
सुधाकरं चन्द्रमसं नतोऽस्मि सवर्णगर्भं नवकम्बुनाभ्यम्॥४१४॥

---

पुरास्यदानवस्य दवो दावाग्निः स्थानाया घनायाः संविदो निदानम्। दैत्याधीशेन अन्धकेन आनतचरणो भव्यानामुत्तमानां भाव्यो ध्येयः॥ ४१२॥

रूढकन्दानि अरविन्दानि यस्मात् प्रणतानां रुग्भङ्गरागो यस्य सुराणां मनुजानां च दमस्त्रूलान् दमतीति वा। त्यागसम्पदो निधानमाश्रयो दिशां क्षोभदायिका श्रीः यस्य सदे उपवने सदरा सभया या वधूः तदीयानां खण्डनागिरां निर्भर्त्सनवचसामविषयः। अदैत्ये हीनदैत्ये धीबन्धहानाय संसारबन्धविच्छित्तये विस्तीर्णरयो नयो यस्य शं सुखं पिपर्त्ति पूरयतीति शम्परो दिव्यं सेव्यश्चेति एवंविधः चण्डधामा रविर्नोऽस्माकं देहे भद्रं कल्याणं देयादित्यर्थः॥ ४१३॥

मन्दचरं मदालसगमनं कथासु भक्तदेवानां वार्त्तासु सद्धाश्रयतया स्मेराननम्। विघ्नपरम्पराहारिणाञ्च सारमुत्कृष्टम्। चलन्तीनां लतानामारम्भ

भिन्नच्छन्दोगोमूत्रिकाया प्रथमश्लोको यथा,

नमत चन्द्रकलामयमण्डन नगसुताभुजसङ्गतकन्धरम्।
हरमभाग्यरदं स्तवसादर शमितरावणशासनविक्रमम्॥

द्वितीयश्लोको यथा,

कामदं चण्डकम्र मदामर्दिनं
नागदन्ताज्यजय्य गदाकर्वुरम्।
धीरशोभाभरव्यस्तकं सासुरं
नौमि नारायणस्यासम विभ्रमम्॥ ४१५॥

संस्कृतप्राकृतगोमूत्रिकाया संस्कृतश्लोको यथा,

स्कन्दो कुन्दर्द्धिमिष्टा वितरतु सरलो दारितारातिवर्गी
सस्यन्दोऽमन्दसञ्ज्ञो भवभयकलने सङ्गरे केलिकारी।
सन्दोहोल्लाघलासी जन इह बलिहा चण्डताभूरखर्वी
देवौजोराजदोहे महिमनि निरतो विक्रमाडम्बरेण॥

---

सान्त्वन येन बहुविप्रमान्य द्विजराजशेखरत्वात्। समानवर्णसध्यगम्। नवेन कम्बुनाप्युपचितम्। आद्यश्लोकस्याधस्ताद्विपरीतो द्वितीयश्लोको लेख्य। तत: क्रमगोमूत्रिकया परस्परोल्लेख ॥ ४१४॥

अभाग्यस्य रद विलेखक नाशकमिति यावत्। कामद वाञ्छितप्रद चण्डमुग्र कम्र कमनीयञ्च परेषा दर्पमर्दनशील नागस्य कालियाख्यस्य दंष्ट्राभि. कुवलयापीडाख्यस्य हस्तिनो वा विषाणाभ्या या आजि. संग्राम तत्र अजय्य जेतुमशक्यम्। गदया नानारत्नखचितया कर्वुर चित्रमिति यावत्। स्कन्द. कार्त्तिकेय। कुन्दा विपुला दारिते शत्रुसमूहे सस्यन्द स्फुरद्रूपो मन्द स्वस्थ-चित्त. भवभयस्य संसारत्रासस्य कलने क्षेपण इह जने मर्त्यलोके सन्दोहेन य उल्लाघ सामर्थ्यम्। नीरोगत्वात् तेन लसन शील बलिना हन्ता। चण्ड-ताया तैक्ष्ण्यस्य भूराश्रयोऽखर्व सर्वेषामुपरिवर्त्तमान. देवौजसा राज्ञा खण्ड-यित्री ईहा चेष्टा यत्र तादृशे महिम्नि निरतो विहरणे सञ्चरणे सफल.। उद्भूत.

प्राकृतश्लोको यथा,

चन्दो कन्दप्पमित्तं विहरणसहलो हारितारापबन्धो
सच्छन्दो वन्दणिज्जो कुवलयदलनो सङ्करे मेलिकारी।
कन्दोट्ठोल्लासलासो जअइ सिवसिहामण्डलीभूअखण्डो
देन्ता जोण्हा जलोहे विहिअणिअरई विब्भमाणं वलेण॥

॥ ४१६ ॥ (व)

समसंस्कृतप्राकृतेन पादगोमूत्रिका यथा,

बाला विलासावलिहारिहासा लोलासला भावसहा सहावा।
देहं हरन्ती सरसा सुरामा गेहं चरन्ती सहसाभिरामा॥

॥ ४१७ ॥

अर्द्धगोमूत्रिकाप्रस्तारो यथा,

नमो दिवसपूराय सुतामरसभासिने।
नतभव्यारिदाराय सुसारलयभाविने॥

---

(व) चन्द्र. कन्दर्पमित्र विहरणसफलो हारिताराप्रबन्ध
स्वच्छन्दो वन्दनीय कुवलयदलन. शङ्करे मेलिकारी।
कान्दोट्टोल्लासलासी जयति शिवशिखामण्डलीभूतखण्ड:
दत्तज्योत्स्नाजलौघो विहितनिजरतिर्विभ्रमाणा बलेन॥

---

शुभाशुभसूचकत्वात्। मेलिकारी सङ्गमकरी चूडामणित्वात्। ऐक्यकारी वा तन्मूर्त्तित्वात्। कन्दोट कुमुदमिष्टाभिमत तद्विकाशेन चलनशीलो ज्योत्स्ना जलौघान् ददत्। विभ्रमाण बलेन विहितानिजे आत्मनि रतिर्येन स तथा। विलासावलिषु हारी विकाशो यस्या: लीला चला अमला निर्मला भावाननेकविधान् या सहते सा भावसहा। हाव: क्रीडाविशेषो दिवसान् पूरयतीति दिवसपूरा तस्मै सुष्ठु तामरसेषु भासनशीलाया। नता भव्या यस्मै अरीन्दारयतीति अरिदार। तत: कर्मधारय:। नतानां भव्यानामरिदारेति वा। नता भव्या अरिदारा यस्मिन्निति वा। सुष्ठु सारो लय. तत्र लयन त भावयति यस्तस्मै।

अत्र गोमूत्रिकाश्लोकोऽयमुत्तिष्ठति,

नतदिव्यासदाराय सुसामलसभासिने।
नमो भवरिपूराय सुताररयभाविने॥ ४१८॥

---

अर्द्धगोमूत्रिका बन्धः।

---

मो व पू य ता र भ
दि स रा म स सि
न भ रि सु र य वि ने
त व्या दा य सा ल भा

गोमूत्रिकाधेनुर्यथा,

मम स्फुरतु चित्ततः सततचिन्त्यरच्चा मतिः
समस्तरविचित्रितस्तुतरुचि' स्मरच्चेमकृत्।
समर्ज्जितचिन्तितः कृतविचित्ररत्यामयो
नमस्करणचिह्नितः स्मितरुचिर्हरः सामरः॥
चतुर्णामपि पादाना क्रमेण व्युत्क्रमेण च।
इय गोमूत्रिकाधेनुर्वैपरीत्यवशेन च॥ ४१९

---

नता दिव्या देवा यस्मै। असदविद्यमानमरिचक्र यस्य। तत कर्मधारय शोभनाना साम्ना लसनेन भासनशीलाय भानि नचत्राण्यावरितु शील यस्येति भवरि आकाश पूरयति व्याप्नोति एवम्भूताय। सुष्ठतार उच्छ्रितो यो रथो वेगो गमन तेन भाविने॥ १५—१८॥

## प्रथम भेदः।

| म | स | स | न |
|---|---|---|---|
| म | म | म | म |
| स्फु | स्त | र्द्धि | स्त्र |
| र | र | र | र |
| तु | वि | त | ण |
| चि | चि | चि | चि |
| ह्न | वि | न्ति | ह्नि |
| तः | त | तः | त |
| स | स्तु | क्त | स्मि |
| त | त | त | त |
| त | रु | वि | रु |
| चि | चिः | चि | चि |
| न्त्य | स्म | त | हं |
| र | र | र | रः |
| चा | चे | त्या | सा |
| म | म | म | म |
| ति' | क्षत् | यी | रः |

## द्वितीय भेदः।

| १ ममस्फु | २ समस्त | ३ समर्धि | ४ नमस्त्र |
|---|---|---|---|
| २ समस्त | ३ समर्धि | ४ नमस्त्र | १ ममस्फु |
| ३ समर्धि | ४ नमस्त्र | १ ममस्फु | २ समस्त |
| १ ममस्फु | ३ समर्द्धि | २ समस्त | ४ नमस्त्र |
| १ ममस्फु | ४ नमस्त्र | २ समस्त | ३ समर्द्धि |
| २ समस्त | ४ नमस्त्र | १ ममस्फु | ३ समर्द्धि |
| ४ नमस्त्र | ३ समर्द्धि | २ समस्त | १ ममस्फु |
| ३ समर्द्धि | २ समस्त | १ ममस्फु | ४ नमस्त्र |
| २ समस्त | १ ममस्फु | ४ नमस्त्र | ३ समर्द्धि |
| ४ नमस्त्र | २ समस्त | ३ समर्द्धि | १ ममस्फु |
| ४ नमस्त्र | १ ममस्फु | ३ समर्द्धि | २ समस्त |
| ३ समर्द्धि | १ ममस्फु | ४ नमस्त्र | २ समस्त |

## तृतीयभेदः।

| ममस्फु | नमस्त्र | समस्त | समर्धि |
|---|---|---|---|
| नमस्त्र | समस्त | समर्धि | ममस्फु |
| समस्त | समर्धि | ममस्फु | नमस्त्र |
| समर्धि | ममस्फु | नमस्त्र | समस्त |

## चतुर्थभेदः।

| ममस्फु | समस्त | समर्द्धि | नमस्त्र |
|---|---|---|---|
| समस्त | समर्द्धि | नमस्त्र | ममस्फु |
| समर्द्धि | नमस्त्र | ममस्फु | समस्त |
| नमस्त्र | ममस्फु | समस्त | समर्द्धि |

## पञ्चमभेदः।

| ममस्फु | समर्धि | समस्त | नमस्त्र |
|---|---|---|---|
| समर्धि | समस्त | नमस्त्र | ममस्फु |
| समस्त | नमस्त्र | ममस्फु | समर्धि |
| नमस्त्र | ममस्फु | समर्धि | समस्त |

## षष्ठभेदः ।

| ममस्फु | नमस्क | समस्त | समर्धि |
|---|---|---|---|
| नमस्क | समस्त | समर्धि | ममस्फु |
| समस्त | समर्धि | ममस्फु | नमस्क |
| समर्धि | ममस्फु | नमस्क | समस्त |

## सप्तमभेदः ।

| समस्त | समर्धि | ममस्फु | नमस्क |
|---|---|---|---|
| समर्धि | ममस्फु | नमस्क | समस्त |
| ममस्फु | नमस्क | समस्त | समर्धि |
| नमस्क | समस्त | समर्धि | ममस्फु |

## अष्टमभेदः ।

| नमस्क | ममस्फु | समस्त | समर्धि |
|---|---|---|---|
| ममस्फु | समस्त | समर्धि | नमस्क |
| समस्त | समर्धि | नमस्क | ममस्फु |
| समर्धि | नमस्क | ममस्फु | समस्त |

## नवमभेदः ।

| समर्धि | नमस्क | ममस्फु | समस्त |
|---|---|---|---|
| नमस्क | ममस्फु | समस्त | समर्धि |
| ममस्फु | समस्त | समर्धि | नमस्क |
| समस्त | समर्धि | नमस्क | ममस्फु |

## दशमभेदः ।

| समर्धि | ममस्फु | समस्त | नमस्क |
|---|---|---|---|
| ममस्फु | समस्त | नमस्क | समर्धि |
| समस्त | नमस्क | समर्धि | ममस्फु |
| नमस्क | समर्धि | ममस्फु | समस्त |

देवैः स्तुत्या किन्नरगेया भक्त्या वर-
चरितमहिषमथनी जगत्त्रयनायिका ।
सिद्धैर्ध्येया केशरियाना काम्या रण-
चतुररसिकहृदया त्रिलोचनवल्लभा
धीरैः पूज्या दर्पणपाणिर्नून गुणि-
निलयलटभललिता सतीषु धुरन्धरा ॥
यतिर्धिच्छेदिनी ह्येषा श्लोकधेनुरनुत्तमा ।
छन्दोभेदाच्छतमियं प्रसूते श्लोकतर्णकान् ॥ ४२० ॥

लब्धम् ।

| ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ |
| ७ | २१ | ३५ | ३५ | २१ | ७ | १ |

| वन्द्या | देवैः | सिद्धैः | धीरैः |
|---|---|---|---|
| देवी | स्तुत्या | ध्येया | पूज्या |
| पर्वतपुत्री | किन्नरगेया | केसरियाना | दर्पणपाणि |
| नित्य | भक्त्या | काम्या | नून |
| मधुमधुर | वरचरित | रणचतुर | गुणिनिलय |
| कमलवदना | महिषमथनी | रसिकहृदया | लटभललिता |
| पुरध्यधिदेवता | जगत्त्रयनायिका | त्रिलोचनवल्लभा | सतीषु धुरन्धरा |

देवैः स्तुत्या किन्नरगेया भक्त्या वर-
चरितमहिषमथनी जगत्त्रयनायिका ।
सिद्धैर्ध्येया केशरियाना काम्या रण-
चतुररसिकहृदया त्रिलोचनवल्लभा
धीरैः पूज्या दर्पणपाणिर्नून गुणि-
निलयलटभललिता सतीषु धुरन्धरा ॥
यतिभिच्छेदिनी ह्येषा श्लोकधेनुरनुत्तमा ।
छन्दोभेदाच्छतमिय प्रसूते श्लोकतर्णकान् ॥ ४२० ॥

लब्धम् ।

| ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ |
| ७ | २१ | ३५ | ३५ | २१ | ७ | १ |

| वन्द्या | देवैः | सिद्धैः | धीरैः |
|---|---|---|---|
| देवी | स्तुत्या | ध्येया | पूज्या |
| पर्वतपुत्री | किन्नरगेया | केसरियाना | दर्पणपाणि |
| नित्य | भक्त्या | काम्या | नून |
| मधुमधुर | वरचरित | रणचतुर | गुणिनिलय |
| कमलवदना | महिषमथनी | रसिकहृदया | लटभललिता |
| पुरध्यधिदेवता | जगत्त्रयनायिका | त्रिलोचनवल्लभा | सतीषु धुरन्धरा |

८ वदे
९ वप
१० वनि
११ वम
१२ वक
१३ वपु
१४ टेप
१५ देनि
१६ देम
१७ टेक
१८ टेपु
१९ पनि
२० पम
२१ पक
२२ पपु
२३ निम
२४ निक
२५ निपु
२६ पक
२७ मपु
२८ कपु
२९ वदेप
३० वपनि
३१ वनिम
३१ वमक
३३ वकपु
३४ देपनि
३५ देनिम
३६ देमक
३७ टेकपु
३८ देपुव
३९ पनिम
४० पमक
४१ पकपु
४२ पपुव
४३ पवदे
४४ निमक
४५ निकपु
४६ निपुव
४७ निवदे
४८ निदेप
४९ मकपु
५० मपुव
५१ मवदे
५२ मटेप
५३ मपनि
५४ कपुव
५५ कवदे
५६ कदेप
५७ कपनि
५८ कनिम
५९ पुवटे
६० पुटेप
३१ पुपनि
३२ पुनिम
६३ पुमक
६४ वदेपनि
६५ वपनिम
२६ वनिमक
६७ वमकपु
३८ वकपुव
३९ देपनिम
७० देनिमक
७१ देमकपु
७२ टकपुव
७३ टेपुवदे
७४ पनिमक
७५ पमकपु
७६ पकपुव
७७ पपुवदे
७८ पवटेप
७९ निमकपु
८० निकपुव
८१ निपुवदे
८२ निवदेप
८३ निटेपनि
८४ मकपुव
८५ मपुवदे
८६ मवदेप
८७ मपनिम
८८ मपुटेनि
८९ कपुवदे
९० कवटेप
९१ कदेपनि
९२ कपनिम
९३ कनिमक
९४ पुवदेप
९५ पुदेपनि
९६ पुपनिम
९७ पुनिमक
९८ पुमकपु
९९ वटेपनिम
१०० वपनिमक
१ वनिमकपु
१ देपनिमक
२ देनिमकपु
८ देमकपुव
५ पनिमकपु
६ पमकपुव
० पपुवटेप
८ निमकपुव
९ निकपुवदे
१० निपुवटेप
११ मकपुवटे
१२ मपुवटेप
१३ मवटेपनि
१४ कपुवटेप
१५ कवटेपनि
१६ कटेपनिम
१७ पुवटेपनि
१८ पुदेपनिम
१९ पुपनिमक
२० वटेपनिमक
२१ पुवटेपनिम
२२ कपुवटेपनि
२३ मकपुवटेप
२४ निमकपुवदे
२५ पनिमकपुव
२६ टेपनिमकपु
२७ वटेपनिमकपु

सहस्रधेनुर्यथा,

> नखमुखपाणिकण्ठचिकुरैर्गतिभिः
> सहसास्मितेन ललिते सुदृशा
> मणिशशिपद्मकम्बुचमराः करिणः
> सुतनोः सुधाच हसिता हरिणाः ।
> फणिगणसिद्धसाध्यदयिता न समाः
> सकलास्त्वया च खभुवम्कलिता-
> स्तव बलरूपराज्यविजिता नितरां
> विबुधाश्चिराय चरितैश्चतुरैः ॥

पदविच्छेदिनी ह्येषा श्लोकधेनुरनुत्तमा।
छन्दोभेदाद्दशशतीं प्रसूते श्लोकतर्णकान् ॥ ४२१ ॥

---

वन्द्येति । तरैण दैवताप्रसादेन चरितौ निरर्गलप्रसरौ गुणानामाश्रयौ उदभ मनोज्ञ च ललित विलासो यस्या सातथा यतिविच्छेदीति । अत्र करणम् । प्रतिलोम विनिक्षिप्यमनुलोममथ क्षिपेत स्थितेनागन्तुक इत्यादीप्सितेन विभाजयेत् । स्थित प्रतिलोममागन्तुक क्रमविन्यस्तमीप्सित हि प्रतिलोमस्य क्रमेण फल गुणकारस्तथैव अनुलोम भागहार । अनेन क्रमेणैकयतियोजने सप्त श्लोका । यतिद्विकयोजने च एकविंशति' । यतित्रिकयोजने च पञ्चविंशत् । यतिचतुष्कयोजनेऽपि तावन्त एव । यतिपञ्चकयोजने पुनरेक विंशति । षड्यतियोजने सप्तमयतियोजने त्वेक सर्वमेलनेन च सप्तविंशत्यधिक शतम् । अत्र च क्रियाहीनत्वेन कारकविहीनत्वेन च पदान्वयत्वतया पादान्वयत्वाभावत्वेन च निरर्थकान् षड्विंशतिमपास्य धेनुश्लोक एक एव वृत्तभेदेन शत श्लोकतर्णकान प्रसूते । तथाहि । प्रथमद्वितीयचतुर्थीभिर्यतिभि रत्युक्ता जाति । तृतीयपञ्चमीभ्या सुप्रतिष्ठा । षष्ठ्या गायत्री । सप्तम्या चोऽष्णिगिति । एकगणनाया वृत्तभेद । एव द्विकादिगणनेऽपि गवेषणीयम् ।४२०।

नखेति । हे ललिते गौरि तव शोभनया दृशा सुतनो शोभनस्य शरीरस्य । साध्या देवविशेषा खभुवो ग्रहताराद्या । राज्यत इति राज्यम् । आसुवपिरपि वपिचनयेति रापतिभाषितमित्यर्थ । दर्पेति पाठेन वा योजनीयम । पदविच्छेदिनीति । पादानि षत्र प्रतिपद सुधाकलङ्काभिधाने छन्दांसि षड्

अयुतधेनुर्यथा,

क्षिये जयसि जृम्भसे सृजसि जायसे
त्रायसे स्तुषे मृषसि मृष्यसे हृषसि प्रीयसे ।
स्तुषे मृडसि हीडसे क्रुडसि गल्भसे क्लीवसे
क्रुषे हरसि रज्यसे रजसि राजसे भ्राजसे ॥
एषा तु पदविच्छेदैरन्येव धनुः क्रियापदैः ।
सम्बोधनाग्रगैर्दृष्टाऽस्माभिः श्लोकायुतप्रसूः ॥ ४२२ ॥

लक्षधेनुर्यथा,

दुर्गे भद्रे सुभद्रेऽदिति सुरभि दिते सैंहिके गौरि पद्मे
नित्ये हृद्ये वरेण्ये कलि कमलिकले कालिके चण्डि चण्डे ।
धन्ये पुण्ये शरण्ये शुचि शबरि शिवे भैरवे रात्रि सन्ध्ये
क्षाये माये मनोज्ञेऽवनि जननि जये मङ्गले देहि शं नः ॥

---

विभज्यन्ते । यद्यपि द्वितीयतृतीयपादयोः चकाराभ्यां नकारेण चतुर्थपादे तवेति पदाधिक्यं तथापि आद्यपादार्थानुरोधेन समुच्चीयमाननिषिध्यमानार्थानुरञ्जकत्वेन सम्बोध्यमानार्थानुवादितया चकारनकारयोः तवेति च तत्पादावयवरूपा एवेति तदसत्कल्पमेव । तथाच षड्भ्य पदवर्ये उपादीयमाने सप्तदशाक्षराया जातौ यथा सख्यानुरोधेनाद्येऽङ्घ्रौ प्रस्ताररचनाक्रमेण दश विकल्पाः तृतीयचतुर्थयोश्च पादयोस्तावन्तस्तावन्त एवेति । दशभिराहतैर्दशभि शतम् । शतेन चाहतैर्दशभि सहस्रं तदर्थका श्लोका समुत्पद्यन्ते इतीयं सहस्रधेनुः ॥ ४२१ ॥

क्षिये इति । हे क्षिये । कर्मन् । मिष स्पर्द्धायाम् । पीड्पाने मृडसुखने तुदादौ हीड् अनादरे । कुड सङ्घारे । रज्यसे आसजसि । रजसि नत्सरयसि । राजसे शोभसे । भ्राजसे जाज्वल्यसे । एषेति । इह पृथ्वीनामनि छन्दसि । षड्भ्य सम्बोधनानुगे पदचतुष्टये उपादीयमाने एकादशाक्षराया जातौ प्रस्तारत्वेन यदि वा छन्दभेदस्य शब्देनाप्रतिपादितत्वात् तद्भेदोऽपि उदाहरणीय इति तस्यामेव रथोद्धताभिधाने छन्दसि दशसु विकल्पेषु प्रतिपाद भवन्तु दशभि शत शतेन सहस्र सहस्रेण च दशसहस्राणि तदर्थका श्लोका. समुत्पद्यन्ते इतीयमयुतधेनुः ॥ ४२२ ॥

दुर्गे इति सम्बोधनैरिति । अत्र हि स्रग्धराभिधाने छन्दसि पादत्रय-

सम्बोधनैरियं धेनुः क्लृप्ता नैकक्रियापदैः।
लक्षत्रयं सहस्राणि षष्टि श्लोकान् प्रसूयते ॥
एषान्यपदभेदेन सम्भ्रमादिद्विरुक्तिभिः।
यावद्बोध पुनः सूते प्रयुतं श्लोकतर्णकान् ॥ ४२३ ॥

कोटिधेनुर्यथा.

स्थूल दत्से सूक्ष्मं धत्से
भुवि भवसि नभसि रमसे रमे दिवि मोदसे

---

पदानुरोधिनान्यपादद्वयेन एकैकमेव पदं तुर्यपादे परिकल्प्यमिति सर्वत्र नवसु पदेषु स्थितेषु पदचतुष्टये पदपञ्चके च उपादीयमाने प्रथमे आपातलिकाया पञ्चविंशतौ द्वितीये एकया प्राच्यवृत्त्या सह वैतालीयके यदि वा पञ्चभि प्राच्यवृत्तिभि. समनौपच्छन्दसिके चतुर्विंशतौ तृतीयवैतालीये एव चतुर्विंशतौ चतुर्थपदे प्राच्यवृत्तिद्वये समस्यापातलिकाया षोडशभिरेकया प्राच्यवृत्त्या वैतालीयप्राच्यवृत्त्या सह वैतालीये षड्भिस्तथैवौपच्छन्दसिके द्वाभ्यामिति चतुर्विंशतौ विकल्पेषु प्रभवत्सु पञ्चविंशत्याहतेषु चतुर्विंशतौ शतानि षट्। षड्भिश्च शतैराहतेषु पञ्चविंशतौ सहस्राणि। पञ्चदश। तैराहतेषु चतुर्विंशतौ लक्षाणि त्रीणि सहस्राणि च षष्टि तर्णका' श्लोका समुत्पद्यन्त इतीय लक्षधेनु। एषेति तथाहि अत्र पादत्रये नवसु तुर्यपादे च दशसु। त्रये पदचतुष्के पदपञ्चके च उपादीय माने प्रथम औपच्छन्दसिक एकस्य पदस्य द्विरुक्त्या विंशतौ यदि वा आपातलिकाया दश। वैतालीये पञ्चदशसु औपच्छन्दसिके उदीच्यवृत्तिद्वयेन वद्वैतालीये चतसृभिः उदीच्यवृत्तिभि समभेकोनविंशतिरिति च पञ्चविंशतौ तृतीय स्मिन्नौपच्छन्दसिके पञ्चभि प्राच्यवृत्तिभि समभेकादश। वैतालीये तथैव चतुर्दश औपच्छन्दसिके तिसृभि प्राच्यवृत्तिभि सह षड्विंति विंशतौ तृतीयस्मिन्नौपच्छन्दसिके तिसृभि' उदीच्यवृत्तिभि सम पञ्चविंशतौ चतुर्थे त्वापातलिकायामेक एव। द्विरुक्त्यादिना षोडशभि प्राच्यवृत्तिभि. समसप्ततौ विकल्पेषु प्रभवत्सु विंशत्याहतपञ्चविंशतौ पञ्चविंशत्या द्वाविंशतौ पञ्चशताधिकानि द्वादशसहस्राणि तै अपि आहतेषु अशीतौ दशलक्षाणि तर्णकश्लोका' समुत्पद्यन्त इति इय प्रयुत धेनु ॥ ४२३ ॥

स्थूलमिति। प्रेष इति इष गताविल्यस्य विति चैतन्ये दधुगार्थे। स च सेव चसे रमे जवे चलरुचे इति देव्या. सम्बोधनपदानि। सम्बोधनैरिति। अत्र भुजङ्गविजृम्भिते छन्दसि एकादशभ्यः पदेभ्य, पञ्चसु षट्सु च पदेषु उपादीय-

छिन्त्से वाढं भिन्त्से गाढं
रुषि सिषसि धनुषि सनुषे जये युधि विजृम्भसे।
स्वल्पं प्रेषे कल्पं प्रेषे
चिति चरसि यशसि यतसे चले युधि गल्भसे
ब्रूषे वामं सूषे कामं
हृदि विशसि वचसि सचसे रुचे दृशि दीप्यसे॥
सम्बाधनैर्द्वितीयान्तैः सप्तम्यन्तैः क्रियापदैः।
श्लोककोटीरियं तिस्रः सार्द्धा धेनुः प्रसूयते॥
यदा तु सम्भ्रमादिभ्यो भवन्त्यस्या द्विरुक्तयः।
स्थूलादीनां तदा चैषा दशकोटीः प्रसूयते॥ ४२४॥

कामधेनुर्यथा,

या गौ. शौः श्री धीः स्त्री ह्री श्री जूं सूं स्रू स्रू धूं. प्रूं भूंः
स्रुक् स्रग् युग् भुग्रुक् शुक् त्वट् द्विट् युत् क्रुत् चिद्विन्मुग्दिग् द्युः।
त्रटक् दृग् वा मा स्रत् छन्ना सा सुत् चुत् काऽसा द्वा द्यौ गौः
सा सा या सा से धा वे धा से ना मा ते त्व मे नौः॥

---

सानेषु जगती जातौ प्रसिद्धाचरोज्ज्वला जलधरमाला नवमालिनी छन्द सु सप्तसौ। द्वितीये पूर्वेषु। चन्द्रवर्त्म द्रुतविलम्बितमणिमालाप्रभवत्सु च शते तृतीयेऽस्मिन् प्रथमपादच्छन्दस्येव पञ्चाशति चतुर्थपादे द्वितीयपादच्छन्दस्येव शतेषु विकल्पेषु प्रभवत्सु सप्तत्या हतेषु शतेषु सप्तति सहस्राणि शतेराहताया सप्तति-सहस्रे आहतेषु पञ्चाशल्लक्षाणि त्रीणि सहस्राणि च पञ्चाशते आहते शते कोट्यास्तत्र सार्द्धास्तर्णका श्लोका सम्पद्यन्त इतीयं कोटिधेनु। यदा त्विति। तथाहि पदत्रये पदचतुष्के पदपञ्चके च उपादीयमाने पूर्वं स्यामेव जातौ प्रथम-द्वितीयचतुर्थेषु पादेषु प्रत्येक जलधरमालाप्रभाच्छन्दसोरेकस्य द्वयोर्द्विरुक्त्या शते तृतीयस्मिंश्च पूर्वयोर्मणिमालोज्ज्वलानवमालिनीतामरसेषु छन्द सु तथैव शते विकल्पेषु प्रभवत्सु शतेन आहते शते दशसहस्राणि तैश्च आहते शते दशलक्षाणि तैः अपि आहते शते कोट्यस्तर्णका श्लोका सम्पद्यन्त इतीयमेव दशकोटिधेनु॥४२४॥

यागौरिति। पदग्रहादिति। तथाहि। पञ्चदशभ्य पदेभ्य क्रमव्युत्क्रमाभ्या नवादिपदयोगे अङ्गीक्रियमाणे बृहतीजातेरारभ्य प्रतिजातिपादे ये विकल्पा-

पदग्रहाद् यथाकामं कामधेनुरियं तु नः ।
परार्द्धानां परार्द्धानि प्रसूते श्लोकतर्णकान् ॥
एकाक्षरादिच्छन्दोभिर्गतिबन्धादिभेदतः ।
उक्तानुक्तानि चित्राणि सर्वाण्येषा प्रसूयते ॥
सकृदुच्चारणे चास्या गच्छत्येका विनाडिका ।
तत् षष्ट्या नाडिका ताभिः षष्ट्याहोरात्रमृच्छति ॥
प्रणवादिनमोऽन्ताभिः पदान्यस्या जयन्ति ये ।
सर्वभाषासु वाक् तेषामविच्छिन्ना प्रवर्त्तते ॥
सिद्धैर्मन्त्रपदैः सेयं शास्त्राण्यालोच्य निर्मिता ।
जपता जुह्वता देवी सर्वान् कामान् प्रयच्छति ॥
स्थितेनागन्तुकं हन्याद्धीप्सितेन विभाजयेत् ।
तद्भेदास्ते भवन्त्येवमन्येष्वपि हि योजयेत् ॥ ४२५ ॥

यानं यातीति या काचिच्छ्रया । गिरणं गृणातीति वाक्-स्वगीः । शरणं शीः शृणातीति शीः । श्रयतीति शोभा लक्ष्मीश्च श्रीः । ध्यानं ध्यायतीति बुद्धिर्धीः । स्रेव स्तृणाति-मन्त्राक्षरं स्त्री । क्रोशतीति माया लज्जा च क्रीः । बिभे-तीति भयकारोभयं च भीः । ज्वरो गतिर्जरा च जूः । मूर्च्छा-मोहसमुच्छाययोर्बन्धनं च मूः । त्वराहिंसात्वरते च तूः । सूयते सवनं सुष्ठु उश्च सूः । अग्रे भागे भारं धूर्वहतीति धूः । पुरीपालनं पूरणं च पूः । भूमिर्भवनं लोकश्च भूः । यज्ञपात्रं स्रवतीति स्रवणं स्रुक् । पुष्पमालापङ्क्तिश्च सृज्यत इति

---

स्तैरुत्तरोत्तरम् आहन्यमानैर्यदि वा समस्तेऽपि श्लोके षष्टिपदेभ्य चतुर्विंशत्यष्टाविंशत्यादिपदयोजनाया गायत्रीजातेरारभ्य प्रतिजाति ये विकल्पास्तैः परार्द्धेभ्यः परार्द्धानि तर्णकश्लोकाः समुत्पद्यन्त इतीयं परार्द्धपरार्द्धधेनुः । एकाक्षरेति अर्थत्रयप्रतिपादकत्वेन प्रतिपादं पदत्रये परिकल्प्यमानेऽनेकविधच्छन्दोभिरुक्तानि चतुर्थ्य-ङ्गनादीनि अनुक्तानि खड्गप्रभृतीनि सर्वं चित्राण्येषैव यथाकामं प्रसूत इत्यर्थः ॥४२५॥

स्रक्। योगः समाधिः समश्च युक्। भोजनं पालनं कौटिल्य च भुक्। रोगो दीप्तिर्भङ्गश्च रुक्। शोकः शुचित्वं दीप्तिश्च शुक्। अभिलाषः पिपासा हिंसा च तृट्। द्वेषं शत्रुत्वमभिलाषश्च द्विट्। शुद्ध मिश्रणममिश्रणञ्च युत्। क्रोधः क्रुध्यतीति रुद्रशक्तिश्च क्रुत्। चेतनाचिनोति चयनञ्च चित्। ज्ञानं सत्ताविभवलाभश्च वित्। मोचो मोहो मुञ्चतीति मुक्। आशा अतिसर्गश्च उपदेशो दिक्। क्रीडाविजिगीषा व्यवहारश्च द्युः। श्रुतिवाक्य विवेचनं च हिंसा च ऋटक्। दृष्टिर्ज्ञानं पश्यतीति दृक्। गतिर्गन्धन विकल्पश्च वा। लक्ष्मीर्मान शब्दावयश्च मा। स्मृतिकामरण स्मृञ्जातीति स्मृत्। कृन्तति करोति करणं च कृत्। दीप्तिर्मान भातीति भा। शब्दः शब्दावयवश्च प्रतिषेधश्च मा। हर्षो मोद आमोदश्च मुत्। बुभुक्षात् क्षुत्क्षोदश्च क्षुत्। प्रश्नः सुख काननं च का। असतीत्यमापीडार्थऽलक्ष्मीशब्दावयवश्च अमा। द्वार द्वास्थ उपायश्च द्वाः। स्वर्ग आकाशो देवनं च द्यौः। वाग्भूमिर्धनुश्च गौः। सह एन अकारेण विष्णुना वर्त्तत इति सा लक्ष्मीः सा। सानन्तदो रूपं च सा प्रतिदान शब्दावयवश्च सर्वनाम च सा। इष्टा अयत इति शब्दावयवश्च या। चन्द्रकलामहदर्थश्च मा। लक्ष्मी सम्बोधन चतुर्थ्यन्त पञ्चन्त च मे। धात्री पोषयित्री शब्दावयवश्च धा। धारण पोषण शब्दावयवश्च वे। शब्दावयवोऽस्मदर्थो लक्ष्मीसम्बोधन च मे। प्रतिषेधं पुरुषवाची शब्दावयवश्च ना। सिनोति सातेति शब्दावयवश्च सा। तदर्थो युष्मदर्थश्च लक्ष्मीसम्बोधन च ते। युष्मदर्थो भावप्रत्ययः शब्दावयवश्च त्वम्। शब्दावयवास्मदर्थौ च मे। जलयानम्। न विद्यते श्रीर्द्विवचनं यस्या सा अद्वितीयेत्यर्थः। शब्दावयवश्च नौः।

दुष्करत्वात् कठोरत्वाद्दुर्बोधत्वाद् विनाऽवधेः।
दिङ्मात्रं दर्शितं चित्रे शेषमूह्यं महात्मभिः ॥
उक्तिप्रत्युक्तिमद् वाक्यं वाकोवाक्यं विदुर्बुधाः।
द्वयोर्वक्त्रोस्तदिच्छन्ति बहूनामपि सङ्गमे ॥
ऋजूक्तिरथ वक्रोक्तिर्वैयात्योक्तिस्तथैव च।
गूढप्रश्नोत्तरोक्ती च चित्रोक्तिश्चेति तद्विदा ॥

तासु ऋजूक्तिर्द्विधा ग्राम्योपनागरिका च।

तत्र ग्राम्या यथा,

जन्ती मणुरन्धु रुच्चुकुहुन्तुण्ड-
उण्ण उक्को विहंसण होमि।
भट्टोमि भारं चुले मेल्लासितो
विक्किणकु वाणउ उज्जुअक्खु कहाहि ॥
बाणउ उज्जुमाइ गहिल्लउ अस्सवि
को मल्हणउ वारिज्जन्तु णट्टाइ।
करइ वलिवंभउ वे कक्करु मच्छलु अहिमुहं
हि तरुणिहि अच्छासइ दुक्करु ॥

सेयमुभयतोऽपि ऋजुनैव मार्गेणोक्तिप्रत्युक्त्योः समा प्रवृत्तिरिति सेयमृजूक्तिर्नाम वाकोवाक्यम्।

सैवोपनागरिका यथा,

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

सेयमेकतः काक्वा कुटिलेऽतिविषमेयमृजूक्तिर्नाम वाकोवाक्यम्। वक्रोक्तिर्द्विधा, निर्व्यूढा अनिर्व्यूढा च।

तयोर्निर्व्यूढा यथा,

किं गौरि मां प्रति रुषा, ननु गौरहं किं
कुप्यामि कां प्रति, मयीत्यनुमानतोऽहम् ।
जानामि सत्यमनुमानत एव सत्य-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥

सेयमावाक्यपरिसमाप्तेर्निर्वाहान्निर्व्यूढेति वक्रोक्तिर्वाकोवाक्यम् ।

अनिर्व्यूढा यथा,

केयं मूर्द्ध्न्यन्धकारे, तिमिरमिह कुतः सुभ्रु, कान्तेन्दुयुक्ते,
कान्ताप्यत्रैव कासिन्ननु भवति मया पृष्टमेतावदेव ।
नाहं द्वन्द्वं करोमि व्यपनय शिरसस्तूर्णमेनामिदानी-
मेवं प्रोक्तो भवान्या प्रतिवचनजडः पातु वो मन्मथारिः ॥

सेयमनिर्वाहादनिर्व्यूढेति वक्रोक्तिर्नाम वाकोवाक्यम् । ते इमे उभे अपि श्लेषवक्रोक्ती भवतः । वैयात्योक्तिर्द्विधा स्वाभाविकी नैमित्तिकी चेति ।

तयोः स्वाभाविकी यथा,

नादेयं किमिदं जलं, घटगतं नादेयमेवोच्यते,
सत्यं नाम पिबामि, कत्यपदपः पीतेन नाम्नाभवन् ।
किं वर्णा अपि सन्ति नाम्नि, रहितं किं तैरलं त्वं कुतो,
यस्मादेव भवान्, भगिन्यसि ततस्तेनैव मा बाधसे ॥

अत्र स्वैरिण्याः सहजाद् वैयात्यात् स्वाभाविकीयं वैयात्योक्तिर्नाम वाकोवाक्यम् ॥

नैमित्तिकी यथा,

कुशलं राधे, सुखितोऽसि कंस, कंसः क्व नु क्व सा राधा ।
इति पारीप्रतिवचनैर्विलक्षहासो हरिर्जयति ॥

अत्र गोत्रस्खलिते विपक्षनाम्नैव वैयात्येनोत्तरं दत्तमिति नैमित्तिकीयं वैयात्योक्तिर्वाकोवाक्यम् ॥

गूढोक्तिर्द्विधा मुख्या गौणी च। तयोर्मुख्या यथा,

केशव यमुनातीरे व्याहृतवानुषसि हंसिका कोऽद्य।

कान्ताविरहभयातुरहृदयः प्रायः प्रियेऽह स: ॥

अत्र प्रिये हस इत्यत्रावर्णलोपे प्रिये अह स इत्यर्थस्य मुख्ययैव वृत्त्या गूढत्वादियं मुख्या गूढोक्तिर्नाम वाकोवाक्यम् ॥

गौण्या यथा,

निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्।

उत्पत्तिरिन्दोरपि निष्फलैव कृता विनिद्रा नलिनी न येन ॥

ताविमौ पूर्वोत्तरार्द्धयोरन्योन्योक्त्या गूढकामलेखाविती यं गौणी गूढोक्तिर्नाम वाकोवाक्यम् ॥

प्रश्नोत्तरोक्तिर्द्विधा, अभिधीयमानरूपा प्रतीयमानरूपा च। तयोराद्या यथा,

क्व प्रस्थितासि करभोरु। घने निशीथे

प्राणाधिको वसति यत्र जनः प्रियो मे।

एकाकिनी वद बिभेषि कथं न बाले।

नन्वस्ति पुङ्खितशरो मदनः सहायः ॥

सेयं हन्तप्रष्टव्यस्यैव स्पष्टमभिधयैव अभिधानादभिधीय-मानरूपा नाम प्रश्नोक्तिर्वाकोवाक्यम् ॥

द्वितीया यथा,

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप।

तथापीयमवस्था ते न हि सर्वे भवादृशाः ॥

सेयं शब्दविद्यावैशारद्यस्य रूपस्य प्रतीयमानत्वात् प्रतीयमानरूपा नाम प्रश्नोक्तिर्वाकोवाक्यम् ॥

श्लिष्टोक्तिर्द्विधा चित्रा विचित्रा च। तयोराद्या यथा,

लभ्यन्ते यदि वाञ्छितानि यमुनाभागीरथीसङ्गमे
देव प्रेष्यजनस्तदेष भवतो भर्त्तव्यतां वाञ्छति।
नन्वेतन्मरणेन किं नु मरणं कायान्मनोविच्युतिः
दीर्घं जीव मनस्त्वदङ्घ्रिकमले कायोऽत्र नस्तिष्ठति॥

तदिदं सङ्कल्पितोक्तिप्रत्युक्तिभ्यां जीवतोऽपि जन्मान्तर-फलावाप्तिसाधनेन आश्चर्यहेतुरिति चित्रा नाम चित्रोक्ति-र्वाकोवाक्यम्॥

द्वितीया यथा,

कोऽयं भामिनि, भूषणं कितव ते, शोणः कथं, कुङ्कुमात्,
कूर्पासान्तरितः प्रिये विनिमयः, पश्यापरं क्वास्ति मे।
पश्यासीत्यभिधाय सान्द्रपुलको मृद्नन् मृडान्याः स्तनौ
हस्तेन प्रतिनिर्जितेन्दुरवतात् द्यूते हसन् वो हरः॥

अत्र उक्तिप्रत्युक्त्योः अनन्तरं स्तनमर्दनवैचित्र्यादिना परि-समाप्तेर्विचित्रोक्तिसंज्ञमिदं वाकोवाक्यम्।

प्रहेलिका सलत् प्रश्नः सापि षोढा च्युताक्षरा।
दत्ताक्षरोभय मुष्टिर्विन्दुमत्यर्थवत्यपि॥
क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः॥

तासु च्युताक्षरा यथा,

पयोधरभराक्रान्ता सनमन्ती पदे पदे।
पदमेकं न का याति यदि हारेण वर्जिता॥

अत्र विहङ्गिका काहारेण वर्जिता न यातीति वक्तव्ये हारेण वर्जितेत्युक्तम्। अतः का इत्यक्षरस्य च्युतत्वात् च्युता-क्षरेयम्॥

दत्ताक्षरा यथा,

कान्तयानुगतः कोऽयं पीनस्कन्धो मदोद्धतः ।
मृगाणां पृष्ठतो याति शंवरो रूढयौवनः ॥

अत्र शवर इति शंवर इति अनुस्वाराक्षरस्य दत्तत्वात् दत्ताक्षरेयम् ॥

च्युतदत्ताक्षरा यथा,

विदग्धः सरसो रागी नितम्बोपरिसंस्थितः ।
तन्वङ्ग्यालिङ्गितः कण्ठे कलं कूजति को विटः ॥

अत्र विट इत्यस्मिन् पदे विकारे च्युते घकारे दत्ते घटः कूजति इति द्वितीयोऽर्थो भवतीति सेयं च्युतदत्ताक्षरा ॥

अक्षरमुष्टिर्यथा,

अतिः अतिः अस्न अलं प्रीद्य रद्य जद्य फद्य ।
मेला मेला मेलं मेलं फस फस फस फस ॥

सा इयमक्षराणां मुष्टिः इति अक्षरमुष्टिका । अत्र पादश्चतुष्पङ्क्तिलिखितायां चतुर्भिर्मुरजबन्धैः श्लोक उपतिष्ठति । स यथा,

अद्य मे सफला प्रीतिरद्य मे सफला रतिः ।
अद्य मे सफलं जन्म अद्य मे सफलं फलम् ॥

बिन्दुमती यथा,

तवाववादः प्रत्यब्धि पताकाः प्रतिसङ्गरम् ।
फलं प्रत्यङ्गुतोपायं यशांसि ल नु न क्वचित् ॥

इत्यनेन श्लोकेनोक्तार्थस्य यथास्थितस्वरानुस्वारविसर्जनीयसंयोगस्य श्लोकान्तरस्य बिन्दुभिरेव सूचनान्नाम इति बिन्दुमती । तद् यथा,

०ु००ा ०ु००ा ०ा०ा ०ं०ु०ॆ ०ं०ु०ॆ ००ः ।
०ा००ॆ ०ा००ॆ ०ि०िः ००ॅ० ०० ०ो०ॆ०ः ॥

निर्भेदः, उदधावुदधावाज्ञा संयुगे संयुगे जयः।

साहसे साहसे सिद्धिः सर्वत्र तव कीर्त्तयः॥

अर्थप्रहेलिका यथा,

उत्तप्तकाञ्चनाभासं संदष्टदशनच्छदम्।

सरसं चुम्ब्यते हृष्टैर्वृद्धैरपि किमुज्ज्वलम्॥

सेयमपि सूचितस्यैव पक्वाम्रफलमित्यस्य ह्यर्थपदप्रयोगेण अवगतेः अर्थप्रहेलिका।

क्रियाकारकसम्बन्धे पादाभिप्रायवस्तुभिः।

गोपितैः षड्विधं प्राहुर्गूढं गूढार्थवेदिनः॥

तेषु क्रियागुप्तं यथा,

स्त न जघनभराभिराममन्द गमनमिदं मदिरारुणेक्षणायाः।

कथमिह सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः॥

अत्र जघनभराभिराममन्दं मदिरारुणेक्षणाया गमनं विलोकयन्तो हे युवानः कथमिव यूय मदनशरज्वरजर्जरा न स्त इति क्रियापदस्य स्तनशब्देन जघनसान्निध्याद् गोपितेन क्रियागूढमिदम्।

कारकगुप्तं यथा,

पिबतस्ते शरावेण वारि कह्लारशीतलम्।

केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ॥

अत्र शराविति कर्मकारकस्य गूढत्वात् कारकगूढमिदम्।

सम्बन्धगूढ यथा,

न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि।

अस्थानरुदितैरेभिरलमालोहितेक्षणे॥

अत्र न मे आगोरसाभिज्ञं चेत इति सम्बन्धिपदस्य मयेति तृतीयाभ्रान्त्या गोपितत्वादिदं सम्बन्धगूढम्।

पादगूढं यथा,

द्युवियद्गामिनी तारसंरावविहतश्रुतिः।
हैमीषु माला शुशुभे—

अत्र पूर्वार्धस्थितैर्द्वितीयप्रथमसप्तमपञ्चमैकादशनवमत्रयोदशषोडशाक्षरैश्चतुर्थपादो गूढ इत्याप्यः। यथा, विद्युतामिव संहतिरितीद पादगूढम्। अभिप्रायगूढं यथा,

जइ देअरेण भणिआ खग्गं घेत्तुण राउलं वच्च।
ता किं सेवअ बहुए हसि ऊण वलोइअं सअणम्॥ (अ)

अत्र निरीक्षितमनेनात्र पुरुषायितलक्षपदलाक्षादिकं तेन नियुङ्क्ते मां नृकर्मणीत्यभिप्रायेण बध्वाः शयनावलोकनमित्यभिप्रायगूढम्। वस्तुगूढं यथा,

पानीयं पातुमिच्छामि त्वत्तः कमललोचने।।
यदि दास्यसि नेच्छामि न दास्यसि पिबाम्यहम्॥

अत्र दास्यसीति दासीलक्षणस्य वस्तुनो गूढत्वादिदं वस्तुगूढम्।

यस्तु पर्यनुयोगस्य निर्भेदः क्रियते पदैः।
विदग्धगोष्ठ्यां वाक्यैर्वा तं हि प्रश्नोत्तरं विदुः॥
अन्तः प्रश्नबहिः प्रश्नबहिरन्तःसमाह्वयैः।
जातिपृष्टोत्तराभिख्यैः प्रश्नैस्तदपि षड्विधम्॥

तेषु अन्तःप्रश्नं यथा,

काहमस्मि गुहा वक्ति प्रश्नोऽयमुष्मिन् किमुत्तरम्।
कथमुक्तं न जानासि कदर्थयसि यत् सखे॥

---

(अ) यदि देवरेण भणिता खड्गं गृहीत्वा राजकुलं व्रज।
तत् किं सेवकवध्वा हसित्वावलोकितं शयनम्॥

अत्र कदर्थयसीति पदं कथमुक्तं रेफयकारयुक्तं दर्थ्य-सीति स्यात्। अतो वाक्यान्तरे प्रश्नोत्तरस्योक्तत्वाद् अन्तः प्रश्नमिदम्।

वहिः प्रश्नं यथा,

भद्र मानवकाख्याहि कीदृशः खलु ते पिता।
वेलान्दोलितकल्लोलः कीदृशश्च महोदधिः॥

अत्र मज्जन् मकर इत्यस्य उत्तरस्य प्रश्नाद्वहिरुक्तत्वाद् वहि.प्रश्नमिदम्।

वहिरन्तःप्रश्नं यथा,

सुभद्रा क उपायस्त प्रश्नेऽसुस्मिन् य उत्तरः।
स कीदृक् कपिमाचष्टे व्योम्नि पर्णस्थितिः कुतः॥

अत्र वायुत इत्युत्तरेण प्रश्नाद्वहिरुक्तेन वायुतो नरो वानरो भवतीति सुभद्रोपयन्ताप्युच्यते। तेनैतत् वहिरन्तःप्रश्नं भवति। जातिप्रश्नं यथा,

कीदृशा भूमिभागेन राजा श्रान्तोऽनुमीयते।
प्राङ्गण कुरुतेत्युक्ताः किमाहुस्तदनिच्छवः॥

"हैमैवारकरञ्जिना नाजिरं करवामहे" इत्युत्तराभ्यां गतोत्तराख्यानं प्रश्नोत्तरजातिरभिधीयते। जातिप्रश्नमिदम्।

घृष्टप्रश्नं यथा,

को सो जोअणवाउ को दण्डण दुवे सहस्साइ।
का काली का मधुरा किंशुकपृथुकाननच्छायम्॥ (ष)

अत्र य एव प्रश्नाः, कः स योजनपादः को दण्डानां द्वे सहस्रे इत्यादयः, त एव क्रोशो योजनपादः कोदण्डानां द्वे

---

(ष) कः स योजनपादः को दण्डाना द्वे सहस्रे॥

सहस्रे इत्यादीनि उत्तराणि भवन्ति। एवं का काली का मधुरा किं शुकपृथुकाननच्छायमिति उत्तरं किमभिहितमेषस्य प्रष्टव्यमिति पृष्टप्रश्नम्।

उत्तरप्रश्नं यथा,

किं वसन्तसमये वनभञ्जः पृष्टवान् स पृथुलोमविलेखः।
उत्तरञ्च किमवापतुरेतौ काननाद तिमिराद पिकालौ॥

अत्र प्रश्नस्य हे काननाद हे तिमिराद पिकालीत्येतदपि कालीत्येतदेव उत्तरप्रश्नमिदम्॥

यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम्।
तदध्येयं विदुस्तेन लोकयात्रा प्रवर्त्तते॥
काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च।
काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्॥

तेषु काव्य यथा,

यदि स्मरामि तां तन्वीं जीविताशा कुतो मम।
अथ विस्मृत्य जीवामि जीवितव्यसनेन किम्॥

तदिद उक्तिप्राधान्यात् काव्यमित्युच्यते॥

शास्त्र यथा,

स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः
पादौ समोपचितचारुनिगूढगुल्फौ।
श्लिष्टाङ्गुली कमलकान्तितलौ च यस्या-
स्तामुद्वहेद् यदि भुवोऽधिपतित्वमिच्छेत्॥

अत्र स्निग्धत्वादेः शब्दस्य प्राधान्यमिति शासनाच्छास्त्रमिदम्॥

इतिहासो यथा,

हिरण्यकशिपुर्दैत्यो यां यां स्मित्वाप्युदैक्षत।
भयाद् भ्रान्तैः सुरैश्चक्रे तस्यै तस्यै दिशे नमः॥

सोऽयमतीतार्थप्राधान्यादितिहासः॥

काव्यशास्त्रं यथा,

> नान्दीपदानि रतनाटकविघ्नशान्ता-
> वाद्याक्षराणि परमाण्यथ वा स्मरस्य।
> दष्टेऽधरे प्रणयिणा विधुताग्रपाणि-
> सीत्कारशुष्करुदितानि जयन्ति नार्य्याः॥

अत्र काव्येन शास्त्रमभिहितम् इतीदं काव्यशास्त्रम्।

काव्येतिहासो यथा,

> स सञ्चरिष्णुर्भुवनान्तरेषु यां
> यदृच्छयाशिश्रयदाश्रयः श्रियाम्।
> अकारि तस्यै मुकुटोपलस्खलत्-
> करैस्त्रिसन्ध्य त्रिदशैर्दिशे नमः॥

अत्र प्रागुक्तस्यैवेतिहासार्थस्य काव्येनाभिधानात् काव्येतिहासोऽयम्॥

शास्त्रेतिहासो यथा,

> धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
> यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥

अत्र धर्मार्थकाममोक्षाणामितिहासे निवेशितत्वात् अयं शास्त्रेतिहासः॥

> श्रव्य तत् काव्यमाहुर्यन्नेक्ष्यते नाभिधीयते।
> श्रोत्रयोरेव सुखद भवेत् तदपि षड्विधम्॥
> आशीर्नान्दी नमस्कारो वस्तुनिर्देश इत्यपि।
> आक्षिप्तिका ध्रुवा चेति शेषो ध्येयं भविष्यति॥

तत्राशीर्यथा,

> भूयाद्वः श्रेयसे देवः पार्वतीदयितो हरः।
> पातु वः परमं ज्योतिरवाङ्मनसगोचरः॥

अत्र आशंसायां लिङ् लोट् च। तदिदं वाक्यद्वयमाशीः॥

नान्दी यथा,

भद्दं भोदु सरस्सईअ कइणो नन्दन्तु वासाइणो
अस्सअणं पि परं पअट्टउ वरा वाणीच्छइल्लप्पिया।
वच्छोमी तह माअही फुरउ णो सा किं च पञ्चालिआ
रीदीओ विलिहन्तु कव्वकुसला जोण्हं चओरा विअ॥ (स)

सेयं रङ्गमङ्गलान्तस्वस्त्ययनं नान्दी।

नमस्कृतिर्यथा,

जयति ब्रह्मभूः शम्भुर्वन्देमहि महेश्वरम्॥
इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे॥

सेय स्तुतिर्नमस्क्रिया नमस्कृतिरेव भवति॥

वस्तुनिर्देशो यथा,

अस्त्युद्दामजटाभारभ्रान्तगङ्गाम्बुशेखरः।
आदिदेवो हरो नाम सृष्टिसंहारकारणम्॥

सोऽय कथाशरीरव्यापिनो वस्तुनो नायकस्य निर्देशो वस्तुनिर्देशः॥

आक्षिप्तिका यथा,

पअपीडिअमहिसासुरदेहेहिं
भुअणभअलुआवसमिलेहेहिं।
सुरसुहदेत्तवलिअधवलच्छिहिं
जअइ सहासं वअणु महलच्छिंहिं॥ (ह)

---

(स) भद्र भवतु सरस्वत्याः कवयो नन्दन्तु व्यासादयः
अन्येषामपि पर प्रवर्त्तता वरा वाणी च्छेकप्रिया।
वच्छोमी तथा मागधी स्फुरतु नः सा कि च पञ्चालिका
रीतीर्विलिखन्तु काव्यकुशला ज्योत्स्ना चकोरा इव॥

(ह) पदपीडितमहिषासुरदेहैः भुवनभयलावकशमिलेखैः।
सुरसुखदातृवलितधवलाक्षैः जयति सहासं वदन महालक्ष्म्याः॥

सेयमभिधित्सितरागविशेषप्रयोगमात्रफलं वचनमाक्षिप्तिका। ध्रुवा यथा,

मअवहणिमित्तणिग्गअसइंदसुण्णं गुहं णिएऊण।
लद्धावसरो गहिऊण मोत्तिआइं गओ वाहो॥ (क)

सेयं पात्रप्रवेशरसानुसन्धानादिप्रयोजना ध्रुवा।

यदाङ्गिकैकनिर्वर्त्त्यमुज्झितं वाचिकादिभिः।
नर्त्तकैरभिधीयेत प्रेक्षणाक्ष्वेडिकादि तत्॥
तल्लास्यं ताण्डवं चैव छलिकं शम्पया सह।
हल्लीसकं च रासञ्च षट्प्रकारं प्रचक्षते॥

तेषु लास्य यथा,

उच्चिउ पालि पिअ पंथहि जंतउ।
पेक्खसि हत्थ होइ जइ लोअणवन्तउ॥ (ख)

तदिदं शृङ्गाररसप्रधानत्वात् लास्यम्॥

ताण्डव यथा,

सुअवहवइअरं णिसुणिअ दारुण-
रोसविसट्टपहररुहिरारुणु।
जलिउ जाअइ णरु रिउसन्तावणु
अणलसरिच्छ जे होइ महारणु॥ (ग)

इदं वीररसप्रधानत्वात् ताण्डवम्।

---

(क) मृगवधनिमित्तनिर्गतमृगेन्द्रशून्यां गुहां निरूप्य।
लब्धावसरो गृहीत्वा मौक्तिकानि गतो व्याधः॥

(ख) उच्चा पालि प्रिय पथा याति, प्रेक्षे हस्त भवति यदि लोचनवान्॥

(ग) सुतवधव्यतिकरं निशम्य दारुणरोषविसृष्टप्रहाररुधिरारुण।
ज्वलितो जायते नरो रिपुसन्तापनोऽनलसदृशो यदि भवति महारणे॥

छलिकं यथा,

णिसुणिउ पच्छा तुरअरउ भुण्डि हिंसि हसन्ति ।
णिअकन्त डाढजुअलेहिं पुणु पुणु ण अ डसन्ति ॥ (घ)

इदन्तु शृङ्गारवीरप्रधानत्वाच्छलिकम् ॥

शम्पा यथा,

वीहेसि हरिमुहि अउ होहि मं गले लेहि सइ ।
कन्दइ रिट्ठासुरुमारिउ कण्ठवलिउ ण पइ ॥ (ङ)

तदिद छलिकमेव किन्नरविषयं शम्पा ।

हल्लीसकं यथा,

चन्दणधूसरअं आउलिअलोअणअं
हासपरम्मुहअ णीसासकिलामिअअं ।
दुम्मणदुम्मणअं सङ्कामिअमण्डणअं
माणिणिआणणअ कि तुज्झ करट्ठिअअं ॥ (च)

मण्डलेन तु यत् स्त्रीणां नृत्यं हल्लीसकन्तु तत् ।
तत्र नेता भवेदेको गोपस्त्रीणा हरिर्यथा ॥

हल्लीसकमिदम् ॥

---

(घ) निशम्य पश्चात् तुरगरव शूकरी हिंसार्थं हसति ।
निजकान्त दंष्ट्रायुगलेन पुन: पुन र्न च दशति ॥

(ङ) बिभेषि हरिमुखि अपि भव मा च गले गृहाण सदा ।
क्रन्दति रिष्टासुरमारित: कण्ठवलितो न पति: ॥

(च) चन्दनधूसरमाकुलितलोचनं हासपराङ्मुखं निश्वासक्लामितम् ।
दुर्मनसा दुर्मनस्क सङ्क्रामितमण्डन मानिन्यानन किं तव करस्थितम् ॥

रासो यथा,

अइ दुम्मणदुम्मणआ अज्ज किं णो पुच्छामि तुमं ।
ण जिविज्जइ जेण विलासो पलिहिज्जइ की स जणो ॥ (छ)

तदिदं हल्लीसकमेव तालबन्धविशेषयुक्तं रास इत्युच्यते ॥

अङ्गवाक्सत्वजाहार्य्याः सामान्यश्चेति इत्यमी ।
षडत्राभिनयास्तद्वदभिनेयं वचो विदुः ॥

तेष्वाङ्गिकाभिनयवद् यथा,

दोर्दण्डाः क्व धृताङ्गदाः क्व च शिरानद्धौ भुजौ द्वाविमौ
वक्त्राणि क्व नु कान्तिमन्ति वलिमत् क्वेदं ममेदं मुखम् ।
वाचस्ताः क्व जितार्णवध्वनिघनाः क्वायं वचः संयमो
हेलाक्रमितभूधरः क्व चरणन्यासः क्व मन्दा गतिः ॥

अत्राङ्गिकाभिनयाना प्रतिपादितत्वात् इदमाङ्गिकाभिनयम् ॥

वाचिकाभिनयवद् यथा,

दुर्वारां मदनशरव्यथां वहन्त्या
तन्वङ्ग्या यदभिहितं पुरःसखीनाम् ।
तद्भूयः शिशुशुकसारिकाभिरुक्तं
धन्याना श्रवणपथातिथित्वमेति ॥

अत्र वाचिकाभिनयाना प्रतिपादनादिदं वाचिकाभिनयम् ॥

सात्विकाभिनयवद् यथा,

वारं वारं तिरयति दृशोरुद्गमो वाष्पपूरः
तत्सङ्कल्पोपहितजडिमस्तम्भमभ्येति गात्रम् ।
सद्यः स्विद्यन्नयजविरतोत्कम्पलोलाङ्गुलीकः
पाणिर्लेखाविधिषु नितरां वर्त्तते किं करोमि ॥

---

(छ) अयि दुर्मनस्क दुर्मनस्क अद्य किं नो पृच्छामि त्वाम् ।
न जीव्यते येन विलासः परिक्रियते किमिति जन. ॥

अत्र बाष्पजाड्यस्तम्भस्वेदकम्पानां प्रतिपादितत्वादिदं सात्त्विकाभिनयम् ॥

आहार्य्याभिनयवद् यथा,

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोमपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकम्
पाणौ कार्मुकमक्षसूत्रवलये दण्डोऽपरः पैप्पलः ॥

अत्राहार्य्याभिनयाना प्रतिपादितत्वादिद आहार्य्याभिनयम् ।

सामान्याभिनयवद् यथा,

राहोश्चन्द्रकलामिवाननचरीं दैवात् समासाद्य मे
दस्योरस्य कृपाणपातविषयादाच्छिन्दतः प्रेयसीम् ।
आतङ्काद् विकलं द्रुत करुणया विक्षोभितं विस्मयात्
क्रोधेन ज्वलितं मुदा विकसितं चेतः कथ वर्त्तताम् ॥

अत्र चतुर्णामभिनयानां प्रयोगादिदं सामान्याभिनयम् ।

चित्राभिनयवद् यथा,

व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।
कथमिह न वयस्यस्तत् किमेतत् किमन्यत्
प्रभवति हि महिम्ना स्वेन योगेश्वरीयम् ॥

अत्र हस्ताध्यायपदाध्याययोः कथितत्वाच्चित्राभिनयमिदम् ॥

चतस्रो विंशतिश्चैताः शब्दालङ्कारजातयः ।
शब्दसन्दर्भमात्रेण हृदयं हर्त्तुमीशते ॥

इति श्रीमहाराजाधिराजश्रीमद्भोजराजविरचिते
सरस्वतीकण्ठाभरणे शब्दालङ्कारनिर्णयो नाम
द्वितीयः परिच्छेदः ।

# तृतीयः परिच्छेदः ।

अलमर्थमलङ्कर्त्तुं ये व्युत्पत्त्यादिवर्त्मना ।
ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसञ्ज्ञया ॥ १ ॥
जातिर्विभावना हेतुरहेतुः सूक्ष्ममुत्तरम् ।
विरोधः सम्भवोऽन्योन्य परिवृत्तिर्निदर्शनम् ॥ २ ॥
भेदः समाहित भ्रान्तिर्वितर्को मीलितं स्मृतिः ।
भावः प्रत्यक्षपूर्वाणि प्रमाणानि च जैमिनेः ॥ ३ ॥
तेषु, नानावस्थासु जायन्ते यानि रूपाणि वस्तुनः ।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते ॥ ४ ॥

---

क्रमप्राप्तार्थालङ्कारलक्षणाय परिच्छेदारम्भः । तत्र विभागोपयुक्तं सामान्यलक्षणमाह । अलमर्थमिति । विशिष्टा उत्पत्तिर्व्युत्पत्तिर्जातेरवच्छेदकः प्रकारः । आदिशब्दाद्द्विविधशक्तिप्रतिबन्धादयो विभावनाद्यवच्छेदास्त्रयोविंशति । अर्थालङ्कारसञ्ज्ञयेति । अर्थशोभानिवृत्तिहेतुर्विच्छित्तिः अर्थालङ्कार इति स्फुटलक्षणम् ॥ १ ॥

विभागं दर्शयति । जातिरिति ॥ २ ॥

प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावाख्यानि जैमिनेः प्रमाणानि षट् । तेनैव क्रमेण लक्षणानि आख्यातुं प्रत्यक्षपूर्वाणीत्युक्तम् । साहित्यस्य सर्वपारिषद्यत्वान्नानादर्शनरीत्युपजीवनमुचितमेव ॥ ३ ॥

नास्त्येव असौ अर्थालङ्कारो यः स्वरूपं न आश्रयत इति प्राथम्यं जातेरेवेत्याह । तेषु इति । कालकृतो विशेषोऽवस्था । तामधिकृत्य जायन्ते वस्तुस्वरूपव्यभिचारीणि उत्पद्यन्ते । ननु एवं "य एते यज्वानः प्रथितमहसो येऽप्यवनिपा मृगाक्ष्यो याश्चैताः कृतमपरसंसारकथया । अहो ये चाप्यन्ये फलकुसुमनम्रा विटपिनो जगत्येवंरूपा विलसति मृदेषा भगवती ।" इत्यादावपि जातित्वं स्यादित्यत आह । स्वेभ्यः स्वेभ्य इति । स्वभावभूतानीत्यर्थः । कविप्रतिभामात्रप्रकाशनीयरूपोद्भेदनं जातिरिति लक्षणम् । लौकिकविकल्पविषयोऽपि प्रतिभया भासत

अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते ।
जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥ ५ ॥
स्वरूपमाश्रयो हेतुरिति तद्भेदहेतवः ।
ते संस्थानादयस्तेषु सा विशेषेण शोभते ॥ ६ ॥
तत्र स्वरूपसंस्थानमवस्थानं तथैव च ।
वेषो व्यापार इत्याद्यैः प्रभेदैर्बहुधा स्थितम् ॥ ७ ॥
मुग्धाङ्गनार्भकस्तिर्यङ् नीचपात्राणि चाश्रयः ।
देशः कालश्च शक्तिश्च साधनानि च हेतवः ॥ ८ ॥

तेषु संस्थानं यथा,

स दक्षिणापाङ्गनिविष्टमुष्टि नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥

---

एव । यदाह ।' रसानुगुणशब्दार्थचिन्तास्तिमितचेतस । क्षण विशेषस्पर्शोत्थो प्रज्ञैव प्रतिभा कवेः । स हि चक्षुर्भगवत. तृतीयमिति गीयते । येन साक्षात्-करोत्येष भावास्त्रैलोक्यवर्त्तिन इति ॥ ४ ॥

उक्तमेव विशेषमभिसन्धायाह । अर्थव्यक्तेरिति । वस्तुस्वरूपोल्लिखनरूपार्थ व्यक्तिरर्थगुणेषु उक्ता । तत्र सार्वकालिक रूपमुपजननापायान्तरालव्यापकमित्यथ. । अत्र तु जायमानमागन्तुनिमित्त समवधानप्रभव व्यभिचरितमित्यर्थ' । विच्छित्ति-प्रकारयो' असङ्करात् पृथक् शोभार्पणाच्च युक्तो व्यतिरेकस्तेन स्वभावोक्तिरेवार्थव्यक्ति-रिति यत् केनचिदुक्त तदपास्तम् ॥ अतएव जात्यन्तरप्रकाराणामपि पृथगल-ङ्कारता स्यादिति न युक्तमवान्तरवचसैव व्याघातात् । न हि सामान्यविशेषयो विभागो भवति ॥ ५ ॥

स्वरूपमिति । आश्रयविशेषहेतुविशेषव्यतिरिक्तोऽवच्छेदकप्रकारः स्वरूपम् । एतदेव विभजते । ते संस्थानादय इति । ननु किमनेन प्रपञ्चेन पूर्वाभिहित रूपमात्रस्यैव जातित्वादित्यत आह । तेषु सेति । विशेषेण शोभाहेतुरेव हि स्वलङ्कारोऽस्ति चात्र तथा भाव इति भावः ॥ ६ ॥

तत्र स्वरूप द्विधा । शरीरावयवसन्निवेशलक्षणमतादृशञ्च । आयसमपि बुद्धिकारितमतथाभूतञ्च । तदेतदाह । तत्र स्वरूपमिति । आदिपदेन तृत्यादिस्वरूपपरिग्रहः ॥ ७ ॥

शक्तिः पदार्थाना सामर्थ्यम् । साधनानि कर्त्रादीनि षट् ॥ ८ ॥

अत्र धनुर्धरेण एवमङ्गानि सम्यग् बुद्धिपूर्वकं स्थापनीया-नीति संस्थानमिदं जातिभेदः॥ ९॥

अवस्थानभेदेन यथा,

पादावष्टम्भनम्रीकृतमहिषतनोरुल्लसद्बाहुमूलम्
शूलं प्रोल्लासयन्त्याः सललितवपुषो मध्यभागस्य देव्याः।
विश्लिष्टस्पष्टदृष्टोन्नतविरलवलिव्यक्तगौरान्तराला-
स्तिस्रो वः पान्तु लेखाः क्रमवशविकसत्कञ्चुकप्रान्तमुक्ताः॥

अत्र स्त्रियाः शूलप्रोल्लासनादौ व्यापारे बुद्धिकारितमपि शरीरावस्थानमीदृशं जायते इतीदमवस्थानं नाम जातिभेदः॥

वेशो यथा,

छणपिट्ठधूसरत्थणि महुमअतम्बच्छि कुवलआहरणे।
कस्स कए चुअमञ्जरि पुत्ति तुए मण्डिओ गामो॥१०॥ (ज)

---

(ज) क्षणपिष्टधूसरस्तनि मधुमदताम्राक्षि कुवलयाभरणे।
कस्य कृते चूतमञ्जरि पुत्रि त्वया मण्डितो ग्रामः॥

---

अत्र धनुर्धरेणेति। तदुक्तम् अपाङ्गे दक्षिणां मुष्टिं वामं विन्यस्य मस्तके। पादमाकुञ्चयेद्वामं लक्ष्ये निश्चललोचन इति। अत्र सर्वस्यैव धनुर्धरस्य एवंविध शरीरावयवसन्निवेशो भवति न कामस्यैव इति नाश्रयविशेषो विवक्षितः। एव-मुत्तरत्रापि॥ ९॥

पादावष्टम्भेति। उल्लसद्बाहुमूलमिति प्रोल्लसनक्रियाविशेषणम्। सल-लितवपुषा इति मध्यभागविशेषणम्। अतएव वलीनां विश्लेषो मिथो विभागः। उपरि शरीराकर्षणात् कञ्चुकप्रान्तापसरणम्। मुसलोल्लासनादौ दृष्टमिदमबुद्धि-जमेव नारीणां रूपमिति भगवतीविषये प्रतिबिम्बनमतिस्फुटमेव। तदाह आदाविति॥ १०॥

अत्र वसन्तोत्सवे ग्रामतरुणीनामयं वेशो जनमनःप्रमोदाय जायते इति वेशो नामायं जातिभेदः ॥ ११ ॥

व्यापारो यथा,

अग्रे गतेन वसतिं परिगृह्य रम्या-
मापात्यसैनिकनिराकरणाकुलेन ।
यान्तोऽन्यतः प्लुतकृतस्वरमाशु दूरा-
दुद्बाहुना जुहुविरे मुहुरात्मवर्ग्याः ॥ १२ ॥

अत्र तादृशव्यापारे व्यापृतानामीदृशमेव स्वरूपं जायत इति व्यापारनामायं जातिभेदः ॥

आश्रयेषु मुग्धयुवतिर्यथा,

सहिआहिं भण्णमाणा थणए लग्गं कुसुम्भ पुप्फन्ति ।
मुद्धबहुआ हसिज्जइ पप्फोडन्ती णहवणाइं ॥ १३ ॥ (म्न)

अत्र मुग्धवध्वाश्रितक्रियास्वरूपभणनात् इयं मुग्धाङ्गनाश्रिता जातिः ॥

---

(म्न) सखिभिर्भण्यमाना स्तने लग्नं कुसुम्भपुष्पमिति ॥
मुग्धवधूर्हस्यते प्रस्फोटयन्ती नखव्रणान् ॥

---

अत्र वसन्तोत्सव इति । यद्यपि अत्र काल पात्र चास्ति तथापि सवाल्लणम उलिभाविवर उराहइअम्बिरइ अऊणतालङ्कम् । सिटिला अन्तं सवणा अरम्भिसारेइ एक्कावि । इत्यादौ न सङ्करः कादाचित्कस्तु असौ गुण एव । वेषस्य कथं रञ्जकतेत्यवशिष्यते । तत्राह । जनमनःप्रमोदायेति । रूच्यर्थित्वव्युत्पत्तीना प्रतिपच्चगतानामच्चुणत्वादिति भावः ॥ ११ ॥

अग्रे गतेनेति । अत्र उद्बाहुनेति यद्यपि अवस्थानमस्ति तथापि तत्परिहारेण उदाहरणमसङ्कीर्णम् । सहिआहि भणमाणा थणए लग्गकुसुम्भपुप्फन्ति । मुद्धवहुआ हसिज्जइ पप्फोडन्ती णहवणाइम् । इत्यत्रैकस्याः कदाचित् वितर्कायेदमपि वाक्यं बहूनान्तु नेति बहुवचनस्वरसः । कुसुम्भकेसराणि उच्चेतु वारंवारमसौ चैव प्रविशतीति सम्भावना । मुग्धा अपरिशीलिताभिसारिकसुरत

अर्भकाश्रिता यथा,

आक्रोशन्नाह्वयन्नन्यानाधावन् मण्डलं रुदन्।
गाः कालयति दण्डेन डिम्भः शस्यावतारिणीः॥

अत्रार्भकाश्रितव्यापारस्वरूपोक्तेरियमर्भकाश्रिता जातिः॥१४॥

तिर्य्यगाश्रया यथा,

लीढव्यस्तविपाण्डुराग्रनखयोराकीर्णदीर्णं मुखम्
विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः।
एतस्मिन्मदगन्धवासितसटः सावज्ञतिर्य्यग्वलत्-
सृक्कान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः॥

अत्र सिंहस्वरूपवर्णनादियं तिर्य्यगाश्रया जातिः॥ १५ ॥

नीचाश्रया यथा,

भद्रं ते सदृशं यदध्वगशतैः कीर्त्तिस्तवोद्घुष्यते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः।
इत्यालोच्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः॥

अत्र हीनपात्रहालिकस्वरूपोक्तेरियं नीचाश्रया जातिः॥१६॥

---

वधूः प्रथमपरिणीता। प्रक्षोद्यमानमपि त्वया नापसरतीत्यहो तव सौकुमार्य्यमिति चाटुगर्भं हसितमतएव प्रियतया तस्यानुवन्धो वर्त्तमाननिर्देशेन व्यज्यते। एतद्वयमोदाहरणव्याख्याने क्रियाव्यापारग्रहणमुपलक्षणमतो न व्यापारसङ्करः। अन्ये त्वाहुः। आश्रयावच्छेदेन वहिर्भावोऽत्र भेदहेतुरिति॥ १२—१४॥

लीढेति। व्यस्तं विगतरुधिरम्। सावज्ञं तिर्यक् चलन्तौ ये सृक्कणी ताभ्यामाहता इति सम्बन्धः। यथैकत्र कुञ्जे स्वपतः स्वरूपं तथान्यत्रापीति बहुवचनरहस्यम्। अतएव न देशहेतु शङ्का। अत्र सिंहेति। मदवासनया विशेषितत्वादिति भावः॥ १५॥

भद्रमिति। करुणा कार्पण्यव्यञ्जकविशेषशालिनी। गर्वायते अगर्ववानेव गर्ववान् भवति। भृशादौ अचपलादेर्मत्वर्थलक्षणत्वात्॥ १६॥

अथ हेतवः। तेषु देशो यथा,

द्रुमास्ता विन्ध्याद्रेः शुकहरितवंशीवनघना
भुवः क्रीडालोलद्विरदरदनारुग्णतरवः।
लताकुञ्जे यासामुपनदि रतक्लान्तशबरी-
कपोलस्वेदाम्भःपरिचयनुदो वान्ति मरुतः॥

अत्र विन्ध्याद्रेरीदृशेषु प्रदेशेषु इत्थम्भूता वायवो वान्तीति हेतुत्वेनोक्तत्वात् देशस्य देशहेतुर्जातिरियम्॥ १७॥

कालहेतुर्यथा,

कम्पन्ते कपयो भृशं जलकृशं गोऽजाविकं ग्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि क्षिप्तोऽपि नैवोज्झति।
शीतार्त्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मवत्
स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति॥१८॥

अत्र हेमन्तहेतुकतिर्य्यगाद्याश्रयव्यापारस्वरूपोक्तेरियं काल-हेतुर्नाम जातिः॥

शक्तिर्यथा,

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम्।
नेत्रे निमीलयन्नेष प्रियास्पर्शः प्रवर्त्तते॥

अत्र रोमाञ्चबन्धादिषु प्रियास्पर्शप्रवृत्तेर्निमित्तस्योक्तत्वा-दियं शक्तिहेतुर्नाम जातिः॥ १९॥

---

द्रुमास्ता इति। देशविशेषमुद्दिश्य मरुतां विधानमुद्देश्यस्य च विधौ हेतुभावः। वंशीवनानां दुष्प्रवेशतया मरुतां मन्दीभावो द्विरदैस्तरुभङ्गादवकाशलाभे प्रगल्भत्वमतः क्लमखेदापनयनसामर्थ्यं ददत सर्वमाह। अत्र विन्ध्याद्रेरिति॥ १७॥

गोऽजाविकमिति। विभाषावृक्षमृगेत्यादिना पाक्षिक एकवद्भावः। अत्र हेमन्तेति। यद्यपि तिर्य्यगाश्रया इयं जातिः। तथापि हेतोः अधिकस्य प्रवेशात् पृथग्भावः। सङ्करस्तु न दुष्यति॥ १८॥

रोमाञ्च बन्धादिषु इति। बध्नन् इत्यादौ शतृप्रत्ययेन कर्त्ताभिधीयते इ ह

साधनहेतुर्यथा,

> उपनिहितहलीषासार्गलद्वारमारात्
> परिचकितपुरन्ध्रीसारिताभ्यर्णभाण्डम् ।
> पवनरयतिरश्चीर्वारिधाराः प्रतीच्छन्
> विशति वलितशृङ्गः पामरागारमुच्चा ॥

अत्र जायमानक्रियाहेतुभूतयोः कर्तृकर्मणोः साधनयोः स्वरूपवर्णनादयं साधनहेतुर्नाम जातिभेदः ॥ २० ॥

> प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम् ।
> यत्र स्वाभाविकं वापि विभाव्यं सा विभावना ॥ २१ ॥
> शुद्धा चित्रा विचित्रा च त्रिविधा सा निगद्यते ।
> शुद्धा यत्रैकमुद्दिश्य हेतुरेको निवर्त्तते ॥ २२ ॥

---

सामानाधिकरण्यात् स्पर्शस्य स्पर्शत्वाविशेषे तु शक्तिरेव प्रयोजिका वाच्ये-त्यय' ॥ १९ ॥

उपनिहितेति । अगारद्वारस्य हलीशावरुद्धतया दुष्प्रवेशत्वमतएव वहि-श्चिर विलम्बात् । प्रत्येषणवेशनयोर्वर्त्तमानता । उपलक्षण चेद तेन करणा-दयोऽप्युदाहार्य्या ॥ २० ॥

पचे स्वभावपर्य्यवसानमस्तीति नाते किञ्चिदपकृष्टा विभावना विभावयितु-माह । प्रसिद्धेति प्रसिद्धस्पर्शहेतोर्विभाव्यतया प्रसिद्धग्रहण नियमेन तद्भावा-पत्तिमूलत्वख्यास्या' तेन न विरोध । तथा हि यमह अवदि अतुङ्गसित्यादौ वर्द्धनजन्यसन्यदेव तुङ्गत्वमन्यच्च पारमेश्वरमानानिकमिति तयोरभेदाध्यवसाय । एतदेवाभिसन्धाय काश्मीरकै अतिशयोक्ति अस्या मूलमुक्ता । यदिति निपातो यत्रार्थे । यद्यपि कारणाभावेऽपि कार्य्योत्पत्तिरित्येव लक्षण तथापि महा सञ्ज्ञाकरणप्रयोजन किमित्याशङ्काया द्वय विभाव्यमाह । तदयमत्र सङ्क्षेपो यथोक्ता तावद्विभावना । सा द्वयी । कारणान्तरपर्य्यवसिता स्वभावपर्य्यवसिता-चेति ॥ २१ ॥ २२ ॥

अनेको यत्र सा चित्रा विचित्रा यत्र तां प्रति ।
तयान्यया वा गीर्भङ्ग्या विशेषः कश्चिदुच्यते ॥ २३ ॥

तत्र कारणान्तरविभावनायां शुद्धा यथा,

अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥ २४ ॥

अत्र एकं कादम्बादिकमुद्दिश्य क्षीबतादेः पीतत्वादिरेकः प्रसिद्धहेतुर्व्यावर्त्यते, हेत्वन्तरञ्च शरत्प्रभावो विभाव्यते । सेयं शुद्धा नाम कारणविभावनायां विभावना ।

स्वाभाविकत्वविभावनायां शुद्धा यथा,

अनञ्जिताऽसिता दृष्टिर्भ्रूरनावर्जिता नता ।
अरञ्जितारुणश्चायमधरस्तव सुन्दरि ! ॥

अत्र एकैकं दृष्ट्यादिकमुद्दिश्य असितत्वादेरनञ्जितत्वादिरेकैको हेतुर्व्यावर्त्यते । स्वाभाविकत्वञ्च असितत्वादिदृष्ट्यादेर्विभाव्यते । सेयं शुद्धा नाम स्वाभाविकत्वविभावनायां विभावना ॥ २५ ॥

कारणान्तरविभावनायां चित्रा यथा,

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे ॥

अत्रैकमेव वयोलक्षणं पदार्थमुद्दिश्यापि अनेको मण्डनादेः

---

प्रत्येकं च शुद्धादिभेदात् षोढा सम्पद्यत इत्येतावतैव विभावना शरीरनिष्पत्तिः । यथा वर्णो वर्णेन करम्बित चित्रं तथा विभावनापि विभावनया तादृशी चित्रेत्याह । अनेक इति । यथा च स्वरूपसम्पादकातिरिक्तविशेषप्रवेशाद्विचित्राः स्त्रग्दामादयस्तथेयमपीति दर्शयति । विचित्रा यत्रेति । तां विभावनाम् । तया विभावनया । अन्ययेति अलङ्कारान्तररूपया ॥ २३ ॥

पीत पानम् । सूक्ष्म निर्मलम् । शरत्प्रभाव इति । प्रस्तावौचितीभ्यामभिव्यक्तः ॥ २४ ॥ २५ ॥

प्रसिद्धो हेतुः संभृतत्वादिर्व्यावर्त्त्यते, कारणान्तरञ्च स्तनोद्भेद-धातूपचयलावण्यलक्ष्मीलाभादिर्विभाव्यते। सेयं चित्रा नाम कारणान्तरविभावना ॥ २६ ॥

सैव स्वाभाविकत्वविभावनायां यथा,

णमह अविट्ठिअतुङ्गं अविसारिअवित्थअं अणोणअगहिरं।
अप्पलहुअपरिसह्लं अणाअपरमत्थपाअडं महुमहणं ॥ (ञ)

अत्र एकमेव मधुमथनसुहिश्य अनेकस्तुङ्गत्वादेः प्रहृद्ध-त्वादिः प्रसिद्धो हेतुर्व्यावर्त्त्यते, स्वाभाविकत्वञ्च तं प्रति एषां विभाव्यते। सेयं चित्रा नाम स्वाभाविकत्वविभावनायां विभावना ॥ २७ ॥

तथैव गोर्भङ्ग्या यथा,

वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम्।
अकारणरिपुस्तस्या निर्निमित्त सुहृच्च मे ॥

---

(ञ) नमत अविहितङ्गम् अप्रसारिताविस्तृतम् अन्यूनगभीरम्।
अप्रलघुकपरिश्लक्ष्णमज्ञातपरमार्थप्रकट मधुमथनम् ॥

---

असम्भृतमिति। ननु मण्डनस्य सम्भरणपूर्वकतया प्रसिद्धेरस्तु विभावना। अनासवाख्य करण मदस्य कामम्य पुष्पव्यतिरिक्तमस्त्रमित्यत्र तु कथम्। तथा हि। करणमिति करणे भावे वा ल्युट्। आद्ये मदस्य करणमासवो वयस्तु ततो भिन्नमिति कदाचित व्यतिरेक स्यात् न तु विभावना। द्वितीयेऽपि वयो मदस्य क्रिया आसवनाम्नो न भवतीति न सङ्गतम्। एव पुष्पव्यतिरिक्तमस्त्र-मित्यत्रापि विकल्पत्र यथायथ दूषण वाच्यम्। तत्कथमेतत्। उच्यते। करण क्रिया आसवमासव्यातीत्यासवाख्यम्। स्त्र्याख्यवत्प्रत्ययविधि'। न तथा-भूतमनासवाख्यम्। हेतुतया न क्वचिदासवबोधनमम्। तथा हेतुप्रति-षेध एव भङ्ग्या दर्शितो भवति। अस्त्रमपि क्रियारूप तत्पुष्पव्यतिरिक्त पुष्पच्युत विना पुष्पेभ्य इति पूर्ववन्नेयम्। स्तनोद्भेदेत्यादौ न अर्थसन्देह ॥ २६ ॥ २७ ॥

अत्र उत्तरयोर्विरहसमागमादिकारणान्तरविभावनयोः स्वाभाविकीभ्यां प्राग्विभावनाभ्यां यथासङ्ख्यं विशेष उक्तः। सेयं विभावनया एव विभावनायां विशेषोक्तिस्तथैव गीर्भङ्ग्या विचित्रा नाम विभावना भवति ॥ २८ ॥

सैवान्यया गीर्भङ्ग्या यथा,

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥

अत्र अतैलपूराः सुरतप्रदीपा इति स्वाभाविकत्वविभावनायां शेषपदार्थैः अविभावनारूपैर्विशेष उक्तः। सेयमन्यया गीर्भङ्ग्या विचित्रा नाम विभावना भवति ॥ २९ ॥

क्रियायाः कारणं हेतुः कारको ज्ञापकश्च सः।
अभावश्चित्रहेतुश्च चतुर्विध इहेष्यते ॥ ३० ॥

---

वक्त्रं निसर्गसुरभीति। तस्या यथोक्ते वक्त्रवपुषी ममाकारणरिपुर्निर्निमित्तमसुहृच्चेत्यन्वयो विवक्षितप्रतीति लाभाच्च न अर्थान्तरैकवाचकत्वलक्षणो दोषः। यथासंख्यमिति। तयोः अथ एकैकं प्रति सम्पादनलक्षणविशेषार्पणक्षमत्वात् ॥२८॥

शेषपदार्थैरिति वनितासखत्वादिभिः सुरताद्युपपादकैः ॥२९॥

हेतुः प्रतिषेधो विभावनायामुक्तोऽथ हेतुरेव का इत्यपेक्षाया हेतुलक्षणमाह क्रियाया कारणं हेतुरिति। उपपत्तौ क्रियायामेव सर्वस्य निमित्तभावो निरूप्यत इत्यभिसन्धाय क्रियाया इत्युक्तमिति कश्चित् तदसत्। द्रव्यगुणक्रियाविषये हेतुः क्रियामात्रविषयश्च कारकमिति प्रकीर्णकवृत्तौ विभागकरणात् क्रियाग्रहणञ्चेह निष्फलं स्यात। तस्मादत्र क्रियां प्रति अवधिभावो निरूप्यते तत्र द्वयी गतिः निमित्तत्वमात्रविवक्षा कारकत्वविवक्षा वा आद्येऽपि आश्रितावधिभावस्य वस्त्वन्तरपरहेतुभावविवक्षा अवस्तुत्वविवक्षा वा द्वितीयेऽपि कारकत्वक्रियानुवन्धिव्यापारत्वम्। प्रधानक्रियानुकूलक्रियान्तरसमावेश इति यावत्। तद्द्विविधं शब्दाभिहितमतथाभूतञ्च आद्यं कारकविभक्तेर्विषयो द्वितीयं हेतुविभक्तेः द्वयमपि च क्रियाविषयमेव। षण्णामपि कारकाणां क्रियाघटितमूर्त्तित्वात्। अवस्तुभूतं तु निमित्तमभावात्मकतया न विक्रियते। विकाराभावाच्च न क्रियाविशिष्टमतथाभावे। न च कारकमिति तृतीय एव प्रकारः प्रसिद्धकार्य्ये

य: प्रवृत्तिं निवृत्तिञ्च प्रयुक्तिं चान्तरा विशन् ।
उदासीनोऽपि वा कुर्य्यात् कारकं तत् प्रचक्षते ॥२१॥

तेषु प्रवर्त्तकः क्रियाविष्टो यथा,

अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः ।
उत्पादयति सर्वस्य प्रीतिं मलयमारुतः ॥

सोऽयं यथोक्तो मलयमारुतः प्रीत्युत्पादनक्रियासमावेशात् प्रवर्त्तको नाम कारकहेतुभेदः ॥ २२ ॥

स एव क्रियानाविष्टो यथा,

तस्य राज्ञः प्रभावेन तदुद्यानानि जज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥

अत्र प्रभाव' क्रियायामनिविशमान एव हेतौ तृतीयां प्रयोजयति न कर्त्तरीति क्रियायामनाविष्टोऽयं कारकहेतु-भेदः ॥ २३ ॥

निवर्त्तकक्रियाविष्टो यथा,

चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।
पथिकाना प्रमाथाय पवनोऽयमुपस्थितः ॥

---

कारणभावविपर्य्यासेनोपनिबध्यमानो हेतुराश्चर्य्यकारितया चिव आरोपितमपि च हेतुत्व हेतुत्वमेवेति भवति चतुर्थ' प्रकारो बहिरसम्भाव्यमानस्यापि कवि-प्रतिभासरम्भीत्याप्यतया चमत्कारविशेषार्पणादनुर्थैव अलङ्कारता । यदाह । को हि प्रतीतिमात्रकाव्ये वस्तुस्थिति भावयेदिति । तदेतत् सर्वमभिसन्धाय विभागमाह । कारक इत्यादि ॥ २० ॥

असत. सत्ताप्रवृत्ति सतोऽपगमो निवृत्ति, प्रवर्त्तमानस्य प्रवर्त्तनाप्रयुक्ति. अन्तराविशन्नुपात्तक्रिय उदासीनोऽतथाभूतः । तेन कारकस्य षट् प्रकारा: ॥ २१ ॥ २२ ॥

तस्य राज्ञ प्रभावेनेत्यत्र सदपि कर्तृत्वमविवक्षितमतो हेतुभावविवक्षाया पाक्षिकी तृतीया भवतीत्याह । हेतौ तृतीयामिति । करणभावस्त्वसम्भावित एव । प्रभावमात्रस्य तत्क्रियाव्यभिचारात् ॥ २३ ॥

अत्रैवंविधस्य पवनस्य पथिकप्रमाथसाधनक्रियायां कर्तृत्वेनावेशान्निवर्त्तको नामायमाविष्टक्रियः कारकहेतुभेदः ॥२४॥

स एव क्रियानाविष्टो यथा,

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥

अत्र समागमनिवृत्तावनिविशमानः प्रजागरः तृतीयार्थे पञ्चमीं प्रयोजयति । वाष्पः पुनर्दानक्रियावेशाद्दर्शनक्रियायामनाविशन् कर्मसम्बन्धात् ताम् अप्रधानभावेन च उपगृह्णाति । इमि अनाविष्टक्रियो नाम निवर्त्तकोऽयं कारकहेतुभेदः ॥२५॥

प्रयोजकः क्रियाविष्टो यथा,

तस्मिन् जीवति दुर्द्धर्षे हतमप्यहतं बलम् ।
हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम् ॥

अत्र बलप्रत्युज्जीवनमरणक्रिययोः सप्तमीवाच्यनैमित्तिकाधिकरणकारकभावेन हनूमानाविशन् प्रयोजको भवतीति क्रियाविष्टोऽय प्रयोजको नाम कारकहेतुभेदः ॥ २६ ॥

---

प्रमाथसाधनक्रियाया कर्तृत्वेनेति निष्ठाप्रत्ययेनोपात्तेनेति भावः ॥ २४ ॥

खिलीभावो निवृत्ति. । तृतीयार्थ इति । हेतावविवक्षितत्वाप्रतीते' अपादानभावेन सम्भावित. । दानक्रियेति । स्यादेव दर्शनक्रियासमावेशो यदि दानक्रियाया वश. स्यात् । स एव तु नास्ति नञा निषेधादित्यर्थ. ॥ २५ ॥

तस्मिन् जीवतीति । जीवनमरणयोर्बलस्यैव स्वातन्त्र्य हनूमान् प्रयोजयति प्रयोजकता चास्य ते एव जीवत्युज्झितप्राण इति पदाभ्यामुपात्त चमत्कारकमिद भवतीत्याह । सप्तमीवाच्येति । ननु चाङ्गुल्यग्रे मदकलघटा दर्शयन्तीव धूर्त्ता इत्यादौ काल्पनिकादावपि सप्तमीभावात् कथ कारकतेत्यत आह । नैमित्तिकेति । अन्यस्यासम्भवादिति भाव. ॥ २६ ॥

स एव क्रियानाविष्टो यथा,

मानयोग्यां करोमीति प्रियस्थाने स्थितां सखीम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥

अत्र मानाभ्यासक्रियायां भ्रूभङ्गजिह्माक्षिप्रेक्षणादिरूपायां आत्मन्येवात्मनः समावेशो न भवतीति क्रियानाविष्टोऽयमिति शब्दाभिधेयप्रयोजको नाम कारकहेतुभेदः ॥३७॥

द्वितीया च तृतीया च चतुर्थी सप्तमी च यम् ।
क्रियानाविष्टमाचष्टे लक्षण ज्ञापकस्य यः ॥ ३८ ॥

स द्वितीयावाच्यो यथा,

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥

---

मानयोग्यामिति । भ्रूभङ्गजिह्माक्षिस्फुरिताधरादिप्रेक्षणारूपायां मानाभ्यासक्रियायाम् बालायाः स्वातन्त्र्यम् । तादृशीं तु तामिति शब्दनिर्देशोऽभिप्रायविशेषं प्रयुङ्क्ते तस्य तु न क्रियान्तरमुपात्तमुपात्तायास्तु मानक्रियायाः स्वात्मनि समावेशोऽनुपपन्नः । अभिप्रायोऽपि हि व्यापारप्रचयरूपक्रियान्तर्भूत एव यदाह महाभाष्यकारः या किञ्चित्तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा तत्सर्वस्य इत्यर्थः । स्मरणादिकस्यास्य व्यापारः सम्भवतीति अतो नाकारकत्वं वाच्यम् । तदेतदभिसन्धायाह । आत्मन्येवात्मन इति ॥ ३७ ॥

इह पञ्चैव लक्षणे विभक्तयो विहिताः तद्यथा अनुर्लक्षणे लक्षणेत्थम्भूतेत्यादिना संज्ञां विधाय कर्मप्रवचनीययुक्ते इति द्वितीया । येनाङ्गविकारः इत्थम्भूतलक्षणे इत्येताभ्यां तृतीया । उत्पातेन ज्ञापिते इति चतुर्थी यस्य च भावेन भावलक्षणमिति सप्तमी । षष्ठी च अनादरे इति षष्ठी तदेतदाह । द्वितीया चेति । षष्ठीमग्रे वक्ष्यति षष्ठी च अनादरे इति सूत्रे चकारस्य समुच्चेयतया न प्रधाना चेति नात्र तुल्यकक्षतया गणिता ॥ ३८ ॥

क्रियानाविष्टः स्वव्यापारशून्यः तटस्थमेव यद्रूपमियते । तेन कारकाद्भेदः । अत्र हि क्रियानाविष्टस्य एव इन्दुमत्या इति इन्दुमतीमालम्बनादिभावीकल्प्यमाना शृङ्गारचेष्टास्तयैव अवच्छिन्द्यन्ते । तदवस्था एव च लक्ष्यन्ते ततो भवति हेतुत्वं लक्षण-

अत्र क्रियानाविष्टतयैव इन्दुमत्यां महीपतीनां शृङ्गार-चेष्टा भवन्त्यो लक्ष्यन्ते। सोऽयं लक्षणहेतुः प्रतिना योगे द्वितीयामुत्पादयति ॥ ३९ ॥

तृतीयावाच्यमित्थम्भूतलक्षणं यथा,

कण्ठे कालः करस्थेन कपालेनेन्दुशेखरः।
जटाभिः स्निग्धताम्राभिराविरासीद् वृषध्वजः ॥

अत्र कण्ठे काल इत्यादीनि क्रियायामनिविशमानान्येव वृषध्वजं विज्ञापयन्ति, यथा जटाभिस्तापस इति ॥ ४० ॥

तृतीयावाच्य एव अङ्गविकारलक्षणं यथा,

स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः।
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्प्रति तेजसा रविः ॥

---

त्वमवधित्व चेति। ननु कथमत्र द्वितीया। यावता हेतुत्वात् तृतीयया भवितव्यमित्यत आह। द्वितीयामिति। नाप्राप्ताया तृतीयायामिय विधीयमाना बलवती ता बाधत इत्यर्थ. ॥ ३९ ॥

अत्र कण्ठे काल इत्यादीनीति। यद्यपि कपालेन जटाभिरित्येव उदाहरण तथापि प्रसङ्गादितरद्व्याख्यानम्। ज्ञापकत्वमुभयत्रापि तुल्यविभक्तिवाच्यतायान्तु विशेषः। तेन अन्योऽपि एव जातीयो लक्षणप्रकारः स्वयमूहनीय इत्युक्त भवति यद्वक्ष्यति। उपलक्षणञ्च एतदित्यादिना। उक्तमेव प्रसिद्धोदाहरणेन द्रढयति। यथा जटाभिरिति। यथा हि इत्थम्भूतस्य तेनैव प्रकारेण प्रकारवती लक्षण जटा भवन्ति तथेहापि कपालादिकमिति भावः। तृतीयावाच्य एवेति। सूत्रे अङ्गपदेन अङ्गी लक्ष्यते। तस्य च सम्बन्धिनियमात् अङ्गवाचिनः तृतीया भवति। अङ्ग च द्विविधमाजानिकमौपचारिक च द्वयमपि इह विवक्षित विकारादिकं च इत्थम्भूतलक्षणमेवेदम्। अतएव सूत्रकृतो नादृत इत्याशयवान् व्याचष्टे। अत्र वपुषेति। विकृतिरवस्थान्तरप्राप्तिः। गौनासावेति। ननु उत्पातेनाविष्टेन यज्ज्ञाप्यते तत्र चतुर्थीति लक्षणमेव अस्य अवाच्य' प्रतिभाति नैतत्। नैतत् लक्ष्यलक्षणभावोऽसौ अभिधीयते न तु लक्ष्ये ततश्च यतो विधीयते तस्य लक्षणीयतामर्थादितरस्य लक्षणता बोधयतीति। अगदरजः प्रभृतयस्तु कथम् असङ्गतरूपा इत्यवशिष्यन्ते तत्राह। अत्र गौर्या इत्यादि। ननु तथापि लक्ष-

अत्र वपुषा चतुर्भुजो मुखेन त्रिलोचनस्तेजसा रविः इति अङ्गविकारैः अङ्गिनो विकृतिर्लक्ष्यते, यथा अक्ष्णा काण इति ॥ ४१ ॥

चतुर्थीवाच्यमुत्पातलक्षणं यथा,

गोनासाय नियोजितागदरजाः सर्पाय बद्धौषधिः।
कण्ठस्थाय विषाय वीर्य्यमहते पाणौ मणीन् बिभ्रती।
भर्त्तुर्भूतगणाय गोत्रजरतीनिर्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः॥

अत्र गौर्य्या विवाहमङ्गलानौचित्येन उत्पातरूपैः अगदरजोनियोगादिभिर्भगवद्गता गोनासादयो ज्ञाप्यन्ते। यथा वाताय कपिला विद्युदिति। ततश्च उत्पातेन ज्ञाप्यमान इति सम्बन्धस्य उभयनिष्ठत्वात् तादर्थ्य इव लक्ष्यवाचिनश्चतुर्थी न लक्षणवाचिनः। तृतीयाविषयापहारात् एकयैव विभक्त्या उभयगतस्यापि सम्बन्धस्य राज्ञः पुरुष इतिवदुक्तत्वात् तृतीयापि न भवति ॥ ४२ ॥

सप्तमीवाच्य भावलक्षणं यथा,

इति शासति सेनान्यां गच्छतस्ताननेकधा।
निषिध्य हसता किञ्चित् तस्थे तत्रान्धकारिणा॥

अत्र सेनान्यः पलायमानगणानुशासनक्रियायाम् अन्धकारैः

---

वाचिन एव चतुर्थीति कथमवसितमित्यत आह। ततश्चेति। यथा तादर्थ्यस्य उभयनिष्ठत्वेऽपि कङ्कणाय कनकमित्यत्र कार्य्यवाचिन एव चतुर्थी न तु कारणवाचिनस्तथेहापि सम्बन्धस्य उभयाश्रयत्वेऽपि लक्ष्यवाचिन एव चतुर्थी न तु लक्षणवाचिन इत्यर्थः। तर्हि तृतीया कथं न भवतीत्यत आह। एकया एव चेति। सम्बन्धस्य सम्बन्धिनावेव विशेषस्तेन लक्षणमपि चतुर्थ्यैव प्रतिपादयत्यथ उक्तार्थत्वात् कथं तृतीया भवतीति शुद्धप्रातिपदिकार्थाभिधाने प्रथमेति भावः॥४०॥४१॥

यस्य च भावेन भावलक्षणमित्यस्य सूत्रस्यार्थस्तु यस्य वस्तुनो भावेन क्रियया वस्त्वन्तरस्य भावः क्रिया लक्ष्यते तद्वचनात् सप्तमीत्यत आह। अत्र सेनान्य

स्वप्रकाशनक्रिया लक्ष्यते। यथा गोषु दुह्यमानासु गत इति। उपलक्षणञ्चैतत्। तेन अन्यदपि भावलक्षणं शब्दाद्यभिधेयमुपलक्ष्यते यथात्रैव हसता तस्य इति॥ ४३॥

यथा वा,

यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः।
जातवेदोमुखान् मायी मिषतामाच्छिनत्ति नः॥

इति अनादरोपाधिके भावलक्षणे षष्ठी अपि भवतीति॥

अभावः प्रागभावादिभेदेनेह चतुर्विधः।
घटाभावादिभेदात्तु तस्य सङ्ख्या न विद्यते॥ ४४॥

तेषु प्रागभावो यथा,

अनभ्यासेन विद्यानामसंसर्गेण धीमताम्।
अनिग्रहेण चाक्षाणां व्यसनं जायते नृणाम्॥

अत्र विद्यानभ्यासादेः प्रागभावस्य व्यसनादिकारणत्वम्॥४५॥

प्रध्वंसाभावो यथा,

गतः कामकथोन्मादो गलितो यौवनज्वरः।
गतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः॥

---

इति। हसता तस्य इति लक्षणे शतृविधि। लक्षणहेत्वोः क्रियाया इति सूत्रणात्॥ ४२। ४३॥

अभावसामान्यसभावप्रमाणनिरूपणप्रस्तावे "असत्ताया पदार्थानामिति" अनेन वक्ष्यति। तेनात्र सामान्यलक्षणं न कृतवान्। स द्विविधस्तादात्म्यप्रतियोगिकः संसर्गप्रतियोगिकश्च। द्वितीयस्त्रिधा। प्रागभावप्रध्वंसात्यन्ताभावभेदात्। तदाह। प्रागभावादिरिति। ननु न प्रागभावादिरेकोऽस्ति प्रतियोगिभेदेन भेदादित्यत आह। घटादीति। अनेन रूपेण सङ्ख्या नास्त्येव सामान्ये तु प्रागभावत्वादिकमाश्रित्य चातुर्विध्य सोऽयन्तु शब्दस्यार्थ॥ ४४॥

अनभ्यासेनेति। यावत् विद्या न अभ्यस्यन्ति तावन्न धीमद्भिः संसृज्यन्ते यावच्च अक्षाणि न निगृह्णन्ति तावद्व्यसनमिति विवक्षितम्। तेन नात्यन्ताभावशङ्का।

अत्र कामकथोन्मादगमनादेः प्रध्वंसाभावस्य पुण्याश्रमानुसन्धानकारणत्वम् ॥४६॥

इतरेतराभावो यथा,

वनान्यमूनि न गृहाण्येता नद्यो न योषितः।
मृगा इमे न दायादास्तन्मे नन्दति मानसम्॥

अत्र वनानि अमूनि न गृहाणीत्यादेरितरेतराभावस्य मनःप्रमोदकारणत्वम्॥ ४७॥

अत्यन्ताभावो यथा,

अत्यन्तमसदार्य्याणामनालोचितचेष्टितम्।
अतस्तेषु विवर्द्धन्ते निर्विबन्धा विभूतयः॥

अत्रानालोचितचेष्टितस्यात्यन्ताभावो विभूतीनां निर्विघ्नवृद्धिहेतुः॥ ४८॥

एतेनाभावाभावोऽपि व्याख्यातः।

तत्र प्रागभावाभावो यथा,

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः॥

---

आराध्यास्ताइ'। शिक्षापरस्यास्य श्लोकस्यापि अन्यप्रयोजनकतया न अत्यन्ताभावसङ्कर इति॥ ४५॥ ४६॥

वनान्यमूनीति। इदमिदम भवतीति प्रतीतिसाक्षिक एवान्योन्याभाव'। वैधर्म्यन्तु भेदाख्यमलङ्कारान्तर किञ्चिद्धर्मसन्तर्भाव्यैव स्वरूपस्यापि भेदव्यवहारपावतर ॥ ४७ ४८॥

वस्तुन उत्पाद इति। भाव एव अभावाभावव्यवहारभूमि। अभावव्यवहारविषयभावस्य च विभागः कृतोऽस्ति च प्रागभावादेः प्रध्वसादिरूपतेति न न्यूनता विभागवाक्यस्य आशङ्कनीया। तेनेति। भूतभव्यसमुच्चारणे भूत भव्यायेति-

अत्र वस्तुन उत्पादः प्रागभावाभाव उच्यते। तेनेह सहकारमञ्जरीणामुद्भेदस्य पथिकनारीणां मरणे कारणत्वम् ॥४९॥

प्रध्वंसाभावाभावो यथा,

पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनम्
पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः शिवं ध्यायति ॥

अत्र यथोक्तेन वपुषा योऽयमालिङ्गनेऽपि विधिनिवासनाभिपङ्कजानुपघातः, स इह वस्तुनोऽवस्थानमेव प्रध्वंसाभावाभाव उच्यते। स चेहाच्युतनाभिपङ्कजनिवासिनो विधेर्मनोनिर्वाणकारणं भवति ॥ ५० ॥

विदूरकार्य्यः सहजः कार्य्यानन्तरजस्तथा।
युक्तो न युक्त इत्येवमसङ्ख्याश्चित्रहेतवः ॥ ५१ ॥

---

न्यायात् मञ्जरीणामुद्भेदस्य कारकतालाभोऽन्यथावाक्यभेदेन किञ्चित् स्यात्। प्रागभावात् प्रागभावाभावभङ्ग्या च समस्तमञ्जरीसमुद्भेदेन वसन्तप्रौढिध्वननात् प्रकृतविप्रलम्भ पोष ॥ ४९ ॥

पीन श्रोणीति। निभृत दुर्लक्ष्यम्। अब्धिदुहितापि सर्वाङ्गीणमाश्लेष मभिलषति भगवानपीति कान्ते न कान्तमित्येताभ्यामभिव्यज्यते। उपलक्षणञ्च इदम्। तादात्म्यात्यन्ताभावाभावौ अपि उदाहरणीयौ। यथा। अवनिरुदक तेजो वायुर्नभ शशिभास्करौ पुरुष इति यत्किञ्चिद्भिन्ना वदन्ति तनूस्तव तदनघवचो वैचित्रीभिर्निरावरणस्य ते विदधति य' पूरोन्मीलन्मृपामिहिरोपमाम्। अत्र भिन्न इत्यन्योऽन्याभावमुपन्यस्य निरावरणस्य स्पेत्येताभ्या निषेध.। यथा च। न विद्यते यद्यपि सर्ववासनागुणानुबन्धिप्रतिभान मद्भुतम्। श्रुतेन यत्नेन च वागुपासिता ध्रुव करोत्येव कमप्यनुग्रहम्। अत्र न विद्यत इति अत्यन्ताभावम् उपन्यस्य कमपीति प्रतिभासताभिधानेन प्रतिषेध' ॥ ५० ॥

विदूरकार्य्य इति। का[illegible]न्तरभाव्यवस्थासम्पाद्य' प्रागवस्थावत एव कार्य्यम्

तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः।
कार्य्याः काव्येषु वैचित्र्यं यथा ते कर्त्तुमीशते ॥५२॥

तेषु विदूरकार्य्यो यथा,

अनम्नुवानेन युगोपमानमलब्धमौर्वीकिणलाञ्छनेन।
अस्पृष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः॥

सोऽयं बाल्य एव नवयौवनकार्य्यकरणात् विदूरकार्य्यो नाम चित्रहेतुः ॥ ५३ ॥

सहजो यथा,

सममेव समाक्रान्तं द्वयं द्विरदगामिना।
तेन सिंहासनं पित्र्यमखिलञ्चारिमण्डलम् ॥

अत्र राज्याभिषेकरिपुमण्डलाक्रमणयोर्हेतुसद्भावेन सत्यपि पौर्वापर्य्ये क्षिप्रकारित्वात्तुल्यमेव कार्य्यकारणभावो विवक्षितः। तेन सहजो नाम अयं चित्रहेतुः ॥ ५४ ॥

कार्य्यानन्तरजो यथा,

पश्चात् पर्य्यस्य किरणानुदीर्णं चन्द्रमण्डलम्।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः॥

अत्र चन्द्रोदयलक्षणाद्धेतोः पूर्वकालमेव रागसागर उदीर्ण इति कार्य्यस्य उदयलाभः। स इह गुणवृत्त्याश्रयणेन हेतावतिशयं पुष्यतीत्ययं कार्य्यानन्तरजो नाम चित्रहेतुः॥ ५५ ॥

---

उपजायमानं यत्रोच्यते स विदूरकार्य्यस्तच्च कार्य्यं शक्तिविशेषाधीनमिति बाल्येऽपि प्रभावातिशयदर्शनाद्भुतेनैव रक्षाकृतेति गौणवृत्तिव्यपाश्रयता। सहजं कार्य्यं सहोत्पत्तिकतया निबद्धं। कारणशक्तिप्रकर्षात् समकालमिव कार्य्यं प्रतिभासते तेन हेतुशक्तिप्रकर्षाभिव्यक्तिरत्र मूलम्। यदग्रे ददति यथा वा कर्त्तुमीशत इति एव मनन्तरजेऽपि। किं कारणं पूर्वमुत कार्य्यमस्ति स एव व्यङ्ग्यः। युक्तेऽपि कारणगुणानुविधायिकार्य्यमसदेवारोप्यते न प्रयुक्तेति तदेव विपरीतमिति गौणवृत्त्याश्रयता॥ ५१—५४ ॥

युक्तो यथा,

गुणानुरागमिश्रेण यशसा ते प्रसर्पता ।

दिग्बधूना मुखे जातमकस्मादर्द्धकुङ्कुमम् ॥

अत्र दिग्बधूमुखेषु ते गुणानुरागः कुङ्कुमं यशस्तु चन्दनमित्ययं युक्तो नाम गौणवृत्तिव्यपाश्रयश्चित्रहेतुः ॥ ५६ ॥

नयुक्तो यथा,

न मीलयति पद्मानि न नभोऽप्यवगाहते ।

त्वन्मुखेन्दुर्ममासूना हरणायैव यस्यति ॥

अत्र मुखेन्दोः पद्मनिमीलादि न युज्यते इति नयुक्तो नाम चित्रहेतुः ॥ ५७ ॥

एव शब्दस्य प्रकारवाचित्वात् व्यधिकरणादयः प्रयुज्यन्ते यथा,

सा बाला वयमप्रगल्भवचसः सा स्त्री वय कातराः

सा पीनोन्नतिमत् पयोधरयुग धत्ते सखेदा वयम् ।

सा क्रान्ता जघनस्थलेन गुरुणा गन्तु न शक्ता वयम्

दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥

अत्राभिव्यक्तमेव व्यधिकरणत्व कार्य्यकारणयोः प्रतीयते इति अय व्यधिकरणो नाम चित्रहेतुः ॥ ५८ ॥

वस्तुनो वा स्वभावेन शक्तेर्वा हानिहेतुना ।

---

ननु व्यक्तिभेदेऽपि हेतौ' असख्यता चेत् विवक्षिता किमेव शब्देन अधिकेनेत्यत आह । एव शब्दस्येति । प्रकारस्य उपाधेरेव भेदो विवक्षितो न तु व्यक्तिमात्रस्येति भावः । सा बालेति । बाल्यादीना सामानाधिकरण्ये एव प्रागल्भ्यादिक प्रति हेतुभाव' प्रतीतः स इह गौणवृत्तिव्यपाश्रयतया उपनिबद्ध्यमान. कान्तिम् आवहति । तथा हि अन्यत्प्रागल्भ्य बालाया सरलालोकितवाग्विभ्रमादसामर्थ्य लक्षणमन्यच्च नायकप्रकाण्डे कथमेषा नियन्त्रणा स्यादित्यनध्यवसायलक्षण तयोश्च तद्भावापत्तिरत्र व्यक्तैव । एव कातरत्वादौ बोद्धव्यम् ॥ ५५—५८ ॥

आदिम इयेन स्वहेतुकतया कार्य्यहेतुकतया च उपनिबद्ध्यमानः सङ्कलितो

अकृतात्मीयकार्य्यं स्यादहेतुर्व्याहतस्तु यः ॥ ५९ ॥

तत्राकृतकार्य्यो वस्तुस्वभावेन यथा,

न विरचिता ललाटतटलास्यकरी भ्रुकुटि-

र्न परुषहुङ्कृतेन मधुरस्मितमन्तरितम् ।

न तव निशुम्भसम्भ्रमवशादपि दारुणया

भगवति चेष्टया कलुषितं वदनाम्बुरुहम् ॥

अत्र निशुम्भसम्भ्रमस्य हेतोः अनुत्पादितभ्रुकुट्यादिदारुण-चेष्टाद्वारेण भगवतीमुखाम्बुरुहकालुष्यस्य करणे यदसामर्थ्यं तत्र तन्मुखाख्यस्य वस्तुनः स्वभावो निमित्तमिति स्वभावादनुत्पादितकार्य्योऽयमहेतुः ॥ ६० ॥

स एव शक्तेर्हानिहेतुना यथा,

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।

अहो दैवगतिश्चित्रा तथापि न समागमः ॥

अत्रानुरागवत्त्वतत्पुरःसरत्वयोः समागमहेत्वोः सामर्थ्य-

---

भवति । हेतोरनन्तर तद्विपरीतमहेतु लक्षयन्नाह । वस्तुन इति । हेतुतया प्रतीतोऽपि कार्य्यं न करोतीत्यभिधीयमानोऽहेतु स द्विविध स्वरूपेण कार्य्य व्यभिचारी व्यापारविरोधेन वा तथाभूतोऽपि च कार्य्यं यन्न करोति तत्र द्वय निबन्धन यद्गत कार्य्यमुपजनयितव्य तस्य वस्तुन स्वभाव हेतुत्वाभिमतस्य शक्ति-हानिर्वा सापि द्विधा आत्यन्तिकोऽभाव ।' प्रतिबन्धमात्र वा । तत्र वस्तु स्वभावेन शक्तेरत्यन्तासत्त्वेन च द्विरूपस्वरूपाव्यभिचारीकृतात्मीयकार्य्य इत्यनेनोक्तम् । वस्तुस्वभावेन शक्तिप्रतिबन्धेन च द्विप्रकारोऽपि च व्यापाराव्यभिचारी व्याहत इत्यनेन । यद्यपि शक्तेरत्यन्तासत्त्वे हेतुभाव एव न भवति । तथापि गुणवृत्त्या ;हेतुभावाव्यासौ बोद्धव्य' । सा च गुणवृत्ति श्लेषोपहिता अन्यादृशी भवति । अत्र निशुम्भेति ॥ ५९ ॥

ननु च अत्र चेष्टाया हेतुत्व तृतीयया प्रतीयत इति सा हेतुत्वेन वक्तुमुचितेत्यत आह । भ्रुकुट्यादिदारुणचेष्टाद्वारेणेति अन्यथा निशुम्भसम्भ्रमवशादिति पञ्चमी-सङ्गता स्यादिति भाव. ॥ ६० ॥

विघाते दैवगतिः कारणमिति शक्तेर्हानिहेतुनायमकृतस्वकार्य्यो नामाहेतुः ॥ ६१ ॥

वस्तुनः स्वभावेन व्याहतो यथा,

नीवीबन्धोच्छसनशिथिलं यत्र यच्चाङ्गनानां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखगतान् प्राप्य रत्नप्रदीपान्
ह्रीमूढ़ानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥

अत्र रत्नप्रदीपनिर्वापणे चूर्णमुष्टेः अपरित्यक्तस्वरूपस्यापि विघाते रत्नप्रदीपाख्यवस्तुस्वभावः कारणमित्ययं वस्तु स्वभावेन व्याहतो नाम अहेतुभूतः ।

स एव शक्तेर्हानिहेतुना यथा,

शम्भोरुद्धतनृत्यकर्मणि करे कङ्कालमाद्यं हरेः
सङ्घट्टस्फुटितेन्दुमण्डलगलत्पीयूषसञ्जीवितम् ।
तत्कालप्रणते सुरद्विषि नवे दृष्ट्वा विलास श्रियः
कुर्वत्कोपकषायितेन मनसा मिथ्योत्प्लुतिः पातु वः ॥

अत्र कोपकषायितमनसस्तस्य उत्प्लुतिकरणसमर्थस्यापि ईश्वरकरग्रहणान्मिथ्यापदाधीयमानः प्रतीतो व्याघातः । ततोऽयं शक्तेर्हानिहेतुना व्याहतो नाम अहेतुभेदः ॥ ६२ ॥

यस्तु कारणमालेति हेतुसन्तान उच्यते ।

---

अनुरागी लौहित्य प्रीतिश्च । पुरःसरोऽग्रे गमनशील: सन्निधौ स्थितश्च ॥ ६१ ॥

अमृतसेकजीवितकङ्कालशक्तिप्रतिबन्धे को हेतुरत आह । ईश्वरकरग्रहणादिति । ननु कोपकषायितमनस्त्वम् उत्पादितकार्य्यमेव कथमन्यथा कुर्य्यादित्युच्यतेऽत आह । मिथ्यापदेति ॥ ६२ ॥

इह कैश्चित्कारणमालापृथगलङ्कार इत्युक्त पूर्वस्य उत्तरोत्तर प्रति हेतुभावोक्तिः तल्लक्षणम् । स द्विविधोऽभिधीयमानः प्रतीयमानो वा । उभयथापि नाहे-

पृथक् पृथगसामर्थ्यात् सोऽप्यहेतोर्न भिद्यते ॥ ६३ ॥
एकोऽभिधीयमानेषु हेतुत्वेषु भवेत्तयोः।
प्रतीयमानेष्वपरः कारणत्वेषु जायते ॥ ६४ ॥

तयोराद्यो यथा,

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागप्रभवाश्च सम्पदः ॥

अत्र जितेन्द्रियत्वादीनामुत्तरोत्तरं प्रति हेतुभूतानामपि सम्पदुत्पत्तौ पूर्वपूर्वस्यापेक्षाया समुदितानामेव कारणत्वं साधनादिपदैरभिधीयत इति सोऽयमभिधीयमानहेतुत्वं कारणमालेत्यहेतुभेदः ॥ ६५ ॥

द्वितीयो यथा,

पीणत्तणदुग्गेज्झं जस्स भुआअन्तणिट्ठुरपरिग्गहिअं
रिट्ठस्स विसमवलिअकण्ठ दुक्खेण जीविअं वोलीणं॥ (ट)

अत्र जीवितदुःखातिक्रमणे कण्ठस्य वलनं वलनस्य निष्ठुरग्रहणं निष्ठुरग्रहणस्यापि पीनत्वं दुर्विगाह्यत्वे हेतुरिति प्रतीयमानकारणत्व कारणमाला इति अहेतुभेदः ॥ ६६ ॥

---

(ट) पीनत्वनदुर्ग्राह्यं यस्य भुजयन्त्रनिष्ठुरपरिगृहीतम्।
रिष्टस्य विषमवलितकण्ठ दुःखेन जीवितमतिक्रान्तम् ॥

---

तोर्व्यतिरिच्यत इत्याह। यस्तिति। यद्यपि प्रथमस्य प्रथम हेतुभावो निवृत्त एव तथापि उत्तरस्य प्रथमसुखनिरीक्षणप्रवृत्तस्य उत्तर प्रति भाव. अभिधीयते। न हि स्वतन्त्रस्यैव हेतुभावे कारणमाला भासते ॥ ६३—६४ ॥

तदिदमेकदेशद्वारा व्यञ्जयन्नाह। अत्र जितेन्द्रियत्वादीनीति। अत्र जीविते दुःखातिक्रमण इति। यद्यत्र हेतुमाला न स्यात्तदा परस्परानपेक्षाणामुपन्यासे वाक्यार्थपोषो न स्यादिति ॥ ६५—६६ ॥

इङ्गिताकारलक्ष्योऽर्थः सूक्ष्मः सूक्ष्मगुणात्तु सः ।
सूक्ष्मात् प्रत्यक्षतः सूक्ष्मोऽप्रत्यक्ष इति भिद्यते ॥ ६७ ॥

वाच्यः प्रतीयमानश्च सूक्ष्मोऽत्र द्विविधो मतः ।
इङ्गिताकारलक्ष्यत्वं लक्ष्मसामान्यमेतयोः ॥

तत्रेङ्गितलक्ष्यमभिधीयमानसूक्ष्मं यथा,

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥

अत्र स्वयंवरमिलितानां राज्ञां राजपुत्रीं प्रति प्राप्तिलक्षणस्य मनोरथस्याभिधीयमानस्य शृङ्गारचेष्टात्मकेन इङ्गितेन व्यङ्ग्यत्वादयमिङ्गितलक्ष्योऽभिधीयमानः सूक्ष्मभेदः ॥ ६८ ॥

तदेवाकारलक्ष्यं यथा,

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।

---

लक्षणात्मकहेतुविशेषस्य साधर्म्यादनन्तरं सूक्ष्मं लक्षयति । इङ्गितेति । इङ्गितमाकार इङ्गिताकारौ चेत्यर्थः । शरीरावयवव्यापार इङ्गितम् । रूपादेरन्यथात्वादाकारः सूक्ष्मार्थदर्शनं सूक्ष्ममित्यर्थगुणेषु उक्तं तेन पौनरुक्त्यमाशङ्क्याह । सूक्ष्मगुणात्तु स इति । हृदयसंवादभागि विचतुरहृदयसंवेद्यस्य । अतएव अतिसूक्ष्मार्थस्य प्रत्यक्षायमाणत्वात् सूक्ष्मनामार्थगुणः । यथा हि कवेः प्रतिभा सूक्ष्मविशेषोल्लेखिनी तथा तन्मूलकः शब्दोऽपीति स्फुटाभतया प्रत्यक्षप्रमेयज्ञानमुत्पद्यते । तथा हि अन्योऽन्यसंवलितेत्यादौ दम्पत्योर्मिथोऽनुमतिलक्षणस्य प्रेम्णः कतिपयसंवेद्यस्यापि शब्दबलात् प्रत्यक्षायमाणत्वमनुभवसिद्धमेव तदेतदाह । सूक्ष्मात् प्रत्यक्ष इति । सूक्ष्मालङ्कारे तु कविप्रतिभाया लिङ्गविषयत्वाच्छब्दोऽपि तद्विषय एव । लिङ्गाच्च प्रतीतिरुत्पद्यमाना सामान्यपुरस्कारेण प्रवृत्ता न प्रत्यक्षवत्तद्विशेषोल्लेखक्षमेति सूक्ष्मगुणवैधर्म्यं तदिदमुक्तम् । सूक्ष्मो प्रत्यक्ष इति । अत्र कैश्चित् प्रतीयमानस्य सूक्ष्मस्य भाव इति संज्ञां विधाय अलङ्कारान्तरमुक्तं तदसत् । सूक्ष्मसामान्यलक्षणेन क्रोडीकरणादित्याह । इङ्गिताकारलक्ष्यत्वमिति । एतेन लक्ष्यत्वपुनरुक्त्याशङ्का परिहृता । अत्र स्वयंवरेति । न च शृङ्गारचेष्टाप्रत्यर्पितस्य मनोरथशब्देनाभिधानमर्थपुनरुक्तमिति वाच्यम् । न हि यथानुरागानुभावेन

रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः॥

अत्र अभिलाषबन्धो रोमाञ्चलक्ष्येण गात्रयष्टिं भित्त्वा निराक्रामत् इत्यनेन अभिधीयमान आकारलक्ष्यः सूक्ष्मभेदोऽभिहितः॥ ६९॥

तदेव उभयलक्ष्यं यथा,

त्वदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्द्धत।
उद्दामरागपिशुना च्छाया कापि मुखाम्बुजे॥

अत्र त्वदर्पितदृश इति इङ्गित च्छाया कापि मुखाम्बुज इत्याकारः। ताभ्याम् उद्दामरागपिशुना इत्यनेन अभिधीयमानस्य आननरागस्य सूक्ष्मरूपतया लक्ष्यमाणत्वादयमभिधीयमानोभयलक्ष्यः सूक्ष्मभेदः॥ ७०॥

प्रतीयमानमिङ्गितलक्ष्य यथा,

वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कस्मिम्।
अज्जा वज्जेण विणा पदीप्पमाणे णईकच्छे॥ (ठ)

अत्र प्रतिवचनादानपरिजनप्रकोपाभ्यां प्रदीप्यमाने नदीकच्छे इति हेतुना प्रत्याय्यमानः सङ्केतकुञ्जाङ्गदाहोद्भववधू-

---

(ठ) व्याहृता प्रतिवचन न ददाति रुष्यति एकैकस्मिन्।
आर्य्या वज्रेण विना प्रदीप्यमाने नदीकच्छे॥

---

चित्तवृत्तयः स्फुटा उपस्थाप्यन्ते तथा स्वशब्देनेति विस्तरेण प्रपञ्चमेव वक्ष्यामः। स्वशब्दस्तु किमर्थमित्यवशिष्यते तत्र ब्रूमः। स्वयंवरसमाजप्रवेशादिना येषां सामान्यत उत्कण्ठाप्रतीति प्रथममवतीर्णा आसीत्तेषामिन्दुमतीसन्निधौ तदनुभाववशेन असंख्यसूक्ष्मविशेषवती सैव अभिव्यक्तेति दृढानुबन्धलक्षणस्य प्रेम्ण प्रकर्षकाष्ठां पुष्णाति। एवमन्यत्रापि॥ ६७—७०॥

अत्र प्रतिवचनादानमिति। न हि प्रतिवचनप्रदानाभावमात्रमत्र चम

मनस्तापो वाक्यार्थत्वेन लक्षित इति अयमिङ्गितलक्ष्यः प्रतीयमानः सूक्ष्मभेदः ॥ ७१ ॥

सामाइ सामलीए अद्धच्छिपलोअमुहसोहा ।
जम्बूदलकअकण्णावतंस भमदि हलिअउत्ते ॥ (ङ)

अत्रार्द्धाक्षिप्रलोकनमुखश्यामताभ्यामाकाराभ्यां जम्बूदलकल्पितावतंस इत्यनेन प्रतीयमानः सङ्केतगमनभ्रंशसम्भवः श्यामाया मनस्तापो लक्ष्यते इति अयमाकारलक्ष्यः प्रतीयमानः सूक्ष्मभेदः ॥ ७२ ॥

तदेव उभयलक्ष्यं यथा,

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख वाष्पाकुललोचना भुवम् ॥

अत्र चरणेन भूमिलेखनमिङ्गितं दृशोर्वाष्पाकुलत्वमाकारस्ताभ्यां गोत्रस्खलनोद्भवो मानिन्या मनस्तापः लक्ष्यते इत्ययम् इङ्गिताकारलक्ष्यः सूक्ष्मभेदः ॥७३॥

पदार्थानान्तु यः सारस्तदुत्तरमिहोच्यते ।

---

(ङ) श्यामायाः श्यामलतया अर्धाक्षिप्रलोकमुखशोभा ।
जम्बूदलकृतकर्णावतंस. भ्रमति हलिकपुत्रे ॥

---

स्कारि इतरस्मादन्यदापि सम्भवादतः प्रतिवचनप्रदानाभिप्राया विपरीतचित्तवृत्तिविशेषोन्नायिका समीपदेशापसरणादिलक्षणा क्रिया काचित् प्रतिवचनाप्रदानपदेनाभिमता। न च प्रकोपोऽपि अनुभवरूपतामनासादयन् स्वादनीयतामासादयतीति नूनं तेनापि भ्रूभङ्गादिरूपा क्रियैवाभिसंहितेत्याशयवतोक्तम् इङ्गिताभ्यामिति। यद्येवं तर्हि काव्यशोभानिर्वाहात् किमन्येन लक्षितेनेति। न हि यथोक्तप्रतिवचनादानप्रकोपाभ्यां कश्चिद् विवक्षितार्थलाभ इति भावः ॥७१—७३॥

विभज्यमानस्य स्वरूपतया सूक्ष्मानन्तरम् उत्तरलक्षणमाह। पदार्थानान्त्विति। सार सर्वस्वायमानम् उत्कर्षशालि वस्तु। पदार्थानामिति निर्द्धारणे षष्ठी। उत्तरमिति अन्वर्थं नाम। उत्कृष्टत्वमुदोऽर्थः तरैव प्रकर्षस्तरपः। धर्मधर्मिरूपाभ्या-

सधर्मधर्मिरूपाभ्यां व्यतिरेकाच्च भिद्यते ॥ ७४ ॥

तेषु धर्मस्वरूपं यथा,

दानं वित्तादृतं वाचः कीर्त्तिधर्मौ तथायुषः।
परोपकरणं कायादसारात् सारमुद्धरेत् ॥

अत्र दानसत्यकीर्त्त्यादीनां वित्तादिवस्तुधर्माणां सारभूतानामुद्धारादयं धर्मरूपः सारः ॥ ७५ ॥

धर्मिरूपो यथा,

मधुविकचसितोत्पलावतंसं
शशिकरपल्लवितञ्च हर्म्यपृष्ठम्।
मदनजनितविभ्रमा च कान्ता
सुखमिदमर्थवतां विभूतयोऽन्याः ॥

अत्र मधुप्रभृतीनां विभूतिभ्यः सारभूतानामुद्धरणादयं धर्मिरूपः सारः ॥ ७६ ॥

अथ व्यतिरेकेण धर्मरूपो यथा,

पोढ़महिलाणं जं ज सुसिक्खिदं तं रए सुहाविद्र।

---

मिति। व्यस्तसमस्ताभ्याम्। धर्मं उपसर्जनं परप्रवणतया प्रतीयमानं वस्तु। अतथाभूतन्तु धर्मिरूपं तदयमर्थः। प्रसिद्धवस्तुमध्ये कस्यचित् उत्कर्षवत्तया निर्द्धारणमुत्तरम्। तत्त्रिधा। धर्मरूपं धर्मिरूपमुभयञ्च। आद्ययोराद्ययोः प्रत्येकं प्रकारद्वयम्। निर्द्धार्य्यमाणस्य शब्दस्य उपादानं निर्धार्य्यानन्तरव्यतिरेकिधर्मवत्तया वा। तदिदमाह। व्यतिरेकाच्चेति। अन्यस्यापि सामान्यविशेषरूपतया रूपत्वमिति षट्प्रकारमुत्तरमिति ॥ ७४ ॥

वित्तादिवस्तु धर्माणामिति। पञ्चम्या विभागः प्रत्यायितः स च संश्लेषपूर्वक एवेति दानादीनाम् उपसर्जनताप्रतीतिः ॥ ७५ ॥

विभूतिभ्य इति। विभूतय. प्रथमानिर्दिष्टास्तेन पूर्ववन्नामूषां धर्मिभावेन प्रतीतिभासोऽस्तीति विशिष्टमध्वादिरूपं वस्तु न अङ्गभावेन गम्यत इति ॥ ७६ ॥

जं जं असिक्खिअं णववहूणं तं तं रइं देइ ॥ (ढ)

अत्र प्रौढ़ानां सुशिक्षितं सुरतकर्म अप्रौढ़स्त्रीणां पुनरशिक्षितं सुखयतीति कर्मान्तरलक्षणेभ्यो धर्मेभ्यः सुशिक्षिताशिक्षितरतकर्मलक्षणा धर्माः स्त्रीधर्माव्यतिरेकेण प्रतिपाद्यन्ते इति धर्मव्यतिरेकरूपोऽयं सारः ॥ ७७ ॥

व्यतिरेकेण धर्मिरूपो यथा,

राज्ये सारं वसुधा वसुधायां पत्तनं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥

अत्र वसुधादयो धर्मिण उत्तरोत्तरक्रमेण पूर्वतः पूर्वतो व्यतिरिच्यन्त इत्ययं धर्मिव्यतिरेकः सारः ॥ ७८ ॥

एतेन धर्मधर्मिस्वरूपोऽपि व्याख्यातः । स द्विधा सामान्यतो विशेषतश्च । तत्र सामान्यतो यथा,

गीतशीतांशुताम्बूलकर्पूरवनितादिभिः ।
असारोऽप्येष संसारः सारवानिव लक्ष्यते ॥

---

(ढ) प्रौढमहिलाना यत् यत सुशिक्षितं तद रतये सुखयति ।
यद् यदशिक्षित नववधूना तत् तद रतिं ददाति ॥

---

अप्रौढस्त्रीणामिति । षष्ठ्या धर्मधर्मिभावोऽभिहितः । तर्हि निर्द्धारण कस्मादित्यत आह । कर्मान्तरेति । रत इत्यनेन सामान्यत उपादानात् प्रौढस्त्रीसम्बन्धिनो ललितस्य सुशिक्षितत्व विशेषमुपादाय मुग्धस्त्रीसम्बन्धिनोऽसुशिक्षितत्वं व्यतिरेकी विशेष उपात्त ॥ ७७ ॥

अत्र वसुधादय इति । निर्द्धारितात् वसुधामात्रात् पत्तनवती वसुधा व्यतिरिच्यते । वसुधावत्पत्तनात् सौधवत्पत्तनवत् सौधात्तल्पवत्सौधात्तल्पाद्वराङ्गनाव दिति तदिदमुक्तमुत्तरोत्तरक्रमेणेति ॥ ७८ ॥

अत्र गीतादीनामिति । न हि गीतादौ कश्चिद्विशेष उक्त अतएवादिशब्दोऽपि सजीवस्तथापि दध्यादीनाम् अङ्गभावः प्रतीयत इत्यत आह । तृतीया-

अत्र गीतादीनां जगतः सारभूतानामविशेषेणैव सर्वेषाम् उपादानाद्धेतुतृतीयान्ततया च संसारसारवत्त्वेऽङ्गभावादयं सामान्यतो धर्मधर्मिरूपः सारः॥

विशेषतो यथा,

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः !।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः॥

अत्र गङ्गाप्रपातसप्तर्षिपादोदकयोर्विशेषेण सारभूतयोरुपादानात् हिमवतः पूतत्वे च अङ्गभूतत्वादयं विशेषतो धर्मधर्मिरूपः सारः॥

विरोधस्तु पदार्थानां परस्परमसङ्गतिः।

---

न्ततया चेति। तृतीयया हि कारकत्वमुक्तं कारकं च क्रियोपसर्जनरूपमित्यर्थः। अत्र गङ्गाप्रपातेति। प्रपातपादोदकयोर्गङ्गायाः सप्तर्षिभिश्च विशेषितत्वादङ्गतामुपपादयति। हिमवतः पूतत्वे चेति व्यतिरेकोत्तरे विरुद्धधर्माक्रान्तिरस्तीति सङ्गत्या विरोधलक्षणमाह। विरोधस्त्विति। परस्परसङ्गतिः असम्बन्धः सहानवस्थानमिति यावत्। तेन सहानवस्थाननियतयोः सहानवस्थानोक्तिर्विरोध इति तात्पर्य्यसंक्षेपः स च प्ररूढो दोषः। अपरोहस्तु द्विधा। श्लेषोपधानेन अन्यथा चाऽन्यथा भावस्त्रिधा। सहानवस्थितयोः प्रायोदर्शनमात्रेण नैयत्यारोपः। यथा "क्व युवतिमार्दवमित्यादौ" विरुद्धधर्मोक्तिविषयस्याचिन्त्यप्रभावातिशयत्वेन प्रसिद्धिर्वा। यथा "दिग्वासा यदीत्यादौ" विरोधस्य आरोपमात्रेण सरूपतया प्रतिपत्तिमात्रं वा। यथा सा उप्पण्डीत्यादौ। सर्वश्च अयं विरोधोऽभिधीयमानः प्रतीयमानश्च। अथादिशब्देन योऽभिधीयते सोऽभिधीयमानः प्रतीयमानस्तु तद्विना कृतो यथा भट्टबाणस्य। यत्र मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदनामदिरामोदिश्वसनाः प्रमदा इति। इहान्यैः अलङ्कारकारैः असङ्गतिप्रत्यनीकाधिकविषमाख्यमलङ्कारचतुष्टयं विरोधात् पृथक्लक्षितं तल्लक्षणानि। सम्बन्धे यस्य यत्कार्य्यमसम्बन्धेऽपि तस्य तत्। न बाध्यते चेत् तामाहुरलङ्कृतिम् असङ्गतिम्। प्रत्यनीकमभिप्रेतं कार्य्यमप्राप्य यत्पुनः। विरुद्धकार्य्यसम्प्राप्तिर्भवेत्तेनैव हेतुना। परिमाणादियोगेन व्यवस्थानमुपेयुषः। अव्यवस्थाभिधानं यदधिकं तत् प्रचक्षते। कारणेन विरूपं यत्कार्य्य-

असङ्गतिः प्रत्यनीकमधिकं विषमस्य सः ॥ ७९ ॥

तेषु विरोधः शुद्धो ग्रथितश्च। तयोः आद्यो यथा,

> क्व युवतिमार्दवं क्व च महाहवदारुणता
> क्व च वलयी करः क्व करिदन्तजमुष्टिरसिः।
> क्व च नवयौवनं क्व कुसुमायुधनिःस्पृहता
> तव ललनाविचेष्टितविरुद्धमहो ललितम् ॥

अत्र युवतिमार्दवादीनां महाहवदारुणतादीनाञ्च शुद्धानामेव परस्परमसङ्गतत्वादयं शुद्धविरोधः ॥ ८० ॥

द्वितीयो यथा,

> दिग्वासा यदि तत् किमस्य धनुषा शस्त्रस्य किं भस्मना
> भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम्।
> इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
> भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥

अत्र दिग्वासस्त्वादीनामुत्तरोत्तरग्रथनादन्योन्यासङ्गतादयं ग्रथितनामा विरोधभेदः ॥ ८१ ॥

असङ्गतिर्यथा,

> सा उप्पण्डि गोट्ठ उहि णो क्खोकावि विसगंठि।

---

मुक्तवदुच्यते। आश्चर्यकारि तत्प्राहुर्विषमं शब्दबुद्धय इति। तदेतेषां लक्षणभेदाद्विरोध एवान्तर्भावो न हि एष्य अवान्तरभङ्गिभेदमात्रेण सामान्यान्तर्भावो न भवतीत्याशयवानाह। असङ्गति' प्रत्यनीकमिति ॥ ७९ ॥

शुद्धानामेवेति। एकेनैव प्रतियोगिना सह अनवस्थानोक्तौ विरोधनिर्वाहात् ॥ ८० ॥

उत्तरोत्तरग्रथनादिति। यद्यपि एकेन विरोधिना सहोक्तौ विरोध्यन्तरेण अपि तथाभावमासादयन्नेव ग्रथितस्तथापि उत्तरग्रथनया शोभाविशेषार्पको भवतीत्यभिप्राय ॥ ८१ ॥

भिडि पच्चलिउ सो मरइ जस्स ण लग्गइ कंठि ॥ (ग)

अत्राय विषग्रन्थिर्यस्य कण्ठे न लगति स म्रियत इत्येतयोः परस्परमसङ्गतेः अयमसङ्गतिर्नाम विरोधभेदः ॥ ८२ ॥

प्रत्यनीक यथा,

उत्कण्ठा सन्तापो रणरणको जागरस्तनोस्तनुता ।
फलमिदमहो मयाप्त सुखाय मृगलोचनां दृष्ट्वा ॥

अत्र मृगलोचनादर्शनस्य किल निर्वृतिः फल मया तु ता दृष्ट्वा अन्तस्तापादिकं प्राप्तमिति प्रत्यनीकफलत्वादय प्रत्यनीकाख्यो विरोधः ॥ ८३ ॥

अधिको यथा,

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावद्वा ददृशे स तैः ॥

अत्र एकस्य दाशरथेः अनेकसङ्ख्यैर्यातुधानैः यत् समरकर्म तत्र तैः अस्य तावद्वा दृश्यमानत्वेनैकसङ्ख्याविरुद्धमाधिक्यं गम्यते इति अयमधिकाख्यो विरोधः ॥ ८४ ॥

विषम यथा,

दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयो मलीमसः शुक्लतर भवद्यशः ॥

अत्र मलीमसाध्वरधूमसञ्चयेन यद् यशसः शुक्लीकरण तद्

---

(ग) सा उत्पन्ना गोष्ठभुवि नवीनैव कापि विषग्रन्थि ।
भिद्यते प्रत्युत स म्रियते यस्य न लगति कण्ठे ॥

---

विषग्रन्थेः कण्ठसम्बन्धेन मारकत्व प्रतीतम् । वर्ण्यमानाया रूपस्य तु अतथाभूतस्यैव इति व्यक्तो विरोध. ॥ ८२ ॥

अत्र मृगलोचनादर्शनस्यैव इति यद्यपि एकस्य विरुद्धकार्य्यकारित्व न विरुद्धं

यादृशादेव जायते तत् तादृगेव भवतीति प्रसिद्धेर्वैषम्यात् परस्परम् असङ्गतिरयं विषमाख्यो विरोधः ॥ ८५ ॥

प्रभूतकारणालोकात् स्यादेवमिति सम्भवः ।
स विधौ वा निषेधे वा द्वये वा न द्वयेऽपि वा ॥ ८६ ॥

एषु विधिविषयो यथा,

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः
एकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥

अत्र त्वयि जलमादातुम् अवनते सति तस्याः सरितः प्रवाहो मध्यनिविष्टेन्द्रनीलमणिर्मुक्तागुण इव गगनगतिप्रेक्षणीयो भविष्यतीति विधिः सम्भाव्यमानत्वात् अयं विधिविषयः सम्भवः ॥ ८७ ॥

---

तथापि यथैव प्रवृत्त्या किञ्चित्कार्य्यं कर्त्तुमुद्यतो न तयैव तद्विरुद्धं करोति तदेतत् सुखायेति चतुर्थ्या द्योत्यते ॥ ८३—८५ ॥

सामग्र्येकदेशसद्भावमात्रेण कार्य्यसद्भावे स्थिते विरोधच्छायामूलत्वमिति तदनन्तरं सम्भवः प्राप्तावसर इत्याह । प्रभूतेति । भूयांसि कारणानि दृष्ट्वा कार्य्यमुत्पत्स्यते नापि दैवात् कदाचित् न स्यादिति ज्ञानसम्भव । न चायं संशय एव । न हि स्याद्वा नवेति दोलायते नापि वितर्क. । व्याप्यारोपस्याभावात् । क्व तर्हि अयमन्तर्भवति । न क्वचिज्ज्ञानान्तरस्यैव उच्यमानत्वात् । अनिश्चयरूपतामात्रेण तत्र अन्तर्भाव इति प्रसङ्गात् । नापि भ्रान्तिर्व्यंग्यभूतबाधपुरःसरत्वात् । भ्रान्तौ तु सिद्धाया बाधोत्पत्तिरिति वक्ष्यते । स विधौ वा निषेधे वेति । सम्भवो विषयनियतो विधिनिषेधोभयानुभयरूपश्चतुर्विधो विषयः अप्रवृत्तप्रवर्त्तनं द्विरूपम् । प्रयोजकगतं प्रयोज्यगतञ्च । आद्यं प्रयुक्ताख्ये शब्दालङ्कारे विधिद्वारेण इत्यनेन उक्तम् । द्वितीयन्तु भूतभवनलक्षणमिहोच्यते । सम्प्रसक्तस्याभावो निषेध । एतेन उभयानुभयरूपौ व्याख्यातौ ॥ ८६ ॥

अत्र त्वयि जलमिति । अप्रेक्षणीयस्य प्रेक्षणीयताभवनं विधिः ॥ ८७ ॥

निषेधविषयो यथा,

परस्य भूयान् विवरेऽभियोगः प्रसह्य संरक्षणमात्मरन्ध्रे।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा न सम्भवत्येव वनेचरेषु॥

अत्र इह भीष्मद्रोणयोः असम्भाव्यमान धनुर्वेदकौशलम् अस्मिन् वनेचरे न सम्भवतीति निषेधविषयः सम्भवः॥ ८८॥

विधिनिषेधविषयो यथा,

उत्पश्यामि द्रुतमपि सखे! मत्प्रियार्थं यियासोः
कालक्षेप ककुभसुरभौ पर्वते पर्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्॥

अत्र द्रुतमपि यियासोः कालक्षेपं तव उत्पश्यामि इति विधिरूपः, कथमपि भवान् गन्तुमाशु व्यवस्येदिति निषेधरूपस्तदेवं विधिनिषेधयोः असम्भाव्यमानत्वात् अयमुभयविषयः सम्भवः॥ ८९॥

अनुभवविषयो यथा,

तस्याः पातुं सुरगज इव व्योम्नि पूर्वार्द्धलम्बी
त्वच्छेदच्छस्फटिकविशदं तर्कयेस्तिर्य्यगम्भः।

---

अस्मिन् वनेचर इति। परविवराभियोगे स्वविवररक्षारूपबहुतरकारणालोकान्नाय वनेचर इति निषेध एव सम्भाव्यते॥ ८८॥

कालक्षेप तवोत्पश्यामीति उत्पश्यामि सम्भावयामि अकालक्षेपगत कालक्षेपभवन विधिः। कथमिवेति काकूपस्थितौ गमनाभावो निषेधः। न च वाच्यं द्वौ अत्र सम्भवौ तथाच नैकोऽपि उभयविषय इति। यतो यैव कालक्षेपसाधनी सैव शुक्लापाङ्गैरित्यादिकारणसहकृता निषेधमपि विषयीकरोति अतः सम्भवभेदेन किञ्चित् प्रमाणमिति॥ ८९॥

अत्र यदि त्वमेव कुर्य्या इति। न तावदनाभावः प्रतीयते इति न निषेध

संसर्पन्त्याः सपदि भवतः स्रोतसि च्छायया सा
स्यादस्थानोपगतयमुनासङ्गमेनाभिरामा ॥

अत्र यदि त्वमेवं कुर्य्यास्तदेवं स्यादिति विधिनिषेधयोः अनवगतेरयम् अनुभवविषयः सम्भवः ॥ ९० ॥

एतेन विधिनिषेधयोर्विकल्पविषयोऽपि व्याख्यातः। यथा,

यदि भवति मुखानां वाक्पटूनां सहस्रं
निरुपममवधानं जीवितं चातिदीर्घम्।
कमलमुखि! तथापि क्ष्मापतेस्तस्य कर्त्तुं
सकलगुणविचारः शक्यते वा नवेति ॥

तदेतत् निगदेनैव व्याख्यातम् ॥ ९१ ॥

द्रोणस्य सम्भवः खार्य्यां शते पञ्चाशतो यथा।
तथान्ये सम्भव प्राहुः सोऽनुमानान्न भिद्यते ॥९२॥९३॥

भिद्यते तु, यदि अनिश्चयः स्यात् यथा,

छन्नापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।

---

सम्भव। विधिसम्भवोऽपि नास्ति। यो हि व्यवस्थितकारणदर्शनेन व्यवस्थितस्यैव भवनस्य सम्भव. स विधिसम्भवशब्देन अभिधीयते न च इह तथा। तदिदमुक्तमनवगतेरिति ॥ ९० ॥

तदेतन्निगदेनेति। परस्परव्यभिचारिणोः एकत्र सम्भाव्यमानत्वादिति व्यक्तौ विकल्प इत्यर्थः ॥ ९१ ॥

पूर्वेषा सम्भवलक्षणमुपन्यस्य दूषयति। द्रोणस्येति। समुदायज्ञानादेकदेशज्ञान सम्भव इति प्राच्यानामभिप्रायः। तथाच समुदायस्य समुदायिव्याप्तत्वादिय खारी द्रोणवती खारीत्वादिति सुलभमनुमान एवास्यान्तभाव इत्यर्थः ॥९२॥

कथ तर्हि तत्रापि सम्भवो भिद्यते सामग्रीकार्य्यव्याप्तेति तत्रापि अनुमानमेव भविष्यतीत्यत आह। भिद्यत इति। न हि सामग्री दृष्टा यतः कार्य्यमनुमीयते किन्तु प्रभूतकारणदर्शनेन कार्य्यस्य ज्ञानमन्यदेवोत्पद्यत इति वक्तव्य तथाच अस्माक दर्शने युक्त. पृथग्भावः ॥ ९३ ॥

त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाकुलकुवलयश्रीतुलामेष्यतीति ॥

अत्र यथा खार्य्यां द्रोणः शते पञ्चाशदिति नियमः। नैवम् विप्रलम्भे अलकानामकल्पनमनञ्जनमक्ष्णोर्मधुनो वा प्रत्यादेशः, सुहृदुदन्तलाभारम्भे वा नयनस्पन्दनानि सम्भाव्यन्ते च प्रभूतकारणालोकादित्येषोऽपि विधिरूप एव सम्भवः ॥ ९४ ॥

अन्योन्यमुपकारो यस्तदन्योन्यं त्रिधा च तत्।
वाच्यं प्रतीयमानञ्च तृतीयमुभयात्मकम् ॥ ९५ ॥
अन्योन्यचूलिकान्योन्यभ्रान्तिरन्योन्यमेकता।
अन्योन्यालङ्कृतिरन्तस्त्रयमेतदिहेष्यते ॥ ९६ ॥

---

यस्तु उदाहरणविशेष न प्रतिसन्धत्ते त बोधयितुमुदाहरणान्तरमाह। रूक्षापाङ्गेत्यादि। एव विश्लेषदुःखेन कर्षिता यथाऽचेतनानामपि अलकाना करुणोत्पन्नैव लक्ष्यते। तस्मादिय मा जलधर द्राक्षीदिति निसर्गचपलस्य अपाङ्गस्य प्रसरमवरुन्धन्ति। स्नेहपदेन नयनाञ्जनयो अनुपधिरनुबन्धो व्यज्यते। तेन मिथो मैत्रीयोग्यत्वम्। तेन तन्नयनादन्यत्र न अञ्जन कान्तिमाप्नोतीति कोऽपि लावण्यप्रकर्षस्तथाभूतस्यापि अञ्जनस्य त्यागे यदेकता न तया न आत्मानमपि प्रतिसन्धातु समर्थेति व्यनक्ति। एव पदान्तरेषु अपि स्वरसोऽनुसन्धेय विप्रलम्भरूपकारणालोकादलकाकल्पनादिक प्रियतमदूतप्रत्यासत्तिलक्षणकारणालोकाच्च उपरिनयनस्पन्दन सम्भाव्यत इति सम्भवद्वयमवेति व्याख्यानेन स्फुटयति। अत्र यथा खार्य्यामिति ॥ ९४ ॥

परस्परोपकारकयोः एकस्य विशेष दृष्ट्वाऽपरस्य विशेषो ज्ञायत इति सम्भवसाम्यात् तदनन्तरमन्योन्यलक्षणमाह। अन्योन्यमिति। विशेषार्पणमुपकारो न च द्रय परिहृत्य स्थितस्यानपनयनात् दानप्रतिदानाभावाच्च। विशेषस्तु नानारूप सहाकार्यीभूतरसानुगामितया तत्र तत्रोन्नीयते। विभाग दर्शयति। त्रिधेति। अभिधीयमान विशेषत शब्देन उपात्त सामान्यत शब्देन विषयीकृत विशेषतस्तु प्रतीयमानम् एवेति उभयात्मकम्। द्वाभ्याम् अन्यतोऽप्रतीयमानम्। अन्योन्यचूलिकादिलक्षणानि ग्रन्थकार एव स्फुटीकरिष्यति ॥ ९५ ॥ ९६ ॥

तेषु अभिधीयमानम् अन्योन्यमिह यथा,

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः ॥

अत्र अन्योन्यशोभाजननेन इत्यादिना उपकार्य्योपकारकभावस्य द्वयोरपि अभिहितत्वादभिधीयमानमिदम् अन्योन्यम् ॥ ९७ ॥

प्रतीयमानं यथा,

उद्धच्छो पिअइ जलं जह जह विरलङ्गुली चिरं पहिओ ।
पाआपालिआवि तह तह धारं तणुअं पि तणुएइ ॥ (त)

अत्र पथिकप्रपापालिकयोर्मिथोऽनुरागे यत् एकस्य विरलाङ्गुलिना करेण पानीयपानमन्यस्याः सुतरां वारिधारातनूकरणं तेन परस्परम् उपकार्य्योपकारकभावात् प्रतीयमानमिदम् अन्योन्यम् ॥ ९८ ॥

प्रतीयमानाभिधीयमानं यथा,

गोलाविसमोआरच्छलेण अप्पा उरम्मि से मुक्को ।
अणुअम्पाणिद्दोसं तेणवि सा गाढ़मुपऊढा ॥ ( थ )

---

( त ) ऊर्द्ध्वाच्च पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः ।
प्रपापालिकाऽपि तथा तथा धारां तनुमपि तनूकरोति ॥

( थ ) गोदाविषमावतारच्छलेन आत्मा उरसि तया मुक्तः ।
अनुकम्पानिर्दोषं तेनापि सा गाढमुपगूढा ॥

---

कण्ठस्येति । बन्धुरो नम्रः । निस्तलो वर्त्तुलः ॥ ९७ ॥

अत्र पथिकेति । मिथोऽनुराग इत्यनेन परस्परानुरागसंवर्द्धनमेव अत्र विशेषार्पणमिति मतम् । तथाहि करस्य विरलाङ्गुलिकरणे कथमहमेतां चिराय पश्यामीति प्रपापालिकाभिप्राय एव वर्द्धितो भवति । एवमपि वारिधारातनूकरणे बोद्धव्यम् । न च अयम् एवंविध अर्थः केनापि शब्देन अभिहित इति भवति प्रतीयमानता ॥ ९८ ॥

अत्र गोदावरीविषमावतारव्याजेन तया तस्य उरसि आत्मा क्षिप्तः तेनापि अनुकम्पानिर्दोषं सा गाढम् उपगूढेति अभिधीयमानः परस्परानुरागात् उपकार्य्योपकारकभावः प्रतीयते इति उभयात्मकमिदम् अन्योन्यम् ॥ ९९ ॥

अन्योन्यचूडिका यथा,

शशिना च निशा निशया च शशी
शशिना निशया च यथा गगनम्।
भवता च सभा सभया च भवान्
सभया भवता च तथा भुवनम् ॥

अत्र निशाशशिनो सभाभवतोश्च परस्परमुपकार्य्योपकारकभावे वर्त्तमानयोः यदिदं गगन जगतीं च प्रति द्वयोः उपकारकत्वं चूडिकेव उपर्य्युपरि लभ्यते सेयमन्योन्यचूडिका ॥ १०० ॥

अन्योन्यभ्रान्तिर्यथा,

जम्बूना कुसुमोत्करे नवमधुन्यारब्धपानोत्सवाः
कीराः पक्वफलाशया मधुकरीश्चुम्बन्ति मुञ्चन्ति च।

---

वक्तृप्रतिपाद्यादिविशेषपर्य्यालोचनेन एव ध्वननमुन्मिषति। अत्र गोदावरीति। पूर्ववत्प्रतीयमानोऽपि परस्परमुपकारस्थलेन अनुकम्पानिर्दोषशब्दाभ्याम् अभिधया स्पृश्यत इत्युभयरूपम्। न च शब्दोपात्ते किं ध्वननेन इति वाच्यम्। भिन्नविषयत्वात् ॥ ९९ ॥

अत्र निशाशशिनोरिति। चूडिका शिखा। सा यथा शरीरतदवयवेभ्यो भिन्नैव उपलक्ष्यते तथात्रापि निशाशशिनो. सभाभवतो. परस्परमुपकारकत्वम् अभिसन्धाय द्वयोर्द्वयोः गगनजगतीप्रत्युपकारकत्वम् अन्यदेवाभिधीयते। न च एतावतैव विशेषेण पृथग्भावः। अन्योन्यालङ्कारकवलीकृतस्यैव तस्य सम्भवात् ॥ १०० ॥

अत्र जम्बूकुसुमेति। न हि तैमिरिकद्विकेशप्रत्ययवद्भ्रान्तेः अलङ्कारता अपि तु

एतेषामपि नीलकिंशुकदलैरेभिः समानत्विषां
पुष्पभ्रान्तिभिरापतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥

अत्र जम्बूकुञ्जस्थितमधुकरीषु शुकशकुन्तानां या पक्वजम्बूफलभ्रान्तिर्या च मधुकरीणां शुकचञ्चूषु किंशुककुसुमभ्रान्तिः सा इयमन्योन्यभ्रान्तिरन्योन्यस्मात् अपृथगेव ॥१०१॥

अन्योन्यात्मकता यथा,

प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांशुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी तदेकवर्णाविव तौ बभूवतुः ॥

अत्र श्यामपाण्डुतयोः परस्परव्यतिरेकेण एकवर्णकरणात् अन्योन्यैकता नाम भ्रान्तिभेदोऽन्योन्यात् पृथगेव ॥ १०२ ॥

व्यत्ययो वस्तुनो यस्तु यो वा विनिमयो मिथः ।
परिवृत्तिरिहोक्ता सा काव्यालङ्कारलक्षणे ॥ १०३ ॥
सा त्रिधा व्यत्ययवती तथा विनिमयात्मिका ।
तृतीया चोभयवती निर्दिष्टा काव्यसूरिभिः ॥ १०४ ॥

त्रिधापि चासौ मुख्यामुख्यभेदाद् द्विधाभूय षोढा सम्पद्यते ।
तासु व्यत्ययवती मुख्या यथा,

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।

---

उद्भूतसादृश्यमूलाया एव तथात्व चमत्कारिवस्त्वन्तरोपमापर्यवसायित्वमिति भ्रान्तिससर्गं एव विशेषार्पण उपकार । अन्योन्यवचनेन परस्परगामिता तस्य तेनैव दर्शितेति अन्योन्यलक्षणाक्षेपात् काथ पृथग्भवतीति एतेन अन्योन्यैकता व्याख्याता ॥ १०१ ॥ १०२ ॥

परस्परनिरूप्यतासाम्यात् क्रमप्राप्तां परिवृत्तिं निरूपयति । व्यत्यय इति । वस्तुस्थितिविपर्यासवचनं परिवृत्तिरिति स्फुटमेव लक्षणम् ॥ १०३ ॥

सा त्रिधा । एकस्थानस्थितस्य वस्तुन. स्थानान्तरप्राप्तिवचनेन दानप्रतिदानवचनेन उभयवचनेन वा । तदाह । सा त्रिधेति ॥ १०४ ॥

उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिललितानां हा विचित्रो विपाकः ॥

अत्र यत् कुमुदवनादीनाम् अपश्रीकत्वादिकं यच्च अम्भोजखण्डादीनां श्रीमत्त्वादिकं मुख्यमेव प्रातरुपलभ्यते सेयं व्यत्ययवती मुख्या नाम परिवृत्तिः ॥ १०५ ॥

व्यत्ययती अमुख्या यथा,

जो तीअ अहरराउ रत्तिं उव्वासिओ पिअअमेण ।
सोच्चिअ दीसइ गोसे सवत्तिणअणेसु संकन्तो ॥ (द)

अत्र प्रियतमेन रात्रौ उद्वासितस्य अधररागस्य येयं सपत्नीलोचनेषु संक्रान्तिः प्रातरमुख्या तेन इयममुख्या व्यत्ययवती परिवृत्तिः ॥ १०६ ॥

विनिमयवती मुख्या यथा,

प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीडन्तो गजपतयः पयांसि कृत्वा ।

---

(द) यस्तस्याः अधररागं रात्रौ उद्वासित प्रियतमेन ।
स एव दृश्यते प्रभाते सपत्नीनयनेषु सङ्क्रान्तः ॥

---

सर्वत्र मुख्यवृत्त्या गौणवृत्तिव्यपाश्रयेण वा तथा भावोक्तिरिति षट्प्रकारत्वं दर्शयति। त्रिधापि च असाविति। कुमुदवनमिति। कुमुदवनानुकूलत्वाद् हिमरश्मेः श्रीमत्त्व प्रीतिरुदयस्य अपसृतानि प्राप्तानि पुनरम्भोजखण्डचक्रवाकौ हिमांशूनामिति व्यक्तो व्यत्ययः। मुख्यत्वं ग्रन्थ एव व्यक्तम् ॥ १०५ ॥

अत्र प्रियतमेनेति। ताम्बूलादिहेतुकोऽन्य एव अधररागोऽन्यश्च मत्सरहेतुकः कषायतालक्षणो नयनगामीति तयोः अभेदाध्यवसायो यत्तत्पदाभ्यां प्रतीत इति गौणीवृत्तिः। प्रकाशते च शब्दवृत्त्या अधरस्थानस्थितस्य नयनस्थानप्राप्तिरिति तावतैव अलङ्कारनिर्वाहः ॥ १०६ ॥

किञ्जल्कव्यवहिततास्रदानलेखैः
उत्तेरुः सरसिजगन्धिभिः कपोलैः ॥

अत्र करिकपोलमदामोदस्य अम्भोजरजःपरिमलस्य च सरित्सलिलद्विपकपोलपाल्योर्मुख्यत्वेनैव परस्परोपकारकरणादियं विनिमयवती मुख्या नाम परिवृत्तिः ॥ १०७ ॥

विनिमयवती अमुख्या यथा,

तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिह शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥

अत्र जर्जरकलेवरं दत्त्वा शशिकिरणशुभ्रं यशः क्रीतमित्यमुख्ययैव वृत्त्या विनिमयोक्तेः अमुख्येयं विनिमयवती परिवृत्तिः ॥ १०८ ॥

उभयवती मुख्या यथा,

लोचनाधरकृताहृतरागा वासिताननविशेषितगन्धा ।
वारुणी परगुणात्मगुणानां व्यत्ययं विनिमयञ्च वितेने ॥

अत्र वारुण्या यदधराद्रागोऽपहृत्य चक्षुषोर्निक्षिप्तः तेन इयं व्यत्ययवती यच्च मुखामोदवासितया स्वामोदेन मुखामोदो विशेषितस्तेन विनिमयवती तदियमुभयथापि मुख्यवृत्त्यैव उक्तेति मुख्येयम् उभयवती परिवृत्तिः ॥ १०९ ॥

---

अत्र करिकपोलेति । गजेन्द्राणां मदजलचन्द्रकयोः स्वाश्रितयोः नदीषु सङ्क्रामणं नदीस्थितयोश्च किञ्जल्काम्भोजपरिमलयोर्ग्रहणं तेन दानप्रतिदानवत्तया विनिमयो भवति ॥ १०७ ॥

अत्र जर्जरेति । मूल्यार्पणक्रयणयोः अत्र भाषाद्यक्त एव उपचारः शब्दवृत्तिस्तु पूर्ववदेव कुण्ठेवेति भवति विनिमयः १०८ ॥

लोचनाधरेति । लोचनाधरयोः यथासंख्यं कृत आहृतो रागो यया सा तेन लोचने कृतोऽधरादपनीत इति व्यत्ययः । वासिते आनने विशेषितो गन्धो यस्याः सा तथा । तेन तया मुखं वासितं मुखेन च सेति भवति विनिमयः । पर-

उभयवती अमुख्या यथा,

किं चित्रं यदि देवेन भूभृतः करदीकृताः।
देवोऽपि दापितः किं तैर्न पुनः पृष्ठतः करम्॥

अत्र भूभृताम् अकरदानां यत् करप्रदानं जिगीषोश्च यत् पृष्ठे हस्तनिक्षेपः स एव द्रव्यगुणादीनां स्थानादिपरिवृत्तौ व्यत्ययः। यच्च देवेन भूभृतः करदीकृताः देवोऽपि तैः पृष्ठतः करं दापित इति सोऽयं दानप्रतिपादनलक्षणो विनिमयः। एतदुभयमपि इह श्लिष्टपदाभिधेयत्वात् अमुख्यवृत्त्यैव उच्यमानम् उपलभ्यते इति उभयवती इयममुख्या परिवृत्तिः॥ ११०॥

दृष्टान्तः प्रोक्तसिद्धेर्य यः सिद्धेऽर्थे तन्निदर्शनम्।
पूर्वोत्तरसमत्वे तदृजु वक्रञ्च कथ्यते॥ १११॥

तेषु पूर्वमृजु यथा,

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम्।
विभावयति भूतीनां फलं सुहृदनुग्रहः॥

---

गुणात्मगुणानामिति। परगुणानामिति परगुणानां व्यत्यय आत्मगुणानां विनिमय इति सम्बन्धः। कर्त्तृत्वमुत्प्रेक्षितं तदेतत् दर्शयति। अत्रेति॥१०९॥११०॥

एकत्र प्रतीतस्य अन्यत्र प्रत्ययः परिवृत्तौ तथा दृष्टान्तेऽपीति तदनन्तरं दृष्टान्तं लक्षयति। दृष्टान्त इति। प्रोक्तस्य प्राकरणिकस्य सिद्धिर्निश्चयः। ननु अनुमानाङ्गमपि दृष्टान्ताभिधानं पृथगलङ्कारः स्यादित्यत आह। सिद्धेऽर्थे इति। सिद्ध एवार्थे कञ्चिद्विशेषमावेदयितुं दृष्टान्तोक्तिः निदर्शनम्। साध्ये तु अर्थे अनुमानमिति विभागः। पूर्वं दार्ष्टान्तिकोक्तिं समाप्य पश्चाद्दृष्टान्तोक्तिरिति द्वितीयः। एकयैव उक्त्या दृष्टान्तदार्ष्टान्तिकयोरुक्तिरिति तृतीयस्तदाह। पूर्वोत्तरसमत्व इति। यत्र शब्दत एव तुल्येतिवृत्तता दृष्टान्तदार्ष्टान्तिकयो अनुगम्यते तत् ऋजुनिदर्शनम्। यत्र तु पर्य्यवसितायामुक्तौ सहृदयपर्य्यालोचनया तत् वक्रम्। तदेतदाह। ऋजुवक्रं चेति। तेन निदर्शनस्य षड्भेदाः॥१११॥

अत्र ऋजूक्त्यैव पूर्वं दृष्टान्तः पश्चाद्दार्ष्टान्तिकं प्रदर्शितमिति इदम् ऋजुपूर्वञ्च निदर्शनं सूर्यदृष्टान्तेन विभूतीनां सुहृदनुग्रहः फलमिति विज्ञापयति ॥ ११२ ॥

तदेव वक्रं यथा,

पण्णउडीअ वि जलिऊण हुअवहो जलइ जण्णवाडम्मि।
णहु ते परिहरिअव्वा विसमदसासंठिआ पुरिसा ॥ (ध)

अत्रापि पूर्वं दृष्टान्तः पश्चात् दार्ष्टान्तिकं किन्तु यथा पूर्वञ्च उदीयमानः सविता सुहृत्पद्मेषु श्रियम् अर्पयतीति तुल्येतिवृत्तता ऋजूक्त्या शब्देन एव अभिधीयते। नैवम् अत्र। किं तर्हि ज्वलनेतिवृत्तेन तुल्यं तत्तु सत्पुरुषाणाम् इतिवृत्तमशाब्दम् उक्तिचातुर्यात् प्रतीयते तत्। इदं पूर्वञ्च वक्रञ्च निदर्शनम् ॥ ११३ ॥

---

(ध) पर्णकुटीमपि ज्वालयित्वा हुतवहो ज्वलति यज्ञवाटेऽपि।
न हि ते परिहर्त्तव्या विषमदशासंस्थिताः पुरुषाः।

---

सूर्यदृष्टान्तेनेति। ऋद्धिभि सुहृदनुगृह्यत इति सिद्धोऽर्थः किन्तु तदेतदेव तासां फलमिति विशेषमभिधातु सूर्यदृष्टान्तोपन्यासः। अत्र सम्बद्धता फल सुहृत्त्वम् अनुग्रहत्व चेति शब्दत एव सूर्यादिषु दृष्टान्तदार्ष्टान्तिकाभिमतेषु प्रतीयत इति ऋजुत्वमित्यर्थ ॥ ११२ ॥

पण्णउडीति। पण्णपद म्लेच्छदेशीय पर्णे। अत्रापीति। दृष्टान्तेऽपि पर्णकुटीज्वलनादिक विशेषणम् उपात्त न च तद्दार्ष्टान्तिके सम्भवति शब्देन वा प्रत्याय्यन्ते किन्तु बिम्बप्रतिबिम्बन्यायेन अत्र भवति। तथाहि यथा पर्णकुट्या हुतवहस्य ज्वलन यज्ञवाटे च तथा अव्यवस्थितचित्ततया ग्रामीणोऽविदग्धयुवतिप्रसक्तो भूत्वा अन्यत्र नागरिकासु विदग्धासु रज्यते सोऽपि न त्याज्य इत्युक्तिचातुर्यात्तुल्येतिवृत्तता गम्यतेऽतो वक्रत्वमित्याह। किन्तु यथेति ॥ ११३ ॥

उत्तरमृजु यथा,

हिअए तिरच्छी पइ समुहे पच्छा गहिअकडक्खस्स।
पहिअ एक्कज्जे गोरडी णं चउहट्ट व्व च्छ ॥ (न)

अत्र ऋजूक्त्या शब्दत एव अभिधीयमानसाधर्म्यं दार्ष्टान्तिकमभिधाय उत्तरकाल दृष्टान्तोऽभिहितः तदिदम् उत्तरमृजुनिदर्शनम् ॥ ११४ ॥

तदेव वक्र यथा,

उपरि घन घनपटलं दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥

अत्रापि दार्ष्टान्तिकमभिधाय उत्तरकालमेव दृष्टान्तो निहितस्तदिदमुत्तरमृजु निदर्शनम् किन्तु यथा पूर्वस्मिन् हृदये तिर्य्यगित्यादिभिः शब्द एव ऋजूक्त्या साधर्म्याभिधानं नैवमत्र तथा अपि तु किमेतत् आपतितमिति उक्तिचातुर्य्येण विपर्य्ययेण च लिङ्गसङ्ख्या यथासङ्ख्याना तदेतत् उत्तरं वक्रञ्च निदर्शनम् ॥ ११५ ॥

---

(न) हृदये तिरश्चीना प्राप्ता सम्मुखे पश्चादगृहीतकटाक्षस्य।
पथिकस्य एकैव गौरता ननु चतुष्पथे व्रजन्ती ॥

---

हिअएति। पथिकस्य अभिलाषितया योषित्सा एकैव। हृदये स्मरणारूढा सती लग्ना अतएव तिरच्छी तिर्य्यक्शल्यायमाना पथिकसम्मुखाभिमुखस्य तस्य चलितत्वात् पश्चाच्च गृहीतकटाक्षा पश्चाद्भूतेन गृहीतश्चमत्कृत कटाक्षो यस्या एक्कज्जे एकैव निरवधारणे। णं ननु चतुष्पथेषु मार्गेषु कश्चित् सम्मुखता कश्चित्तिरश्चीनता कश्चित् पश्चाद्भाव धत्ते। गौरी तु पथिकस्य एकैव तथेति। अत्र ऋजूक्त्या शब्दत एवेति। तिर्य्यक्त्वादीनाम् उभयगामिना शब्देन उपादानात् प्रतीतिमात्रेण च न अलङ्कारनिर्वाह' अपि तु तदेतदापतितमित्युक्तिचातुर्य्येणेति। ननु च उपरीत्यनेन व्यवधानमुपात्त दृष्टान्तेऽपि शब्द एव प्रतिफलति तत्कथ वक्रत्वमित्यत आह। विपर्य्ययेणेति। घनपटल नपुंसक फणी पुमान् दयिता च एकवचनवती ओषधयो बहुवचनालिङ्गिता. घनपटल

समस्तृजु यथा,

> याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम् ।
> सद्यो राजविरुद्धानां दर्शयन्ती दुरन्तताम् ।

अत्र राजविरुद्धानामिति श्लिष्टपदेन दर्शयन्तीति वर्त्तमानकाललक्षणात् सद्य इति तद्धितेन समकालमेव दृष्टान्तदार्ष्टान्तिकयोः शब्दत ऋजुत्वेव उक्तत्वादिदमृजुसमस्तं निदर्शनम् ॥ ११६ ॥

तदेव वक्रं यथा,

> ण उण वरकोअण्डदण्डए पुत्ति माणुसेवि एवमेअ ।
> गुणवज्जिए ण जाअइ वंसुप्पणेवि टङ्कारो ॥ (प)

अत्र न केवलं कोदण्डदण्डके मानुषेऽपि एवमेव इति इतरयोगवदङ्गतया युगपदभिधानं गुणवर्जितवंशोत्पन्नेऽपि टङ्कारो न जायत इति श्लिष्टपदत्वेऽपि व्यतिरेकमुखेन गुण-

---

(प) न पुनर्वरकोदण्डदण्डके पुत्रि मानुषेऽपि एवमेव ।
गुणवर्जिते न जायते वंशोत्पन्नेऽपि टङ्कारः ॥

---

पूर्वं दार्ष्टान्तिकमुपक्रम्य दृष्टान्तोक्तौ न पूर्वं फणी निर्दिष्टः ततो लिङ्गसंख्यानां विपर्य्ययो भवति तदयमर्थेन शब्दत एव उपरिपर्य्यवस्थानं दूरत्वं च दृष्टान्तयोः प्रतीयते शिरसि हिमवतीति एताभ्याम् अन्यथाकारं बोधितत्वात् । फलतस्तु स एवार्थ इति वक्रतैवेति ॥ ११४ ॥ ११५ ॥

यातीति । राजा चन्द्रो नृपतिश्च । तदनयोः श्लिष्टोक्तिविषयतया न पूर्वापरभावो विभाव्यते । चन्द्रांशुपराभूतध्वान्तराजीनृपतिविरुद्धदुरन्तयोरपि दर्शयन्तीति शत्रा सद्य इति तद्धितेन च समत्वम् । किन्तु ध्वान्तराजीपराभवं यातीति दृष्टान्तोक्तौ सत्यां मध्ये राजविरुद्धानामिति दार्ष्टान्तिकमुक्त्वा पुनरपि दृष्टान्तविशेषणं दर्शयन्तीति उक्तम् । अतएव उक्तिकवलीकृतत्वात् दृष्टान्तदार्ष्टान्तिकयोः समत्वमिति आशयवान् व्याचष्टे । अत्र राजविरुद्धानामिति ॥ ११६ ॥

ण उण वरेति । गुणो धैर्य्यादिस्तन्त्री च वंशः कुलं वेणुश्च । टङ्कारोऽव्यक्तानु-

वृत्त्या च अभिधानात् धनुषि इव मानुषेऽपि गुणवति एव महान् शब्दो भवतीति वक्रोक्त्या साधर्म्यावगतिः। तदिदम् अशाब्दत्वादिभिः पूर्वाद् भिद्यमानं समं वक्रञ्च निदर्शनम्॥ ११७॥

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः।
भेदाभिधानं भेदश्च व्यतिरेकश्च कथ्यते॥ ११८॥
स्वजातिव्यक्त्युपाधिभ्यामेकोभयभिदा च सः।
सादृश्याद् वैसादृश्याच्च भिन्नः षोढ़ाभिजायते॥११९॥

---

करण ख्यातिश्च। इतरेतरयोगवदिति। यथा हि "त्वन्मुख' पुण्डरीक च फुल्ले" इत्यत्र फुल्ल च इति इतरेतरयोगेन एकशेषे एकयोक्त्या फुल्लेति द्वाभ्या सम्बध्यते तथा विनापि एकशेष गुणवज्जिए वसुप्पसे टङ्कार इति युगपदन्वीयन्ते। ननु यथा राजविरुद्धानामित्यत्र श्लेषेण ऋजुत्व तथात्रापि भविष्यतीत्यत आह। श्लिष्टपदत्वेऽपीति। धनुषीव मानुषेऽपि महान् शब्दो भवतीति विवक्षितम्। न च व्यतिरेकमुखेन उपनयेऽयमर्थ. शब्दादवगम्यते, प्रतीयते चार्थ इति युक्त वक्रत्वम्। ननु व्यतिरेकेण एव कथ न तु तुल्यवृत्तिता सम्मतेति अत आह। गुणवृत्त्या चेति। सत्यमेतत् तथापि द्वयोर्वर्णनीययोर्गुणादिकयो अभेदाध्यवसायो वक्तव्य.। तथा गौणवृत्तिव्यपाश्रयेणैव वक्रत्वम्। तदिदमुक्त व्यतिरेकमुखेन गुणवृत्त्या चेति॥ ११७॥

व्यतिरेक विना दृष्टान्तदार्ष्टान्तिकभावाभावाद् व्यतिरेकाख्या तल्लक्षणमाह। शब्दोपात्त इति। भेदाभिधान वैधर्म्यकथनम्। एवञ्चेत् मेरुसर्षपयोरपि याभिधानमलङ्कार स्यादत उक्त सादृश्ये वस्तुनोरिति। उपमानोपमेययो' इत्यर्थ। सादृश्य द्विधा। शब्दोपात्त च अशब्दोपात्तमपि ध्वननानुमानादिभि अवगम्यते इति न विरोधस्तदिदमुक्त प्रतीते चेति। तदयमर्थ'। उक्तवत्तत्कारि-सादृश्ययो वैरस्योक्ति व्यतिरेक स्वरूपाख्यस्तु पृथग्भेदो नास्त्येवेति उक्तम्॥११८॥

विभाग दर्शयति। स्वजातीयेति। येन रूपेण वैयतिरेकमुपादीयते तद्रूपवन्त व्यतिरेकप्रतियोगिन परिकल्प्य ततो व्यतिरेकोऽपीति स्वजातिव्यतिरेक, प्रथम प्रकार'। द्वितीयस्तु सैव व्यक्तिविधर्मेति एतत् प्रकारद्वय [illegible] मभिधीयमानसादृश्ययोरिति मूलभेदद्वय तथैव अपरमेकानेक[illegible] तत्रैव अन्यत्सादृश्यवैसादृश्यरूप द्वयमिति क्रमेण षोढाभेदो [illegible] [illegible]

तत्र शब्दोपात्तसादृश्ये स्वजातिव्यतिरेको यथा,

अरत्नालोकसंहार्य्यमवार्य्यं सूर्य्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥

अत्र यौवनप्रभवस्य तमसस्तमोजात्या सह दृष्टिरोधकरमिति सादृश्यमुक्त्वा अरत्नालोकसंहार्य्यमवार्य्यं सूर्य्यरश्मिभिः इति व्यतिरेको विहितः। सोऽयं स्वजातिव्यतिरेकः॥ १२०॥

प्रतीयमानसादृश्ये स्वव्यक्तिव्यतिरेको यथा,

अस्रोसेहिं सुचरिअसअहिं अणुदिणं वड्ढिअ माणु।
अप्पण वि णहु मह्हु पि अह अप्पाणेण समाणु॥ (फ)

अत्र प्रतीयमानोपमानसादृश्योपचरितभेदात् आत्मव्यक्तेः अन्यैरन्यैश्च सुचरितशतैः स्वव्यक्तित एव भेदोऽभिहितः सोऽयं स्वव्यक्तिव्यतिरेकः॥ १२१॥

शब्दोपात्तसादृश्य एको व्यतिरेको यथा,

प्रेयानेव वृषस्तथापि सततं भूतिस्तवापि स्थिरा
दुर्गाया भवतापि भूधरभुवः सम्यग् गृहीतः करः।

---

(फ) अन्यै रन्यैः सुचरितशतैरनुदिन वर्द्धते मान'।
अस्यापि न खलु महानपि अथात्मना समान॥

---

च स्वजातिव्यक्तिव्यतिरेकयो प्रतीयमानाभिधीयमानसादृश्यगामिता न सम्भवति तथाग्रे वक्ष्यते॥ ११९॥

अत्र यौवनप्रभवस्येति। यौवनकृतम् अज्ञानलक्षणम् अन्यदेव तमोऽन्यच्च अन्धकाररूपं तयोः तद्भावापत्तिरियमेव कल्पना अस्माभिरुक्ता। अनेन तु प्रकारेण रसः पुष्यतीति अलङ्कारमध्ये गणनम्॥ १२०॥

अशोसेहि अन्योन्यैर्मानोऽहङ्कारः पूजा वा। यौ तु कल्पितभेदाधिकरणत्वेन उपात्तौ विरोधिधर्मवत्तया शब्दात् प्रतीयेते तयो' निर्यन्त्रणत्वादिकमिति भवति सादृश्य प्रतीयमानम्॥ १२१॥

प्रेयानेवेति। वृषो गौर्धर्मश्च। भूति सम्पद् भस्म च दुर्गा गौरी विषमा च भूधरभू. गिरिजा पर्वतभूमिश्च करो हस्तो राजदण्डश्च। वाहिनीशः समुद्रः सेना-

निर्व्याजं परमेश्वरत्वमियता नोयासि वक्तुं जनैः
हेलोल्लासितवाहिनीशमथने यन्नो विषादी भवान् ॥

अत्र प्रियवृषत्वादिभिः अभिहितसादृश्ययोः उपमानोपमेययोः उपमेयस्य एव यथोक्तसादृश्यविषये विषादित्वयुक्तमिति एकव्यतिरेकोऽयम् ॥ १२२ ॥

स एव प्रतीयमानसादृश्यो यथा,

सकलङ्केन जडेन च सास्य दोषाकरेण ते कीदृक् ।
अभुजङ्गः समनयनः कथमुपमेयो हरेणासि ॥

अत्र प्रतीयमानसादृश्यस्य पूर्वार्द्धे चन्द्रोपमानस्य सकलङ्कतादिः उत्तरार्द्धेन वर्णनीयोपमेयस्य अभुजङ्गत्वादिरेकस्य एव भेदकः स्वधर्मोऽभिहितः सोऽयमपि एकव्यतिरेक एव ॥१२३॥

शब्दोपात्तसादृश्ये उभयव्यतिरेको यथा,

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।
असावञ्जनसङ्काशस्त्वञ्च चामीकरद्युतिः ॥

अत्र द्वयोरपि अभिधीयमानसादृश्यमुपन्यस्य उभयोरपि पृथक् पृथग् भेदकः स्वधर्मोऽभिहितः सोऽयम् अभिधीयमानसादृश्ययोः उभयव्यतिरेकः ॥ १२४ ॥

स एव प्रतीयमानसादृश्ययोर्यथा,

त्वन्मुखं पुण्डरीकञ्च द्वयोरप्यनयोर्भिदा ।

---

पतिश्च । निषादी विषभक्षकोऽवसादवांश्च । यद्यपि अत्र अनुरूपं सादृश्यं नास्ति तथापि शब्दसादृश्येनापि उपमा प्रवर्त्तत एव । यथा सकलङ्कं पुरमेतज्जातं सम्प्रति सितांशुबिम्बमिवेति । अतएव उभयालङ्कारत्वम् उपमायाः ॥ १२२ ॥

सकलङ्केनेति । कलङ्कोऽपवादो लाञ्छनञ्च । जडो मूर्खः शीतलश्च । अभुजङ्गो न वेश्यापतिः अविद्यमानसर्पश्च । समनयनो युगनयनः सर्वान् समन्नयतीति च । आह्लादकत्वादिकं चन्द्रेण अनिरुद्धैश्वर्य्यादिकं परमेश्वरेण सादृश्यं प्रतीयते ॥ १२३ ॥

कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥

तदेतत् निगदेनैव व्याख्यातम् । सोऽयं प्रतीयमानसादृश्ययोः उभयव्यतिरेकः ॥ १२५ ॥

अभिधीयमानसादृश्ययोः सदृशव्यतिरेको यथा,

त्वन्मुखं पुण्डरीकञ्च फुल्ले सुरभिगन्धिनी ।
भ्रमद् भ्रमरमम्भोज लोलदृष्टिमुख तु ते ॥

अत्र मुखाम्भोजयोः फुल्ले सुरभिगन्धिनी इति पदाभ्याम् अभिधीयमानसादृश्ययोः सदृशमेव । भ्रमद्भ्रमरत्वं लोलदृष्टित्वञ्च भेदकमुपन्यस्तमिति सोऽय शब्दोपात्तसादृश्ययोः सदृशव्यतिरेकः ॥ ॥ १२६ ॥

स एव प्रतीयमानसादृश्ययोर्यथा,

चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।
नभो नक्षत्रमालीदमिदमुत्कुमुद पयः ॥

अत्र पूर्वार्द्धे चन्द्रहंसयोः प्रयीयमानसादृश्ययोः अम्बरोत्तसत्वतोयभूषणत्वे उत्तरार्द्धेन तु नभःपयसोः नक्षत्रमालित्वोत्कुमुदत्वे सदृशे एव भेदके सोऽय प्रतीयमानसादृश्ययोः सदृशव्यतिरेकः ॥ १२७ ॥

अभिहितसादृश्ययोः असदृशव्यतिरेको यथा,

शशाम वृष्टिर्मेघानामुत्सङ्गे तस्य भूभृतः ।
विरराम न रामस्य धारासन्ततिरश्रुणः ॥

अत्र भूभृदित्यनेन साक्षादुपात्तसादृश्ययोः रामसाल्यवतोर्योऽयमुत्सङ्गे समस्ताश्रुधारापातो यश्च मेघवृष्टेः अभावः तदिदम् उभयोः असदृशमेव भेदकं सोऽयम् अभिधीयमानसादृश्ययोः असदृशव्यतिरेकः ॥ १२८ ॥

---

अभिन्नेति । वेला मर्यादा तीरञ्च । गम्भीरोऽतलस्पर्शी अचलितचित्तवृत्तिश्च ॥ १२४—१२७ ॥

स एव प्रतीयमानसादृश्ययोर्यथा,

अभ्रूविलासमस्पृष्टमदरागं मृगीक्षणम्।
इदन्तु नयनद्वन्द्वं तव तद्गुणभूषितम्॥

अत्र कान्तामृगीक्षणयोः प्रतीयमानसादृश्ययोः भ्रूवि-लासमदरागौ तदभावौ च विसदृशौ भेदकाविति सोऽयं प्रतीयमानसादृश्ययोः असदृशव्यतिरेकः॥ १२९॥

सदृशासदृशव्यतिरेकाभ्यामिव तदुभयव्यतिरेको यथा,

निर्मलेन्दु नभो रेजे विकचाब्ज बभौ सरः।
परं पर्य्यश्रुवदनौ मम्लतुर्भ्रातरावुभौ॥

अत्र नभःसरसोः प्रतीयमानसादृश्ययोः निर्मलेन्दुत्वं विकचाब्जत्वं च प्रागवदेव सदृशे भेदके। ताभ्या च मुखचन्द्र-मुखकमलाभ्यां मनोहराह्लादकत्वाभ्यां च प्रतीयमानसादृश्ययोरेव रामलक्ष्मणयोर्येयं मुखपर्य्यश्रुता तनौ च म्लानिः निर्मिलेन्दुताविराजमानत्वयोः विकचाब्जत्वशोभमानत्वयोश्च सा विसदृशीति सोऽय सदृशासदृशभेदकत्वकृतभेद एव तत् उभयव्यतिरेकः॥ १३०॥

एतेनैकव्यतिरेकादिसम्भेदोऽपि व्याख्यातः। यथा,

मिथ्या देव भुजेन तेऽल्पविभवः कल्पद्रुमः स्पर्द्धते
न ह्येनं भुवनत्रयाभयमहासत्रो कृपाणोऽञ्चति।
तुल्यस्तत्र भवान् प्रयागविटपी यस्यैतदेकार्णवे
कायान्तर्विनिवेश्य विश्वमखिलं शाखासु शेते हरिः॥

---

भ्रभाम दृष्टिरिति भूभृतो राज्ञश्च॥ १२८—१२९॥

ताभ्या च मुख चन्द्रेणेति। मुखस्य चन्द्रकमलभावो नादिकविकल्पनासिद्ध इति तेनापि रूपेण प्रतीयमानसादृश्यत्वमुक्तम्॥ १३०॥

ननु मिथो व्यतिरेकिभेदगणनमनुपपन्न सदृशासदृशव्यतिरेकवदेकादिव्यतिरे-

अत्र वर्णनीयवाहुकल्पद्रुमयोः अभिमतफलदायित्वादिभिः प्रतीतसादृश्ययोः भुवनत्रयाभयप्रदायौ वर्णनीयवाहौ कृपाणो भेदक इति एकव्यतिरेकः। तथा वर्णनीयबाह्वोः प्रयागवटस्य च प्राग्वदेव प्रतीयमानसादृश्ययोः एकस्य भुवनत्रयाभयमहासत्त्वौ कृपाणः शाखासु शेते। अन्यस्य तु महाप्रलये स्वकायान्तर्निवेशिताखिलविश्वो वैकुण्ठः। ताविमौ तयोः सदृशाविव भेदकौ हरिकृपाणयोः वा श्यामतादिभिः प्रतीयमानसादृश्ययोरिमाविव धर्मौ भेदकौ सोऽयमेवंप्रकारो व्यतिरेकसङ्कर उन्नेयः। स्वजातिव्यतिरेके प्रतीयमानसादृश्यं स्वव्यक्तिव्यतिरेके च अभिधीयमानसादृश्यं यदि उदाहरणं दृश्यते सम्भवति वा तदा तदपि उदाहार्य्यम्॥ १३१॥

> कार्य्यारम्भे सहायाप्तिर्दैवादेवकृतेह या।
> आकस्मिकी बुद्धिपूर्वोभयी वा तत् समाहितम्॥१३२॥

तत्र आकस्मिकी दैवकृता यथा,

> मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।
> उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥

---

कस्यापि सम्भवादित्यत आह। एतेनेति,। प्राग्वदेवेति। अभिमतफलदायित्वादिभिः। एवम्प्रकार इति। न हि एकवाक्यस्थतामात्रेण तथा चमत्करोति यथाऽङ्गाङ्गिभावादिभि' परस्परग्रथनया इति। सैव प्रकारपदेन अभिहिता। यदि उदाहरण दृश्यते सम्भवति वा इति। न हि स्वजातिव्यतिरेके द्वयो. अभेदाध्यवसाय सादृश्यमन्तरेण चमत्कारम् अर्पयतीति कल्पितमेव वाच्यम्। न च कल्पनाशब्दमन्तरेण इति प्रतीयमानसादृश्यसम्भव' सादृश्यस्य भेदाधिष्ठानत्वात्। स्वव्यक्तिव्यतिरेकेऽपि असम्भवः तथाभूतमेव तु शब्देन उपादीयत इति स्यादत उक्त यदि दृश्यत इति॥ १३१॥

सहकारित्व व्यतिरेकनिरूप्यमतो व्यतिरेकानन्तर समाहितलक्षणमाह। कार्य्यारम्भ इति। सहाय. प्रकृतकार्य्यकारणस्य सहकारी तेन अलङ्कारता

अत्र मानिनिराकरणोपक्रमे कालोत्पन्नस्य आकस्मिकघनगर्जितस्य मानविध्वंसे सहकारित्वात् आकस्मिकीयं दैवकृता सहायसम्पत्तिः ॥ १३३ ॥

आकस्मिकी एव अदैवकृता यथा,

> अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् ।
> स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥

अत्र भीमानुशासनोपक्रमकाल एव व्यासागमनस्य तदुपकारित्वात् आकस्मिकी इयम् अदैवकृता सहायाप्तिः ॥ १३४ ॥

बुद्धिपूर्वा दैवकृता यथा,

> कल्पान्ते शमितत्रिविक्रममहाकङ्कालदण्डस्फुर-
> च्छेषस्यूतनृसिंहवक्त्रनखरप्रोतादिकोलामिषः ।
> विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ
> कर्षन् धीवरतां गतोऽस्य तु जगन्मोहं महाभैरवः ॥

अत्र प्रलयसमये महेश्वरेण समापयितुम् उपक्रान्तानां त्रिविक्रमादीनां योऽयं तद्भुवा वडिशादिना मत्स्यकूर्मयोः आकर्षणप्रकारः स भगवता भैरवेण बुद्धिपूर्वकम् उपकल्प्यमानो दैवात् तथाभूतैः एव तैः सम्पद्यते इति बुद्धिपूर्वेयं दैवकृता सहायाप्तिः ॥ १३५ ॥

बुद्धिपूर्वा अदैवकृता यथा,

> मूले पञ्च ततश्चतुष्टयमिति स्रक् सन्निवेशैः शिरः

---

आकस्मिकी अचिन्तितपूर्वा बुद्धिपूर्वाद्द विपरीता । आकस्मिक्यादीनां प्रत्येकं दैवादैवकृतसम्बन्धे षट्प्रकार समाहितमित्यर्थोक्तम् ॥ १३२ ॥ १३३ ॥

व्यासागमनस्येति । व्यासेन सम्पाद्यमानस्य तेन अदैवकृतेति ॥ १३४ ॥

दैवात् तथाभूतैरेवेति । नरसिंहनखादीनां वडिशाद्युचितमूर्त्तिशालिनां दैवमेव निमित्त वडिशादिचिन्तया च विषयीकृता इति बुद्धिपूर्वता ॥ १३५ ॥

पुष्पैरन्यतमावलोकनमितैरुच्छोणितैरर्चिते ।
हस्तस्पर्शवशेन मूर्ध्नि दशमं मूर्द्धानमारोपयन्
शम्भोरद्भुतसाहसैकरसिकः कैर्न श्रुतो रावणः ॥

अत्र योऽयं दशवदनेन स्वयं छिन्नैः शिरोभिर्भगवतः शम्भोः अभ्यर्चनाप्रकारः उपक्रान्तः तत्र मूले पञ्च ततः चतुष्टयमिति शिरोविरचनाप्रपञ्चो बुद्धिपूर्वको अदैवकृतः क्रियमाणोऽस्य कर्मणः समाप्तौ सहकारिकारणतामासादयतीति अयमदैवकृतो बुद्धिपूर्वकः समाहितभेदः ॥ १३६ ॥

आकस्मिकी बुद्धिपूर्वा दैवकृता यथा,

सा कौमुदी नयनयोर्भवतः सुजन्मा
तस्या भवानपि मनोरथबन्धबन्धुः ।
तत्सङ्गमं प्रति सखे । न हि संशयोऽस्ति
यस्मिन् विधिश्च मदनश्च कृताभियोगः ॥

अत्र योऽयं माधवस्य मालतीं प्रति समागमाभिलाषः तत्र इयं मालत्या आकस्मिकी बुद्धिपूर्वा च तथा प्रवृत्तिः सा उभयो अपि दैवकृता च सहायाप्तिः समाहितभेदः ॥ १३७ ॥

---

मूले पञ्चेति । अधोऽध. स्थूलपुष्पसन्निवेश उपर्य्युपरि तनुरिति दूर्वापूजाप्रकारः प्रसिद्ध । अन्यतमालोकननिमित्तैः आरोपितैः । अत्र लोकप्रसिद्धपूजाप्रकारः कार्य्यभूत उपर्य्युपरि तनुसन्निवेशनिष्पादन सहकारि । इद च रावणप्रयत्ननिष्पाद्यत्वात् अदैवकृत बुद्धिपूर्वं च भवतीति अन्यतमेन मूर्ध्ना अन्यतमस्य आरोपण न नवमच्छेदपर्य्यन्तम् आसीत् । पूजास्वरूपेण एव भगवान्तुष्यति न तथा विदितेन इत्यभिप्रायवती निस्तरङ्गा भक्तिस्तेन साहसस्य अद्भुतत्वम् ॥ १३६ ॥

अत्र योऽय माधवस्येति । विधिश्च मदनश्च कृताभियोग इत्यनेन मालत्याः पूर्वानुभावा. कथ्यन्ते ते च द्विधा भवन्तीति आकस्मिकी दैवपूर्वसहायसम्पत्तिः ॥ १३७ ॥

आकस्मिकी बुद्धिपूर्वा च अदैवकृता यथा,

> दृष्टिर्वन्दनमालिका स्तनयुग लावण्यपूर्णौ घटौ
> शुभ्राणां प्रकरः स्मितं सुमनसां वक्तप्रभा दर्पणः।
> रोमाञ्चोद्गम एव सर्षपकणः पाणी पुनः पल्लवौ
> स्वाङ्गैरेव गृह प्रियस्य विशतस्तन्व्या कृत मङ्गलम्॥

अत्र आगच्छतः प्रियस्य इयं वन्दनमालिकादिमङ्गल-क्रिया मनःपरितोषहेतुः तस्याः तन्वङ्ग्या इङ्गिताकारैरेव यन्निवर्त्तनं सोऽयमाकस्मिकः स्वबुद्धिपूर्वकश्च तत्सहकारि-कारणत्वात् अदैवकृतश्च समाहितभेदः॥ १३८॥

> भ्रान्तिर्विपर्य्ययज्ञान द्विधा सापि प्रयुज्यते।
> अतत्त्वे तत्त्वरूपा च तत्त्वे चातत्त्वरूपिणी॥ १३९॥
> अतत्त्वे तत्त्वरूपा या त्रिविधा सापि पठ्यते।
> अबाधिता बाधिता च तथा कारणबाधिता॥ १४०॥

---

अत्रागच्छत' प्रियस्येति। मङ्गलक्रियामात्र न चमत्कारास्पदमत उक्त मनःपरितोषहेतुरिति। स्मित बुद्धिपूर्वम्। रोमाञ्चो न बुद्धिपूर्वं। एव दृष्ट्यादौ यथायथ वेदितव्यमिति॥ १३८॥

बुद्धिपूर्वायां सहायायां क्वचित् भ्रान्तिरपि अस्ति तत. तदनन्तर ता लक्षयति। भ्रान्तिरिति। अतस्मिंस्तदिति निश्चयो भ्रान्ति.। विपर्य्ययो न च एव संशयादय इत्युक्तपूर्वम्। सा द्विधा। यस्य यत्र असद्भाव तस्य तत्र सद्भावारोप यस्य वा यत्र सद्भावस्तस्य तत्र असद्भावारोप सोऽयं भ्रान्त्याभावकृतो नियमो भ्रान्तेर्बाधनियमोऽपि क्वचित् वा आरोपन्यासो भवति क्वचित्त न भवति। उपन्यासो द्विरूपः। अभिधया वृत्त्यन्तरेण च। यत्र बाधोपन्यासे बाधितानुपन्यासे वा अबाधिता तस्मिन् एव वाक्ये अविज्ञातबाधेत्यर्थः। उपन्यासे-तरप्रकारेण ज्ञातबाधकाबाधिता। बाधकारणोक्तिः बाधपर्य्यवसानाभिप्रायत्वात् तदेतद्द दर्शयति। अबाधिता बाधिता चेति॥ १३९॥ १४०॥

तत्र अतत्त्वे तत्त्वरूपाऽबाधिता यथा,

मोहविरमे सरोसं थोरत्थणमण्डले सुरवहूणम् ।
जेण करिकुम्भसम्भावणाइ दिट्ठी परिट्ठविआ ॥ (ब)

अत्र सुरवधूस्तनमण्डले करिकुम्भत्वेन गृहीते तत्त्वरूपे यन्मिथ्यैव तत्त्वारोपणं न च अनन्तरं बाधकोपन्यासस्तत्स्वेनेयम् अबाधिता अतत्त्वे तत्त्वरूपा भ्रान्तिः ॥ १४१ ॥

अतत्त्वे तत्त्वरूपा बाधिता यथा,

हसिअं सहत्थतालं सुक्खवडं उपगएहिम् ।
पहिएहि पत्तप्फलसरिच्छे उड्डीणे पूसवन्दम्मि ॥ (भ)

अत्र पत्रफलितोऽय न्यग्रोध इति अतत्त्वरूपे तत्त्वबुद्धौ उत्पन्नाया य उत्तरकालम् अपत्रतानिष्फलताप्रत्ययः तेन इयम् अतत्त्वे तत्त्वरूपाख्या बाधिता भ्रान्तिः ॥ १४२ ॥

---

(ब) मोहविरमे सरोषं स्थूलस्तनमण्डले सुरवधूनाम् ।
येन करिकुम्भसम्भावनया दृष्टिः परिस्थापिता ॥

(भ) हसितं सहस्ततालं शुष्कवटमुपगतैः ।
पथिकैः पत्रफलसदृशे उड्डीने शुकवृन्दे ॥

---

मोहविरम इति । परिट्ठविआ व्यवस्थापिता । तत्रैव परिपूर्वस्य तिष्ठते प्रसिद्धत्वात् । सरोषमिति समवायिविशेषणं न च तदन्तरेण क्रियासद्भावः । तेन मोहेऽपि न प्रक्रान्तरसानुभावस्वरूपतासहासीदिति व्यज्यते । इत्थं च दृढानुबन्धोऽसौ रसो यद् बलवत्तरविरोधिसम्पर्केऽपि न कार्कश्यमगादिति स्थूलस्तनमण्डले सुरवधूपदे प्रकाश्यते सम्भावनया न तु पूर्वोत्पन्नज्ञानेन । करिकुम्भाना दृढतरवासनत्वात् । अबाधिता इत्यत्र यथा अर्थाभिमतस्तथा दर्शयति । बाधकोऽपन्यास्तमिति ॥ १४१ ॥

हसिअमिति । पूसः शुको वन्द वृन्दम् । शुकचञ्चुपुच्छाना पक्वन्यग्रोधफलनवपत्राग्रसादृश्यम् । यद्यपि न अत्र बाधोऽभिहितः तथापि उड्डीण इत्यनेन अर्थाभावविषया प्रतीतिः क्रियते । कथमन्यथा हसितहस्ततालरूपकार्यस्योपन्यासः स्यात् ॥ १४२ ॥

अतत्त्वे तत्त्वरूपा कारणबाधिता यथा,

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥

अत्र श्यामायाम् आत्मद्युतौ असितसिचयप्रान्तबुद्धिः अतत्त्वे तत्त्वरूपा प्रियाहसितेन च कारणेन यद् बाधिता सैषा अतत्त्वे तत्त्वरूपा कारणबाधिता भ्रान्तिः ॥ १४३ ॥

अतत्त्वरूपा तत्त्वे या सापि त्रैविध्यसिद्धये ।
हानोपादानयोर्हेतुरुपेक्षायाश्च जायते ॥ १४४ ॥

तत्र तत्त्वेऽतत्त्वरूपा हानहेतुर्यथा,

सो मुद्धमिओ मिअतिण्हिआहि तह दूणो हआसाहिम् ।
जह सब्भावमईण वि णईण परम्मुहो जाओ ॥ (म)

अत्र पारमार्थिकीषु अपि नदीषु मृगतृष्णाप्रतारितः सन् यत्र मृगः पयः पातु प्रतिपद्यते प्रत्युत त्यजति तेन इयं तत्त्वेऽपि अतत्त्वरूपा हानहेतुर्भ्रान्तिः ॥ १४५ ॥

---

(म) स मुग्धमृगो मृगतृष्णिकाभिः तथा दूनो हताशाभिः ।
यथा सद्भावमयीनामपि नदीनां पराङ्मुखो जातः ॥

---

अत्र श्यामायामिति । न खलु पूर्वोदाहरणशब्देन कथाचिदपि कृत्या धर्माभावो विषयीकृतः किन्तु प्रकारान्तरेण उन्नीयते । तथा हि नायकेनांशुकापहरणलीलायितेऽपि यदिदं राधायाः सिचयावरोधाङ्गचलनभ्रूक्षेपादिमुग्धाङ्गनोचितविभ्रमविरोधि हसितं तत्कारणं बाधस्येति ॥ १४३ ॥ १४४ ॥

हानं द्विविधं प्रवृत्त्यभावो विपरीतश्च प्रयत्नो द्विधापि चात्र अभिमतमिति व्याख्यानेन स्फुटयति । न प्रतिपद्यते प्रत्युत त्यजतीति ॥ १४५ ॥

तत्त्वे अतत्त्वरूपोपादानाहेतुर्यथा,

समर्थये यत् प्रथमं प्रियां प्रति क्षणेन तन्मे परिवर्त्ततेऽन्यथा।
अतो विनिद्रे सहसा विलोचने करोमि न स्पर्शविभावितप्रियः॥

अत्र अङ्गीकृतलतारूपोर्वशीपरिष्वङ्गसुखनिमीलिताक्षस्य पुरूरवसः शापान्ताविर्भूतसत्यरूपायामपि तस्यां येयं पूर्वानुभूतैवंविधानेकविप्रलम्भसम्भावनया नयनयोः अनुन्मीलनबुद्धिः सेयं तत्त्वेऽपि अतत्त्वरूपोपादानहेतुः भ्रान्तिः॥ १४६॥

तत्त्वेऽपि अतत्त्वरूपोपेक्षाहेतुर्यथा,

चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम्।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने॥

अत्र तत्त्वरूपेऽपि मार्जारे कृत्रिमोऽयमिति बुद्धौ जातायां तस्यां प्रयोजनत्वेन यदुपेक्षणं सेयं तत्त्वेऽपि अतत्त्वरूपोपेक्षाहेतुर्भ्रान्तिः॥ १४७॥

भ्रान्तिमान् भ्रान्तिमाला च भ्रान्तेरतिशयश्च यः।
भ्रान्त्यनध्यवसायश्च भ्रान्तिरेवेति मे मतम्॥

तत्र भ्रान्तिमान् यथा,

कपाले मार्जारो पय इति करान् लेढि शशिन-
स्तरुच्छिद्रे प्रोतान् बिसमिति करी सङ्कलयति।

---

समर्थयेदिति। विभावितामिय इति युक्तः पाठः। प्रियादिषु पुंवद्भावप्रतिषेधात्। न चात्र अभावारोपः स्फुटोऽवगम्यत इति प्रकरणमादाय व्याचष्टे। अत्र अङ्गीकृतेति। न च वाच्यं दोलायमानतया संशयरूपमिदं ज्ञानमिति। यतो नास्त्येव अत्र प्रियतमा तथापि तदारोपेण मनसापातिवाहनमुचितमिति जानतः पुरूरवसोऽनुबन्धप्रकर्षः पुष्यति न अन्यथेति सहृदयहृदयसाक्षिकमिदं तदेतत् मनाक् स्फुटयति। पूर्वानुभूता एवंविधेति॥ १४६॥

प्रयोजकत्वेन यदुपेक्षणमिति। या प्रवृत्तिं निवृत्तिं वा न प्रसूते सा उपेक्षाबुद्धिः एवेत्यर्थः॥ १४७॥

रतान्ते तल्पस्थान् हरति दयिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥

अत्र इन्दुमरीचिषु पयःप्रभृतिभ्रान्तिभूम्ना अयं भ्रान्तिमान् नाम भ्रान्तेरेव भेदः ॥ १४८ ॥

भ्रान्तिमाला यथा,

नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः।
लीयन्ते कवरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि। स्थानानि रक्षिष्यसि ॥

अत्र युवत्यवयवेषु नयनादिषु मधुव्रतानां येयं नीलोत्पलादिबुद्धिः सेयं मालाक्रमेण उपजायमाना भ्रान्तिमाला भ्रान्तेरेव भेदः ॥ १४९ ॥

भ्रान्त्यतिशयो द्विधा वितर्कहेतुः विपर्य्ययहेतुश्च। तयोः पूर्वमुपमाभ्रान्तिमाचक्षते द्वितीयन्तु भ्रान्त्यतिशयमेव। तत्र उपमाभ्रान्तिर्यथा,

हृतोष्ठरागैर्नयनोदविन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कितम्।
च्युतं रुषा भिन्नगतेरसंशय शुकोदरश्याममिदं स्तनांशुकम् ॥

अत्र शाद्वलेऽपि समुत्पन्नस्तनांशुकभ्रमस्य पुरूरवसो योऽयं सादृश्यातिशयितो वितर्कः सेयमुपमाभ्रान्तिः ॥ १५० ॥

---

भ्रान्तिमानिति। भूम्नि मतुप्। भूमार्थौ द्विविधौ बहूना भ्रान्तीनाम् एकविषयत्वे भिन्नविषयाणां वा समानकर्तृता। आद्यो भ्रान्तिमतो विषयो द्वितीयो भ्रान्तिमालायाः। न हि भ्रान्तिमति मालाक्रमनियमोऽस्ति। युगपदपि भिन्नकर्तृकाणां जायमानत्वात्। भ्रान्ते अतिशय शब्दोपनीतप्रकर्षा भ्रान्तिरिति स्वकार्य्यभूतं वितर्कमादाय प्रतीयमानो विपर्य्ययहेतुर्भ्रमान्तरानुबन्धी ॥ १४८॥१४९॥

तयोः पूर्वमिति। तत्त्वेन प्रतियतो मध्ये मनाक् व्यतिरेकमुल्लिखते तत् नूनम्

भ्रान्त्यतिशयो यथा,

दिश्याद्धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोल्लासिनी
शाशाङ्की कलिका जलभ्रमिवशाद्दूरागतैष्टनष्टा मुदम्।
यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन् फणालीं मुहु-
र्मुञ्चन् लब्ध्युमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः॥

तत्र गङ्गाम्भःप्रतिफलितां रजनिकरकलामालोकयतो वासुकेरियं शफरीभ्रमेण मुकुलीकुर्वन् फणालीं शफरीय-मित्यध्यासिता विपर्ययबुद्धिः सोऽयं भ्रान्त्यतिशयो नाम भ्रान्तेरेव भेदः॥ १५१॥

भ्रान्त्यनध्यवसायोऽपि द्विधा सालम्बनो निरालम्बनश्च। तयोः सालम्बनो यथा,

विरहिणिहिअअकअंतहिं णिज्जाअइ
तक्खणि छाइज्जइ अलिणिवहेहिं चित्तेण चूअवणि।
अह तासुवि मअरन्देहिं सोसंदाणिअइ
जह ण कलम्बो ण अम्बो ण जम्बू जाणिअइ॥ (य)

अत्र न कदम्बो नाम्रो न जम्बूरिति ज्ञायते इति अया-

(य) विरहिणी हृदयकृतान्तैर्निर्नीयते तत्क्षणे छाद्यतेऽलिनिवहैश्चित्तेन चूतवनी।
अथ तास्वपि मकरन्दैः बध्यते यथा न कदम्बो नाम्रो न जम्बूर्ज्ञायते॥

भेदाभेदतुल्यतया मनसि सादृश्यं प्रवर्त्तत इति भावः। असंशयमिति पदेन प्रकर्षो वितर्कश्च प्रत्यायित.॥ १५०॥

जिघृक्षतितमामिति। तिङश्चेति तमपि किमेत्तिङव्ययघादाम् द्रव्यप्रकर्ष इत्याम्॥ १५१॥

भ्रान्त. अनध्यवसायोऽनिर्धार्य्यमाणविषयता। अनिर्द्धारितविषयतया कथमा-

णामेवावलम्बनभूतत्वात् सालम्बनो नामायं भ्रान्त्यनध्यवसायो भ्रान्तिभेदः ॥ १५२ ॥

निरालम्बनो यथा,

> उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो-
> स्तदूर्द्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि यत्।
> ततः कुम्भौ पश्चात् विसकिसलये कन्दलमये
> तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् ॥

अत्र ऊर्वादिषु युवत्यवयवेषु उत्पन्नरम्भास्तम्भभ्रान्तेर्योऽयमतत्समुदाये किमिदमित्यालम्बनं विना कृतोऽनध्यवसायः स एष निरालम्बनो नाम भ्रान्त्यनध्यवसायो भ्रान्तेरेव भेदः ॥ १५३ ॥

> ऊहो वितर्कः सन्देहनिर्णयान्तरधिष्ठितः।
> द्विधासौ निर्णयान्तश्चानिर्णयान्तश्च कीर्त्त्यते ॥ १५४ ॥

---

लम्बननिरालम्बनयोर्भेद इत्यत आह। त्रयाणामेव आलम्बनभूतत्वादिति। उक्तिभङ्ग्या विषयोपादानादित्यर्थ. ॥ १५२ ॥

आलम्बन विनेति। विषयानिर्द्धारण व्यक्तीकृतम् ॥ १५३ ॥

मिथ्याप्रतीतिसामान्यादनन्तर वितर्कलक्षणमाह। ऊह इति। ऊह इति यस्य प्रसिद्धिः स इत्यर्थः। पर्य्यायशब्देनापि लक्षण क्रियत एव। यथा घटपदार्थतया व्यावृत्तौ सन्दिहानस्य कलशपदार्थतया निश्चयवतो य, कलशः स घट इति। कथमसौ संशयविपर्य्ययाभ्या भिद्यत इत्यत आह। सन्देहेति। सन्देहो नानाकोटिकस्तथाभूतामेव जिज्ञासा प्रसूते तर्कस्तु तदनन्तरभावी नियतकोटिक' तथाभूतामिति। कालस्वरूपकार्य्यभेदात् संशयतो भेद इति। एव विपर्य्ययतोऽपि। स हि तर्कान्तरभावी निश्चयात्मक प्रवृत्त्यादिहेतुभूतश्च। तदय तर्काभासस्य विपर्य्ययापर्य्यवसायिनो विषयविभागः कृतः स तु तर्कस्य विषयविभाग. स्फुट एव सन्देहनिर्णययोर्मध्य' तदधिष्ठितः स तद्वर्त्ती विभाग माह। द्विधासौ इति। निर्णयान्तरोपन्यस्तः फलभूतानिश्चयः अतथाभूतो निर्णयान्तो निश्चयः ॥ १५४ ॥

तत्त्वानुपात्यतत्त्वानुपाती यश्चोभयात्मकः ।
स निर्णयान्त इतरो मिथ्यामिथ्योभयात्मकः ॥ १५५ ॥

तेषु निर्णयान्तस्तत्त्वानुपाती यथा,

मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद् भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आः ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥

अत्र निरूपितलक्षणे वितर्के जटायुरेष इति तत्त्वानुपाती निर्णयान्तो वितर्कः ॥ १५६ ॥

स एवातत्त्वानुपाती यथा,

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकनिधिः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेत् मनोरममिदं रूपं पुराणो मुनिः ॥

अत्र किमिदं रूपं निर्मातुं यथोक्तः पुराणो मुनिः प्रभवेदतश्चन्द्रादिषु अन्यतमेन प्रजापतिना भवितव्यमिति अतत्त्वानुपातित्वात् अतत्त्वानुपाती अयं निर्णयान्तो वितर्कः ॥ १५७ ॥

स एव उभयात्मको यथा,

चित्ते निवेश्य परिकल्पितसत्त्वयोगात्
रूपोच्चयेन रचिता मनसा कृता नु ।

---

प्रमिति विपर्य्ययरूपतया द्विविध इत्याशयवान् निर्णयार्थं विभजते। तत्त्वानुपातीति ॥ १५५ ॥

मैनाकः किमयमिति। किमयमिति काक्वा पूर्वं दोलायमानचित्तस्य नियतकोटिस्पर्शी ज्ञानविशेष उपनीयते स एव तर्कः। एवम् अन्यत्रापि ॥ १५६ ॥ १५७

क्षीरत्सृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥

सोऽयं तत्त्वानुपातित्वात् अतत्त्वानुपातित्वाच्च उभयात्मा निर्णयान्तो वितर्कः ॥ १५८ ॥

अनिर्णयान्तो मिथ्यारूपो यथा,

अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥

अत्र किमिदमद्रेः शृङ्गं पवनो हरतीति मेघं प्रति कल्पनाया मिथ्यात्वाद् वस्तुनश्च अनिर्णयान्तो मिथ्यारूपो वितर्कः ॥ १५९ ॥

स एव अमिथ्यारूपो यथा,

अयमसौ भगवानुत पाण्डवः
स्थितमवाङ्मुनिना शशिमौलिना ।
समधिरूढमनेन नु जिष्णुना
स्विदिति वेगवशान्मुमुहे गणैः ॥

अत्र भगवत्पार्थयोः अमिथ्यारूपत्वेन वेगवत्त्वादेकस्य अनिर्णयान्तोऽमिथ्यारूपो वितर्कः ॥ १६० ॥

---

उभयात्मेति । क्षीरत्सृष्टिरित्यनेन तत्त्वानुपाती अपरेत्यनेन अतत्त्वानुपाती-प्रकाशितः ॥ १५८ ॥

मिथ्यामिथ्यारूपौ बाधिताबाधितविषयौ । अबाधितोऽपि तर्कों भवति एव । यथा यदस्य नीलं रूपं नीलोत्पलमिति ॥ १५९ ॥

अत्र भगवत्पार्थयोरिति । भगवत्पार्थयो. अवस्थानयोः समाधिरोहारोह-योश्च न किञ्चिद् बाधकमस्ति च ज्ञानस्य विशेषः प्रत्यक्षत इति ॥ १६० ॥

अनिर्णयान्त उभयात्मा यथा,

मायास्विदेषा मतिविभ्रमो वा
ध्वस्तं नु मे वीर्य्यमुताहमन्यः।
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते॥

अत्र मायादीनां विकल्पानां मिथ्यारूपत्वात् मम शराः किराते न व्याप्रियन्ते इत्यस्य अमिथ्यारूपत्वात् अनिर्णयान्तत्वाच्च अयम् अनिर्णयान्त उभयरूपो वितर्कः॥ १६१॥

वस्त्वन्तरतिरस्कारी वस्तुना मीलितं स्मृतम्।
पिहितापिहिते चैव तद्गुणातद्गुणौ च तत्॥ १६२॥

अत्र मीलितम् अभिधीयमानगुणेन प्रतीयमानगुणेन च वस्तुना सम्भवति।

तयोराद्या यथा,

एत्तो वि ण सच्चविओ गोसे पसरन्तपल्लवारुणच्छाओ।
मज्जणतंवेसु सहो तह मइतंवेसु लोअणेसु अमरिसो॥ (क)

---

(क) आगच्छन्नपि न दृष्टः प्रातः प्रसरत्पल्लवारुणच्छाय।
मज्जनताम्रयोर्मदस्तथा मदताम्रयोर्लोचनयोरमर्षः॥

---

अत्र मायादीनामिति। न परमेश्वरस्य मायाच्छद्मना शक्तौ मतिभ्रमो न ध्वंसो वीर्य्यस्य। न वा अर्जुनादेव अर्जुनस्य अन्यत्वमिति विषयबाधात्॥ १६१॥

मीलिते भ्रान्तिः अस्तीति भ्रान्त्यनन्तर मीलितलक्षणमाह। वस्त्वन्तरेति। वस्तूनामिति श्लिष्ट षष्ठी। वस्त्वन्तरेण तिरस्कारे इति कर्मणि। वस्त्वन्तरस्य तिरस्कार इति कर्त्तरि। फलतः स एवार्थः। तथाच उत्कृष्टगुणेन अपकृष्टगुणस्य तिरस्करणं न्यग्भावनमिति लक्षणार्थः। पृथग्रूपतिरस्कारेण एकरूपतापत्तिर्मीलितमुच्यते तथाच कातन्त्रम्। मीलित युक्तमुच्यत इति। अभिप्राय पूर्वः तिरस्कारी द्विविधः सिद्धाभिप्रायफलः असिद्धाभिप्रायफलश्च। यथाक्रमं पिहितापिहिते। न च एतावता विशेषेण पृथग्भावः, सामान्यलक्षणव्याप्तत्वात्

अत्र मज्जनताम्रयोः लोचनयोः मदरागः मदताम्रयोः कोपारुणरागः साक्षादभिधीयमानेनैव गुणेन तिरस्क्रियमाणो निदर्शित इत्यभिधीयमानेन वस्तुना एतन्मीलितम् ॥ १६३ ॥

प्रतीयमानेन यथा,

पिअदंसणसुहेण मुउलिआइं जइ से ण होन्ति णअणाइं।
ता केण कण्णरइअं लक्खिज्जइ कुवलअं तिस्सा ॥ (ख)

अत्र प्रियदर्शनसुखेन मुकुलितयोरेव लोचनयोः तस्याः कर्णकुवलयं लक्ष्यते न तु अमुकुलितयोरिति वस्तुना वस्त्वन्तरतिरस्कारः प्रतीयमानगुणतया उपपादित इति प्रतीयमानगुणेन वस्तुना मीलितमिदम् ॥ १६४ ॥

पिहित यथा,

पाअडिअणेहसब्भावविब्भमं तीअ जह तुमं दिट्ठो।
संवरणवावडाए अण्णो वि जणो तह ण जाणादु ॥ (ग)

अत्र प्रकटितस्नेहसद्भावविभ्रमं यथा तथा तया त्वमवलोकितः न एतदन्यजनो जानात्विति सर्व्वत्र स्निग्धदृष्टिपातेन पिहितमपि एतन्मीलितभेद एव ॥ १६५ ॥

---

(ख) प्रियदर्शनसुखेन मुकुलिते यद्यस्या न भवेतां नयने।
तत् केन कर्णरचितं लक्ष्यते कुवलयं तस्याः ॥

(ग) प्रकटितस्नेहसद्भावविभ्रमं तया यथा त्वं दृष्टः।
संवरणव्यापृतया अन्योऽपि जनस्तथा न जानातु ॥

---

अवान्तरभङ्गीनामानन्त्याच्च। स्वरूपगुणेन तिरस्कारः तद्गुणो विरूपगुणेन अतद्गुणः। एतावपि मिलितविशेषाविति स्फुटम् ॥ १६२ ॥

विभागमाह। अत्र मीलितमिति। मज्जनं स्नानम्। अत्र ताम्रपल्लवारुणरागपदाभ्याम् अभिधीयते गुणः ॥ १६३ ॥

ननु पिअदंसणेत्यादौ कथं मीलितं न हि अत्र तिरस्कारः केनापि शब्देन प्रत्याय्यत इत्यत आह। न तु असुकुलितयोरिति। यदि मुकुलिते न स्यातां कथं

अपिहितं यथा,

दिट्ठाइ जं ण दिट्ठो आलविआए वि जस्स आलविओ।
उवआरो जस्स कओ ताव्वअ कलिअ छइल्लेहिं॥ (घ)

अत्र दृष्टया यन्न दृष्टः, सम्भाषितया यन्न सम्भाषितः न च अभ्यागतोपचारो विहितस्तेन तदनुरागः परं न पिहितः प्रत्युत छादनेन छेकानां प्रकटित इति अपिहिताख्योऽयं मीलितभेदः॥ १६६॥

तद्गुणो यथा,

गोरङ्गउ तरुणीअण जोण्हाइं अहिसरइ
सिअणेवच्छपडिच्छअ वल्लहवङ्करइ।
तच्छाअहि पुण चल्लिअउ सामलागओ
णीलवेसवहो तहि मअणु मंति अहिं॥ (ङ)

अत्र गौराङ्गस्तरुणीजनः सितनेपथ्यो ज्योत्स्नाया श्यामस्तु नीलनेपथ्यः तस्याः छायासु गच्छतीति तद्गुणाख्यं मीलितमिदम्॥ १६७॥

अतद्गुणो यथा,

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षिणी
क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते।

---

घ) दृष्टया यन्न दृष्ट आलपितयापि यन्नालपित।
उपचारो यन्नकृतस्तेन च कलित छेकैः॥

(ङ) गौराङ्गस्तरुणीजनो ज्योत्स्नायामभिसरति सितनेपथ्यं प्रतीक्ष्य वल्लभवङ्करति।
तच्छायासु पुनश्चलितं श्यामलाङ्गी नीलवेशवहस्तत्र मदनो मन्त्रभूत॥

---

कुवलय लक्ष्यते इति तर्कस्य तिरस्कारपर्यवसानादिति भावः मूर्तिरूपादिक. प्रतीयमानो गुण॥ १६४—१६५॥

ननु दृष्टयापि दृष्ट इत्यपि कथमलङ्कार। न हि पत्र मतिरस्तीत्यत आह। प्रत्युतेति। छेकाः विदग्धाः तैरास्वाद्यमानत्[illegible] [illegible]ाव्यस्येत्यर्थ.॥ १६६॥

कीर्त्त्या ते धवलीकृते त्रिभुवने क्ष्मापाललक्ष्मीः पुरः
कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति ॥

अत्र कर्कन्धूफलानाम् अपगतनिजगुणत्वात् अतद्गुणाख्यं मीलितमिदम् ॥ १६८ ॥

सदृशादृष्टचिन्तादेरनुभूतार्थवेदनम्।
स्मरणं प्रत्यभिज्ञानस्वप्नावपि न तद्बहिः ॥ १६९ ॥

तत्र सदृशार्थं यथा,

अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः।
अस्मर्य्यन्त विनिःश्वस्य प्रियानयनविभ्रमाः ॥

अत्र खञ्जनपङ्क्तिदर्शनात् तत्सदृशप्रियानयनविभ्रमस्मरणात् तत्सदृशदर्शनज स्मरणमिदम् ॥ १७० ॥

अदृष्टाद् यथा,

मुनिसुताप्रणयस्मृतिरोधिना मम वियुक्तमिदं तमसा मनः।
मनसिजेन सखे। प्रहरिष्यता धनुषि चूतशरश्च निवेशितः ॥

अत्र मुनिसुताप्रणयस्मृतिरोधिना तमसा मे मनो वियुक्तम् इति अदृष्टकृतं स्मरणमिदम् ॥ १७१ ॥

---

अत्र कर्कन्धूफलानामिति। विरूपगुणानामित्यर्थः ॥ १६७ ॥ १६८ ॥

मीलिते ज्ञानमस्तीति साजात्यादनन्तरं स्मृतिं सूचयति। सदृशेति। सदृशात् ज्ञायमानसादृश्यात् प्रयत्नजा स्मृतिश्चिन्तादिर्यस्य। प्रयत्नमग्रे कथयिष्यति। अनुभूतार्थवेदनं समानविषयानुभवनियतज्ञानविशेषरूपं स्मरणम्। प्रत्यभिज्ञानमपि पूर्वानुभूतविषयमेव। एवं स्वप्नेऽपि ॥ १६९ ॥

अत्र खञ्जनेति अत्र खञ्जनपङ्क्तिश्चेत् अवलोकिता अनन्तरमेव प्रिया स्मरणमासीदिति कार्य्यकारणभाव. अवगम्यते। स च कारणतासादृश्यमनन्तरभाव्यखञ्जनज्ञानस्य अस्तीति च प्रतीतं सादृश्यमितिभावः ॥ १७० ॥

अत्र मुनिसुतेति। तमोलक्षणस्य प्रतिबन्धकस्य अपगमे स्मरणरूपं कार्य्यम्

अत्र सालोक एव सूर्य्ये गृहपतेर्गृहागमनं गृहिण्याश्च यत् पादधावनं तदावाभ्यामद्य वेश्मनो न निर्गन्तव्यमिति भावः स च द्वयोरपि हासेन अभिहितः उद्भिद्यत इत्यभिहितः सोद्भेदोऽयं भावः ॥ १७८ ॥

एकतो निरुद्भेदो यथा,

सालिवणगोविआए उड्डीवन्तीअ पूसविन्दाइं ।
सव्वङ्गसुन्दरीएवि पहिआ अच्छीइ पेच्छन्ति ॥ (व)

अत्र अतिसौन्दर्य्येण देवीभ्रान्त्या शालिवनगोपिकाम् आलोकयतां पथिकानां तदक्षिनिरीक्षणे अयमभिप्रायः शालिवनतिरस्कारेण देवमानुषयोः विशेषभूतः पद्भ्यामेव भूमिस्पर्शो भूम्यस्पर्शो वा न लक्ष्यते इति तदक्षिणी एव पश्यामः यदीयं निमिषति तदा मानुषीयं यदि न निमिषति तदा देवीयम् इति सर्वाङ्गसुन्दर्य्या अपि पथिकानामेव जायमानो न इह केनचित् कर्मणा उद्भिद्यत इत्येकतो निरुद्भेदस्सायं भावः ।

अभितो निरुद्भेदो यथा,

गोलातटट्ठिअं पेच्छिऊण गहवइसुअं हालिअसोण्हा ।
आढत्ता उत्तरिउं दुक्खुत्ताराइ पअवीए ॥ (श)

अत्र आगच्छन्तीं हालिकस्नुषां दृष्ट्वा गृहपतिसूनोः गोदा-

---

(व) शालिवनगोपिकाया उच्चाटयन्त्याः शुकवृन्दान् ।
सर्वाङ्गसुन्दर्य्या अपि पथिका अक्षिणी प्रेक्षन्ते ॥

(श) गोदावरीतटावस्थितं दृष्ट्वा गृहपतिसुतं हालिकस्नुषा ।
आरब्धा उत्तरितुं दुःखोत्तारया पदव्या ॥

---

दृशाया रूढः स्वादपदवीमासाद्य चमत्कारमावहति । अतएव तत्कार्य्ययोः प्रवृत्तेः अनुभावरूपतया तथा वा न कुण्ठते हृदयम् ॥ १७६ ॥ १७७ ॥

न इह केनचिदिति । तथाच शब्दान्तरस्य व्यापारो नासीत्यर्थः ॥ १७८ ॥

वरीतटे यदवस्थानं यस्य तमवलोक्य तस्या दुरुत्तरमार्गेण अव-तरणारम्भ' तत्र अयं तयोरभिप्रायः हस्तावलम्बदानेन आवयोः अङ्गसङ्गमः सम्पद्यतामिति स चाभितः द्वयोरपि जायमानो न इह केनचित्कर्मणा उद्भिद्यते इत्यभितो निरुद्भेदस्थायं भावः।

हृद्यं सूक्ष्मञ्च भिद्येत न हि भावात् कथञ्चन।
हृद्योदाहरणं तत्र तैरिदं प्रतिपाद्यते ॥ १७९ ॥

हिअए रोसुव्भिस्ण पाअप्पहरं सिरेण पत्थन्तो।
णह उदओ एमाण सिणीअथोरंसुअं रुण्णं ॥

अत्र हृदये उद्घूर्णपादप्रहारं यदयं शिरसा प्रार्थितवान् यच्च तयासौ न ताडितस्तत्र हृदये वल्लभा वसतीति भावः। स च प्रार्थनारोदनाभ्याम् उद्भिद्यमानः सोद्भेदो भावः हृद्य इत्युच्यते ॥ १८० ॥

निरुद्भेदस्तु यो भावः स सूक्ष्मस्तैर्निगद्यते।
इङ्गिताकारलक्ष्यात् स सूक्ष्मात् स्याद्भूमिकान्तरम् ॥१८१॥

यथा, कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम्।
अवेत्य कान्तमबला लीलापद्मं न्यमीमिलत् ॥ १८२ ॥

अत्र वक्तुमक्षमतायाम् इङ्गिताकारयोः अप्रतीतमानत्वाद् भावगतेः भूमिकान्तरमिदं भवति।

---

हृद्यमिति। अभिमतस्य वस्तुनो हृदयावच्छेदेन वृत्तिमभिसन्धाय प्रवृत्तिः। तत्र यद्यपि विशेषविशेषोऽस्ति तथापि भावसामान्यलक्षणाक्रान्त तत्रैवान्तर्भवि-ष्यति ॥ १७९ ॥ १८० ॥

ननु च सूक्ष्मः कथं पूर्वोक्तात् सूक्ष्माद् भिद्यत इत्यत आह। इङ्गिताकार लक्ष्यादिति। कदा नौ सङ्गमो भावीति अभिप्रायस्य व्यञ्जक नेङ्गित न विकारो वा कान्तस्य कश्चिदुपात्तः। अवेत्येत्यादिप्रकाशिताभिप्रायानुगुणा काचित् अस्ति क्रिया वा कथमन्यथा तमुद्दिश्य लीलापद्मनिमीलनं सङ्गच्छते तस्मात् अन्यमेव इदं सूक्ष्मं भावलक्षणाक्रान्तम् ॥ १८१ ॥ १८२ ॥

पक्ष्मसंमीलनाच्चात्र सूचितो निशि सङ्गमः ।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥

अत्र अनुकार्य्यानुकरणे अपि भूमिकान्तरिते एव भवत इति सोऽयं निरुद्भेदो भाव एव सूक्ष्म इत्युच्यते ॥ १८३ ॥

प्रत्यक्षमक्षजं ज्ञानं मानसञ्चाभिधीयते ।
स्वानुभूतिभवञ्चैवमुपचारेण कथ्यते ॥ १८४ ॥

तत्र अक्षजं द्विधा युगपदेकशश्च । तयोर्युगपद् यथा,

कान्तकान्तवदनप्रतिबिम्बे भग्ननालसहकारसुगन्धौ ।
स्वादुनि प्रणिहितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥

अत्र मदिराश्रयाणां मुखप्रतिबिम्बसौगन्ध्यस्वादुताश्रव्य-

---

उत्तरार्द्धस्य उदाहरणं व्युत्पादयति । अत्र पक्ष्मसम्मीलनाच्चेति । एवं चेत्प्राप्तम् इङ्गितलक्ष्यत्वमत आह । तत्र चेति । पक्ष्मीलनम् अनुकार्य्यं कान्ताहस्ताङ्गुलीजनितमनुकरणं रात्रौ समागमो भविष्यतीति कान्तागतोऽभिप्रायः । न तु निमीलनम् अनुकार्य्याद् व्यभिचरितमेतमर्थम् अवबोधयतीत्यर्थः ॥ १८३ ॥

ज्ञानसङ्गत्यनन्तरं प्रमाणरूपालङ्कारप्रस्तावस्तत्र अन्येषां प्रमाणानां प्रत्यक्षमूलकत्वात् प्रथमं प्रत्यक्षलक्षणमाह । प्रत्यक्षमिति । साक्षात्कारं प्रत्यक्षमिति प्रसिद्धं तस्य विभागमाह । अक्षजमिति । अक्षं बहिरिन्द्रियं तस्मात् जातम् । मानसं बाह्येन्द्रियानपेक्षेण मनसा जनितम् । स्वानुभूतिः सहजा चिच्छक्तिः तस्या उत्पन्नम् । शरीराभिघाताद्यभिभूते प्रत्याहारतिरस्कृते वा मनसि यत् कदाचिदतिस्फुटाभं ज्ञानमुत्पद्यते न तस्य मनो निबन्धनता शक्यतेऽभिधातुमिति चिच्छक्तिमेव आश्रयते । ननु इन्द्रियजन्य एवालोके साक्षात्कारिताप्रसिद्धिः कथमनुभूतिभवं तथेत्यत आह । उपचारेणेति । यदि इन्द्रियजन्ये साक्षात्कारितानियमं तदा उपचारेण परिगणनं अथ भावनादियत्नेन विनापि इन्द्रियं भवतीति पक्षस्तदा मुख्यत एवेति भावः ॥ १८४ ॥

युगपदिति । एकस्मिन् वाक्ये घ्राणरसनचक्षुस्त्वक्श्रोत्राणां पञ्चानामपि युगपत्प्रवृत्त्याभिधानाद् यौगपद्यं न रसानुगुणतया यौगपद्यात् चमत्कारितामात्र-

त्वग्वेत्यानां दृग्घ्राणरसनश्रवणत्वगिन्द्रियप्रत्यक्षता प्रतीयते ॥ १८५ ॥

एकशो यथा,

मन्दमन्दविगलत्त्रपमीषच्चक्षुरुल्लसितपक्ष्म दधत्या ।
वीक्ष्यते स्म शनकैर्नवबध्वा कामिनो मुखमधोमुखयैव ॥ १८६॥

तदेतच्चाक्षुषम् ॥ १८७ ॥

एवं श्रावणादीनि अपि उदाहरणीयानि ।

मानसमपि द्विधा सुखादिविषयमनुभूतार्थविषयञ्च । तयोः सुखादिविषयं यथा,

अस्तोकविस्मयमपि स्मृतपूर्ववृत्तसुङ्गतनूतनभयज्वरजर्जरं नः ।
एकक्षणत्रुटितसघटितप्रमोदसानन्दशोकशवलत्वमुपैति चेतः ॥

एतन्निगदेनैव व्याख्यातम् ॥ १८८ ॥

अनुभूतार्थविषयं यथा,

पिहिते वासागारे तमसि सूचीमुखाग्रसंभेद्ये ।
मयि च निमीलितनयने तथापि कान्तामुखं व्यक्तम् ॥

इदमपि न अतिदुर्बोधमिति न व्याख्यातम् ॥ १८९ ॥

स्वानुभूतिभव द्विधा मिथ्यात्मकम् अमिथ्यात्मकञ्च । तयोर्मिथ्यात्मकं यथा,

अथ दीर्घतरं तमः प्रवेक्ष्यन् सहसा रुग्णरयः स संभ्रमेण ।
निपतन्तमिवोष्णरश्मिमुर्व्यां वलयीभूततरुं धराञ्च मेने ॥

---

इतीति । त्रिधापि अलङ्कारकाण्डे परिसङ्ख्यानमुचितम् । मानसं द्विधेति । संयुक्तसमवायनियमितम् एकम् अपरन्तु संस्कारनियमितम् । संस्कारलक्षणया हि प्रत्यासत्त्या यथा स्मरणातिरिक्त प्रत्यभिज्ञान तथा इदमपीति न किञ्चित् अनुपपन्नम् ॥ १८५—१८७ ॥

निगदेनैवेति । यदि विस्मयादीन् अय न साक्षात्कृतवान् कथमुक्तः तम्

तदिदमिन्द्रियेषु मनसि च अनवतिष्ठमानम् आत्मन्येव अवतिष्ठते ॥ १९० ॥

असिध्यात्मकं यथा,

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः।
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत् किल भवान्॥

अस्य आत्मविषयता व्यक्तैव योगिभिरुन्नीयते ॥ १९१ ॥

लिङ्गाद्युल्लिङ्गिनो ज्ञानमनुमानं तदुच्यते।
पूर्ववच्छेषवच्चैव दृष्टं सामान्यतश्च यत् ॥ १९२ ॥
फलसामर्थ्यभेदेन द्विधैतद् भिद्यते पृथक्।
उदाहरणमेवैषां रूपव्यक्तेर्भविष्यति ॥ १९३ ॥

---

आचष्टीत्यर्थः। इदमपीति। व्यक्तमित्यनेन साक्षात्कारो दर्शितः। न हि करणेन व्यक्तता भवति आत्मन्येव अवतिष्ठते स्वानुभूतिमाश्रयत इत्यर्थः ॥१८८—१९०॥

योगिभिरिति। निदिध्यासनबललभ्यात्मनो ज्ञानस्य योगिमात्रे प्रसिद्ध विषयत्वात् न हि अस्य ज्ञानादयस्तथा त परिचिन्वन्ति यथा योगिन इत्यर्थः ॥१९१॥

अनुमानलक्षणमाह। लिङ्गादीति। यस्य येन सह अविनाभावलक्षणा व्याप्तिः सन्दिग्धसाध्यधर्मधर्मिरूपपक्षवृत्तिताख्या पक्षवृत्तिताख्या पक्षधर्मता च गृह्यते तस्मात् तस्य प्रतीतिः अनुमानं यथा धूमादग्निः स हि यथाविधि सिद्धस्तथा-विधसन्निधानं सूचयति। तत्र यस्मात् प्रतीति उत्पद्यते तल्लिङ्गं चिह्नं व्याप्ति-विशिष्टपक्षे धर्मतासञ्ज्ञापकमित्यर्थः। इतरल्लिङ्गं ज्ञापकमस्य प्रतीति कृत्वा पूर्ववच्छेषवत् सामान्यतो दृष्टभेदात् त्रिविधमनुमानमग्रे ग्रन्थकृतैव व्याख्या-तमिति न वितन्यते ॥ १९२ ॥

फलसामग्र्येति। यद्यपि ज्ञानमनुमानमित्युक्तं तथापि तस्य साधारणमेव क्वचित् अनुपन्यासप्रधानं वाच्यम्। क्वचित् कारणीभूतलिङ्गपरामर्शोपन्यास-प्रधानमिति भवति यथोक्तो विशेषः अनुमानशब्दो हि भावल्युडन्तः करणे ल्युडन्तो वा आद्ये फलं द्वितीये सामग्र्यं करणमित्यर्थः उपन्यासप्रधानता दुरुहेत्यत आह। उदाहरणमेवेति ॥ १९३ ॥

तेषु यत्र कारणं दृष्ट्वा कार्य्यमनुमीयते तत् पूर्ववत् यथा,

अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।
अयमायातः कालो हन्त हताः पथिकगेहिन्यः ॥

अत्र वर्षर्त्तोः कारणभूतात् कार्य्यभूतविरहिणीनां मरणम् अनुमीयते तेनैतत् पूर्वं कारणमिह अस्तीति पूर्ववदुच्यते ॥ १९४ ॥

यत्र कार्य्यं दृष्ट्वा कारणमनुमीयते तच्छेषवत् यथा,

सावज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः ।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥

अत्र यावकरसतिलकपङ्क्तेः कार्य्यभूतायाः कारणभूतं पादपतनमनुमीयते तेनैतच्छेषः कार्य्यमिहास्तीति शेषवदुच्यते ॥ १९५ ॥

यत्र न कार्य्यं न कारणं केवलमविनाभावमात्रं प्रतीयते तत् सामान्यतो दृष्ट यथा,

गज्जन्ते खे मेहा फुल्ला णीवा पणच्चिआ मोरा ।
णट्ठो चन्दुज्जोओ वासारत्तो हला पत्तो ॥ (च)

---

(च) गर्जन्ते खे मेघाः फुल्ला नीपा, प्रनर्त्तिता मयूराः ।
नष्टश्चन्द्रोद्द्योतो वर्षर्त्तुः सखि ! प्राप्त ॥

---

कार्य्यभूतविरहिणामिति पथिकगेहिनीनां दशम्यवस्था ज्ञायमाना वाक्यार्थः अत' फलोपन्यासदत्तभरमेवेद काव्यमित्यभिप्राय । आयातश्चेज्जलदागम' तदा पूर्वप्रवृत्त इव पथिकनारीविनाशो लच्यत इति निष्ठाप्रत्ययेन द्योत्यते ॥ १९४ ॥

कथमन्यथेति । न इयमर्थापत्ति किन्तु तथाभूता नायकस्य ललाटेऽलक्तकविन्दुविशेषपङ्क्ति' प्रमदापदावपातप्रतिबद्धेति । न च अलकविन्दुपङ्क्तिज्ञान तथा स्वदते यथा विपक्षचरणावनमनानुमेयस्य ज्ञान' फलभूत तत् किल विपक्ष गोचरामीर्ष्या व्यञ्जयद्विप्रलम्भप्रकर्षं पुष्णाति ॥ १९५ ॥

गज्जन्त इति । अत्र समये मेघगर्जितादिभिः कालोपाधिभिः अनुमान'

अत्र वर्षर्त्तुरविनाभूतैः मेघगर्जितादिभिः सामान्येनैव अनुमीयते इति सामान्यतो दृष्टमिदम्। तानि एतानि भावसाधने अनुमानशब्दे फलपक्षे उदाहरणानि भवन्ति ॥१९६॥

यदा पुनः करणसाधनोऽनुमानशब्दः तदा अनुमीयते अनेनेति अनुमानशब्देन यथोक्तं लिङ्गमुच्यते। यदाह।

अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते।
तदभावे च यन्नास्ति तल्लिङ्गमनुमापकम् ॥

तत् पूर्ववति यथा,

अइ सहि! वक्कुल्लाविहिं च्छाहिहिसि गोत्तस्स मत्थए छारम्।
अच्चन्लदत्तदिट्ठेण सामिवलिएण हसिएण। (छ)

अत्र एवंप्रकारया वक्रोक्त्या एवंविधेन हसितेन उपलक्षिता त्वमग्रतो गोत्रं दूषयिष्यसीति कारणतो यत्र कार्य्यानुमानं तदिदं सामग्रीपक्षे पूर्ववदित्युच्यते ॥ १९७ ॥

(छ) अयि सखि। वक्रालापैश्छादयिष्यसि गोत्रस्य मस्तके भस्म।
अत्यन्तदत्तदृष्टेन सामिवलितेन हसितेन ॥

---

तेन कार्य्यकारणभावः। अत्र हि न पृथक् मेघगर्जितादिज्ञानं तथा चमत्कारमावहति यथा वर्षारात्रिज्ञानप्रतिबद्धम्। स हि ज्ञातः केतककर्णपूरादिविदग्धनेपथ्यपरिग्रहौत्सुक्यं प्रवासिनायकागमनौत्सुक्यं वा जनयतीति भावः ॥ १९६ ॥

अनुमेयेनेति। अनुमेयेन पक्षेण तस्यैव साध्यवत्तयानुमेयत्वात्। यदाह। स एव चोभयात्मा य गम्यो गमक इष्यते। असिद्धेनैकदेशेन गम्यः सिद्धेन बोधक इति। तदन्विते साध्यान्विते प्रसिद्धं प्रकर्षेण सिद्धम्। व्याप्यतयाधिगतम्। तदभावे। साध्याभावे यतोऽनुमापकं ततो लिङ्गम्। पूर्ववतीति। एवं कारणमनुमापकं यस्यास्ति तत्पूर्ववल्लिङ्गं तस्मिन्ननुमापयितव्यलिङ्गज्ञानविषये। पूर्वं कारणमाश्रयतीति पूर्ववत्। सोऽयमर्थः सप्तम्या द्योतितः। कारणतः क्वचित् यथा हि वक्र आलापो मुग्धाङ्गनाप्रकृत्यौचित्यागतं हसितं ध्वननशक्त्या प्रधानतां प्राप्तं कान्तिमर्पयति न तथा शब्दाभिधापितं चारित्रखण्डनम् इति साहित्यवा आगमातिप्रकाशमेव ॥ १९७ ॥

शेषवति यथा,

दीसइ ण चूअमउलं अत्ता ण अ वाइ मलअगन्धवहो।
एइ वसन्तमासं सहि! जं उक्कण्ठिअं चेअं॥ (ज)

अत्र उत्कण्ठालक्षणेन कार्य्येण वसन्तः कारणभूतोऽनु-
मीयत इति सामग्रीपक्षे इदं शेषवदित्युच्यते॥ १९८॥

सामान्यतो दृष्टं यथा,

आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति।
सन्तापदग्धस्य शिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव॥

सेयं विद्युदिव वृष्टिं कामन्दक्यपि प्रथमत उपलभ्य-
माना अविनाभावेन मालत्यागमनं गमयतीति सामग्रीपक्षे
सामान्यतो दृष्टमेतत्॥ १९९॥

यदाप्तवचनं तद्धि ज्ञेयमागमसंज्ञया।
उत्तमं मध्यमञ्चाथ जघन्यञ्चेति तत्त्रिधा॥ २००॥

तत्र उत्तमं द्विधा विधिरूपं निषेधरूपञ्च। तयोर्विधिरूपं यथा,

दम दान दया शिक्षेत् स्तनयित्नुर्वदत्यसौ।

---

(ज) दृश्यते चूतमुकुलमद्य न च वाति मलयगन्धवहः।
एति वसन्तमासः सखि! यदुत्कण्ठितं चेतः॥

---

एतमिति। चूतमञ्जरीमलयपवनयो' अग्रं समुत्कण्ठितमत्र चमत्कारा-
स्पदम्। तथाहि। यथा प्रियस्य सन्निधास्यतः सम्भावना लोकोत्तराभिमान
प्रतिष्ठिता भवति न तथा सन्निधानमिति सहृदयसाक्षिकोऽयमर्थः। एवं सामा-
न्यतो दृष्टोदाहरणे बोद्धव्यम्॥ १९८॥ १९९॥

यदाप्तवचनमिति। आप्तो यथार्थशब्दवक्ता। उत्तम श्रुतिमूलम्। अतएव
तस्य अवश्यानुष्ठेयत्वाभिधानम्। मध्यमननादिलोकव्यवहारमूलं तदेव न
अवश्यानुष्ठेयम् इत्यनेन प्रकाशयिष्यते। उभयविधा वहि. फलवादि जघन्यम्
॥ २००॥

दद्दद इति। जलदध्वनितनानानादस्य अनुकरणं तत्त्रितयव्याजेन जलधरो

दददद इति वाग्देवी दयध्वं दत्त दायते ॥

अत्र च एषा दैवी वागनुवदति यत् स्तनयित्नुर्ददद इति दयध्वं दत्त दायते इति तदेतत् त्रयं शिक्षेत् दमं दानं दयामिति श्रुतेस्तदेतत् विधिरूपमाप्तवचनम् ॥ २०१ ॥

निषेधरूपं यथा,

निवार्य्यतामालि ! किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥

अत्र उत्तरार्द्धोक्तनिषेधानुवादवर्द्धितव्युत्पत्तेर्वयस्याया योऽयम् अपवदमानवटुनिवारणोपदेशः तस्य महान्तो न अपभाषितव्या इति वाक्यार्थतात्पर्य्यादयं निषेधरूप आगमः। तदेतदुभयमपि अवश्यानुष्ठेयत्वादुत्तमम् ॥ २०२ ॥

मध्यमं द्विधा निर्दिष्टवक्तृकम् अनिर्दिष्टवक्तृकञ्च ।

तयोराद्यं यथा,

कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

अत्र जीवन्नरः पश्यति भद्रमिति अयमेवार्थो निर्दिष्ट-

---

वदति । दयध्वम् । दत्त । दायते इति । दैवीवागतो दमदानदयाः कर्त्तव्या इति विधिः पर्य्यवस्यति । बुद्धीन्द्रियनियमो दमः दानदये प्रसिद्धे मूलभूता श्रुतिं दर्शयति । अत्र तदेतत् एवैषेति ॥ २०१ ॥

ननु न केवलं यो महतोऽपभाषते इत्यादिवर्त्तमानापदेशात् कथं विधित्वमत आह । अत्र उत्तरार्द्धेति । अपभाषणस्य निन्दार्थवादेन निषेधविधिः कल्प्यते तेन महान्तो न अपभाषितव्या इति वचनव्यक्तिः उन्नीयत इति ॥ २०२ ॥

अत्र जीवन्नर इति । एषा चिरन्तनी लोकगाथा तन्मूलत्वम् एति जीवन्तमित्या

वक्तृकः। तदेतत् सर्ववाक्यानां विधिनिषेधयोः पर्य्यवसानात् प्राणेषणायां यतितव्यमिति विधिरूपमाप्तवचनम् ॥ २०३ ॥

द्वितीयं यथा,

अक्षे वसति पिशाचः पिचुमन्दे दिनपतिर्वटे यक्षः।
विश्राम्यति पद्मे श्रीस्तिष्ठति गौरी मधूकतरौ।

तदिदम् अनिर्दिष्टवक्तृकम् अनादिलोकप्रसिद्धिपरम्परायातम् ऐतिह्यम्। अत्रापि सर्ववाक्याना विधिनिषेधयोः पर्य्यवसानात् तस्मादक्ष न सेवेत, पिचुमन्द न निकृन्तेत, वटं न छिन्द्यात्, पद्मं न मूर्ध्नि बिभृयात्, मधूकं न पदा स्पृशेत् इत्यध्याहारो भवति। सोऽयं निषेधरूप आगमः। उभयमपि एतत् न अवश्यानुष्ठेयमिति मध्यमम् ॥ २०४ ॥

जघन्यं द्विधा काम्यं निषिद्धञ्च। तयोः काम्यं यथा,

मुण्डइआचुण्णकसाअसाहिअं णावणाइं ण विद्दत्तं।
तेल्लं पलिअत्थणीण वि कुणेइ पिणुसए थणए ॥ (क)

तदेतत् पूर्ववत् विधिरूपं काम्यमाप्तवचनम् ॥ २०५ ॥

निषिद्धं यथा,

वयं बाल्ये बालांस्तरुणिमनि यूनः परिणतावपीच्छामो वृद्धान् परिणयविधानस्थितिरियम्।

(क) मुण्डितिकाचूर्णकषायसाधितं नावनभवनतयोर्वितीर्णम्।
तैलं पतितस्तनीनामपि करोति पीनोन्नतौ स्तनौ ॥

रोगसस्य। अत्रापि प्राग्वदेव स्तुत्यर्थवादेन जीवनाय यतितव्यमिति विधिः कल्प्यते। तदिदमुक्तं सर्ववाक्यानामिति ॥ २०३ ॥

तदिदमनिर्दिष्टप्रवक्तृकमिति। एतेन ऐतिह्यमागम एवान्तर्भूतमिति दर्शितम्। अज्ञातवक्तृकस्य आगमस्यैव तथा प्रसिद्धेरिति। अत्रापीति पिशाचवासादिभिरनुवादैः पूर्ववद्विधयः कल्प्यन्ते ॥ २०४ ॥

मुण्डइव इति। मुण्डितिका अलम्बुषा। कषायः क्वाथो नव नावनं नस्यम्। काम्यमिति। पीनोन्नतस्तनकामनावतीभिरेव क्रियमाणत्वात् ॥ २०५॥

त्वयारब्धं जन्म क्षपयितुमकाण्डेन विधिना
न नो गोत्रे पुत्रि! क्वचिदपि सतीलाञ्छनमभूत्॥

तदेतत् निषेधरूपं निषिद्धमेवाप्तवचनम् उभयमपि चैतत् मूलकारिकाभिः संस्पृश्येत इत्यादिदोषान्न अनुष्ठेयमिति जघन्यम्॥ २०६॥

सदृशात् सदृशज्ञानमुपमानं द्विधेह तत्।
स्यादेकमनुभूतेऽर्थेऽननुभूते द्वितीयकम्॥ २०७॥

तयोरनुभूतार्थविषयं यथा,

सर्वप्राणप्रवणमघवन्मुक्तमाहत्य वक्ष-
स्तत्संघट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः।
एवं वेगात् कुलिशमकरोद्व्योम विद्युत्सहस्रैः
भर्त्तुर्वज्रज्वलनकपिशास्ते च रोषाट्टहासाः॥

अत्र रामकराकृष्यमाणभग्नधूर्जटिधनुर्विमुक्तज्योतिश्छटासहस्रसकुलमाकाशं पश्यतो रावणदूतस्य इयं स्वयं दृष्टेषु प्रभुवक्षःस्थलविदीर्णवज्रशकलविस्फूर्जथुषु तद्रोषाट्टहासेषु वियद्व्यापिषु तत्सादृश्यबुद्धिः। तदिदमनुभूतविषयं नाम उपमानं मीमांसका वर्णयन्ति॥ २०८॥

अननुभूतविषयं यथा,

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले।
समूहस्तारकाणां यः शकटाकारमाश्रितः॥

---

त्वयारब्धमित्यादौ गणिकया सती चारित्रवत्या न भवितव्यमिति स्फुटो निषेधविधिजघन्यत्वं व्याचष्टे। उभयमपि च एतन्मूलकारिकाभिरिति॥२०६॥२०७॥

सदृशादिति। इह मीमांसका वर्णयन्ति। उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति। अस्यार्थः। सादृश्यं सादृश्यज्ञानं ज्ञायमानसादृश्यमितियावत्। तदेव उपमानं कृतं इत्यत आह। असन्निकृष्टे सदृशान्तररूपेऽर्थे यतो

अत्र यथाविधः शकटाकारस्तथाविधो रोहिणीतारका-समूहाकार इत्येवम् अवधारिताप्तोपदेशस्य तदाकारतारका-चक्रदर्शनादिदं तद्रोहिणीशकटमितीति येयं संज्ञासंज्ञिसम्बन्ध-प्रतिपत्तिः तदिदमननुभूतविषयम् उपमानं नैयायिकाः समुन्न-यन्ति ॥ २०९ ॥

तथाभूतार्थविज्ञानजनकत्वेन हेतुना ।
नास्मादभिनयालेख्यमुद्राविम्बादयः पृथक् ॥ २१० ॥

तेषु अभिनयो यथा,

वरविवरणिग्गअदलो एरण्डो साहइव्व तरुणाणम् ।
या एत्थ घरे हलिअवह्न एद्दहमेत्तत्थणी वसइ ॥

अत्र पयोधरातिपरिणाहसूचकोत्तानप्रसारिताङ्गुलिहस्ता-भिनयसन्निभैरण्डदलसन्निवेशदर्शनात् स्वयम् अदृष्टेऽपि हालि-कवधूस्तनपरिणाहे पूर्वानुभूतैवंविधस्तनपरिणाहसम्बन्धप्रति-

---

बुद्धिमुत्पादयति तेन भवति सदृशात् सदृशप्रतिपत्तिरुपमानम् । न सदृशाद-ननुभूतज्ञानमुत्पद्यतेति प्रसङ्गात् । तेन इदम् अनुभूतविषयमेव नैयायिकाना तु अननुभूतविषयमेव उपमान तथाहि । नागरकेण यदा आरण्यकः पृष्ट आचष्टे यथा गौस्तथा गवय इति । तदा खलु नागरकस्य अतिदेशवाक्यार्थम् अनुस्मरतो गाञ्च सादृश्यप्रतियोगिन जानतो यद्गवये गोसादृश्यज्ञान तदुपमान प्रमाण तेन अय गवयशब्दवाच्य इति सज्ञिसम्बन्धज्ञान पश्चात् उपजन्यते सोपमितिरिति । तत्र सदृशाद्बुद्धौ विपरिवर्त्तमानाद् यत् सदृशज्ञान सदृशे गवये सज्ञासज्ञिसम्बन्ध ज्ञानमित्यर्थ । उदाहरणादिक निगदव्याख्यातम् ॥ २०८—२१० ॥

वरविवरेति । ग्रामतरुणे अनन्यवद्धान्त.करणैर्हालिकवधूस्तनाभोगो सुख-सोल्लासनादौ वारवारमनुभूतस्य तुल्याकारधृतिविवरप्रसूनैरण्डदलदर्शनादिव बुद्धिमारोहतीति सा बुद्धिर्मीमासकोपमितिं मध्यमध्यास्ते । कथम् एरण्डदलसन्नि-वेशस्याभिनेयता । अनुकारी हि अभिनयः नचासौ तत्र सम्भवति । अत आह ।

पत्तिः तदिदमनुभूतार्थविषयमुपमानमेव अभिनय इति उत्-
प्रेक्ष्यते ॥ २११ ॥

आलेख्यं यथा,

तवालेख्ये कौतूहलतरलतन्वीविरचिते
विधायैका चक्रं रचयति सुपर्णासुतमधः ।
अथास्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥

अत्र यदानुभूतनायकसन्दर्शनायाः स्वरूपालेख्यप्रदर्शनात्
एवम्भूतः स इति वितानमुत्पद्यते गोपनार्थञ्च तथाभूतयोरेव
देवकुलादिदृष्टविष्णुकामयोः प्रतीतिर्भवति तदेतदनुभूतार्थ-
विषयं भवति। यदा पुनरननुभूतनायकादिसन्दर्शनाया इत्थमा-
सोपदेशः एवम्भूतः सुपर्णकेतुश्चक्रपाणिर्विष्णुर्भवति एवम्भूतो
मकरध्वजः पुष्पचापः कामो भवति। यादृशाविमौ तादृशश्च
स ते मनोरथभूमिः केवलमस्य गरुत्मदादयो न विद्यन्ते तदा
तदुत्तरकालमालेख्यगततदाकारदर्शनात् सोऽयं मम प्रेया-
निति मद्विधया कयापि लिखितो भविष्यतीति तद्गोपयास्येनं

---

इस्ताभिनयसन्निभैरिति। उत्तानप्रसारिताङ्गुलिहस्तसन्निवेशेन वस्त्वन्तरपरिणाह-
प्रतिविम्बन लोकप्रसिद्ध तदिह अपि एरण्डदलविस्तारदर्शनात् तदन्तरितमेव
जायत इत्यर्थ ॥ २११ ॥

तवालेख्य इति। तदप्राप्तिकर्शिता चित्रप्रतिमादिना परिनोदनेन कथं
चिदात्मान धारयतीति तन्वीपदेन ध्वन्यते। न च जीवितमात्रार्थिना सा किन्तु
त्वदाकृतिदर्शनकुतूहलेन उद्विग्ना सती निगूढमपि अभिप्रायमालेख्यनिर्माणेन
व्यनक्तीति कौतूहलतरलपद्दाभ्या व्यज्यते। एकेति। या राधादिप्रणयपात्रं
वशीकृतत्रिभुवनमानागुसुकुमारं देवकीनन्दनम् आगमेषु बहुधाऽश्रौषीत्।
अथेति। या निर्यन्त्रणप्रार्थनीयताविरोधिनं देवताभावमनुसन्धत्ते। तया
त्रैलोक्यातिशायिसौभाग्यप्रकर्षस्य पुष्पेषोः चिह्नभूतौ चापमकरौ लिखिताविति।

विष्णुचिह्नाभ्यामिति गरुत्मच्चक्रेऽधः प्रदेशहस्तयोः केतुहस्तयोर्निवेशयति। अथापरा प्रतिविधित्सुर्गोपयन्ती प्रकाशयन्ती च प्रत्यासन्नोपमान मन्मथाकारमाचिख्यासु करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति। अत्राकृतौ पदार्थे या इमास्तयोर्लोकाना सोऽयमिति विष्णुरिति काम इति च सञ्ज्ञासंज्ञिसम्बन्धप्रतिपत्तयः। तदिदमनुभूतार्थविषयमुपमानमालेख्यमाख्यायते ॥ २१२ ॥

मुद्रा यथा,

> सचकितमिव विस्मयाकुलाभिः
> शुचिसिकतास्वतिमानुषाणि ताभिः।
> क्षितिषु ददृशिरे पदानि जिष्णो-
> रुपहितकेतुरथाङ्गलाञ्छनानि ॥

अत्र चक्रध्वजाङ्कितजिष्णुपादमुद्रादर्शनात् सेयममानुषी पादमुद्रा भवतीति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः। तदिदमननुभूतार्थविषयम् उपमानमेव मुद्रेत्युच्यते। यदपि च अदृष्टेऽपि

---

अथ स्वियत्पाणिस्त्वरितमित्येतैर्व्यज्यते। अत्र उदाहरणे द्विविधमपि उपमानं दर्शयति। तत्र मीमांसकपक्षे तावत् तन्त्र्यालेख्यम् उन्मुदित दृष्ट्वा काचित् अनुभूतपूर्वं नायक जानाति। सादृश्याविशेषाच्च कृष्णकामावपि प्रत्येति। तदा सदृशात् प्रतिपत्तिरुपमान भवति। नैयायिकपक्षे तु यदा सामान्यतो नायकागमे उत्पन्नपूर्वानुरागाया विशेषतश्च प्रत्यङ्गलावण्यमजानत्या इत्थम्भूताकारौ कृष्णकामौ यादृशौ तादृशस्तव प्रियानित्याप्तोपदेशश्रवणानन्तर गृहीतचित्राकाराया तत् तच्छब्दाभिधेयता प्रतिपत्तिरुपमानमिति। कथ चित्रे कामादिपदप्रयोग इत्यत आह। आकृताविति। रेखोपरेखादिसन्निवेशे चित्रतुरग न्यायेनेति भाव. ॥ २१२ ॥

सचकितेति। ननु चरणमुद्रया जिष्णुचरणानुमानमत्र प्रतिभाति। तत्कथमुपमानेनान्तर्भाव इत्यत आह। यदपि चेति। अत्राविशेषस्य चरण-

जिष्णुपदे मृगीदृशामीदृशः स इति अनुमानज्ञानं तदपि उपमानार्थनिबन्धनमेव।

अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गलिङ्गिनोः।
पदेन यत्र कुञ्जेन कुञ्जः पादोऽनुमीयते ॥ २१३ ॥

प्रतिबिम्बं यथा,

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकार लज्जया ॥

अत्र यदा तावदेव सम्बन्धग्रहः कीदृशं स्वं सुखं यादृशमादर्शे प्रतिबिम्बं तदालोकनात् अदृष्टेऽपि स्वसुखे येयमीदृश मे मुख-मिति प्रतिपत्तिः। तदिदमननुभूतार्थविषयम्। यदा पुन-रित्थमाप्तोपदेशाद् यादृश वस्तु तादृशमादर्शादौ प्रतिबिम्बं तदापि प्रियप्रतिबिम्बालोकनादिद तन्मम प्रियप्रतिबिम्बमिति इयं सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपत्तिस्तदपि अननुभूतार्थविषयम्। यदा तु चित्रादिषु अनुभूतस्वसुखदर्शनायाः प्रतिबिम्बदर्शना-दनेन सदृशं मे सुखमिति प्रतिपत्तिर्दृष्टप्रियतमाकारायाश्च प्रतिबिम्बाकारदर्शनादेतदाकारो मम प्रेयानिति प्रतिपत्तिः प्रतिबिम्बसन्निधौ प्रतिबिम्बोदयो दृष्टस्तदिह सन्निहितेन तेन भवितव्यमिति यो व्रीड़ाविकारभूतस्तदानुभूतविषयमेतदुप-मान प्रतिबिम्बमित्याचक्षते ॥ २१४ ॥

---

विशेषप्रतिबन्धे सत्यपि सदृशात् सदृशज्ञानमुत्कट तादृशेन च व्यपदेशो भव-तीत्यर्थ.। एतदेव दार्वाचार्यसम्मत्या दृढयति। अपि चेति ॥ २१३ ॥

प्रतिबिम्बासन्निधाविति। प्रसङ्गायदर्थमनुमानं व्याख्यात तद्दर्शयति। व्रीडाविकार इति। अतएव प्रधानमात्रस्य उपसंहारः ॥ २१४ ॥

प्रत्यक्षादिप्रतीतोऽर्थो यस्तथा नोपपद्यते ।
अर्थान्तरञ्च गमयत्यर्थापत्तिं वदन्ति ताम् ॥ २१५ ॥
सर्वप्रमाणपूर्वत्वादेकशोऽनेकशश्च सा ।
प्रत्यक्षपूर्विकेत्यादिभेदैः षोढ़ा निगद्यते ॥ २१६ ॥

तासु प्रत्यक्षपूर्विका एकशो यथा,

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथाऽनुपपत्त्यैव पयोधरभरस्थितेः ॥

अत्र स्तनभरनितम्बयोर्मध्यं न उपलभ्यते स्तनभारावस्थानञ्च दृश्यते तत्र येयं पयोधरभरस्थितिः सा अन्यथानुपपद्यमाना धारकं मध्यमनुपलभ्यमानं बोधयति सेयं प्रत्यक्षपूर्विका अर्थापत्तिरेकश एवेह विवक्षिता । इयमपि हि एवं बहुशो भवति यत्तदर्थापत्तिलब्धं मध्यं तदपि धारणशक्तिमन्तरेण तत् कर्मासमर्थमिति तस्यापि शक्तिः कल्प्यते । सेयम् अर्थापत्तिपूर्विका अर्थापत्तिः । यस्यायमर्थापत्तिविकल्पस्य मध्यस्य उपलम्भाभावः सोऽपि प्रकारान्तरेण असम्भवत्कान्तिकार्श्ययोरुत्कर्षं ब्रूते

---

अर्थापत्तिं लक्षयति । प्रत्यक्षादिति । प्रमाणप्रतीतस्य अर्थस्य अन्यथाकरणानुपपत्तिज्ञानेन प्रसूतं ज्ञानमर्थापत्तिः । अनुपपद्यमानार्थप्रत्यायकं च प्रमाणं प्रत्यक्षादिभेदात् षट्प्रकारमतः तत्पूर्वाऽर्थापत्तिः अपि षोढा सम्पद्यते । यदर्थान्तरं गमयति तामर्थापत्तिं वदन्तीति । अर्थान्तरगतिरेव अर्थापत्तिरिति व्यक्तम् ॥ २१५ ॥

एकश इति । एकप्रमाणपूर्वा । अनेकशोऽनेकप्रमाणपूर्वा, कथं तर्हि षोढा अत उक्तम् । प्रत्यक्षपूर्विकेत्यादिभेदैरिति । व्याख्यातमेतत् ॥ २१६ ॥

अत्र स्तनभरेति । स्तनभरस्थितिः प्रत्यक्षगृहीता सा चाधारमन्तरेण अनुपपद्यमाना मध्यं कल्पयति । सा च कल्पनाऽर्थापत्तिः । अनुपलभ्यमानमिति । अन्यथा प्रत्यक्षगृहीतेऽर्थे किमर्थापत्त्या । अत्रैव उदाहरणेन एकशो व्याख्यातुं

सा च इयम् अभावपूर्विकाऽनुपपत्तिर्भवति। न च एतदिह शाब्दमपि तु वाक्यार्थसामर्थ्याद् गम्यते ॥ २१७ ॥

प्रत्यक्षादिपूर्विका अनेकशो यथा,

एतदालोक्य लोलाक्षि ! रूपमप्रतिमं तव।
कल्पयामः कलातत्त्वं गुरुतामादिवेधसः॥

अत्र इदं रूपमप्रतिमं तवेति प्रत्यक्षपूर्वता अभावपूर्वता च व्यक्तमेव प्रतीयते तेनेयमनेकशः। अत्रापि येयं रूपस्य अप्रतिमतान्यथानुपपद्यमाना कलातत्त्वगुरुविनिर्मितत्वमात्मनोऽवस्थापयति स उर्वश्यहल्यादिरूपोपमानज्ञानपूर्विका या तत् कर्त्तुः अर्थापत्तिकल्पिता कलातत्त्वगुरुता सापि तथाविधशक्तिकल्पनापूर्विकेति उपमानपूर्विकार्थापत्तिपूर्विका च इयमर्थापत्तिः सापि तत्कर्त्तुर्वेधसः कलातत्त्वगुरुता तथाभूतशक्त्याधारता वा सापि अनुमानत आगमतो वा तस्य कल्प्यत इति अनुमानपूर्विका चेयमर्थापत्तिः। न च एतत् चतुष्टयमिहापि शाब्दमपि तु वाक्यार्थसामर्थ्याद् गम्यते ॥ २१८ ॥

एकशोऽनुमानपूर्विका यथा,

कपोलपुलकेनास्याः सूचितो मदनज्वरः।
मनो निरन्तरासक्तं सख्यः कथयति प्रिये॥

---

शक्यत इत्याह। इयमपीति। शक्तिर्मीमांसकनये नित्या अतीन्द्रिया अभावेऽभावेनैव गृह्यत इति मध्यानुपलम्भोऽभावप्रमाणपूर्वकः। कान्तीति। अद्भुतप्रभावतिरस्कृत हि नयनमासन्नमपि न मध्यग्रहणसमर्थमिति भावः॥ २१७॥

अप्रतिममिति। प्रतिमाशून्यं रूप विशिष्टमेव तव विशेषणांशेऽभावस्य व्यापारः। विशेष्यांशे प्रत्यक्षस्य। पूर्ववत् इह अपि व्याख्यानमाह। अत्रापीति। प्रतिमाभावज्ञानं प्रतिमाज्ञानपूर्वकं प्रतिमा च सादृश्यं तच्च सह शब्दद्वयदर्शनवेद्यमिति अस्ति पूर्वमुपमानम् ॥ २१८ ॥

तत्र योऽयं कपोलपुलकेन अनुमीयमानो मनोभवज्वरः स मनसः प्रिये निरन्तरासक्तिमन्तरेणानुपपन्न इति अनुमानपूर्विकेयमर्थापत्तिः।

अनेकश्च उपमानादिपूर्विका यथा,

त्वदास्येन्दू समौ दृष्ट्वा तदिदं कल्पयामहे।
अन्योन्यगामि लावण्यमनयोरेव केवलम्॥

अत्र त्वदास्येन्दू समौ दृष्ट्वा इति उपमानपूर्वकता अर्थापत्तेः प्रत्यक्षपूर्वता च शब्दत एव प्रतीयते। या च मिथः सादृश्यानुपपत्तिलभ्या लावण्यान्योन्यगामिता सापि तथाविध विधातारमन्तरेण न सङ्गच्छत इत्यादि इहापि पूर्ववद्वाक्यार्थसामर्थ्यतोऽवगन्तव्यम्॥ २१९॥

एकशोऽभावपूर्विका यथा,

एतदास्य विना हास्यं निवेदयति सुभ्रुवः।
प्रियापराधदण्डाना मनो भाजनतां गतम्॥

अत्र सुभ्रुव इत्यनेन विलासवत्याः समस्तप्रशस्तलक्षणयोगो लक्ष्यते। तथाविधायाश्च वक्त्रे विलासहासस्य अभावोऽनुपपद्यमानः शोकव्यतिरिक्तमात्मकारणं कल्पयतीति अभावपूर्विकेयमर्थापत्तिः॥ २२०॥

अनेकशोऽर्थापत्त्यादिपूर्विका यथा,

दृष्ट्वा विभ्रमिणीमेता विष्णो लीलागुरुं स्मरम्।
स्मरश्च मृगशावाक्ष्या मनस्यस्याः कृतास्पदम्॥

अत्र विभ्रमिणीति प्रशंसायां मत्वर्थीयस्तेन विभ्रमाणाम्

---

हास्याभावस्य अन्यथापि उपपत्तेः कथमर्थापत्तिरित्यत आह। अत्र सुभ्रुव इति॥ २१९॥ २२०॥

उत्कर्षो लक्ष्यते। ते च अन्योपदेशादसम्भवन्तो मन्मथमुपाध्यायं बोधयन्ति। तस्याग्रतः पार्श्वतो वा अनुपलभ्यमानस्य तन्मनसि अवस्थानं लक्ष्यते। सेयमाद्या प्रत्यक्षपूर्विका द्वितीया च अर्थापत्तिपूर्विका ष्यर्थापत्तिर्भवति। अयमेव च मनोभूर्मनसि कामिनीनां सम्भवतीति आप्तोपदेशादागमपूर्विकापि भवति ॥२२१॥

असत्ता या पदार्थानामभावः सोऽभिधीयते।
प्रागभावादिभेदेन स षड्विध इहेष्यते ॥ २२२ ॥

तेषु प्रागभावो यथा,

सग्गं अपारिजाअं कोत्थुहलच्छीविरहिअं महुमहस्स उरम्।
सुमरामि महणपुरओ अमुद्ध अन्दञ्च हरअडापब्भारम् ॥
२२३ ॥ (ञ)

प्रध्वंसाभावो यथा,

धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥२२४॥

इतरेतराभावो यथा,

कर्णोत्पलं न चक्षुस्ते न चक्षुः श्रवणोत्पलम्।
इति जानन्नपि जनो मन्यते नेत्रदीर्घताम् ॥२२५॥

---

(ञ) स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः।
स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥

---

इत्थमेव अन्यथोपपत्तिमाशङ्क्याग्रे व्याचष्टे। अत्र विभ्रमिणीमिति मत्वर्थीयार्थमाह। प्रश्नसायामिति ॥ २२१ ॥

अभावं लक्षयति। असत्तेति। प्रागसत्त्वमुत्तरासत्त्वमिति असत्तारूपेणैव प्रागभावादयो व्यवतिष्ठन्ते इतरेतराभावेऽपि अन्यरूपतया अन्यस्याभाव इति असत्तात्मकत्वम्। प्रागभावादयः पूर्वोल्लिखिताश्चत्वारः। अत्यन्ताभावविशेषसामान्याभावाभ्यां सह षडभावाः। तयोर्विशेषमग्रे वक्ष्यामः ॥ २२२ ॥

सग्गं अपारिजाअमिति निगदव्याख्यातं। प्रागभावः। यथा अभावपूर्विकायाम् अर्थापत्तौ कारणभेदानुमानमुक्तं तथा अत्रापि बोद्धव्यं पारिजातप्राग-

अत्यन्ताभावो यथा,

जज्जस्स होइ सारं तं सो देइत्ति किमत्थ अच्छेरम्।
अणहोत्तं पिहु दिसन्तइ दोहग्गं सवत्तीणम् ॥२२६॥ (ट)

अन्ये पुनरन्यथा अत्यन्ताभावमाचक्षते। यथा,

प्रसीद सद्यो मुञ्चेमञ्चण्डिमानं मनोगतम्।
दृष्टमात्रेऽपि ते तत्र रोषः खकुसुमायते ॥२२७॥

सामर्थ्याभावो यथा,

मानुषेषु कथं वा स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योति रुदेति वसुधातले ॥

त एते षडपि निगदेरेव व्याख्याताः ॥ २२८ ॥

अभावाभावोऽपि अभाव एव। तत्र प्रागभावप्रध्वंसो यथा,

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः ॥ २२९ ॥

---

(ट) यद्यस्य भवति सार त स ददाति किमत्राश्चर्यम्।
अभवदपि खलु दत्त तया दौर्भाग्य सपत्नीनाम् ॥

---

भावस्य प्रमेयरूपता व्यक्तैव। अभावोऽभावेनैव प्रतीयत इति। दर्शने तत्कारण-तया शब्दानुपात्तोऽपि योग्यप्रमाणाभावोऽवगम्यते। एवमुत्तरेषु अपि स्वयमूहनीयम् ॥ २२३—२२६ ॥

स्थानान्तरप्रमितस्य स्थानान्तरे त्रैकालिकोऽभावविशेषो अत्यन्ताभाव इति दर्शनमाश्रित्य चतुष्टयमध्यपाती तावदत्यन्ताभाव उदाहृतः। इदानीं पञ्चमाभावोचितविशेषमत्यन्ताभावं दर्शयति। अन्ये पुनरिति। सौगतादय। अत्यन्तासत्प्रतियोगिकोऽभावोऽत्यन्ताभाव.। यथा खपुष्पस्याभाव इति उदाहरण स्फुटम् ॥ २२७ ॥

सामर्थ्याभावो योग्यताभावः। अनेनैव रूपेण सरसतामासादयन्नुपात्तः ॥ २२८ ॥

अभाव एवेति। अभावव्यवहारपात्रमेव तथाभूतस्यैव लक्षणमित्युक्तं पुरस्तात् ॥ २२९ ॥

प्रध्वंसप्रागभावो यथा,

न मर्त्यलोकस्त्रिदिवात् प्रहीयते म्रियेत नाम्ने यदि वल्लभो जनः ॥ २३० ॥

प्रध्वंसप्रध्वंसो यथा,

निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति ॥ २३१ ॥

प्रध्वंसप्रागभावप्रध्वंसो यथा,

नामिलितमस्ति किञ्चित्काञ्चीदेशस्य सर्वथा नाथ ।
प्रसरतु करस्तवायं प्रकृतिकृशे मध्यदेशेऽपि ॥ २३२ ॥

प्रध्वंसप्रध्वंसस्य प्रध्वंसो यथा,

एषा प्रवासं कथमप्यतीत्य
याता पुनः संशयमन्यथैव ।
को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवान्यपि धातुमीष्टे ॥ २३३ ॥

इतरेतराभावाभावो यथा,

शासनेऽपि गुरुणि व्यवस्थित कृत्यवस्तुनि नियुङ्क्ष्व कामतः ।
त्वत्प्रयोजनधन धनञ्जयादन्य एष इति मा च मावगाः ॥

---

वल्लभजनमरण प्रध्वस. स नञा निषिध्यते स तु निषेध. प्रागसत्त्वरूप एव । मृत· स चेदिति मरणोत्तरमभावी भवन् प्रध्वसी भवति । स च असम्भवन्नपि शब्देन सम्भाव्यमानः कान्तिकारण भवतीति अलङ्कारकक्षामारोहति ॥२३० २३१॥

प्रध्वसप्रागभावाभाव इति । मरणेन प्रध्वसन तस्याभावः समस्तेन नञा तस्यापि अभावो भिन्नेन प्रतिपादित ॥ २३२ ॥

प्रध्वसस्य प्रध्वसाभाव इति । कथमपीत्यनेन प्रवासे दशम्यवस्था कटाक्षिता तस्यात्यय. प्रध्वसप्रध्वस पुन. सङ्कममित्यनेन तस्यापि प्रध्वस. ॥ २३३ ॥

अत्यन्ताभावस्य सामर्थ्याभावस्य च प्रध्वंसाभावो यथा,

अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः ॥

एते नातिदुर्बोधा इति न व्याहृताः ॥ २३४—२३५ ॥

अर्थालङ्कृतयोऽप्येताश्चतुर्विंशतिसङ्ख्यया ।
कथिताः काव्यविज्ञानां चित्तप्रह्लादहेतवे ॥ २३६ ॥

इति श्रीमहाराजाधिराजश्रीमद्भोजराजविरचिते
सरस्वतीकण्ठाभरणनाम्नि अलङ्कारशास्त्रे अर्थालङ्कारः
तृतीयः परिच्छेदः ॥

---

सुबोधमन्यत् ॥ २३४—२३६ ॥

उक्तार्थालङ्काराणां सङ्ग्रहमाह । अर्थालङ्कृतय इति ॥

श्रीरामसिंहदेवाज्ञामादाय रचितो मया ।
दर्पणाख्यः सदा तेन तुष्यतु श्रीसरस्वती ॥

रत्नेश्वरो नाम कवीश्वरोऽसौ विराजते काव्यसुधाभिषेके ।
दुस्तर्कचक्राहतदुर्विदग्धा वसुन्धरा पल्लवयन्नजस्रम् ॥

अद्य स्फुरतु वाग्देव्याः कण्ठाभरणकौतुकम् ।
मयि प्रत्यग्रमनोवृत्तौ कुर्वाणे रत्नदर्पणम् ॥

इति श्रीमन्महाराजरामसिंहस्य आज्ञावशंवदेन पण्डितवरेण श्रीरत्नेश्वरेण
विरचिते दर्पणाख्ये सरस्वतीकण्ठाभरणविवरणेऽर्थालङ्कार
तृतीयः परिच्छेदः ।

---

# सरस्वतीकण्ठाभरणे

## चतुर्थः परिच्छेदः ।

शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ।
विशिष्टोऽर्थः कवीनां स उभयालङ्क्रिया मता ॥ १ ॥

उपमा रूपकं साम्यं संशयोक्तिरपह्नुतिः ।
समाध्युक्तिः समासोक्तिरुत्प्रेक्षाऽप्रस्तुतस्तुतिः ॥ २ ॥

सतुल्ययोगितोल्लेखः ससहोक्तिः समुच्चयः ।
साक्षेपोऽर्थान्तरन्यासः सविशेषा परिष्कृतिः ॥३॥

दीपकक्रमपर्य्यायातिशयश्लेषभाविकाः ।
संसृष्टिरिति निर्दिष्टास्ताश्चतुर्विंशतिर्बुधैः ॥ ४ ॥

तत्र, प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः ।
भूयोऽवयवसामान्ययोगः सेहोपमा मता ॥ ५ ॥

---

वाग्देवीं हृदये ध्यात्वा श्रीजीवानन्दशर्मणा ।
चतुर्थाख्ये परिच्छेदे व्याख्येयं क्रियते मया ॥

शब्दालङ्कारा अर्थालङ्काराश्च उक्ता इदानीं उभयालङ्कारान् निर्दिशति शब्देभ्य इति । शब्देभ्यः श्रूयमाणपदप्रकृतिभ्यः पदार्थेभ्यश्च तत्तच्छब्दनिष्पन्नपदप्रतीयमानेभ्यः अर्थेभ्यः यः उपमादिः प्रतीयते अनुभूयते, स कवीनां विशिष्टः चमत्कारकृदित्यर्थः अर्थः वस्तु । सा उभयालङ्क्रिया शब्दार्थालङ्कार इत्यर्थः मता कथिता विधेयप्राधान्यात् स्त्रीत्वम् ॥ १ ॥

तस्य चतुर्विंशतिविधत्वमित्याह उपमेति । १ उपमा २ रूपकं ३ साम्य ४ संशयोक्ति ५ अपह्नुति ६ समाध्युक्ति ७ समासोक्ति ८ उत्प्रेक्षा ९ अप्रस्तुतस्तुति १० तुल्ययोगिता ११ उल्लेख १२ सहोक्ति १३ समुच्चय १४ आक्षेप. १५ अर्थान्तरन्यास १६ विशेष १७ परिष्कृति १८ दीपक. १९ क्रम २० पर्य्याय २१ अतिशय २२ श्लेष २३ भाविक. २४ संसृष्टि । इति ताः चतुर्विंशतिः उभयालङ्क्रियाः बुधैः विद्वद्भिः निर्दिष्टाः निरूपिताः । २ । ३ । ४ ।

तासु उपमां लक्षयति तत्रेति प्रसिद्धेः कविसमयस्येति भावः, अनुरोधेन वशत

एकाभिधीयमाने स्यात् तुल्ये धर्मे पदार्थयोः।
प्रतीयमानेऽप्यपरा द्विविधाऽपि च सा त्रिधा ॥ ६ ॥
पदवाक्यप्रपञ्चाख्यैर्विशेषैरुपपद्यते।
पृथगष्टविधत्वेन ताश्चतुर्विंशतिः पुनः ॥ ७ ॥
समासात् प्रत्ययाच्चैव द्विविधा स्यात् पदोपमा।
या समासोपमा तत्र चतुर्धा साभिपद्यते ॥ ८ ॥
इवार्थान्तर्गतेरेका सामान्यान्तर्गतेः परा।
अन्तर्भूतोभयार्थान्या सान्या सर्वसमासभाक् ॥ ९ ॥

तासु अन्तर्भूतेवार्था यथा,—

सुखमिन्दुसुन्दरं ते बिसकिसलयकोमले भुजालतिके।
जघनस्थली च सुन्दरि! तव शैलशिलाविशालेयम् ॥

---

अर्थयोः उपमानोपमेययोः परस्परं अन्योन्यं यः भूयसा बहुतराणाम् अधिकानामित्यर्थः अवयवानां अङ्गानां सामान्यानां साधारणधर्माणाञ्च योगः समावेशः सा इह शास्त्रे अलङ्कारशास्त्रे इत्यर्थः उपमानता उपमा उक्तेति शेषः ॥ ५ ॥

तद्भेदान् क्रमेण दर्शयति एकेत्यादि। पदार्थयोः उपमानोपमेययोः तुल्ये धर्मे अभिधीयमाने अभिधया प्रतिपाद्यमाने सति एका एकप्रकारा, अप्रतीयमाने अभिधया अप्रतिपाद्यमाने इत्यर्थः अपि अपरा अन्यप्रकारा। तदेवं द्विविधापि वाच्यप्रतीयमानत्वभेदेन द्विप्रकारापि सा उपमा पदवाक्यप्रपञ्चाख्यैः विशेषैः त्रिधा त्रिप्रकारा उपपद्यते भवति। तदेवं षट्प्रकारा उपमा, ततश्च पृथगष्टविधत्वेन अष्टभेदेन चतुर्विंशतिः पुनः उपमा भवति ॥ ७ ॥

समासादिति। तत्र पदोपमा समासात् समासगतत्वात् प्रत्ययात् प्रत्ययगतत्वाच्च द्विविधा स्यात्। तत्र या समासोपमा समस्तपदगता उपमा सा चतुर्धा अभिपद्यते भवति। तत्र इवार्थस्य अन्तर्गतेः समासान्तर्गतत्वात् एका एकप्रकारा सामान्यस्य साधारणधर्मस्य अन्तर्गतेः समासस्येति भावः परा द्वितीयेत्यर्थः। अन्या तृतीया अन्तर्गतौ समासस्येति भावः उभयौ इवार्थस्य सामान्यधर्मस्य चेत्यर्थः अर्थौ यस्याः तथाभूता। अन्या चतुर्थी इत्यर्थः सर्वसमासभाक् समस्तपदेनैव सर्वेषामिवार्थसाधारणधर्मोपमानानां त्रयाणामेव भजनादिति भावः ॥ ८॥ ९ ॥

सुखमिति। हे सुन्दरि! ते तव सुखम् इन्दुश्चन्द्रः स इव सुन्दरं कान्तं मुखं

अत्रेन्दुरिव सुन्दरमिन्दुसुन्दरमितीवार्थः, उपमानानि सामान्य-वचनैः इति समासेनैवोक्तः। एवं बिसकिसलय इव कोमले शैलशिलेव विशालेति। सेयमन्तर्गतेवार्था नाम समासोपमासु पदोपमाभक्तिः ॥ १० ॥

अन्तर्भूतसामान्या यथा,—

चन्द्रसरिसं मुहं से अमअसरिच्छो अ मुहरसो वि स्सो।
सकअग्गहरहसुज्जलचुम्बणं कस्स सरिसं से ॥

अत्र चन्द्रेण सदृशं चन्द्रसदृशं मुखम्, अमृतेन सदृक्षः अमृतस-दृक्षो मुखरस, इति समासे सुन्दरमधुरादि सामान्यशब्दप्रयोगो न श्रूयते प्रतीयते च सदृशादिद्योतकात् इति सामान्यधर्म्मस्य सौन्दर्य्यमाधुर्य्यादेः उपमाने प्रसिद्धस्य उपमेये समासेनैव प्रति-पादितत्वात् इयमन्तर्भूतसामान्या नाम समासोपमासु पदो-पमाभक्ति ॥ ११ ॥

अन्तर्भूतोभयार्था यथा,—

कमलकरा रम्भोरु कुवलअणअणा मिअङ्कवअणा सा।

---

बाहु लतिके इव मृनालतिके बिसकिसलये इव मृणालपल्लवाविव कोमले तत्र इय जघनस्थली नितम्बदेशश्च कटिपुरोभागो वा शैलस्य पर्वतस्य शिलेव विशाला महती गुर्व्वी इत्यर्थ। इय समासस्य अन्तर्गत इवार्थ इति पदोपमाभक्ति पद घटिता उपमा तस्या भक्तिर्विभाग ॥ १० ॥

चन्दसरिसमिति। चन्द्रसदृश मुखमस्या अमृतसदृचश्च मुखरसोऽपि स'।
सकचग्रहरसोज्ज्वलचुम्बन कस्य सदृश तस्या ॥ इति स

चन्द्रेति। अस्या कान्ताया' मुख चन्द्रेण सदृश तुल्य स मुखस्य रस अपि अमृतेन सुधया सदृच सदृश। तस्या सकचग्रह केशग्रहणपुर सरमित्यर्थ रसोज्ज्वल रसेन रागेण उज्ज्वलम् उद्रिक्त चुम्बन कस्य वस्तुन' सदृश तुल्यम् ? केन वस्तुना उपमीयते इत्यर्थ न केनापीति भाव। इयम् अन्तर्भूत समासस्येति भाव सामान्य साधारणधर्म्म सौन्दर्य्यादिर्यस्या तथाभूता चन्द्रसदृशसुन्दरमिति अमृत सदृचमधुर इति वक्तव्ये सुन्दरादिपदाप्रयोगादिति भावः ॥ ११ ॥

कहं णु णवचम्पअङ्गी मुणालबाहू पि आतवइ ॥

अत्र कमलमिव ताम्रौ रम्भा इव पीवरौ कुवलयमिव श्यामे मृगाङ्क इव प्रेक्षणीयं नवचम्पकमिव गौरं मृणालमिव कोमलौ करौ ऊरू नयने वदनम् अङ्गं बाहू यस्याः सा तथोक्तेति अन्यपदार्थेन समासेनैव द्योतकसामान्ययोः उक्तत्वात् इयमन्तर्भूतेव सामान्या नाम समासोपमासु पदोपमाभक्तिः ॥ १२ ॥

सर्वसमासा यथा,—

शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कथमनिशं रम्भागर्भाभिरामोरुः ॥

अत्र उपमानोपमेयधर्माणामिन्दुसुन्दरादिपदैः इवार्थस्य समासेनैवाभिधानं सर्वं समासे स्यादिति सर्वसमासोपमा नाम इयं समासोपमासु पदोपमाभक्तिः ॥ १३ ॥

या प्रत्ययोपमेत्युक्ता काव्यविद्भिः पदोपमा ।
चतुर्धा भिद्यते सापि प्रत्ययार्थप्रभेदतः ॥ १४ ॥

---

कमलेति प्रा० । कमलकरा रम्भोरु कुवलयनयना मृगाङ्कवदना सा ।
कथं नु नवचम्पकाङ्गी मृणालबाहुरपि आतपतीव ॥ स्पष्टम् ।

इयम् अन्यपदार्थेन भिन्नपदार्थबोधकेन समासेनैव बहुव्रीहिणैवेत्यर्थः द्योतकसामान्ययोः इवसाधारणधर्मयोरित्यर्थः ॥ १२ ॥

शरदिति । शरदिन्दुरिव सुन्दरं मुखं यस्याः सा कुवलयदले इव नीलोत्पलपत्रे इव दीर्घे आयते लोचने यस्याः तथाभूता रम्भायाः कदल्याः गर्भाविव अभ्यन्तरभागाविव अभिरामौ ऊरू यस्याः तथाविधा सा कान्तेति शेषः मे मम मनः कथम् अनिशं निरन्तरं दहति अतिशयेन तापयतीत्यर्थः । इयम् उपमानसामान्यधर्मोपमेयानां समासेन द्योतकस्य इवार्थस्य अभिधानात् सर्वसमासा सर्वेषां समासेनैव सर्वेषां औपम्यसाधकानां यस्यां तथाभूता ॥ १३ ॥

प्रत्ययोपमाभेदमाह येति । काव्यविद्भिः या पदोपमा प्रत्ययोपमा प्रत्ययनिष्पन्नत्वात् प्रत्ययसाध्या पदोपमेत्यर्थः इति उक्ता कथिता सापि प्रत्ययार्थानां प्रभेदतः पार्थक्यात् चतुर्धा भिद्यते पृथक्क्रियते ॥ १४ ॥

प्रत्ययो ह्युपमेये स्यादुपमानेऽपि कश्चन ।
तत् सामान्ये भवेत् कश्चिदिवार्थे कश्चिदिष्यते ॥ १५ ॥

तेषां वशात्तदुपमा भवेत् तद्व्यपदेशभाक् ।
उदाहरणमेवास्या रूपव्यक्तये निदर्श्यते ॥ १६ ॥

तत्र प्रत्ययस्य उपमेयस्यार्थे यथा,—

हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः ।
खरनादी मयूरोऽपि त्वञ्चेद्वदसि वाग्मिनि ॥

अत्र कर्त्तर्य्युपमाने इत्यनेन यदा उपमाने उपपदे ध्वाङ्क्ष इव विरौतीति सामानाधिकरण्येन कर्त्तर्य्येव प्रत्ययः तदा उपमेयस्य अर्थो भवति । एवमुष्ट्रक्रोशी खरनादीत्येतयोरपि द्रष्टव्यम् । सा इयम् उपमेयार्थप्रत्यया नाम प्रत्ययोपमासु पदोपमाभक्तिः ॥१७

---

प्रत्यय इति । हि यत प्रत्यय उपमेये स्यात् तथा कश्चन कोऽपि प्रत्यय उपमाने स्यात् । कश्चित् प्रत्यय तयो उपमेयोपमानयो. सामान्ये साधारणधर्मे भवेत् कश्चित् प्रत्यय इवार्थे इष्यते ॥ १५ ॥

तेषामिति । तेषा प्रत्ययाना वशात् हेतुत्वात् तत् उपमाप्रत्ययोपमा इत्यर्थं तद्व्य- पदेशभाक् तत्तत्प्रत्ययनामशालिनी भवेदित्यर्थः । अस्या प्रत्ययोपमाया उदा- हरणमेव निदर्शनमेव रूपस्य आकारस्य व्यक्तै प्रकटनाय निदर्श्यते निरूप्यते ॥१६॥

हंसेति । हे वाग्मिनि सुवचने । मधुरभाषिणीत्यर्थ चेत् यदि त्व वदसि जल्पसि तदा हस ध्वाङ्क्ष इव द्रोणकाक इव विरौतीति तथाभूत द्रोणकाकवत् कर्कशनाद इति भाव. स्यात् भवेत् । कोकिलश्च उष्ट्र इव क्रोशतीति उष्ट्रक्रोशी उष्ट्रवत् विस्वरस्वन इत्यर्थः मयूर अपि खर गर्द्दभ. स इव नदतीति खरनादी स्यादित्य- न्वय । अत्रेति कर्त्तरि उपमाने इत्यनेन इति सूत्रेणेत्यर्थ । प्रत्ययः इनिप्रत्यय इत्यर्थ । उपमेयस्य हंसस्येति भाव अर्थे अर्थबोधकत्वे इत्यर्थ भवति असौ प्रत्यय इति शेष । तथा उष्ट्रक्रोशीत्यत्र खरनादीत्यत्र च उपमाने उपपदे उष्ट्र इव क्रोशतीति खर इव नदतीत्येतयोः सामानाधिकरण्येन कर्त्तर्य्येव इनिप्रत्ययः उपमेययोः कोकिलमयूरयोरेवार्थबोधकतेति भाव. । उपमेयार्थप्रत्यया उप- मेयस्य अर्थे प्रत्ययो यस्या तथाभूतेत्यर्थः ॥ १७ ॥

प्रत्ययस्थं उपमानार्थे यथा,—

पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता।
चक्रदेशीयजघना सा स्वर्गेऽपि न दृश्यते ॥

अत्र पूर्णेन्दुरिव पूर्णेन्दुः इत्यादिकया उपचारवृत्त्या यद्यपि पूर्णेन्दु-प्रभृतय उपमानशब्दा अपि उपमेयेषु वदनादिषु वर्त्तन्ते तेभ्यश्च यद्यपि स्वार्थे एव स्वार्थिकाः कल्पबादयो भवन्ति। तथापि ते शब्दशक्तिस्वाभाव्याद्‌ गुणभूतमुपमानार्थमात्रं ब्रुवते। यथा शुक्लादिभ्यः तरबादयः। तथा हि अयं शुक्लोऽयञ्च शुक्लोऽय-मनयोः शुक्लतर इत्युक्ते शौक्लास्यैव प्रकर्षो गम्यते न शौक्लवतः। सेयमुपमानार्थप्रत्यया नाम प्रत्ययोपमासु पदोपमाभक्ति. ॥१८॥

सामान्यार्थप्रत्ययेन यथा,—

सूर्य्यायति सुधारश्मिर्मन्मथोऽतिमृतायते।
मृतस्य कान्ताविरहे स्वर्गोऽपि नरकीयति ॥

अत्र उपमानादाचारे इत्यादिभिः सूर्य्यादिभ्यः क्यजादय आचारलक्षणक्रियाविशेष उत्पद्यमाना उपमानोपमेययोः सामान्य एव उत्पद्यन्त इति सेयं सामान्यार्थप्रत्यया नाम प्रत्ययोपमासु पदोमाभक्तिः ॥ १९ ॥

---

पूर्णेति। पूर्णेन्दु' पूर्णचन्द्र तस्मादीषदून तत्सदृशमित्यर्थ एवमन्यत्र, वदन यस्या. तथोक्ता मृणाली विसलता तस्या ईषदूना दोर्लता भुजवल्ली यस्या तथाविधा चक्रं मण्डलाकारविशेष. तस्मादीषदून जघन यस्या. तथाभूता सा तादृशीत्यर्थ' कान्ता स्वर्गेऽपि सुरलोकेऽपि न दृश्यते। अत्र प्रत्ययाना कल्पादीना-मुपमानपदेभ्यो विधीयमानाना उपमानप्रकर्षप्रतिपादकत्वादुपमानार्थतेति भाव ॥ १८ ॥

सूर्य्यायतीति। कान्ताविरहे मृतस्य मृतवत् स्थितस्येत्यर्थ सुधारश्मिश्चन्द्र' सूर्य्यायति सूर्य्य इवाचरति मन्मथ काम अतिमृतायते अतिशयेन मृत इवाचरति मृतमपि आत्मान तदुपरि प्रहरतीति भाव.। तथा स्वर्गोऽपि नरकीयति नरक-मिवाचरति। स्वर्गेऽपि न सुखमिति भावः। इय सामान्यार्थप्रत्यया सामान्यो

इवार्थप्रत्ययेन यथा,

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

अत्र तेन तुल्यं क्रिया चेद्वतिः इत्यनेन चन्द्रशब्दात् चन्द्रेण तुल्यं दृश्यत इतीवार्थ एव प्रत्ययो न तु तुल्यक्रियार्थे अन्यथा दृश्यत इति इवार्थ इव तुल्यक्रिया प्रयोगोऽपि न स्यात्। तदप्रयोगेऽपि च गौरिव गवय इत्यादौ वतिः प्रसज्येत। सेयमिवार्थप्रत्यया नाम प्रत्ययोपमासु पदोपमाभक्तिः ॥ २० ॥

वाक्योपमा तु या तत्र द्वैविध्यं सापि गच्छति ।
एका पदार्थयोः साम्ये परा वाक्यार्थयोर्मिथः ॥ २१ ॥

आद्या पूर्णा च लुप्ता च लुप्तपूर्णा तथैव च ।
पूर्णलुप्तेति चाख्याता कविमुख्यैश्चतुर्विधा ॥ २२ ॥

तत्र, पूर्णा सामान्यधर्मस्य प्रयोगे द्योतकस्य च ।
उपमानस्य च भवेदुपमेयस्य चैव हि ॥ २३ ॥

---

साधारणौ अर्थौ आचारलक्षणौ तादृशौ प्रत्ययौ क्यच्क्यन्तौ यस्या तथा भूता ॥ १९॥

एक इति। एक एव अद्वितीय एव भूतात्मा जीवात्मा भूते भूते प्रतिभूत व्यवस्थित' जलचन्द्रवत् जलप्रतिविम्बितचन्द्रवत् एकधा एकप्रकार बहुधा बहुप्रकारश्च दृश्यते। इयम् इवार्थप्रत्यया इव शब्दस्य अर्थ इव अर्थो यस्य तादृश प्रत्यय यस्या तथाभूता ॥ २० ॥

वा० ेति। तत्र उपमास्वित्यर्थ या तु वाक्योपमा वाक्यघटिता उपमा, [illegible] द्वविध्य गच्छति प्राप्नोति एका पदार्थयो मिथ परस्पर साम्ये [illegible] वाक्यार्थयो मिथ साम्ये सादृश्ये भवतीति शेष ॥ २१ ॥

आद्येति। आद्या प्रथमा पदार्थयो' साम्यघटितेत्यर्थः; [illegible] पूर्णा च तथा पूर्णलुप्ता चेति कविमुख्ये. [illegible] कथिता ॥ २२ ॥

यथा, कमलमिव चारुवदनं मृणालमिव कोमलं भुजायुगलम्।
अलिमालेव सुनीला तथैव मदिरेक्षणे कवरी।

अत्र कमलमृणालालिमालादीनामुपमानद्योतकतुल्यधर्मोपमेयवाचकानां चतुर्णामपि पदाना पृथक् पृथक् प्रयोगे पदार्थयोः सादृश्यस्याभिधीयमानत्वात् इयं पूर्णा नाम पदार्थोपमासु वाक्योपमाभक्तिः॥ २४॥

लोपे सामान्यधर्मस्य द्योतकस्य च योपमा।
प्रतीयमानसादृश्ये द्वयोर्लुप्तेति तां विदुः॥ २५॥

यथा,—न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे।
न केसराणि कान्ताया इमास्ता दन्तपङ्क्तयः॥

अत्र कान्तामुखादौ उपमेये पद्मादिविपर्य्ययज्ञानप्रत्याख्यानेन इवादीनामभावेऽपि कान्त्यादिलुप्तधर्मप्रतीतेर्लुप्ता नाम इयं पदार्थोपमासु वाक्योपमाभक्तिः॥२६॥

---

पूर्णां लक्षयति तत्रेति। तत्र तासा मध्ये सामान्यधर्मस्य द्योतकस्य इवादेः उपमानस्य उपमेयस्य च प्रयोगे उपादाने इति यावत् पूर्णा भवतीति शेष॥ २३॥

कमलमिति हे मदिरेक्षणे। मत्तखञ्जनलोचने। मदिरो मत्तखञ्जन इति कोष. वदनं मुख कमलमिव चारु सुन्दरम्। भुजायुगल मृणालमिव कोमल मृदुलं तथा कवरी केशपाशः अलिमालेव भ्रमरपङ्क्तिरिव सुनीला अतिकृष्णा। तथेति सर्वत्राध्याहार्य्यम्। अत्र पदार्थयोः कमलवदनाद्या मृणालभुजयो अलिमालेव केशपाशयो उपमानोपमेययोः द्योतकस्य इवशब्दस्य साधारणधर्मस्य चार्वादेश्च प्रयोगात् पूर्णोपमेति भाव॥ २४॥

लुप्तां लक्षयति लोपे इति सामान्यधर्मस्य द्योतकस्य च लोपे अप्रयोगे इति यावत् या उपमा द्वयोः उपमानोपमेययोः प्रतीयमानसादृश्ये साम्यप्रतीता वित्यर्थः ता उपमा लुप्तेति विदुः जानन्ति॥ २५॥

उदाहरति यथेति। इद पद्म न मुखमेव। इमौ भृङ्गौ न इमे चक्षुषी, न केसराणि न किञ्जल्काः, इमास्ता दन्तपङ्क्तयः। कान्ताया इति सर्वत्र अन्वेति। अत्र सामान्यधर्मस्य कान्तादेर्द्योतकस्य च इवादेः अप्रयोगात् लुप्तोपमा॥ २६॥

लोपे सामान्यधर्मस्य लुप्तपूर्णेति गद्यते ।

यथा,—राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥

अत्र सामान्यधर्मेऽपि लुप्ते प्रतीयमानसादृश्यादेव पदार्थयोः उपमानोपमेयभावस्य परिपूर्णत्वे लुप्तपूर्णा नाम इयं पदार्थोपमासु वाक्योपमाभक्तिः ॥ २७ ॥

द्योतकस्य तु लोपे या पूर्णा लुप्तेति सा स्मृता ॥ २८ ॥

यथा,—त्वन्मुखं पुण्डरीकञ्च फुल्ले सुरभिगन्धिनी ।
कोमलापाटलौ तन्वि । पल्लवश्चाधरश्च ते ॥

अत्र तन्त्रेण सदृशयोः अनभिधानात् सादृश्यस्य पुनरुपमानोपमेयभावविवक्षा तेन श्लेषतोऽन्यत्वे सति इतरेतरयोगेन उपमानोपमेययोः एकशेषेण च तद्विशेषणयोः समुदायेनाभिधानात् इवादिमन्तरेणापि उपमानादीनां चतुर्णामपि पूर्णत्वे सति उक्तार्थत्वात् इवादिर्लुप्यत इति पूर्णलुप्ता नाम इयं पदार्थोपमासु वाक्योपमाभक्तिः ॥ २९ ॥

यापि वाक्यार्थयोः साऽपि चतुर्धैकेवशब्दिका ।
नैकेवशब्दिकेवादिशून्या वैधर्म्यवत्यपि ॥ ३० ॥

---

लुप्तपूर्णां लक्षयति लोपे इति । सामान्यधर्म्मस्य लोपे लुप्तपूर्णेति गद्यते कथ्यते । उदाहरति यथेति । हे कान्ते । इति अध्याहार्य्यम् । ते तव वक्त्रं वदनं राजीवमिव पद्ममिव नेत्रे नीलोत्पले इव । ऊरू च रम्भास्तम्भाविव कदलिकाण्डाविव, स्तनौ करिकुम्भाविव । अत्र सामान्यधर्म्मं काण्डत्वादिर्लुप्त इति लुप्तपूर्णेति ॥ २७ ॥

पूर्णलुप्तां लक्षयति द्योतकस्येति । द्योतकस्य इवादेर्लोपे अप्रयोगे या उपमा सा पूर्णलुप्तेति स्मृता कथिता ॥ २८ ॥

उदाहरति यथेति । हे तन्वि । तव मुखं पुण्डरीकं पद्मञ्च फुल्ले विकसिते सुरभिगन्धी ययो तथाभूते । पल्लवश्च ते अधरश्च कोमलापाटलौ कोमलौ आपाटलौ आरक्तौ चेत्यर्थः । अत्र द्योतक इवादिशब्दोऽप्रयुक्तः ॥ २९ ॥

तासु एकेवशब्दा यथा,

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।

आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥

अत्र हिमवत्पाण्ड्ययोर्निर्झरहारयोर्बालातपहरिचन्दनयोश्च परस्परमुपमानोपमेयविवक्षायां विशेषणविशेष्यभावपरिकल्पनेन वाक्यार्थयोर्द्वयोरेव कल्पितत्वात् एकेनैव इवशब्देन तयोः परस्परमुपमानोपमेयभावोऽभिहित इतीयम् एकेवशब्दा नाम वाक्यार्थोपमासु वाक्योपमाभक्तिः॥ ३१॥

अनेकेवशब्दा यथा,—

दिने दिने सा परिवर्द्धमाना लब्धोदया चान्द्रमसीव रेखा।

पुपोष लावण्यमयान्विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि॥

अत्र क्रियापदस्य वाक्यार्थद्वयैकतापत्तिहेतोः सकर्मकत्वात् कर्त्तुः कर्मणश्च उपमानात् पृथक् इवशब्दप्रयोग इति सेयमभिधीयमानसादृश्या अनेकेवशब्दा नाम वाक्यार्थोपमासु वाक्योपमाभक्तिः॥ ३२॥

---

येति। वाक्यार्थयोः साम्येऽपि उपमा सापि चतुर्धा चतुःप्रकारा भवति एक इवशब्दः यस्या सा एकेवशब्दिका एका। नैके बहव इवशब्दा यस्या सा नैकेवशब्दिका द्वितीया। इवादिशून्या तृतीया। वैधर्म्यवती विरुद्धधर्मशालिनी चतुर्थी॥ ३०॥

उदाहरति पाण्ड्य इति। अंशे स्कन्धदेशे अर्पितः निहितः लम्बः लम्बमान इत्यर्थः हारो यस्य तथोक्तः हरिचन्दनेन रक्तचन्दनविशेषेण क्लृप्तः रचितः अङ्गरागः अङ्गविलेपनं येन यस्य वा तथाभूतः। अयं पाण्ड्यः तदाख्यदेशाधिपतिरित्यर्थः बालातपेन रक्तः सानुः प्रस्थभागः यस्य तथाविधः निर्झरोद्गारेण सह वर्त्तमानः सनिर्झरोद्गारः अद्रिराज इव पर्वतराज इव आभाति शोभते। रघुवंशे इन्दुमतीस्वयम्बरे इन्दुमतीं प्रति सख्या उक्तिरियम्॥ ३१॥

दिने इति। दिने दिने प्रतिदिनं परिवर्द्धमाना वृद्धिं गच्छन्ती लब्धोदया प्राप्तोदया चन्द्रमस इयं चान्द्रमसी लेखेव कलेव ज्योत्स्नान्तराणि चन्द्रिकाभ्यन्तराणि

अनिवादिशब्दा यथा,—

दिवो जागर्त्ति रक्षायै पुलोमारिर्भुवो भवान्।
असुरास्तेन हन्यन्ते सावलेपा नृपा स्त्वया॥

अत्र वर्णनीययोः पुलोमारिभवतोः द्यावाभूम्योः असुराणामवलिप्तपार्थिवानाञ्च तुल्यक्रियासमावेशात् इवादिमन्तरेणापि वाक्यार्थानां परस्परम् उपमानोपमेयभावोऽवगम्यत इति इयम् अनिवादिशब्दा नाम वाक्यार्थोपमासु वाक्योपमाभक्तिः॥२३॥

वैधर्म्यवती यथा,—

प्रहितः प्रधनाय माधवानहमाकारयितुं महीभुजा।
न परेषु महौजसश्छलादपकुर्वन्ति मलिम्लुचा इव॥

अत्र सत्यपि उपमाने सत्यपि उपमेये सत्यपि च इवशब्दे महौजसां मलिम्लुचानाञ्च योऽय छलापकरण नाम वस्तुधर्मः स उपमान एव न नियम्यत इति वैधर्म्यवती नाम इय वाक्यार्थोपमासु वाक्योपमाभक्तिः॥ २४॥

---

कलान्तराणीव कलाविशेषानिव लावण्यमयान् मुक्ताफलेषु छायाया' तरलत्वमिवान्तरा प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इति लक्षणात् कान्तिविशेषपूर्णानित्यर्थ विशेषान् अवयवान् पुपोष दधारेत्यर्थ । कुमारसम्भवे पार्वतीजन्मनि तदीयरूप वर्णनमिदम्। अत्र कर्त्तुरुपमानात् कर्म्मणश्चोपमानात् इवशब्दयो. प्रयोग इति अनेकेवशब्दोपमा॥ २२॥

दिव इति। पुलोमारि इन्द्रः दिव स्वर्गस्य रक्षायै रक्षार्थं जागर्त्ति, भवान् भुव पृथिव्या रक्षार्थं जागर्त्ति इत्यन्वय । तेन पुलोमारिणा सावलेपा सगर्वा असुरा त्वया नृपा शत्रव इति भाव सावलेपा इत्यत्रापि अन्वेति हन्यन्ते वध्यन्ते। अत्र इवादिशब्दाप्रयोगेऽपि वाक्यार्थयो उपमानोपमेयभाव प्रतीयते इति अनिवादिशब्दा॥ २३॥

प्रहित इति। महीभुजा राजा महीभृतेति पाठान्तर अहं प्रधनाय युद्धाय माधवान् आकारयितु आह्वातु हूतिराकारणाह्वानमित्यमर । प्रहितः प्रेषितः। ननु शत्रुनिग्रहे अन्येषामुपायाना सत्त्वेऽपि कथमाकारणमित्यत्राह नेति। महौ-

यत्रोक्तिभङ्ग्या वाक्यार्थसादृश्यमवगम्यते ।
वाक्यार्थयोर्विस्तरतः सा प्रपञ्चोपमेष्यते ॥ ३५ ॥
सा तु प्रकृतरूपा स्याद्रूपेण विकृता तथा ।
तयोः प्रकृतरूपा सा विज्ञेया च चतुर्विधा ॥ ३६ ॥
स्यात् समस्तोपमा तद्वदेकदेशोपमा परा ।
मालोपमा तृतीया स्याच्चतुर्थी रसनोपमा ॥ ३७ ॥

तासु समस्तोपमा यथा,—

अलिवलयैरलकैरिव कुसुमस्तवकैः स्तनैरिव वसन्ते ।
भान्ति लता ललना इव पाणिभिरिव किसलयैरधिकम् ॥

अत्र वसन्तलक्ष्मीपरिष्कृतलतानां ललनानाञ्च प्रतीयमानसादृश्यानाम् उपमानोपमेयभावविवक्षायां येयम् अलिवलयादिभिः अलकादीनां प्रतीयमानसादृश्यानामेव पृथक् पृथक् इवशब्दप्रयोगवतीति विस्तारेण अवयविनोऽवयवानाञ्चेति सामस्त्येन वाक्यार्थयो औपम्योक्तिभङ्गिः । सेयं समस्तोपमा नाम प्रकृतरूपोपमासु प्रपञ्चोपमा भक्तिः ॥३८॥

---

जस महानजस पुरुषा इति शेष मलिम्लुचा इव तस्करा इव छलात् छलमाश्रित्येत्यर्थ परेषु प्रतुपु न अपकुर्वन्ति अत्र महौजसां मलिम्लुचानाञ्च उपमेयोपमानभावे सत्यपि छलापकरण विरुद्धधर्म्म इति वैधर्म्यवती ॥ २४ ॥

यत्रेति । यत्र उक्ते सन्दर्भस्य भङ्ग्या चातुर्य्येण वाक्यार्थयोः सादृश्य साम्य अवगम्यते प्रतीयते सा वाक्यार्थयो विस्तरत. विस्तारात् बाहुल्यादित्यर्थ प्रपञ्चोपमा इष्यते कथ्यते इति भाव ॥ ३५ ॥

सेति । सा तु प्रपञ्चोपमा प्रकृतरूपा प्रस्तुतरूपा तथा रूपेण विकृता विकृतरूपा चेति द्विविधा स्यात् । तयोर्मध्ये सा प्रकृतरूपा च चतुर्विधा विज्ञेया ॥ ३६ ॥

स्यादिति । समस्तोपमा एका, एकदेशोपमा अपरा, मालोपमा तृतीया, रसनोपमा चतुर्थी स्यात् ॥ ३७ ॥

अलिवलयैरिति । वसन्ते लता अलकैः चूर्णकुन्तलैरिव अलिवलयैः स्तनैरिव कुसुमस्तवकैः, पाणिभिरिव करैरिव किसलयैः, नवपल्लवैः, अतएव ललना

एकदेशोपमा यथा,—

कमलदलैरधरैरिव दशनैरिव केशरैर्विराजन्ते।
अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः॥

अत्र नलिनीनां विलासिनीनाञ्च परस्परमुपमानोपमेयभावे वक्तव्ये विलासिनीलक्षणमुपमानार्थमेव अवयवान्तराणि च यानि स्तनाद्युपमेयानि तानि परित्यज्य कमलमेवैकं तदवयवैर्दलादिभिः सह अधरादिभिः उपमानैः पृथक् पृथगिव प्रयोगात् विस्तरेणोपमितं तेनेयमेकदेशोपमा नाम प्रकृतरूपोपमासु प्रपञ्चोपमाभक्तिः॥ ३९॥

मालोपमा यथा,—

सोहव्व लक्खणमुह वणमालव्व विअलं हरिवइस्स उरं।
कित्तिव्व पवणतणअ आणव्व वलाइ से विलग्गइ दिट्ठी॥

अत्र रामदृष्टेर्लक्ष्मणमुखादिविनिवेशिन्याः शोभाद्युपमानमालया प्रतीयमानसादृश्यया विस्तरेणोपमितैर्मालोपमा नामेयं प्रकृतरूपोपमासु प्रपञ्चोपमाभक्तिः॥ ४०॥

रसनोपमा यथा,—

चन्द्रायते शुक्लरुचाथ हंसो हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः॥

---

इव कान्ता इव अधिकं यथा तथा भान्ति शोभन्ते। अत्राङ्गाङ्गिना सर्वेषामेव उपमानोपमेयभाव इवशब्दे प्रत्येकमवगमात् समस्तोपमा॥ ३८॥

कमलेति। नलिन्य पद्मिन्य अधरैरिव कमलदलैः दशनैरिव केशरैः किञ्जल्कैः अलकैरिव अलिवलयैः वदनैरिव कमलैः विराजन्ते। इयमेकदेशवि वर्त्तिन्युपमेति नव्या॥ ३९॥

सोहव्वेति प्रा०। शोभेव लक्ष्मणमुख वनमालेव विकट हरिपतेरुर। कीर्त्तिरिव पवनतनय आज्ञेव वलान्यस्य विलगति दृष्टि॥ इति स

शोभेति। अस्य रामस्य दृष्टि शोभेव लक्ष्मणस्य मुख वनमालेव हरिपते सुग्री-

अत्र चन्द्रादीनां शौक्ल्यादिभिरभिधीयमानसादृश्यैर्हंसादिभिर्येयं रसनान्यायेन पश्चादुच्चलनया विस्तारवती हेतुमती च प्रत्ययोपमापङ्क्तिः तया इह एकवाक्यताकारणेन शरद्गुणीयतीयवर्णनमिति सेयं रसनोपमा नाम प्रकृतरूपोपमासु प्रपञ्चोपमाभक्तिः ॥ ४१ ॥

इतीमास्ताश्चतस्रोऽपि रूपेण प्रकृतेन याः ।
उपमानाश्चतस्रोऽन्या विकृतेन प्रचक्ष्महे ॥ ४२ ॥
विपर्य्यासोपमा तासु प्रथमाथोभयोपमा ।
अथोत्पाद्योपमा नाम तुरीयाऽनन्वयोपमा ॥ ४३ ॥

तासु विपर्य्यासोपमा यथा,—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गताः
त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

---

वक्ष विकट विशाल उर वचस्थल कीर्तिरिव पवनतनय हनूमन्तम् आशेव बलानि वानरसैन्यानि विलगति आविशति ॥ ४० ॥

चन्द्रायते इति । अथ इदानीमित्यर्थः हंस शुक्लरुचा श्वेतकान्त्या चन्द्रायते चन्द्र इव आचरति । कान्ता चारुगतेन मनोहरगमनेन हंसायते हंस इव आचरति । वारि स्पर्शसुखेन कान्तायते कान्तेव आचरति विहाय आकाश स्वच्छतया निर्मलतया वारीयते वारीव आचरति । शरद्वर्णनमिदम् ॥ ४१ ॥

इतीति । रूपेण प्रकृतेन या उपमा उक्ता इति शेष ता चतस्रोऽपि इति एव रूपा इमा, प्रागुक्तप्रकारा इत्यर्थ । विकृतेन रूपेण च अन्या चतस्र उपमाना उपमा इत्यर्थ प्रचक्ष्महे प्रब्रूम ॥ ४२ ॥

विपर्य्यासेति । तासु चतसृषु मध्ये विपर्य्यासोपमा प्रथमा, अथ द्वितीया उभयोपमा अथ तृतीया उत्पाद्योपमा, तुरीया चतुर्थी अनन्वयोपमा नाम ॥ ४३ ॥

यदिति । हे प्रिये ! तव नेत्रस्य समाना कान्तिर्यस्य तत् यत् इन्दीवर

अत्र नेत्रादीनामुपमेयत्वमिन्दीवरादीनामुपमानत्वमिति प्रसिद्धौ येयमत्यनुरागान्नेत्रादिषु आधिक्यबुद्धिर्नात्यनुरागादिन्दीवरादिषु तदनुकारबुद्धिस्तयैव रामेण विरहिणा अभिधीयमानसादृश्यानामनयोः परस्परम् उपमानोपमेयभावः प्रसिद्धेर्विपर्य्यासेन कल्पित इति सेयं विपर्य्यासोपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः ॥ ४४ ॥

उभयोपमा यथा,—

तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
निलीनां नलिनीषण्डे कथं नु त्वां लभेमहि ॥

अत्रापि अत्यन्तसादृश्यादेकस्मिन् पक्षे प्रसिद्धेर्विपर्य्यास इति सेयं प्रतीयमानसादृश्योभयोपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः ॥ ४५ ॥

उत्पाद्योपमा यथा,—

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

---

नीलोत्पलं तत् सलिले जले मग्नं तिरोहितमित्यर्थः । तव मुखस्य छाया कान्तिः अनुकरोतीति तादृशः शशी चन्द्रः मेघैः अन्तरितः आच्छादितः । तव गमनं अनुकरोतीति तथाविधा गतिर्येषां तथोक्ता ये राजहंसाः तेऽपि गताः मानसं सरः इति शेषः । वर्षासु मानसं यान्ति हंसा इति कविसमयप्रसिद्धेः । अतः तत्सादृश्येन यः विनोदः सन्तोषः स एव तन्मात्रः अपि दैवेन प्रतिकूलेनेति भावः मे मम न क्षम्यते न सह्यते ॥ सीतामुद्दिश्य गच्छतो रामस्य सीतां प्रत्युक्तिः । अत्रोपमानादीनामिन्दीवरादीनामुपमेयताप्रतिपादनाद् विपर्य्यास इति विपर्य्यासोपमा ॥ ४४ ॥

तवेति । अम्भोजं पद्मं तव आननमिव, ते तव मुखं अम्भोजमिव । नु भोः षण्डे नपुंसके निलीनां सङ्गतां नलिनीं पद्मिनीं त्वां कथं लभेमहि प्राप्नुमः । कस्यचित् कामिनः कामपि कापुरुषसङ्गतां कान्तां प्रति साभिलाषोक्तिः । अत्र उभयोरेव उपमानोपमेयभावप्रतिपादनात् उभयोपमा ॥ ४५ ॥

अत्रोपमानार्थमुत्पाद्योपमेयेन प्रतीयमानमभिधीयमानञ्च सादृश्यमभिहितमिति सेयमुत्पाद्योपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः ॥ ४६ ॥

अनन्वयोपमा यथा,—

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्त्तिरिव मूर्त्तिस्ते त्वमिव त्वं कृशोदरि ! ॥

अत्र त्वमेवेदृशी नान्या त्वत्सदृशीति अनन्वये सति उपमानोपमेयभावविवक्षया एकस्यापि वस्तुनोभेदमुपकल्प्य प्रतीयमानसादृश्यमौपम्येनाभिहितमिति सेयमनन्वयोपमा नाम विकृतरूपोपमासु प्रपञ्चोपमाभक्तिः ॥ ४७ ॥ १ ॥

इति उपमालङ्कार निरूपणम् ॥

यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात् ।
उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः ॥ ४८ ॥

---

उभाविति । आकाशगङ्गापयसः मन्दाकिनीसलिलस्य उभौ प्रवाहौ व्योम्नि आकाशे यदि पृथक् पतेतां तदा तमालनील तमालतरुवत् नीलं कृष्णवर्णम् आमुक्ता आगृहीता लम्बितेति यावत् मुक्तालता मुक्ताहारः यत्र तथाभूतं अस्य कृष्णस्य वक्षः उरःस्थलम् उपमीयते सोपमानं क्रियते । अत्र सम्भावनया उत्पाद्यमानस्य उपमानस्य प्रतिपादनात् उत्पाद्योपमा ॥ ४६ ॥

त्वन्मुखमिति । हे कृशोदरि । तव मुखं तव मुखमिव, तव दृशौ तव दृशाविव, ते मूर्त्तिः तव मूर्त्तिरिव, त्वं त्वमिव । अत्रैकस्यैव उपमानोपमेयत्वप्रतिपादनादनन्वयोपमा ॥ ४७ ॥

इति उपमानिरूपणम् ।

अथ रूपकं लक्षयति यदेति । यदा गौणवृत्तिव्यपाश्रयात् गौणी सादृश्यवती वृत्तिः लक्षणा तस्याः समाश्रयात् तामाश्रित्येत्यर्थः उपमानशब्दानां उपमेयपदार्थानां उपमेये वृत्तिः वर्त्तनं सङ्क्रमणमित्यर्थः भवेत् तदा तत् रूपकं विदुः जानन्ति ॥ ४८ ॥

शब्दार्थोभयभूयिष्ठभेदात्त्रेधा तदुच्यते।
शब्दभूयिष्ठमेतेषु प्रकृतं विकृतं तथा ॥ ४९ ॥
अर्थभूयिष्ठमप्याहुः प्राधान्येऽङ्गाङ्गयोर्द्विधा।
द्विधैवोभयभूयिष्ठं शुद्धसङ्कीर्णभेदतः ॥ ५० ॥
चतुर्धा प्रकृतं तेषु शब्दभूयिष्ठमुच्यते।
समस्तं व्यस्तमुभयं सविशेषणमित्यपि ॥ ५१ ॥

तेषु समस्तं यथा,—

पाणिपद्मानि भूपानां सङ्कोचयितुमीशते।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः।

अत्र उपमितं व्याघ्रादिभिः सामान्याप्रयोगे इति समासे पद्मानीव पद्मानि चन्द्रा इव चन्द्रा इत्यभेदोपचारेणोत्पन्नसादृश्यात् पाणीनां नखानाञ्च पद्मचन्द्रादिभिरभिधाने सामान्येवादिशब्दाप्रयोगादुपमानार्थस्तिरोभूत इति सोऽयं गौणशब्दव्यपाश्रयः समासहेतुकः समस्तरूपं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥ ५२ ॥

---

शब्देति। शब्दार्थोभयभूयिष्ठभेदात् शब्दभूयिष्ठभेदात् अर्थभूयिष्ठभेदात्, शब्दार्थभूयिष्ठभेदात् तत् रूपकं त्रेधा त्रिप्रकारं उच्यते कथ्यते। एतेषु त्रिषु भेदेषु शब्दभूयिष्ठं रूपकं प्रकृतं तथा विकृतमिति द्विधा भवतीति शेषः ॥ ४९ ॥

अर्थेति। अर्थभूयिष्ठमपि रूपकं क्वचित् अङ्गिनः क्वचित् अङ्गस्य प्राधान्येन द्विधा आहुः कथयन्ति। उभयभूयिष्ठं शब्दार्थभूयिष्ठं शुद्धसङ्कीर्णभेदतः शुद्धोऽविमिश्रः सङ्कीर्णः विमिश्रः तयोर्भेदादित्यर्थः द्विधैव द्विप्रकारमेव ॥ ५० ॥

चतुर्धेति। तेषु रूपकभेदेषु मध्ये प्रकृतं शब्दभूयिष्ठं समस्तं समासघटितं व्यस्तं असमस्तं उभयं व्यस्तसमस्तं तथा सविशेषणमिति चतुर्धा उच्यते ॥ ५१ ॥

पाणीति। तव पादयोः चरणयोः ये नखा एव चन्द्राः तेषां कुन्दनिर्मलाः कुन्दकुसुमवत् स्वच्छाः अर्चिषः प्रभाः भूपानां प्रतीपनृपाणां पाणयः एव पद्मानि तानि सङ्कोचयितुं सम्मीलयितुम् अञ्जलीकर्त्तुमिति भावः ईशते प्रभवन्ति। राजानः

व्यस्तं यथा,—

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥

अत्रापि पूर्ववत् पल्लवकुसुमलतावसन्तश्रीशब्दानां गुणवृत्त्याश्रयेणाङ्गुलीनखार्चिर्बाहुवर्णनीयनायिकाभिः सह सामानाधिकरण्यात् सामान्येवादिशब्दाप्रयोगाच्च तिरोभूतेऽप्युपमानार्थे समासो न कृत इत्यसमस्तरूपं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥ ५३ ॥

समस्तव्यस्तं यथा,—

स्मितं मुखेन्दोर्ज्योत्स्ना ते प्रभाम्बु कुचकुम्भयोः ।
दोर्लतापल्लवे पाणौ पुष्पं सखि नखार्चिषः ॥

अत्र मुखेन्दोः स्मितमेव ज्योत्स्ना, कुचकुम्भयोः प्रभैवाम्बु, दोर्लतयोः पल्लवभूते पाणौ नखार्चिष एव पुष्पमिति समस्तानामसमस्तानाञ्च गौणशब्दानामुपमातिरस्कारेण दर्शितत्वादिदं समस्तव्यस्तरूपं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥ ५४ ॥

---

तव चरणोपान्ते कृताञ्जलय तिष्ठन्तीति भाव । अत्र पाणिपद्मानीत्यादिसमासाश्रयाणां समस्तरूपम् ॥ ५२ ॥

अङ्गुल्य इति । तव अङ्गुल्य' पल्लवानि तथा नखार्चिष नखप्रभा' कुसुमानि आसन् । बाहू लते आस्तामिति शेष अत' त्व नः अस्माक प्रत्यक्षचारिणी सम्मुखसञ्चारिणी वसन्तश्री वसन्तलक्ष्मी । अत्राङ्गुल्यः पल्लवानीत्यादिषु समासानाश्रयणात् व्यस्तरूपम् ॥ ५३ ॥

स्मितमिति । हे सखि । ते तव मुखेन्दो' मुखचन्द्रस्य स्मित मन्दहसित ज्योत्स्ना, कुचकुम्भयो प्रभा अम्बु जल दोर्लतापल्लवे भुजलतापल्लवशालिनीत्यर्थ पाणौ नखार्चिष नखमयूखा पुष्पम् । अत्र मुखेन्दोरिति समस्त स्मित ज्योत्स्नेति व्यस्तमिति समस्तव्यस्तम् ॥ ५४ ॥

सविशेषणं यथा,—

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः॥

अत्र यथोक्तविशेषणविशिष्टो यो हरिपादो, यश्च हरिहतासुरेभ्यो निःशङ्कानां सुराणामानन्दोत्सवे ध्वजः तयोः सविशेषणयोरेव प्रतीयमानसादृश्ययोः परस्परमुपमानोपमेयभाव इति सविशेषणं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः। तदेतच्चतुष्टयमपि प्रकृतसमासादिशब्दैर्निबद्धमिति प्रकृतमुच्यते॥५५

चतुरो विकृतस्यापि प्रभेदान् प्रतिजानते।
परम्पराथ रशना माला रूपकरूपकम्॥५६॥

तेषु परम्परा यथा,—

ववसाअ रइपओसो रोसगइन्ददिढसिंखलापडिबन्धो।
कह कह वि दासरहिणो जअकेसरिपञ्जरो गओ घणसमओ॥

अत्र दाशरथिसम्बन्धिनो व्यवसायस्य रविणा रोषस्य गजेन्द्रेण जयस्य केशरिणा सहोपमानोपमेयभावकल्पनया यदेकं रूप-

---

हरीति। शिरसि अग्रे लग्न समक्त जह्नुकन्या गङ्गा तस्य जलमेव अंशुक वसन यस्य तथाभूत' हरिपाद. हरे विष्णो' चरण असुरेभ्य हरिपरिभूतेभ्य इति भाव निःशङ्का निर्भया' ये सुरा' देवा' तेषा आनन्देन य उत्सव अभ्युदयविशेष तस्य ध्वज सन् जयति सर्वोत्कर्षेण वर्त्तते। अत्रासुरेत्यादि विशेषणात् सविशेषण प्रकृत शब्दभूयिष्ठम्॥५५॥

चतुर इति। विकृतस्यापि रूपकस्य चतुर प्रभेदान् प्रतिजानते प्रतिज्ञया निर्दिशन्ति कवय इति शेष। परम्परा, रशना, माला, रूपकरूपकम्॥५६॥

व्यवसायेति। व्यवसाय रविप्रदोषी रोषगजेन्द्रदृढशृङ्खलाप्रतिबन्ध'। कथ कथमपि दाशरथेर्जयकेशरिपञ्जरो गतो घनसमय॥ स०

व्यवसायेति।' घनसमय. वर्षाकाल. दाशरथे. रामस्य सीतावियोगिन इति

णाम् अथैतत्सम्बन्धितया प्रदोषशृङ्खलाप्रतिबन्धपञ्जराणां द्वितीय ततः त्रयाणामपि घनसमयेन तृतीयं तेनेय रूपकपरम्परा नाम विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥५७॥

रशना यथा,—

किशलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥

अत्र किशलयकरैः करकमलैः कमलमुखैर्मुखेन्दुभिरिति रशनाक्रमेण शब्दानां सन्दर्भ उपलभ्यमानस्तदर्थानां मनोभुवो जगद्विजये लतादिसम्बन्धात् करणभावमनुमापयतीति रशना नामैतद् विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥५८॥

माला यथा,—

स्वामी दुर्नयवारणव्यतिकरे शौर्योपदेशे गुरुः
विस्रम्भे हृदयं नियोगसमये दासो भये चाश्रयः ।

---

भाव' व्यवसाय उद्योग शत्रुजयार्थमिति भाव' स एव रवि सूर्य' ,तस्य प्रदोष रजनीमुख यथा रजनीमुखे रवेरस्तगमन तथा वर्षाकाले शत्रुजयोद्योगविरतिरिति भाव । रोष क्रोध रावण प्रतीति भाव स एव गजेन्द्र तस्य दृढ कठिन दुर्भेद्य इति भाव' शृङ्खलावन्ध शृङ्खलया विरोध इत्यर्थ' गजेन्द्रो यथा दृढशृङ्खलया निबध्यते तता क्रोधोऽपि नियन्त्रित इति भाव । तथा जय एव केशरी सिंह' तस्य पञ्जर' निरोधगृहमित्यर्थ' यथा केशरी पञ्जरे नियम्यते तथा शत्रुजयोऽपि नियन्त्रित इति भाव कथ कथमपि अतिकष्टेनेत्यर्थ गत अतिक्रान्त ॥ ५७ ॥

किशलयेति । मदन काम' लताना किशलया एव करा तै मृगदृशा मृगाक्षीणा करा एव कमलानि तै नलिनीना कमलान्येव मुखानि तै तथा योषिता नारीणा मुखान्येव इन्दवश्चन्द्रा तै जगत् जयति ॥ ५८ ॥

स्वामीति । कार्य मम को वा न ? अपि तु सर्व एव सर्वाभ्युदयहेतुरिति भाव तथाहि दुर्नय. दुर्नीतिरेव वारणः हस्ती तस्य व्यतिकरे उद्रेके इत्यर्थ. स्वामी

दाता सप्तसमुद्रसीमरशनादामाङ्किताया: क्षितेः
सर्वाकारमही स्वयंवरसुहृत् को वा न कर्णो मम ॥

अत्र स्वाम्यादीनां मालोपमादिक्रमेण निरूपितत्वात् माला-रूपकं नाम विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः ॥५९॥

रूपकरूपकं यथा,—

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलता नर्त्तकी तव।
लीलानाट्यामृतं दृष्टौ सखि! यूनां निषिञ्चति ॥

अत्र मुखमेव पङ्कजं तदेव रङ्गः भ्रूरेव लता सैव नर्त्तकी लीलैव नाट्यं तदेवामृतमिति रूपितानामपि रूपणेन समासेन रूप-करूपकं नामायं विकृतरूपकेषु शब्दभूयिष्ठरूपकभेदः। तदे-तच्चतुष्टयमपि परम्परादिभिर्विकृतसमासादिशब्दे निबद्धमिति विकृतमुच्यते ॥ ६० ॥

समस्तञ्चासमस्तञ्च युक्तञ्चायुक्तमेव च।
चतुर्धाङ्गिप्रधानं स्यादर्थभूयिष्ठरूपकम् ॥ ६१ ॥

---

नियन्ता प्रभुरित्यर्थः दुर्नयमार्गात् निवारक इति भावः। शौर्य्यस्य वीरभावस्य उपदेशी शिक्षाया गुरुः उपदेष्टा। विस्रम्भे विश्वासे हृदयं स्वान्तम्। नियोगसमर्थे आज्ञायामित्यर्थः दासः किङ्करः। भये उपस्थिते इति शेषः आश्रयः सहायः सप्तसमुद्रा एव सीमानः ते एव रशनादामानि काञ्चीकलापाः तैः अङ्किताया अलङ्कृताया क्षितेः सप्तार्णववेष्टिताया पृथिव्या इत्यर्थः दाता जयेनेति भावः तथा सर्वाकारमही सर्वप्रकारा पृथ्वी तस्याः स्वयंवरे सुहृत् सखा। सर्वा पृथ्वी मां यत् स्वयं वृणोतिस्म तत्र कर्ण एव हेतुरिति भावः। दुर्य्योधनस्योक्ति-रियम् ॥ ५९ ॥

मुखेति। हे सखि! तव अस्मिन् मुखमेव पङ्कजं तदेव रङ्गः नृत्यक्षेत्रं तस्मिन् भ्रूरेव लता सैव नर्त्तकी लीला एव नाट्यं तदेव अमृतं यूनां तरुणानां दृष्टौ निषिञ्चति वर्षति ॥ ६० ॥

समस्तेति। अर्थभूयिष्ठरूपकम् अङ्गिप्रधानं प्राधान्येन अवयविघटितमित्यर्थः समस्तम् असमस्तं युक्तम् अयुक्तञ्चेति चतुर्धा स्यात् ॥ ६१ ॥

तेषु समस्तं यथा,—

ताम्राङ्गुलिदलश्रेणिनखदीधितिकेशरम् ।
ध्रियते मूर्द्धि भूपालैर्भवच्चरणपङ्कजम् ॥

अत्र समस्तोपमायामिव पादाख्य. पङ्कजाख्यस्यावयवी परस्पर मुपमानोपमेयभूत' प्रतीयमानाभिधीयमानसादृश्यैरङ्गुलिश्रेणिनखदीधितिभिर्दलश्रेणिकेसरैश्च सह सामस्त्येन रूपितस्तद्योग्यस्थानविन्यासेन चार्थस्य प्राधान्यमभिहितमिति समस्तं नाम रूपकमिदमङ्गिप्रधानरूपकेषु अर्थभूयिष्ठरूपकभेद'। न चैतद्वाच्यम्। पाणिपद्मानि भूपानामित्यादेरुदाहरणादिदं न भिद्यते इति। तत्र हि। वाक्ये नखार्चिषा क्रियासमावेशेन प्राधान्यमवगम्यते न नखचन्द्राणां ततश्च न रूपकम्। पाणिपद्मानीत्यस्य तु यद्यपि सङ्कोचक्रियायामस्ति समावेशस्तथापि न तानि वर्णनीयत्वेन उपन्यस्तानि। अपि तु जिगीषुभाववर्णनाङ्गतया। अतः समावेशमात्रभणनान्न तत्र पाणिपद्मानां नापि नखचन्द्राणामर्थप्राधान्यमपि तु शब्दप्राधान्यमेव। इह तु चरणपङ्कजताम्राङ्गुलिदलश्रेण्यादिविशेषणविशिष्टस्य भूपालमौलिविनिवेशनेन प्राधान्य प्रतीयत इति उभयमपि निरवद्यम् ॥ ६२ ॥

असमस्तं यथा,—

अकस्मादेव ते चण्डि । स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥

---

ताम्रेति। ताम्रा रक्ता अङ्गुलय एव दलश्रेणय यस्य तथोक्ता नखानां दीधितय एव केशरा यस्य तथाभूत भवत चरण एव पङ्कज पद्म भूपालै राजभि प्रतीपैरिति भाव मूर्द्धि ध्रियते गृह्यते ॥ ६२ ॥

अकस्मादिति। हे चण्डि। कोपने। ते तव मुखम् अकस्मादेव सहसैव

अत्राप्येकदेशोपमाक्रमेण अधरपल्लवस्वेदाम्बुकणमञ्जरीणां सहजाहार्य्यावयवानामभिधानादुपमानावयविनश्चानभिधाना दिदमसमस्तं नाम रूपकमङ्गिप्रधानेषु अर्थभूयिष्ठरूपकभेदः। अत्रापि च मुख्यवस्तुनः स्फुरिताधरपल्लवमिति विशेषणविशिष्टस्य घर्माम्भःकणमञ्जरीधारणक्रियासमावेशः प्राधान्यं ख्यापयति ॥ ६३ ॥

युक्तं यथा,—

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदम् मुखम्।
न कस्य नन्दनं सुभ्रु। सुरभिश्वसितानिलम् ॥

अत्र स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गं सुरभिश्वसितानिलं ते मुखं न कस्य नन्दनमिति पुष्पभृङ्गादीनां परस्परं युक्तत्वरूपपत्तेर्युक्तं नामायमङ्गाङ्गिप्रधानरूपकेषु अर्थभूयिष्ठो रूपकभेदः। अत्र यद्यपि नन्दनमिव नन्दनमिति गौणवृत्तिव्यपाश्रयः शब्द एव समस्तविशेषणैः परिष्क्रियते तथापि नन्दयतीति तदभिहितक्रियासमावेशे मुखाख्यस्यैव वस्तुनः प्राधान्यमवगम्यते। तस्य त्वपक्रियत इत्यर्थप्रधानमेवैतत् ॥ ६४ ॥

अयुक्तं यथा,—

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम्।
जगन्नेत्रेन्दुरस्माकं कथं तापाय कल्पते ॥

अत्र ज्योत्स्नोत्पलयोरयोगाज्जगन्नेत्रेन्दोश्च मुखस्य सन्तापका-

---

स्फुरितः अधर एव पल्लवः यस्य तादृशं सत् मुक्तारुचः मौक्तिकप्रभाः घर्माम्भसां कणाः बिन्दवः एव मञ्जर्यः ताः धत्ते धारयति ॥ ६३ ॥

स्मितेति। हे सुभ्रु। इदं मुखं स्मितमेव पुष्पं तेन उज्ज्वलं लोलौ चञ्चलौ नेत्रे एव भृङ्गौ यत्र तथाभूतं सुरभिः श्वसितानिलः निश्वासवायुः यस्मिन् तादृशम् अतएव कस्य जनस्य नन्दयतीति नन्दनम् आनन्दजननं न? अपि तु सर्व्वस्यैवे-

रणमिदमयुक्तं नामाङ्गिप्रधानरूपकभेदेषु अर्थभूयिष्ठरूपकभेदः। अत्रापि पूर्ववन्मुखाख्यवस्तुनो विशेषणैः परिष्करणमिति तस्यैव प्राधान्यमवगम्यते ॥ ६५ ॥

> भेदानङ्गप्रधानस्य चतुरोऽवयवाश्रयान्।
> सहजाहार्य्यतद्योगतद्वैषम्यैः प्रचक्षते ॥ ६६ ॥

तेषु सहजावयव यथा,—

> पप्फुरिअउट्ठदलअ तक्खणविगलिअरुहिरमहुविच्छडम्।
> उक्खडिअकण्ठणालं पडिअ फुडदसणकेसरं मुहकमलम् ॥

अत्र ओष्ठादीना दलादीनाञ्च मुखाम्भोजावयवानां स्फुरितविगलितोत्खण्डितस्फुटविशेषणविशिष्टानां परस्परमुपमानोपमेयभावरूपितानां मुखपक्षे कमलपक्षे च सहजत्वं गम्यत इति सहजावयवो नामायमङ्गप्रधानरूपकेषु अर्थभूयिष्ठरूपकभेदः। नैतद्वाच्यम्। ताम्राङ्गुलिदलश्रेणीत्यादेः अर्थ-प्रधानभेदादिदं न भिद्यते इति। तत्र हि भूपालमौलिधारणक्रियासमावेशेनाव-

---

त्यर्थ। इदमिति आर्द्रं स्मितमेव ज्योत्स्ना चन्द्रिका यस्य यत्र वा तथोक्तं स्निग्धे स्नेहवर्षिणी प्रणयवर्षिणी इति यावत् नेत्रे एव उत्पले यत्र तथाभूत जगता नेत्राणि नयनानि तेषा इन्दुश्चन्द्रः अतिप्रीतिकरत्वेन सन्तापहरमिति भावः। इद मुख तवेति शेष' अस्माक तापाय कथ कल्पते ? कथ ताप ददातीत्यर्थ। विरहिण उक्तिरियम् ॥ ६४ ॥ ६५॥

भेदानिति। अङ्गप्रधानस्य रूपकस्य अवयवाश्रयात् अङ्गाश्रयान् चतुर भेदान् सहजाहार्य्यतद्योगतद्वैषम्ये सहजभावेन आहार्य्यभावेन तदुभयोर्योगेन तयोर्वैषम्येण च प्रचक्षते कथयन्ति कवय इति शेष ॥ ६६ ॥

पस्फुरितः इति। प्रस्फुरितोष्ठदल तत्क्षणविगलितरुधिरमधुविच्छायम्।
उत्खण्डितकण्ठनाल पतित स्फुटदशनकेशर मुखकमलम् ॥

प्रस्फुरितेति। प्रस्फुरितः ओष्ठ एव दल यस्य तथोक्तं तस्मिन् क्षणे विगलित विस्नुत रुधिरमेव मधु यस्मात् तथोक्त उत्खण्डित. उत्कृत्त. कण्ठ एव नाली यस्य

ध्वनिः प्राधान्यं विवक्षितमिह तु पतनक्रियायामवयवानाम्।
अतएव ते तत्र स्फुरितादिविशेषणैर्विशिष्यन्ते ॥ ६७ ॥

आहार्य्यावयव यथा,—

तो कुम्भअसपडिवअणदण्डपरिघट्टिआमरिसघोरविसो।
गलिअसुअणिम्मोओ जाओ भीसणअरो दसाणणभुअओ ॥

अत्र कुम्भकर्णप्रतिवचनममर्षोऽशुकमिति दशाननपक्षे दण्डो घोरविष निर्मोक इति भुजगपक्षे ये अवयवाः तेषाम् आहार्य्यत्वात् इदमाहार्य्यावयवं नाम रूपकमङ्गप्रधानरूपकेषु अर्थभूयिष्ठरूपकभेदः। अत्रापि कुम्भकर्णसम्बन्धपरिघट्टितगलितविशिष्टानाम् अवययानामेव दशाननभुजगभीषणतरीकरणक्रियाया प्राधान्यम् अवगम्यते ॥ ६८ ॥

उभयावयव यथा,—

यस्या बीजमहङ्कृतिर्गुरुतरो मूल ममेति ग्रहो
नित्यत्वस्मृतिरङ्कुरः सुतसुहृद्भृत्यादय पल्लवाः।
स्कन्धो दारपरिग्रह परिभव पुष्प फलं दुर्गतिः
मा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम् ॥

---

तादृश स्फुटा दशना एव केशरा यस्य तादृशं मुखमेव कमल विच्छाय विगतशोभ यथा तथा पतितम् ॥ ६७ ॥

स कुम्भकर्णप्रतिवचनदण्डपरिघट्टितामर्षघोरविष ।
गलिताशुकनिर्मोको जातो भीषणतरो दशाननभुजग ॥

स इति। कुम्भकर्णस्य प्रतिवचन विरुद्ध प्रत्युत्तर तदेव दण्ड, तेन परिघट्टित जनित अमर्ष क्रोध एव घोर विष यस्य तथाभूत गलित क्रोधजनितकम्पेन स्खलित अशुक वसनमुत्तरीयमिति भाव तदेव निर्मोक कञ्चुक यस्य तथाभूत दशानन रावण एव भुजग आशीविष भीषणतर अतिभयङ्कर जात ॥ ६८ ॥

यस्या इति। हे जगदीश इति अध्याहार्य्यम्। यस्या तृष्णालताया बीज मूल कारण अहङ्कृति, अहङ्कार, ममेति गुरुतर अतिमहान् ग्रह पुत्रकलत्रादि सम्पद मम इति ज्ञान मूल कन्द हेतुरिति भावः नित्यत्वस्मृति, अहम् अविनश्वर

अत्र वीजं मूलम् अङ्कुरः पुष्पं फलमिति लतापक्षे सञ्ज्ञाः तृष्णापक्षे पुनरहङ्कृत्यादयः आहार्य्यावयवा इति तदिदं सञ्ज्ञाहार्य्याणाम् अवयवानां परस्परम् उपमानोपमेयभावरूपणेन उभयावयवं नाम रूपकमिदम् अङ्गप्रधानरूपकेषु अर्थभूयिष्ठरूपकभेदः। अत्रापि च अहङ्कारममताधौव्यस्मरणसुतादिदारपरिग्रहपराभवदुर्गतीनाम् अवयवानामेव वीजादिरूपेण रूपितानां भगवदाराधनकुठारेण तृष्णालता लूयतामिति प्रार्थनक्रियया समावेशेन प्राधान्यम् अवगम्यते ॥ ६९ ॥

विषमावयवं यथा,—

> मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना।
> नर्त्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥

अत्र इन्दुना मुखावयवो रूपितौ भ्रुवौ च तदवयवौ लतावयविभ्यां मदरक्तौ तु कपोलौ न केनापीति सर्वतो वैषम्याद्विषमावयवं नाम रूपकम् इदम् अङ्गप्रधानरूपकेषु अर्थभूयिष्ठरूपकभेदः। अत्रापि मदरक्तनर्त्तितयोः कपोलभ्रुवोरेव मन्मथस्य जगत्त्रितयमर्दनक्रियाया प्राधान्यं साधकतमत्व गम्यते ॥ ७० ॥

> आधारवन्निराधारं केवलं व्यतिरेकि च।
> इति शब्दार्थभूयिष्ठं शुद्धमाहुश्चतुर्विधम् ॥ ७१ ॥

---

इत्येव ज्ञानमित्यर्थ' अङ्कुर प्ररोह। सुतसुहृदङ्कृत्यादय पल्लवा. किशलया। दाराणा पत्न्या इत्यर्थ परिग्रह ग्रहण स्कन्ध काण्ड, परिभव क्लेश सासारिक इति भावः पुष्पम्। दुर्गतिर्दुरवस्था अधोगतिरिति यावत् फल तव चरणयो अर्हणा अर्चना एव परशुः कुठार. तेन त्वच्चरणार्च्चनविघ्नकारिणीति भाव सै मम तृष्णा एव लता लूयता छिद्यताम् ॥ ६९ ॥

मदेति। मन्मथ काम. मदेन मद्यपानेन रक्तौ कपोलौ यस्य तेन तथा नर्त्तिते भ्रुवौ एव लते यत्र तथाभूतेन तव मुखमेव इन्दु चन्द्र. तेन भुवनत्रय मर्दितु विजेतुमित्यर्थ. अल समर्थ. अल व्यर्थसमर्थयोरित्यमर. ॥ ७० ॥

तेषु आधारवद् यथा—

सोहइ विसुद्धकिरणो गअणसमुद्दम्मि रअणिवेलालग्गो।

तारामोत्तापअरो फुडविहडिअमेहसिप्पिसमुहविमुक्को॥

अत्र समुद्रत्वेन रूपितं गगनमाधारं परिकल्प्य रजनिमेघता-रकौघानां वेलाशुक्तिमुक्ताफलप्रकराणां च प्रतीयमानाभि-धीयमानसादृश्यानां शब्दप्राधान्यतोऽर्थप्राधान्यतश्च रूपणं कृतमिति आधारवन्नाम रूपकमिदं शुद्धरूपकेषु शब्दार्थभूयि-ष्ठरूपकभेदः॥ ७२॥

निराधारं यथा,—

वणराइकेसहत्था कुसुमाउहसुरहिसञ्चरन्तधअवडा।

ससिअरमुहुत्तमेहा तमपडिहत्था विसेन्ति धुमुप्पीडा॥

अत्र धूमोत्पीडानां वनराजिकेशहस्तत्वेन कुसुमायुधसुरभि-सञ्चरद्ध्वजपटत्वेन शशिकरमुहूर्त्तमेघत्वेन तमःप्रतिहस्तत्वेन च रूपितानां निराधाराणामेव शब्दप्राधान्यम् अर्थप्राधान्यञ्च

---

आधारवदिति। शुद्धम् अविमिश्रं शब्दार्थभूयिष्ठं रूपकम् आधारवत् साधारमित्यर्थः निराधारम् आधाररहितं केवलं व्यतिरेकि व्यतिरेकविशिष्टञ्च वैशिष्ट्यवदित्यर्थः इति चतुर्विधम् आह॥ ७१॥

शोभते विशुद्धकिरणो गगनसमुद्रे रजनिवेलालग्नः।

तारामौक्तिकप्रसरः स्फुटविघटितमेघशुक्तिसमूहविमुक्तः॥ स

शोभते इति। गगनमेव समुद्रः तस्मिन् विशुद्धकिरणः उज्ज्वलकिरणः रजनिरेव वेला जलभागः तटभागो वा वेला स्यात्तीरनीरयोरित्यमरः अत्र लग्नः संसक्तः स्फुटं स्पष्टं यथा तथा विघटिता विदलिता मेघा एव शुक्तिसमूहाः तेभ्यः विमुक्तः मेघा-वरणशून्य इति भावः तारा नक्षत्राण्येव मौक्तिकानि मुक्ताफलानि तेषां निकरः समूहः शोभते राजते॥ ७२॥

वनराजिकेशहस्ताः कुसुमायुधसुरभिसञ्चरद्ध्वजपटाः।

शशिकरमुहूर्त्तमेघाः तमःप्रतिहस्ता विज्ञापयन्ति धूमोत्पीडाः॥ स

वनेति। वनराजेः केशहस्ताः हस्तस्थितकेशा इत्यर्थः कुसुमायुधस्य कामस्य

अवधार्य्यत इति निराधारं नाम रूपकमिदं शुद्धरूपकेषु शब्दार्थभूयिष्ठरूपकभेदः ॥ ७३ ॥

केवलं यथा,—

वेल्लितभ्रु गलद्घर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥

अत्र अवयविन एव केवलस्य वदनपङ्कजमिवेति रूपणादस्य शब्दप्राधान्यं वेल्लितभ्रुप्रभृतिविशेषणोपादानाच्च अर्थप्राधान्यमेव लक्ष्यते तेन केवलं नाम रूपकमिदं शुद्धरूपकेषु उभयभूयिष्ठरूपकभेदः ॥७४॥

व्यतिरेकवद् यथा,—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहैः
अनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघम्
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

अत्र पुष्पकिसलयरत्नमधुपुण्यफलानाम् अनाघ्रातमित्यादिविशेषणापादितव्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तला-

---

सुरभयः सुगन्धाः सञ्चरन्तः प्रसरन्तः ध्वजपटाः ध्वजाग्रनिहितवसनानि शशिनश्चन्द्रस्य कराः किरणाः तेषु मुहूर्त्तमेषां अत्यच्छत्वावरकत्वादिति भावः तमसः अन्धकारस्य प्रतिहस्ताः प्रतिरूपाः इत्यर्थः धूमोत्पीडाः धूमोद्गाराः विज्ञापयन्ति कार्य्यादिकमिति शेषः ॥ ७३ ॥

वेल्लितेति । वेल्लिते सञ्चालिते भ्रुवौ यत्र तत् गलन्ति घर्मजलानि स्वेदसलिलानि यस्मात् तथोक्तम् आलोहिते आरक्ते ईक्षणे नेत्रे यत्र तथाविधम् इदं वदनमेव पङ्कजं पद्मं मदावस्थां मद्यपानजनितां दशां विवृणोति व्यक्तीकरोति ॥ ७४ ॥

अनाघ्रातमिति । विधिः विधाता दैवं वा इह जगति कं जनं अनाघ्रातं केनापि नाघ्रातपूर्वमित्यर्थः पुष्पं कररुहैः नखैः अलूनम् अखण्डितं किशलयं नवपल्लवम् अनाविद्धम् अच्छिद्रीकृतं रत्नम् अनास्वादितः रसो यस्य तादृशं केनापि प्राक् नास्वादितरसमित्यर्थः नवम् अपूर्वं मधु अखण्डं पूर्णं पुण्यानां सुकृतानां फल-

रूपेण रूपणादर्थतः शब्दतश्च प्राधान्यमवधार्य्यत इति व्यतिरेक-
व्यदामरूपकमिदं शुद्धरूपकेषु उभयभूयिष्ठरूपकभेदः ॥ ७५ ॥

अथ सङ्कीर्णभेदाना चतुष्टयमिहोच्यते।
स्यात् सावयसङ्कीर्णं तथाऽनवयवाह्वयम् ॥ ७६ ॥
तथैवोभयसङ्कीर्णं श्लेषोपहितमित्यपि।
सेषा रूपकभेदाना विंशतिश्चतुरुत्तरा ॥ ७७ ॥

तेषु सावयवसङ्कीर्णं यथा,—

रइअरकेसरणिवहं सोहइ धवलब्भदलसहस्सपरिगअम्।
महुसददसणजोग्ग पिदामहुप्पत्तिपङ्कअ व्व णहअलम ॥

अत्र पितामहोत्पत्तिपङ्कजमिव नभस्तलं शोभते इत्युपमानो-
पमेयभावेन अवयविनोरभेदस्य अविवक्षायामुपमेव न रूप-
कम्। रविकरधवलाभ्रदलसहस्रयोः केशरनिकरदलसहस्रयोश्च
प्रतीयमानाभिधीयमानसादृश्ययोश्च सहजाहार्य्यावयवभूतयोः
अभेदोपचारेण रूपणमिति सावयवरूपेण उपमायाः सङ्कीर्ण-

---

मिव च अनघ निर्दोष सर्वावयवानवद्यमित्यर्थं तत् रूप भोक्तार भोगशील अत्र
शीलाथतृचोर्योगे कर्म्मणि षष्ठी निषेध । समुपस्थास्यति ससेविष्यते इति न जाने।
शकुन्तलाया प्रथमदर्शने राज्ञो दुष्मन्तस्य वितर्क । अत्र पुष्पादिषु रूपितेषु अनाघ्रा-
तत्वादिक वैशिष्ट्यमिति व्यतिरेकवत्। अखण्ड पुण्याना फलमिव इति
इव शब्दप्रयोगात् उत्प्रेक्षा चेति द्वयो सदृष्टिरिति विभाव्यम् ॥ ७५ ॥

अथेति। अथानन्तर सकीर्णभेदाना चतुष्टयम् इह अस्मिन् प्रकरणे उच्यते। एक
सावयवसङ्कीर्णं द्वितीय अनवयवाह्वय तृतीयम् उभयसङ्कीर्ण चतुर्थ श्लेशोपहित
स्यात्। सा एषा रूपकभेदाना चतुरुत्तरा विंशति चतुर्विंशतिप्रकार रूपक-
मित्यर्थ ॥ ७६ ॥

रविकरकेसरनिवह शोभते धवलाभ्रदलसहस्रपरिगतम्।
मधुमददर्शनयोग्य पितामहोत्पत्तिपङ्कजमिव नभस्तलम ॥ स

रवीति। रवे सूर्य्यस्य करा किरणा एव केसरा किञ्जल्का तेषा निवह
समूह यत्र तत् धवलानि शुभ्राणि अभ्राणि मेघा एव दलानि तेषा सहस्रै:

त्वात् इदं सावयवसङ्कीर्णं नाम सङ्कीर्णरूपकेषु उभयभूयिष्ठ-रूपकभेदः ॥ ७८ ॥

निरवयवसङ्कीर्णं यथा,—

दीहो दिअहभुअङ्गो रइबिम्बफणामणिप्पहं विअसन्तो।
अवरसमुद्दमुवगओ मुञ्चन्तो कञ्चुअं धम्मअणिवहम् ॥

अत्र दिवसावयविनो भुजङ्गावयविनश्च अभिधीयमानप्रतीय-मानदैर्घ्यदारुणादिधर्मयोरभेदोपचारेण रूपणमवयवानां चतुर्णां रविबिम्बातपफणामणिनिर्मोकाणां सत्यामप्यभेदो-पचारयोग्यतायां द्वयोरिवशब्दप्रयोगेण उपमाया द्वयोस्तुल्य-रूपणेऽपि असामानाधिकरण्यान्नावयवावयविभावो विभाव्यते इति निरवयवस्योपमाया सङ्कीर्णत्वान्निरवयवसङ्कीर्णं नाम सङ्कीर्णरूपकेषु उभयभूयिष्ठरूपकभेदः ॥ ७९ ॥

उभयसङ्कीर्णं यथा,—

धुअमेहमहुअराओ घणसमआअड्ढिओणअविमुक्काओ।
णहपाअवसाहाओ णिअअट्ठाण व्व पडिगआ दिसाओ ॥

---

परिगत व्याप्त तथा मधु मकरन्द दैत्यभेदश्च तयार्मटस्य उल्लासस्य दर्शनयोग्य दर्शनानुकूलमित्यर्थ अतएव पितामहस्य ब्रह्मण उत्पत्तिपङ्कजमिव नारायण नाभिपद्ममिव इत्यर्थ नभस्तल अन्तरीक्ष शोभते राजते। पुरा कल्पान्तसमये क्षीरोद शायिनो भगवतो नारायणस्य नाभिपद्मात् ब्रह्मा सम्भूत । तस्मिंश्च समये भगवत कर्णमलात् मधु'कैटभश्च द्वावसुरौ सम्भूतौ नाभिपद्मस्थित ब्रह्माण दृष्ट्वा त भक्षयितु' कृतोद्यमौ गगने स्थितावेव नारायणेन युध्यमानौ निधन गताविति पौराणिकी गाथा अत्र अनुसन्धेया ॥ ७७ ॥ ७८॥

दीर्घो दिवसभुजङ्गो रविबिम्बफणामणिप्रभां विकिरन्।
अपरसमुद्रमुपगतो मुञ्चन् कञ्चुकधर्मनिवहम् ॥ स

दीर्घ इति। दीर्घ महान् दिवस एव भुजङ्ग सर्प रविबिम्ब सूर्यमण्डल मेव फणामणि फणारत्न तस्य प्रभाम् आतपमालोकञ्चेति भाव विकिरन्

अत्र पादपरूपेण रूपितस्य नभसो यदेतद्दिशां शाखारूपेण रूपणं मेघानाञ्च मधुकरप्रकरेण तदुभयमपि अन्यपदार्थषष्ठी-समासयोरभिधीयमानेन सावयवं निरवयवञ्चेति उत्प्रेक्षया च सङ्कीर्य्यमाणमुभयसङ्कीर्णरूपकव्यपदेशं लभते। सोऽयं सङ्कीर्णरूपकेषु उभयभूयिष्ठरूपकभेदः ॥ ८० ॥

श्लेषोपहितं यथा,—

पीणपओहरलग्गं दिसाण पवसन्तजलअसमअविइण्णम्।
सोहग्गपढमइण्हं पम्माअइ सरसणहपअं व्व इन्दधणुं ॥

अत्र सरसनखपदाकारस्य इन्द्रधनुष उत्पन्नसादृश्यादभेदोपचा-रेण रूपणे योऽयं सरसे नभसि पदमस्येति व्युत्पत्त्या श्लिष्ट-रूपेण तद्विशेषणप्रकारः। यश्च शोभायाः प्रथमम् अग्र्यं चिह्नं सौभाग्यस्य च प्रथमं चिह्नं पीनपयोधरे मेघे स्तने वा लग्नमि-त्यादिविशेषणविशेष्यभावः तेन दृढं श्लेषेण उपधीयते इति श्लेषोपहितं नाम सङ्कीर्णरूपकेषु उभयभूयिष्ठरूपकभेदः ॥८१॥

इति रूपकालङ्कारनिरूपणम्।

---

विस्तारयन् तथा कञ्चुकां निर्मोक एव घर्मानिवहः स्वेदनिचयः तं मुञ्चन् त्यजन् अपरसमुद्रं पश्चिमसागरं उपागतः प्राप्तः। सायंकाल सवृत्त इति भावः ॥७९॥

धुतमेघमधुकरा घनसमयाकर्षितावनतविमुक्ता।
नभःपादपशाखा निजावस्थानमिव प्रतिगता दिशः ॥ स

धुतेति। धूताः सञ्चालिता मेघा एव मधुकरा भ्रमरा याभिः तथोक्ताः घनसमयेन वर्षागमेन केनचित् पुरुषेणेति च गम्यते। आकर्षिता आक्रान्ता इत्यर्थः स्वार्थे णिच्। गृहीता इति च गम्यते। अतएव अवनता, तथात्वेन प्रतीयमाना इति भावः नम्रीभूताश्चेति गम्यते। विमुक्ता परित्यक्ता कदाचित् मेघावरणात्ययादिति भावः नभः अन्तरीक्षमेव पादपः वृक्षः तस्य शाखा विटपाः दिशः निजावस्थान-मिव स्वस्थितिमिव प्रतिगताः प्राप्ता ॥ ८० ॥

पीनपयोधरलग्नं दिशां प्रवसज्जलदसमयवितीर्णम्।
सौभाग्यप्रथमचिह्नं प्रम्लायति सरसनखपदमिव इन्द्रधनुः ॥ स

पीनेति। दिशां नायिकानामिति ध्वनिः। प्रवसन् अवसानं गच्छन् दिशां

द्वयोर्यत्रोक्तिचातुर्य्यादौपम्यार्थोऽवगम्यते।
उपमारूपकान्यत्वे साम्यमित्यामनन्ति तत्॥ ८२॥
तदानन्त्येन भेदानामसङ्ख्य तस्य तूक्तयः।
दृष्टान्तोक्तिः प्रपञ्चोक्तिः प्रतिवस्तूक्तिरेव च॥ ८३॥
तत्रेवादेः प्रयोगेण दृष्टान्तोक्ति प्रचक्षते।
इवादेरप्रयोगेण प्रपञ्चोक्तिं मनीषिणः॥ ८४॥
वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः।
साम्यप्रतीतिरस्तीति प्रतिवस्तूक्तिरुच्यते॥ ८५॥
तत्र क्रियाजातिगुणद्रव्ययोगादिहेतुके।
साम्ये पूर्वादिभेदेन दृष्टान्तोक्तिर्विधीयते॥ ८६॥

---

न्तर गच्छन्निति ध्वनिः। जलदसमय घनागम नायकश्चेति ध्वनि। तेन वितीर्ण दत्त पीन स्थूल पयोधर मेघ स्तनश्चेति ध्वनि तत्र लग्न ससक्तम् इन्द्रधनु सौभाग्यस्य प्रियवाल्लभ्यस्य प्रथम मुख्य चिह्न लक्षण सरसम आर्द्रं नख-क्षतपदमिव नखप्रहारचिह्नमिव प्रम्लायति प्रकर्षेण म्लानि विलयमिति भाव गच्छतीत्यर्थ। शरद्वर्णनमिदम्॥ ८१॥ इति रूपकालङ्कारनिरूपणम्।

साम्य लक्षयति द्वयोरिति। यत्र उक्तिचातुर्य्यात् वाग्भङ्ग्या द्वयो प्रस्तुता-प्रस्तुतयो औपम्यार्थ सादृश्यार्थ, अवगम्यते प्रतीयते तत् उपमारूपकयो अन्यत्वे विभिन्नत्वे सति तत्र न उपमा न च रूपक सङ्गच्छते इत्येव स्थिते सतीत्यर्थ, साम्यं नाम अलङ्कारम् आमनन्ति कथयन्ति बुधा इति शेष॥ ८२॥

तदिति। तत् साम्यं भेदानाम् आनन्त्येन अशेषत्वेन असङ्ख्य सङ्ख्यया वक्तुम् अशक्यम्। तु किन्तु तस्य उक्तय नामानि दृष्टान्तोक्ति प्रपञ्चोक्ति प्रतिवस्तूक्तिरिति त्रीणि इति शेषः॥ ८३॥

तत्रेति। तत्र दृष्टान्तोक्तिप्रभृतिषु मध्ये इवादे द्योतकस्येति भाव प्रयोगेण दृष्टान्तोक्ति तथा इवादे, अप्रयोगेण अनुपादानेन प्रपञ्चोक्ति मनीषिण विद्वांसः प्रचक्षते कथयन्ति॥ ८४॥

वस्त्विति। किञ्चित् किमपि वस्तु उपन्यस्य उक्त्वा तत्सधर्मण तत्समानधर्मस्य न्यसनात् योजनात् साम्यप्रतीतिरस्ति यत्रेति शेष इत्येषा प्रतिवस्तूक्ति उच्यते॥ ८५॥

सा क्रियायोगनिमित्तसाम्या दृष्टान्तोक्तिः सामान्यतः पूर्वा यथा,—

स्थितः स्थितामुच्चलितः प्रयाता निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददाना छायेव तां भूपतिरन्वगच्छत्॥

अत्र दृष्टान्तदार्ष्टान्तिकयोरनाविष्टलिङ्गत्वादवश्याभिधेयत्वाच्च स्थित इत्यादिषु न लिङ्गभेददोषः। अभिधीयमानस्थानादि-क्रियायोगजनित साम्य समस्तमूर्त्तिमत् साधारणश्च पूर्वमेव छायादृष्टान्त सेय क्रियायोगनिमित्तसाम्या सामान्यतः पूर्वा नाम दृष्टान्तोक्तिः साम्यभेदः॥ ८७॥

सा एव क्रियागुणयोगनिमित्ता विशेषतः पूर्वा यथा,—

सअलुज्जोइअवसुहे समत्थजीअलोअवित्थरन्तपआवे।
ठाइ ण चिर रविविअ विहाणपडिदावि मइलदा सप्पुरिसे॥

अत्र जगदुद्द्योतनक्रियाप्रतापगुणयोगहेतुसाम्यमसाधारणश्च सूर्य्यदृष्टान्त इति विशेषतः क्रियागुणयोगनिमित्तेय पूर्वा नाम दृष्टान्तोक्तिः साम्यभेदः॥८८॥

---

तत्रेति। तत्र तन्मध्ये क्रिया गत्यादय जाति गोत्वादिका गुणा शुक्लादय द्रव्याणि एकव्यक्तिवाचकानि तेषा योगादि हेतुः कारण यस्य तथाभूते साम्य पूर्वादिभेदेन दृष्टान्तोक्ति विधीयते निर्दिश्यते॥ ८६॥

स्थित इति। भूपति दिलीप स्थित दण्डायमान सन् स्थिता दण्डायमानाम् आसनस्य उपवेशनस्य बन्धेन रचनेन धीर निश्चल आसीन सन्नित्यर्थ निषेदुषी निषण्णा कृतासनामित्यर्थ जलाभिलाषी पानीयार्थी सन् जलमाददाना पिबन्ती ता नन्दिनीम् अतएव छायेव प्रतिबिम्बमिव अन्वगच्छत् अनुचचार। अत्र क्रिया-योगसाम्यम्॥ ८७॥

सकलोद्द्योतितवसुधे समस्तजीवलोकविस्तृण्वत्प्रभावे।
तिष्ठति न चिर रवाविव विधानपतितापि मलिनता सत्पुरुषे॥ स

सकलेति। सकल समग्र यथा तथा उद्द्योतिता उद्भासिता वसुधा पृथिवी येन तथाभूते समस्तेषु जीवलोकेषु विस्तृण्वन् विस्तार गच्छन् प्रभावो यस्य तादृशे

गुणयोगनिमित्तसाम्या सामान्यत उत्तरा यथा,—

रूपन्तदोजस्वि तदेव वीर्य्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वात् बिभिदे कुमारः प्रवर्त्तितो दीप इव प्रदीपात् ॥

अत्र रूपादिगुणयोगजन्मजनितं साम्य सामान्यरूपस्य पश्चात् प्रदीपदृष्टान्त इति सामान्यतो गुणयोगनिमित्ता इयम् उत्तरा नाम दृष्टान्तोक्तिः साम्यभेदः ॥ ८९ ॥

सा एव क्रियागुणद्रव्ययोगनिमित्ता विशेषतो यथा,—

अव्वोच्छिन्नपसरिओ अहिअं उद्धाइ फुरिअसूरच्छाओ ।
उच्छाहो सुहडाण विसमक्खलिओ महाणईण व्व सोत्तो ।

अत्र अव्यवच्छिन्नप्रसृत इति क्रियायोगनिमित्त स्फुरितशौर्य्यच्छाय इति गुणयोगनिमित्त स्फुरितसूर्य्यच्छाय इति द्रव्ययोगनिमित्तञ्च साम्य सामान्यविशेषरूपस्य विषमस्खलितमहानदीस्रोतो दृष्टान्त इति विशेषतः क्रियादियोगनिमित्ता इयम् उत्तरा नाम दृष्टान्तोक्तिः साम्यभेदः ॥ ९० ॥

---

सत्पुरुषे पुरुषोत्तमे रवाविव सूर्य्ये इव विधानेन कार्य्यविशेषेण राहुपरागादिनेति च गम्यते मलिनता मालिन्य चिर न तिष्ठति शीघ्रमेव लय गच्छतीति भाव । अत्र क्रियागुणयोगे साम्यम् ॥ ८८ ॥

रूपमिति । तत् रघुसम्बन्धीत्यर्थ ओजस्वि वलिष्ठ रूपम् आकृति, तदेव रघुसम्बन्धि एव वीर्य्यं शूरत्व तदेव रघुसम्बन्धि एव उन्नतत्वम् उन्नतिशालित्वम् उत्तुङ्गत्वम् वा। अत्र कुमारोऽज' प्रदीपात प्रवर्त्तित' प्रज्वालित दीप इव स्वात् निजात् कारणात् जनकात् रघोरिति भाव न विभिदे न विभिन्नता प्राप । पितापुत्रौ अभिन्नौ इव आस्तामिति भाव । अत्र गुणयोगसाम्यम् ॥ ८९ ॥

अव्यवच्छिन्नप्रसृतोऽधिकमुद्धावति स्फुरितसूर्य्यच्छाय ।
उत्साह सुभटाना विषमस्खलितं महानदीनामिव स्रोत ॥ स

अव्यवच्छिन्नेति । अव्यवच्छिन्न व्यवच्छेदरहित' उच्छृङ्खल इत्यर्थ' प्रसृत' प्रवृत्त स्फुरिता उद्दीपिता अश्वादीना सञ्चालनादिति भाव । सूर्य्यस्य छाया प्रभा यस्मिन् तथाभूत स्फुरितशौर्य्यच्छाय इति पाठे स्फुरिता शौर्य्यस्य वीरताया

द्रव्यजातिनिमित्तसाम्या सामान्यतः पूर्वा दृष्टान्तोक्तिः यथा,—

विसवेओ व्व पसरिओ ज जं अहिलेइ बहलधूमुप्पीडो।

सामलइज्जइ तन्त रुहिर व महीअहिस्स विद्दुमवेढम्॥

अत्र धूमविषयोर्विद्रुमरुधिरयोश्च द्रव्यजातियोगकृतं प्रतीयमान श्यामलायत इति धूमविषद्रव्ययोगजनितमभिधीयमानं सामान्यरूपञ्च साम्य सेय दृष्टान्तस्य पूर्वमेवोपन्यासाद् द्रव्यजातियोगनिमित्तसाम्या सामान्यतः पूर्वा नाम दृष्टान्तोक्तिः साम्यभेदः॥८१॥

सेव द्रव्ययोगनिमित्तसाम्या विशेषतो यथा,

सञ्चारिणी दीपशिखेव रात्रौ य यं व्यतीयाय पतिंवरा सा।

नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभाव स स भूमिपालः॥

अत्र दीपशिखादिद्रव्ययोगकृत साम्य सामान्यविशेषरूपौ सञ्चारिणी दीपशिखेति च राजमार्गाट्ट इति च दृष्टान्तौ पूर्वमेव उपन्यस्तौ सेय विशेषतो द्रव्ययोगनिमित्तसाम्या पूर्वा नाम दृष्टान्तोक्तिः साम्यभेदः॥ ८२ ॥

---

छाया प्रभा आवेग इति भाव यच तथाभूत इत्यर्थ सुभटाना सुवीराणाम् उच्छाय' समुदाय विषमे नतोन्नते भूभागे स्खलित पतित महानदीना स्रोत इव अधिकम् अत्यन्तम् उद्धावति वेगेन प्रवर्द्धते इत्यर्थ॥ ९०॥

विषवेग इव प्रसृतो यद् यदभिलेढि बहलधूमोत्पीड।

श्यामलीभवति तत्तद्रुधिरमिव महीरुहस्य विद्रुमवृन्दम्॥ स

विषवेग इति। बहलधूमोत्पीड प्रभूतधूमोद्गम प्रसृतो विसृतो विषवेग इव विषप्रसर इव यद् यत् अभिलेढि स्पृशति तत् तत् महीरुहस्य वृक्षस्य विद्रुमवृन्द प्रवालनिचय रुधिरमिव श्यामलीभवति मलिनीभवति॥ ८१॥

सञ्चारिणीति। सा पतिंवरा पतिवरणार्थिनी इन्दुमती रात्रौ सञ्चारिणी दीपशिखेव प्रदीपार्चिरिव य य भूमिपाल राजान व्यतीयाय व्यतिचक्राम स स भूमिपाल नरेन्द्रमार्गस्य राजमार्गस्य अट्ट इव हर्म्यमिव विवर्णभाव मालिन्यं प्रपेदे प्राप नैराश्यादिति भाव.॥ ८२॥

प्रकृतैव उपमानोत्कर्षेण यथा,

गर्वमसम्बाधमिमं लोचनयुगलेन वहसि किं मुग्धे !।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥

अत्र तव हे लोचनोत्पले एव सरसां पुनर्बहूनि नीलोत्पलानि इति उपमानोत्कर्षः प्रकृत एव प्रतीयते। सा इयम् उपमानोत्कर्षेण प्रकृता नाम प्रपञ्चोक्तिः साम्यभेदः ॥ ९६ ॥

सैव उपमानापकर्षेण यथा,

अन्यतो नय मुहूर्त्तमाननं चन्द्र एष सरले ! कलामयः।
मा कदाचन कपोलयोर्मलं संक्रमय्य समतां नयिष्यति ॥

अत्र उपमानस्य मलिनताकृतोऽपकर्षः प्रकृत एव प्रतीयते। सेयम् उपमानापकर्षेण प्रकृता नाम प्रपञ्चोक्तिः साम्यभेदः ॥ ९७ ॥

सैव उपमानस्य किञ्चिदुत्कर्षेण यथा,

आपातमात्ररसिके ! सरसीरुहस्य
किं वीजमर्पयितुमिच्छसि वापिकायाम्।

---

गर्वमिति। हे मुग्धे ! सुन्दरि ! त्वं लोचनयुगलेन, असबाधं दुरपनेयमित्यर्थः असबाह्यमिति पाठे असवाह्यं सवोढुमनर्हमित्यर्थं गर्वम् अहङ्कारं किं कथं वहसि ?। ननु भो दिशि दिशि सरःसु सरोवरेषु ईदृशानि एवम्प्रकाराणि त्वल्लोचनसदृशानीति भावः नीलनलिनानि नीलोत्पलानि बहूनीति भावः सन्ति विद्यन्ते ॥ ९६ ॥

अन्यत इति। हे सरले ! अकुटिले ! आननं मुखं मुहूर्त्तं कियन्तं कालम् अन्यतः अन्यस्यां दिशि चन्द्रोदयरहितायामिति भावः नय परावर्त्तयेत्यर्थः कथमित्याह चन्द्र इति। एषः कलामयः षोडशकलात्मकः चन्द्रः कदाचन कपोलयोस्त्वन्मुखस्येति भावः मलं स्वं कलङ्कमित्यर्थः संक्रमय्य संक्रान्तं कृत्वा समतां तुल्यतां मा नयिष्यति तव कपोलौ निष्कलङ्कौ स्वमलसङ्क्रमणेन स्वसमौ मा करोतु इति निष्कर्षः ॥ ९७ ॥

कालः कलिर्जगदिदं न कृतज्ञमङ्ग !
स्थित्वा हरिष्यति तवैव मुखस्य शोभाम् ॥

अत्र उपमानस्य उपमेयात् ईषदुत्कर्षः प्रज्ञात एव प्रतीयते । सेयम् ईषदुत्कर्षेण प्रज्ञाता नाम प्रपञ्चोक्तिः साम्यभेदः ॥ ९८ ॥

उपमानोपमेययोः साम्यापत्त्या विज्ञाता यथा,

घरिणीए महाणसकम्मलग्गमसिमइलिएण हत्थेण ।
छित्तं मुहं हसिज्जइ चन्दावत्थं गअं पइणा ॥

अत्र उत्कृष्टोपमेयस्य मसीमालिन्यविज्ञातेन उपमानसाम्यम् आपाद्यमानं प्रतीयते । सेयम् उपमानोपमेययोः साम्यापत्त्या विज्ञाता नाम प्रपञ्चोक्तिः साम्यभेदः ॥ ९९ ॥

विज्ञातैव उपमेयस्य उत्कर्षापत्त्या यथा,

रत्तुप्पलदलसोहा तीअ वि चलअम्मि सुरहिवारुणीभरिए ।
मअतंबेहिं मपाहरपडिमापडिएहिं लोअणेहिं लहुइआ ॥

---

कालेति । हे आपातमात्ररसिके ! अविवेकानुरागिणि ! हे अङ्गे मुग्धे ! कालिन्द्याः दीर्घिकायां सरसीरुहस्य कमलस्य बीजम् अर्पयितुं रोपयितुं किं कथं इच्छसि अभिलषसि निष्फलोऽयमुद्योगः विपरीतकत्वात् इत्याह काल इति । काल. समय. अयमिति शेषः कलिः अशुभकालः इति भावः इदं जगत् न कृतज्ञं कृतोप-कारं न जानातीत्यर्थः । छित्त्वा खनित्वा भूमिमित्यर्थः इदं बीजमिति शेषः त्वदेव उत्पादयित्री इति भावः मुखस्य शोभां श्रियं हरिष्यति चोरयिष्यति अत कमलो-त्पत्तौ तव मुखशोभाहरणादेव भविष्यतीति भावः यद्वा तव मुखस्य शोभां नेष्यति-इत्यर्थः । अत्र पूर्वार्धे उपमेयस्योत्कर्षः । परार्धे उपमानस्योत्कर्ष इति विभागः ॥ ९८ ॥

धरिण्या महानसकर्मलग्नमषीमलिनितेन हस्तेन ।
स्पृष्टं मुखं हस्यते चन्द्रावस्थां गतं पत्या ॥

धरिण्येति । धरिण्या गृहिण्या महानसकर्मणि रन्धनकर्मणि लग्ना यत्कज्ज-ला मषी तया मलिनेन तेन हस्तेन स्पृष्टं मुखं चन्द्रावस्थाम् इति भाव. अतएव

अत्र उपमेयस्य मधुमदताम्रत्वेनैव उत्कर्षः प्रतीयते। सेयम् उपमेयोत्कर्षेण विहिता नाम प्रपञ्चोक्तिः साम्यभेदः ॥ १०० ॥

सैव उपमेयापकर्षापत्त्या यथा,

मृगं मृगाङ्कः सकलं सदाङ्के बिभर्त्ति तस्यास्तु मुखं कदाचित्।
कपोलदेशे मृगनाभिपत्त्रमिषात् सखे! तस्य ततोऽपकर्षः ॥

अत्र मृगाङ्कः सकलं मृगं सदा बिभर्त्ति तन्मुखन्तु कदाचित् मृगनाभिमात्रमेव पत्रम् इति उपमेयस्य वाचनिकी अपकर्षापत्तिः प्रतीयते, सेयम् उपमेयापकर्षापत्त्या विहिता नाम प्रपञ्चोक्तिः साम्यभेदः ॥ १०१ ॥

सैवोपमेयस्य साम्यापत्त्या उपमानोत्कर्षेण च यथा,

न मर्त्त्यलोकस्त्रिदिवात् प्रहीयते म्रियेत नाग्रे यदि वल्लभो जनः।
निवृत्तमेव त्रिदिवप्रयोजनं मृतः स चेज्जीवत एव जीवति ॥

---

चन्द्रावस्था गतं सकलङ्कचन्द्रवत् जातमिति भावः मुखं दृष्टा इति अध्याहार्य्य पत्युः हस्यते ॥ ९९ ॥

रक्तोत्पलदलशोभा तस्याश्चषके सुरभिवारुणीभरिते।
मदताम्रैर्मनोहरप्रतिमापतितैर्लोचनैर्लघ्वी ॥ स

रक्तेति। सुरभिः सौरभवती या वारुणी सुरा तया भरिते आपूरिते चषके पानपात्रे मनोहरप्रतिमापतितैः शोभनप्रतिबिम्बपतितैः मदताम्रैः मद्यपानात् रक्ततां गतैः तस्याः कान्तायाः लोचनैः रक्तोत्पलदलानां शोभा लघ्वी कृता इति शेषः ॥ १०० ॥

मृगमिति। हे सखे! मृगाङ्कः चन्द्रः सदा सर्वस्मिन् काले मृगं कलङ्कमिति भावः अङ्के उत्सङ्गे बिभर्त्ति धत्ते। तु किन्तु तस्याः कान्तायाः मुखं कदाचित् कपोलदेशे मृगनाभिपत्रमिषात् कस्तूरीपत्ररचनाव्याजात् कलङ्कं बिभर्त्तीत्यन्वयः ततः कारणात् तस्य चन्द्रस्य सर्वकालकलङ्कधारिणः इति भावः अपकर्षः हीनत्वम् ॥ १०१ ॥

नेति। यदि वल्लभोजनः प्रियजनः अग्रे न म्रियेत न निधनं गच्छति तदा

अत्र उपमेयस्य यथोक्तधर्मयोगे सति उपमानेन पूर्वार्द्धे साम्यम् उत्तरार्द्धे तु किञ्चित् उत्कर्षो भवति सेयं यथोक्ता विकृता नाम प्रपञ्चोक्तिः साम्यभेदः॥ १०२॥

प्रतिवस्तूक्तिरप्यस्मिन्नृज्वी वक्रा च कथ्यते।
दृष्टान्तोक्तेश्च सा च्छाया प्रपञ्चोक्तेश्च गाहते॥ १०३॥

सा दृष्टान्तोक्तिच्छायया विधौ ऋजुः पूर्वा च यथा,

तन्मन्ये हिमभासस्तारानिकरेण कान्तिरुच्छेद्या।
यत्तस्या मुखमेतद् यदि युवतिमुखानि विजयन्ते॥

अत्र तदिन्दोः तारकौघेण कान्तिरुच्छेद्या पूर्वम् ऋजुतया दृष्टान्तरूपं पश्चाद् यदेतन्मुखं युवतिमुखानि विजयन्ते इति ऋजुत्वेनैव दार्ष्टान्तिकरूपं प्रतिवस्तु उपन्यस्तमिति। सेयं दृष्टान्तोक्तिच्छायया विधौ ऋज्वी पूर्वा च प्रतिवस्तूक्तिः साम्यभेदः॥ १०४॥

सैव उत्तरा वक्रा च यथा,

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥

---

मर्त्यलोकः त्रिदिवात् स्वर्गात् न प्रहीयते नापकृष्यते। चेत् यदि मृत स प्रियजन इत्यर्थः जीवत एव प्रियजनस्येति शेषः जीवति प्राणिति तदा त्रिदिवस्य स्वर्गस्य प्रयोजनम् उपयोगः निवृत्तमेव। न कोऽपि स्वर्गाय यतेतेति भावः॥ १००॥

प्रतिवस्तूक्तिं लक्षयति प्रतीति। अस्मिन् ग्रन्थे प्रतिवस्तूक्तिरपि ऋज्वी सरला वक्रा कुटिला च कथ्यते। सा दृष्टान्तोक्तेश्च प्रपञ्चोक्तेश्च छाया सादृश्यं गाहते आश्रयति॥ १०२॥

तदिति। यदि युवतीनां अन्यासां तरुणीनां मुखानि तस्याः मल्लिकायाः यदेतत् मुखं विजयन्ते पराजयन्ते तत्तदा तारानिकरेण नक्षत्रनिचयेन हिमभासः चन्द्रस्य कान्तिः उच्छेद्या निर्जेया इति मन्ये। तारानिकरेण चन्द्रपरिभवः अन्यनारीवदनैः तन्मुखपरिभवस्तुल्य इति भावः॥१०३॥१०४॥

अत्र शुद्धान्तदुर्लभमिति वक्रोक्त्या पूर्वं दार्ष्टान्तिकरूपं वस्तु उपन्यस्य पश्चात् दूरीकृताः खलु गुणैरिति वक्रोक्त्यैव दृष्टान्तरूपं प्रतिवस्तु उपन्यस्तमिति। सेयं दृष्टान्तोक्तिच्छायया विधौ वक्रोत्तरा च प्रतिवस्तूक्तिः साम्यभेदः ॥ १०५ ॥

दृष्टान्तोक्तिच्छायया निषेधे ऋजुः पूर्वा यथा,

न मालतीदाम विमर्दयोग्यं न प्रेम नव्यं सहतेऽपराधान्।
म्लानापि न म्लायति केसरस्रग् देवी न खण्डप्रणया कथञ्चित् ॥

अत्र न मालतीदाम विमर्दयोग्यमिति म्लानापि न म्लायति केसरस्रगिति च ऋजूक्तिभ्यामेव पूर्वं दृष्टान्तरूपे वस्तुनी प्रतिषिध्य उत्तरकाले न प्रेम नव्यं सहतेऽपराधानिति देवी न खण्डप्रणया कथञ्चिदिति च दार्ष्टान्तिकरूपे प्रतिवस्तुनी ऋजूक्त्यैव प्रतिषिद्धे। सेयं निषेधे ऋज्वी पूर्वा च दृष्टान्तोक्तिच्छायया प्रतिवस्तूक्तिः साम्यभेदः ॥ १०६ ॥

सैव उत्तरा च वक्रा च यथा,

मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥

अत्र कथं वा स्यादिति वक्रया निषेधोक्त्या दार्ष्टान्तिक-

---

शुद्धान्तेति। यदि आश्रमवासिनोऽपि तपोवनवर्त्तिनोऽपि अतिक्लेशेन जीवत इति भावः जनस्य इदं शुद्धान्तदुर्लभं राजान्तःपुरदुष्प्रापं वपुः शरीरं स्यादिति शेषः तदा वनलताभिः अयत्नपरिवर्द्धिताभिरिति भावः गुणैः निर्जनैर्सनोहरत्वादिभिरित्यर्थः उद्यानलताः उपवनवल्ल्यः यत्नपरिवर्द्धिता इति भावः दूरीकृता खलु निर्जिता एव ॥ १०५ ॥

नेति। मालतीनां दाम माला न विमर्द्दयोग्यं न विमर्द्दसहमित्यर्थः। नव्यम् अभिनवं प्रेम अपराधान् दोषान् न सहते न क्षमते। केसरस्रक् वकुलमाला म्लानापि न म्लायति दीर्घकालमम्लानेव तिष्ठतीति भावः। देवी पुराणप्रणयवतीति भावः कथञ्चित् न खण्डप्रणया न प्रणयभङ्गमिच्छतीति भावः ॥ १०६॥

मभिधाय पश्चान्न वसुधातलात् प्रभातरलं ज्योतिरुदेतीति वैयधिकरण्यवक्रयैव निषेधोक्त्या दृष्टान्तोऽभिहितः। सेयं निषेधे वक्रोत्तरा च दृष्टान्तोक्तिच्छायया प्रतिवस्तूक्तिः साम्य-भेदः॥ १०७॥

प्रपञ्चोक्तिच्छायया विधौ ऋज्वी यथा,

तरङ्गय दृशोऽङ्गने। पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम्।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिकाम्
उदञ्चय मुखं मनाग् भवतु च द्विचन्द्रं नभः॥

अत्र प्रथम-चतुर्थपादयोः उपमानोपमेयसाम्य वैकृतं द्वितीय-तृतीयपादयोरुपमानापकर्षः प्रकृत इति। सेयं प्रपञ्चोक्ति-च्छायया विधौऋज्वी नाम प्रतिवस्तूक्तिः साम्यभेदः॥१०८॥

सैव विधौ वक्रा यथा,

एक्कोसम्मिअभुअभङ्गे विमलकवोले
वअणम्मि तुइ समअच्छि तिरिच्छणअणे।
एहु ससिविम्बउ कलङ्कगारउ पथ्थरउ क्खित्तउ
उप्परेण भमाइ अणिमच्छणखप्परउ॥

---

मानुषीष्विति। मानुषीषु नरजातीयरमणीषु अस्य रूपस्य आकृतेः सौन्दर्य्यस्य वा कथं वा केन प्रकारेण वा सम्भवः स्यात्? नैव कथमपीत्यर्थः। तथाहि प्रभातरलं कान्तिपूर्णं ज्योतिः वसुधातलात् पृथ्वीतलात् न उदेति न उदयं प्राप्नोति॥ १०७॥

तरङ्गयेति। अङ्गने। कान्ते। दृशः नयनानि तरङ्गय सञ्चालय, चित्रं मनो-हरम् इन्दीवरं नीलोत्पलं पततु दृष्टिं देहीति भावः रदच्छदम् ओष्ठम् अधरञ्च स्फुटीकुरु व्यक्तीकुरु विद्रुमः प्रवालः श्वेतता व्रजतु पराभवादितिभावः। सम्भाषस्वेति निष्कर्षः। वपुः शरीरं क्षणम् अपाकुरु आवरणशून्यं कुर्वित्यर्थः काञ्चनं स्वर्णं कालिकां मालिन्यं स्पृशतु मलिनीभवतु इत्यर्थः। मनाक् किञ्चित् मुखम् उदञ्चय उन्नमय, नभः आकाशं द्विचन्द्रं चन्द्रद्वयशोभितमित्यर्थः, भवतु च॥ १०८॥

अत्र उपमेयोत्कर्षो वैकृतः उपमानापकर्षः प्राकृतः प्रकाशत एव या पुनः इयम् उत्तरार्द्धेन रूपकेण उपमानापकर्षस्य उक्तिभङ्गिः तया इयं प्रपञ्चोक्तिच्छायया विधौ वक्रा नाम प्रतिवस्तूक्तिः साम्यभेदः ॥ १०९ ॥

सैव निषेधे ऋज्वी यथा,

> दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः ?
> सन्तश्चेदमृतेन किं ? यदि खलास्तत् कालकूटेन किम् ? ।
> किं कर्पूरशलाकया यदि दृशो: पन्थानमेति प्रिया ?
> संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ? ॥

अत्र उपमेयोत्कर्षः ऋजूक्त्यैव च निबद्ध इति सेयं प्रपञ्चोक्तिच्छायया निषेधे ऋजुर्नाम प्रतिवस्तूक्तिः साम्यभेदः ॥ ११० ॥

सैव निषेधे वक्रा यथा,

> तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा
> तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु ।

---

दातार इति । यदि दातारः वदान्याः दानशीला इत्यर्थः पुरुषाः सन्तीति शेषः तदा कल्पशाखिभिः कल्पतरुभिः अलं कल्पतरवो निष्प्रयोजना इति भावः । यदि अर्थिनः भिक्षुकाः सन्तीति शेषः तदा तृणैः किम् ? भिक्षुकास्तृणवदवज्ञेया इति भावः । चेद् यदि सन्तः सज्जनाः सन्ति, तदा अमृतेन किम् ? परितृप्तिसाधने अमृतसत्पुरुषयोः सममेवेति भावः । यदि खला दुर्जनाः सन्तीति शेषः तत् तदा कालकूटेन महाविषेण किम् ? न किमपि प्रयोजनमित्यर्थः उभयोः समदुःखदायित्वादिति भावः । यदि प्रिया दृशोः पन्थानं दृष्टिपथम् एति आगच्छति तदा कर्पूरशलाकया किम् ? न किमपि प्रयोजनम् उभयोरपि तुल्यतया नयनप्रीतिकरत्वादिति भावः । संसारे सत्यपि विद्यमानेऽपि यदि अपरम् इन्द्रजालं मायिकव्यापारविशेषः अस्ति तेनापि इन्द्रजालेन किम् ? न किमपि प्रयोजनमित्यर्थः संसारेन्द्रजालयोः तुल्यत्वादिति भावः ॥१०९॥११० ॥

धिक् कन्दर्पधनुर्भ्रुवौ च यदि ते किं वा बहु ब्रूमहे
तत् सत्य पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥

अत्र उपमानापकर्षो वक्रोक्त्या च निषेधः शेषं पूर्ववत् ते इमे द्वे अपि सालोपमाच्छायया प्रपञ्चोक्तौ पूर्वं पुनः उपमाच्छायये ति मन्तव्यम् ।

इति साम्यालङ्कारनिरूपणम् ।

अर्थयोरतिसादृश्याद् यत्र दोलायते मनः ।
तमेकानेकविषयं कवयः संशयं विदुः ॥ १११ ॥
तत्रैकविषयोऽनेको यस्मिन्नेकत्र शङ्क्यते ।
यस्मिन्नेकमनेकत्र सोऽनेकविषयः स्मृतः ॥ ११२ ॥

---

तदिति । यदि तत् वक्त्रं वदनं स्यादिति शेषः तदा शशिनः चन्द्रस्य कथा मुद्रिता विलुप्ता भवेदिति शेषः । तद्वक्त्रस्यैव जितशशिनः तत्कार्य्यकारित्वादिति भावः । चेत् यदि तत् स्मितं मृदुहसितं स्यादिति शेषः तदा सुधा अमृतं का ? कुत्सितेति भावः । तत्स्मितापेक्षया सुधाया अपकृष्टत्वादितिभावः । तत् चक्षुः नयनं यदि स्यादितिशेषः तदा कुवलयैः नीलोत्पलैः हारितं परिभूतमित्यर्थः । चेत् यदि ताः गिरः वाचः स्युरिति शेषः तदा मधु धिक् निन्द्यमित्यर्थः धिङ्निर्भर्त्सन-निन्दयोरित्यमरः । यदि ते भ्रुवौ स्यातामिति शेषः तदा कन्दर्पधनुः कामकार्मुकं धिक् निन्दामीत्यर्थः । वा अथवा किं बहु ब्रूमहे वदामः ? वेधसः विधातुः सर्गक्रमः सृष्टिनियमः पुनरुक्तवस्तुनि विमुखः पराङ्मुखः विरतः इत्यर्थः एकरूपं वस्तु द्वितीयं न सृज्यते इत्येव सृष्टिनियमः इति भावः तत् सत्यं यद्येतदिति शेषः ॥

संशयालङ्कारं निर्दिशति अर्थयोरिति । अर्थयोः अभिधेययोरतिशयेन सादृश्यात् यत्र मनः दोलायते एतदिदम् अन्यदेति द्वैधीभावमवलम्बते इत्यर्थः कवयः एकानेकविषयम् एकविषयम् अनेकविषयञ्चेति द्विविधं संशयं विदुः जानन्ति ॥ १११ ॥

तत्रेति । तत्र तयोर्मध्ये यस्मिन् एकत्र वस्तुनीति शेषः अनेकः अर्थः शङ्क्यते आशङ्क्यते स एकविषयः । यस्मिन् अनेकत्र वस्तुनि एकं वस्तु शङ्क्यते इत्यन्वयः स अनेकविषयः स्मृतः कथितः ॥ ११२ ॥

तयोः आद्योऽभिधीयमानसादृश्यो यथा,

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद् ब्रूयाः सखि! योगिनी किमसि भोः! किं वा वियोगिन्यसि॥

अत्र एकस्मिन् वस्तुनि वस्तुद्वयस्य अभिधीयमानसामान्यप्रत्यक्ष तद्विशेषप्रत्यक्षादुभयविशेषस्मरणाच्च यो विमर्षः सोऽयम् एकविषयः संशयः॥ ११३॥

स एव प्रतीयमानसादृश्यो यथा,

किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम्?।
मम दोलायते चित्तं पश्यतस्त्वां घनस्तनि!॥

अत्र मुखलक्षणे लोचनलक्षणे चैकस्मिन्नेव वस्तुनि पद्मलक्षणं भ्रमर-लक्षणञ्च अपरमपि वस्तु प्रतीयमान-सादृश्यम् आशङ्क्यते सोऽयमपि एकविषय एव संशयः। अनेकवस्तुविषयो द्विधा शुद्धो मिश्रश्च॥ ११४॥

---

आहारे इति। भोः सखि! आहारे भोजने विरतिः अप्रवृत्तिरित्यर्थः ते इति सर्वत्र योज्यम्। समस्ता विषया भोग्यवस्तूनि तेषां ग्रामे समूहे सर्वस्मिन् व्यापारे इति भावः परा एकान्ता निवृत्तिः अप्रवृत्तिरित्यर्थः यत् नासाग्रे नयनम् एतत् अपरम् अन्यत्, यच्च मनः एकतानम् एकाग्रम्। इदं मौनं तूष्णीभावश्च यत् विश्वम् अखिलं समग्रं जगत् इदञ्च ते शून्यम् आभाति भासते, तत् तस्मात् योगिनी समाधिनिरता किमसि? किंवा वियोगिनी असीति ब्रूहि कथय॥ ११३॥

किमिति। हे घनस्तनि पीनपयोधरे! एतदित्यध्याहार्य्यम् एतत् अन्तर्भ्रान्तः अलिर्भ्रमरः यस्य तथाविधं पद्मं किम्? ते तव लोलेक्षणं चञ्चलनयनं मुखं किम्? त्वां पश्यतः अवलोकयतः मम चित्तम् इत्थं दोलायते द्वैधमवलम्बते॥ ११४॥

द्वयोः प्रतीयमानसादृश्यः शुद्धो यथा,

वाला भंभुरभोली उल्लसिअणिअसिणी
गहणं सुणिअ विणिक्कन्ता णिद्दाए भेम्भली ।
राहुवि तीअ मुह जोहइ पुणु जोहइ
गअणु भुल्ललेओ णहु आणइ दोण्ह वि चन्दुकं वणु ॥

अत्र द्वयोः प्रतीयमानसादृश्ययोः वालिकामुखचन्द्रयोरेकश्चन्द्र एव विशङ्कत इति सोऽयं अनेकविषयः शुद्धः संशयः ॥ ११५ ॥

अभिधीयमानसादृश्यो मिश्रो यथा,

द्वावप्येतावभिनवजपापुष्पभासा निवासौ
तिष्ठत्यन्ते द्वयमपि वियन्मण्डलस्योपसन्ध्यम् ।
अस्तं को यात्युदयति च कः को रविः कः शशाङ्कः
का च प्राची तदिह न वयं का प्रतीचीति विद्मः ॥

अत्र द्वयोरभिधीयमानसादृश्ययोः सूर्य्याचन्द्रमसोः प्राचीप्रतीच्योः वा तदन्यतममेकमेव वस्तु पर्य्यायतो विशङ्क्यते इति अनेकविषयोऽयं मिश्रः संशयः । उपलक्षणञ्च एतत् तेन वितर्कोक्त्यादयोऽपि संशयोक्ताविव द्रष्टव्याः ॥ ११६ ॥

तद्यथा,

सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ।

---

वाला निष्कपटोल्लसित निवसनाग्रहण श्रुत्वा विनिष्क्रान्ता निद्रया व्याकुला । राहुरपि तस्या मुख पश्यति पुनः पश्यति गगन भ्रान्तिमान् खलु न जानाति द्वयोरपि चन्द्रः कः ।

द्वाविति । द्वावपि एतौ रविशशाङ्कौ अभिनवजवापुष्पस्य भासा प्रभाणा निवासौ आश्रयौ रक्तावित्यर्थ द्वयमपि एतयोरिति शेष उपसन्ध्य सन्ध्याकाले साय प्रातश्चेति भाव' विभक्त्यर्थे अव्ययीभाव । वियन्मण्डलस्य आकाशमण्डलस्य अन्ते चरमे भागे तिष्ठति । क अस्त याति कश्च उदयति उदयं गच्छति, क रविः सूर्य्य कश्च शशाङ्क. चन्द्र ? प्राची पूर्वा दिक् का ? प्रतीची पश्चिमा च का ? तदेतत् इह जगति वयं न विद्म. न जानीमः ॥११५॥११६॥

शिरोरुहा: स्वित् नतपक्ष्मसन्ततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥
अगूढहासस्फुटदन्तकेशरं मुखं स्विदेतद्विकचं नु पङ्कजम् ।
इति प्रलीना नलिनीवने सखीं विदांबभूवु: सुचिरेण योषित:

युग्मम् ॥

यथा च,

मुहे मअक्खलिउल्लावे ण्हाणोल्लए चिउरेवि
णिण्णिअसणसारे समोत्तिअहारे उरे ।
कालन्तरे तरलच्छिहु मअणु समुल्लसइ
माहहु पुणु थणगुडरे ण मुणइ कहि वसइ ॥

क: पुनर्वितर्कसंशययोर्विशेष:, उच्यते । निर्णयासन्नो वितर्क:

---

सरोजपत्रे इति । एते इत्यध्याहार्य्यम् एते परिलीन संसक्त षट्पद भ्रमर ययो तथाभूते सरोजपत्रे पद्मपत्रे वा विशाला आयता दृष्टिर्यस्या तथा भूताया सख्या' विलोचने नयने अमू स्वित् किम् ? नता पक्ष्माणा नेत्रलोम्ना सन्तति समूह' यस्या तथाभूताया सख्या शिरोरुहा केशा स्वित् किम् ? निशब्दनिश्चल द्विरेफाणा भ्रमराणा वृन्द सङ्घ नु ? किम् ? अगूढेन स्फुटेन हासेन स्फुटा प्रकटा दन्ता एव केशरा किञ्जल्का यत्र तादृश मुख स्वित ? किम् ? सख्या इति शेष । एतत् विकच प्रफुल्ल पङ्कज पद्म नु किम् ? योषित नार्य्य नलिनीवने प्रलीना संसक्ता सखी कामपि सङ्गिनी नारी इति अनेन प्रकारेण सुचिरेण बहुना चणेन विदाम्बभूवु निश्चिक्यु ॥

मुखे मदस्खलितोल्लापे स्नानप्लुतेषु चिकुरेष्वपि
निर्निवसनसारे समौक्तिक हारे उरसि ।
कालान्तरे तरलाक्षीर्मदन समुल्लसति
माधव पुन स्तनकुड्मले न मन्यते क्व वसति ॥

मुखे इति । मदन काम' मदेन स्खलित' अस्फुटता गत इत्यर्थ उल्लाप. भाषण यत्र तादृशे मुखे वदने स्नानप्लुतेषु स्नानार्द्रेष्विति यावत् शोषणार्थं मुक्तवसनेष्विति भाव चिकुरेषु केशेषु निर्निवसनसारे निवसनस्य अभाव. निर्निवसन वसनाभाव इत्यर्थ. तेन सार, उत्कृष्ट, यस्य तादृशे समौक्तिक-

वितर्कासन्नश्च संशयः। संशयानो हि वितर्कस्य कोटिमारुह्य ततो विभ्रष्टस्तत्वमभिनिविशते। यथा पूर्ववाक्ये विदाम्बभूवुरिति। संशयमेव वा विगाहते यथा माहइ पुणु थणगुड़रे ण मुणइ कहि वसइ। शब्दाश्च किं स्विदादयः तुल्यरूपा एव संशयविपर्य्ययोरिति दुरवबोधस्तद्विशेषः। नन्वेवं वितर्कादयोऽपि उभयालङ्काराः स्युः सत्यं किन्तु, उक्तिपक्षे परार्थानुमानवत् स्वरूपपक्षे स्वार्थानुमानवदिति। अयमेव चोक्तिशब्दस्यार्थः, तेन स्वरूपमात्रोक्तौ संशयवितर्कादयोऽपि अर्थालङ्काराः। उक्तिप्राधान्ये तु उभयालङ्काराः ॥ ११७ ॥

अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम्।
औपम्यवत्यनौपम्या चेति सा द्विविधोच्यते ॥ ११८ ॥
वाच्ये प्रतीयमाने च सादृश्ये प्रथमा तयोः।
तथाभूते द्वितीया स्यादपह्नोतव्यवस्तुनि ॥ ११९ ॥

---

हारे मुक्ताहारशोभिनि इत्यर्थः उरसि वक्षसि तथा कालान्तरे समयविशेषे विलासावसरे इत्यर्थः तरलयोश्चञ्चलयोः अक्ष्णोः नयनयोः समुल्लसति परिस्फुरति कामोद्दीपत्वादेतेषामिति भावः। पुनः किन्तु माधवः वसन्तः स्तनकुड्मले समुल्लसतीति पूर्व्वेणान्वयः किन्तु क्व कुत्र वसतीति न मन्यते न ज्ञायते जनैरिति शेषः तादृशे कामस्य समुद्दीपनोपकरणे विद्यमाने माधवस्य प्रयोजनं नास्तीति भावः ॥

क इति। विशेषः भेदः। निर्णयासन्नः निर्णयस्य निश्चयस्य सन्निहितः इत्यर्थः। संशयानः सन्दिहन् कोटिम् अग्रभागम्। ततः वितर्ककोटेः भ्रष्टः विच्युतः तत्त्वं निर्णयबुद्धिम् अभिनिविशते आश्रयति। संशयविपर्य्ययौः सन्देहवितर्कयोः। दुरवबोधः दुर्ज्ञेयः। तद्विशेषः तयोर्भेदः। अपह्नुतिं लक्षयति अपह्नुतिरिति। किञ्चित् वस्तु अपह्नुत्य निषिध्य अन्यस्य अर्थस्य वस्तुनः दर्शनं प्रतिपादनम् अपह्नुतिः। सा च औपम्यवती अनौपम्या चेति द्विविधा उच्यते ॥ ११७—११८॥

वाच्ये इति। तयोर्द्विविधयोः, औपम्यवत्यनौपम्ययोः, मध्ये प्रथमा औपम्यवती

अनौपम्यवती भूयः पूर्वापूर्वा च कथ्यते ।
तासामुदाहृतिष्वेव रूपमाविर्भविष्यति ॥ १२० ॥

तत्र अभिधीयमाना औपम्यवती यथा,

गिम्हे दवग्गिमसिमइलिआइ दीसन्ति विंझसिहराइं ।
आससु पउत्थवइएण होन्ति णवपाउसब्भाइ ॥

अत्र नवप्रावृडभ्राणां विन्ध्यशिखरैः अभिधीयमानसादृश्यैः अपह्नुतत्वात् अभिधीयमाना औपम्यवती अपह्नुतिः ॥ १२१ ॥

प्रतीयमाना औपम्यवती यथा,

न केतकीनां विलसन्ति सूचयः प्रवासिनो हन्त हसत्ययं विधिः ।
तडिल्लतेयं न चकास्ति चञ्चला पुरः स्मरज्योतिरिदं विजृम्भते ॥

अत्र केतकीसूचीनां विधिविहसितैः प्रतीयमानसादृश्यैः तडिल्लतायाश्च स्मरज्योतिषा अपह्नुतत्वाद् इयं प्रतीयमाना औपम्यवती अपह्नुतिः ॥ १२२ ॥

---

सादृश्ये साम्ये वाच्ये अभिधीयमाने प्रतीयमाने चेति द्विधा भवतीति । द्वितीयापि अनौपम्येत्यर्थः अपह्नोतव्य वस्तुनि तथाभूते वाच्ये प्रतीयमाने च द्विविधा भवति ॥ ११९ ॥

अनौपम्यवतीति अनौपम्यवती च भूयः पुन पूर्वा अपूर्वा च कथ्यते । उदाहृतिषु उदाहरणेषु तासाम् औपम्यवत्यादीनाम् अपह्नुतीना रूप लक्षणम् आविर्भविष्यति प्रकटिष्यति ॥ १२० ॥

ग्रीष्मे दावाग्निमषिमलिनानि दृश्यन्ते विन्ध्यशिखराणि ।
आशासु प्रवसत्पथिकेन भवन्ति नवप्रावृडभ्राणि ॥ सं

ग्रीष्म इति । ग्रीष्मे निदाघे दावाग्निर्वनानल एव मसि तेन मलिनानि दग्धत्वात् मलिनीकृतानि विन्ध्यस्य पर्वतस्य शिखराणि शृङ्गाणि प्रवसन् देशान्तर गच्छन् पथिकः तेन विरहिणीति भाव, नवानि प्रावृष वर्षाया अभ्राणि मेघा दृश्यन्ते ॥ १२१ ॥

नेति । केतकीना सूचयः अग्राणि न विलसन्ति विकसिततया न स्फुरन्ति, हन्त खेदे अयम् विधि, दैवं प्रवासिनी विरहिणः इत्यर्थः हसति । नैम्र केतकी

अनौपम्या अभिधीयमानापह्नोतव्यवस्तुः पूर्वा यथा,

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः।
अवगच्छेयुराः ज्ञातमहो शीतानिलं वनम् ॥

अत्र राजकन्यानुरागलक्षणस्य रोमाञ्चकारणस्य रक्षकावमति-हेतोः पूर्वमेव अभिहितस्य च वनानिलशैत्यलक्षणेन कारणान्तरेण अपह्नवः। न चैतयोः सादृश्यमस्ति। सेयम् अनौपम्याभिधीयमानापह्नोतव्यवस्तुः कार्य्यात् पूर्वं कारणोपन्यासेन पूर्वेति उच्यते ॥ १२३ ॥

सैव अपूर्वा यथा,

आनन्दाश्रुप्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम्।
अक्षि मे पुष्परजसा वातोद्धूतेन पूरितम् ॥

अत्र आनन्दाश्रुप्रवृत्तमिति पूर्वं कार्य्यस्य पश्चाद् दृष्ट्वैव कन्यकामिति कारणस्य उपन्यासः। शेषं पूर्ववत् सेयमभिधीयमानापह्नोतव्यवस्तु अनौपम्यापह्नुतिः अपूर्वेति उच्यते ॥ १२४ ॥

---

सूचीविकास किन्तु प्रवासिन प्रति विधातुर्हासोऽयमिति भाव। इय, चञ्चला तडिल्लता विद्युद्वल्ली न चकास्ति न दीप्यते, पुर' अग्रत इद स्मरस्य कामस्य ज्योति विजृम्भते विस्फुरति। विरहिनामुद्दीपकोऽय वर्षागम इति भाव ॥१२२॥

राजेति। रक्षका अनुचरा इति भाव रोमोद्भेदेन रोमाञ्चोद्गमेन मा राजकन्यायामनुरक्ताम् अवगच्छेयु जानीयु। आ इत्यव्ययम् आमिति पाठान्तर वन शीतोऽनिलो यस्मिन् तथाभूत ज्ञातम्। अत्र राजकन्यानुरागजनितसात्त्विकभावो दयात रोमाञ्चोद्गम शीतानिलसङ्गाद् जात इत्यन्यथा प्रकटितमिति भावः ॥१२३॥

आनन्देति। कन्यका दृष्ट्वैव कथ मे मम आनन्दाश्रु आनन्दवाष्प प्रवृत्त प्रसृतम्। वातोद्धूतेन वातचालितेन पुष्परजसा पुष्पपरागेण मे मम अक्षि नेत्र पूरितम् आकीर्णम्। अत्र कन्यादर्शनजानुरागात् आनन्दाश्रुरूपसात्त्विकभावो दय. पुष्परजसा पूरितनेत्रत्वरूपकारणान्तरेणान्यथा कृत इति भाव. ॥ १२४ ॥

अनौपम्यैव प्रतीयमानापह्नोतव्यवस्तुः पूर्वा यथा,

उप्पेल्लिअ वइकारिल्लआइ उच्चेसि दइअवच्छलिए।
कण्टअविलिहिअपीणुण्णअत्थणि उत्तम्मसु एताहे॥

अत्र च एतस्याः स्तनयोः उपपतिना नखक्षतं कृतमपि तु कण्टकैरिति प्रतीयमानापह्नोतव्य वस्तु प्रकाशते। पूर्ववदेव च पूर्वार्द्धे तु कारणस्य उपन्यासः पश्चिमार्द्धे तु कार्य्योपदेशो दृश्यते। सेयमनौपम्या प्रतीयमानापह्नोतव्यवस्तुः पूर्वा नाम अपह्नुतिः अपह्नुत्य किञ्चिदन्यार्थदर्शनमिति लक्षणयोगात् जायते॥

सैव अपूर्वा यथा,

कस्स व ण होइ रोसो दट्ठ ण पिआइ सव्वण अहरम्।
सभमरपउमाघाइ णिवारिअवामे ! सहसु एण्हिम्॥

अत्रापि न अस्या उपपतिना अधरो व्रणितः किं तर्हि भ्रमरेणेति प्रतीयमानापह्नोतव्यं वस्तु। पूर्वार्द्धे तु सव्रणमधरमिति कार्य्यम् उपन्यस्य पश्चिमार्द्धे सभ्रमरकमलाघ्रायिणीति कारणम् उपन्यस्तम्। सेयम् अन्यौपम्या प्रतीयमानापह्नोतव्य-वस्तुः अपूर्वा च यथोक्तलक्षणयोगात् जायते॥ १२५॥

---

उत्कृष्यवचनकारिणि। लतामुच्चैरुदस्यापच्छलिताकाम्।
कण्टकविलिखितपीनोन्नतस्तनि उत्ताम्यस्वेदानीम्॥

कस्य वा न भवति रोषो दृष्ट्वा प्रियाया सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि। वारितवामे। सहस्वेदानीम्॥ स

कस्येति। प्रियाया पत्न्या' अधर सव्रण दशनक्षतमिति यावत् दृष्ट्वा कस्य जनस्य वा रोष' क्रोध न भवति ? अपितु सर्वस्यैव भवतीत्यर्थ। हे सभ्रमरपद्मा-घ्रायिणि। भ्रमरयुक्तपद्मघ्राणकारिणि। वारिता निवारिता सा जिघ्र पद्ममेतद्धिति निषिद्धापि ईवासा प्रतिकूला अश्रुतमद्वचनेत्यर्थ, तत्सम्बुद्धौ इदानी सहस्व सह्य कुरु भर्त्तृकोपमिति शेष। अत्र सख्या उपपतिदष्टमधरं भर्त्रा उपलक्ष्य भ्रमरकृतमेतत् क्षतमिति अन्यथाकृतमिति भाव.॥ १२५॥

समाधिमन्यधर्माणामन्यत्रारोपणं विदुः।
निरुद्भेदोऽथ सोद्भेदः स द्विधा परिपठ्यते ॥ १२६ ॥

तयोः निरुद्भेदो यथा,

दूरपरिबद्धराए अवऊहन्तम्मि दिणअरे अवरदिसम्।
असहन्ति व्व किं लिज्जइ पिअदमपच्चक्खदूसणं दिणलच्छी ॥

अत्र दिनकरदिनलक्ष्मीप्रतीचीना समारोपितनायकनायिका-प्रतिनायिकाधर्माणां दूरप्रतिबद्धराग इत्यादिभिः श्लिष्टपदैः अनुद्भेदः। एवमन्यधर्माध्यारोपात् अयं निरुद्भेदः समाधि-भेदः ॥

सोद्भेदो यथा,

वल्लहे लहुवीलं तइ एत्तइ पुणु वहु वलि
किज्जसि तामरसिणि तुम्ह रोसहु थिरहु।
जेण णोरग्गलु जप्पइ किंपि णिजावजणु
ताव हिमेण विसित्ति झत्ति पुलुट्ठतसु ॥

अत्रापि प्रियतमव्यलीकासहिष्णुः कापि कामिनी हिमानी-स्पृष्टा कमलिनीमालोक्य तस्यामात्मधर्मान् प्रिये च सूर्य्यधर्मान् आरोपयति। ते च ;वलिः क्रियेऽह तव रोषस्य इत्यादिभिः पदैःउद्भिद्यमाना इह प्रतीयन्त इति अय सोद्भेदः समाधिभेद.।

---

समाधि लक्षयति समाधिमिति। अन्यस्य वस्तुन धर्म्माणा गुणक्रियारूपाणाम् अन्यत्र अपरस्मिन् वस्तुनि आरोपण समाधिं विदु' जानन्ति। स समाधि निरुद्भेद' अथ पश्चात्तरे सोद्भेद इति द्विधा द्विप्रकार. परिपठ्यते कथ्यते॥ १२६ ॥

दूरपरिबद्धरागे अवगूहति दिनकरे अपरदिशम्।
असहमानेव किं लीयते प्रियतमप्रत्यक्षदूषण दिनलक्ष्मीः ॥ स

दूरेति। दूरम् अत्यन्त परिबद्धः अधिगत' रागो लौहित्यम् अनुरागश्च येन तथाभूते दिनकरे सूर्य्ये अपरा दिश पश्चिमामित्यर्थ' अन्यां नायिकाञ्चेति ध्वन्यते अवगूहति आश्रयति आलिङ्गति चेति ध्वन्यते सति दिनलक्ष्मीः दिवसश्रीः,

अन्यस्यान्यधर्मास्ते अन्यधर्मा इति व्युत्पत्त्या धर्मिणोऽपि अध्यासे समाधिरिष्यते ॥ १२७ ॥

सधर्माणां धर्मिणश्च यथा,

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा-
वादद्वैतं सुचिरमभवत् सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहतं केशिनं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ? ॥

अत्र संबोध्य वर्णनीये विष्णुस्वरूपस्य धर्मिणस्तद्धर्माणां च अध्यासादयं धर्मिधर्माध्यासरूपः समाधिः ॥ १२८ ॥

धर्मिण एव अध्यासो यथा,

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यात्
निद्रामप्यस्य पूर्वमनलसमनसो नैव सम्भावयामि ।
सेतुं बध्नाति कस्मात् पुनरयमखिलद्वीपनाथानुयातः
त्वय्यायते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

---

नायिका चेति गम्यते प्रियतमस्य स्वामिन प्रत्यक्षदूषण समक्षकृतापराधम् असह-मानेव सोढुमशक्नुवतीव लीयते किम् ? लयं गच्छति किम् ? ॥ १२७ ॥

वल्लभे लघुवदत्यागच्छति पुनर्बहुबलिक्रिये तामरसि तव रोषस्य स्थिरस्य ।
येन निरर्गल जल्पति किमपि यावज्जनस्तावद्धिमेन प्रविश्य मुष्टासि ॥

चन्द्रेति । चन्द्रस्य ज्योत्स्नया चन्द्रिकया विशद स्वच्छं पुलिन तोयोत्थितस्थल तोयोत्थित तत् पुलिनमित्यमर । तादृशे अस्मिन् सरय्वा' सैकते सिकतामये देशे कयोश्चित् सिद्धयूनो' देवयोनियुवकयोः सुचिरं दीर्घकाल वादद्वैध तर्क-विषयक मतद्वयमित्यर्थं अभवत् । एक तयोरिति शेष' केशिन केशिनामानम् असुरं प्रथम निहतम् अन्य' कंसं प्रथमनिहत ब्रूते कथयति । स त्वम् उभयोर्निहन्ता त्वमित्यर्थ तत्त्व यथार्थं कथय ब्रूहि भवता तत्र तयोर्मध्ये पूर्वं को हत व्यापा दित' ॥ १२८ ॥

प्राप्तश्रीरिति । एष प्राप्ता श्रीर्लक्ष्मी' राजसम्पच्च येन तथाभूत' पुनरपि मयि कस्मात् त मन्थखेदं मन्थनजनित क्लेश विदध्यात् ? श्रीलाभार्थं पूर्व मम

अत्र प्राप्तश्रीरेष कस्मात् इत्यादिभिः मन्थखेदादिधर्म्माणां निवर्त्तितत्वात् प्राप्तश्रीरित्यादीनाञ्च श्लेषेणैव अभिधानात् त्वयीति वर्णनीयपदे विष्णुस्वरूपस्य धर्म्मिण एव अध्यासात् तद्धर्म्माणां च अनध्यासात् अयं धर्म्म्यध्यासरूपः समाधिः ॥१२९॥

समाधिमेव मन्यन्ते मीलितं तदपि द्विधा।
धर्म्माणामेव चाध्यासे धर्म्मिणो वान्यवस्तुनि ॥ १३० ॥

अत्र अन्यधर्म्माणामेव अन्यवस्तुनि अध्यासान्मीलितं यथा,—

पल्लविअं विअ करपल्लवेहिं पप्फुल्लिअं विअ णअणेहिं।
फलिअं विअ पीणपओहरेहिं अज्जाए लावण्णं ॥

अत्र पल्लवितमिव पुष्पितमिव फलितमिव इत्युत्प्रेक्षया लताधर्म्माणां लावण्यधर्म्मिणि धर्म्माध्यारोपो दृश्यते। करपल्लवा-

---

मन्थनं कृतम् इदानीं तत्प्राप्तावपि कथं मम क्लेशदानमिति भावः। ननु निद्रार्थं मदाश्रयणमिति चेत् तदपि न इत्याह निद्रामिति अनलसम् आलस्यरहितं कर्म्मसु अभ्युद्यतमिति भावः मनो यस्य तथाभूतस्य अस्य पूर्वं कार्य्यनिवहणात् प्रागित्यर्थः निद्रामपि नैव सम्भावयामि सर्वं जगद्व्यापारं समाप्य अलसमनसोऽस्य निद्राश्रवणादिति भावः। ननु सेतुबन्धनार्थं पुनरागमनमित्याशङ्क्य तदपि नेत्याह सेतुमिति पुनः अयम् अखिलद्वीपनाथानुयातः समस्तद्वीपाधिपतिपरिवेष्टितः कस्मात् सेतुं बध्नाति सेतुबन्धने वानरचमूमात्रसहायता आसीदेतत्तु तथा नेति भावः। हे राजन्नित्यध्याहार्य्यं हे राजन्। त्वयि आयाते तीरभूमौ उपस्थिते सति इति पूर्वोक्तान् वितर्कान् दधतः पयोधेः समुद्रस्य कम्पः इव आभाति प्रकाशते। भगवद्विष्णुसदृशस्त्वमिति भावः। राजप्रशस्तिरियम् ॥१२९॥

मीलितं लक्षयति समाधिमिति समाधिमेव मीलितं मन्यन्ते। तदपि धर्म्माणां धर्म्मिणो वा अन्यवस्तुनि अध्यासे आरोपे सति द्विधा भवति धर्म्माध्यासः धर्म्म्यध्यासश्चेति ॥ १३० ॥

पल्लवितमिव करपल्लवे प्रस्फुटितमिव नयने।
फलितमिव पीनपयोधरे आर्य्याया लावण्यम् ॥ स

पल्लवितमिति। आर्य्याया मान्यायाः भवत्या इति भावः लावण्यं सौन्दर्य्यं

दीनां चानुपात्तव्यापारहेतुत्वेन साधकतमत्वेन वा प्राधान्यं लक्ष्यते। सोऽयमन्यवस्तुनि पुनरन्यधर्माणामिव आरोपेण मीलितं नाम समाधिभेदो भवति। स तु उद्देशे समाध्युक्तिः इत्युक्तिग्रहणात् लभ्यते॥ १३१॥

धर्माणां धर्मिणश्च यथा,—

देहो व्व पडइ दिअहो कण्ठच्छेओ व्व लोहिओ होइ रई।
गलइ रुहिरं व्व सङ्गा घोलइ केसकसणं सिरम्मि अ तिमिरं॥

अत्र देहादयो यथोक्तक्रियावन्तो जन्तुवधक्रियायां निबद्धा दिवसादिभिः उपमेया दिवसावसानक्रियायां मीलिताः तदेतद् गुणक्रियावतां द्रव्याणां प्रधानक्रियाध्यारोपे धर्मिधर्माध्यासे मीलितं नाम समाधेरेव भेदो भवति॥ १३२॥

इति समाध्युक्त्यलङ्कारनिरूपणम्॥

यत्रोपमानादेवैतदुपमेयं प्रतीयते।
अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः॥ १३३॥

---

करा पल्लवा इव तैः पल्लवितमिव सञ्जातपल्लवमिव नयने, प्रस्फुटितमिव विकासितमिव, पीनपयोधरे फलितमिव सञ्जातफलमिव॥ १३१॥

देह इव पतति दिवसः कण्ठच्छेद इव लोहितो भवति रविः।
गलति रुधिरमिव सञ्ज्ञा घूर्णते केश इव शिरसि च तिमिरम्॥ स

देह इति। दिवसः देह इव पतति दिवसावसानं देहावसानमिव दुर्विषह-मिति भावः रविः सूर्यः कण्ठच्छेद इव छिन्नकण्ठ इव लोहितः रक्तः भवति रवेः लौहित्यं सन्ध्याकालभवं कण्ठच्छेदवत् क्लेशकरमिति भावः। सञ्ज्ञा चेतना रुधिर-मिव गलति अपगच्छति छिन्नकण्ठात् यथा रुधिरगलनं तथा देहात् अस्मात् सञ्ज्ञा-गम इति भावः तिमिरम् अन्धकारः शिरसि केश इव घूर्णते प्रसरति च विर-हिणीनां केशसंयमननिषेधादिति भावः, विरहिणीनां दिवावसानविधुराणाम् उक्तिरियम्॥ १३२॥

समासोक्तिं लक्षयति यत्रेति। यत्र अतिप्रसिद्धेः हेतोः, उपमानादेव एतस्य

प्रतीयमाने वाच्ये वा सादृश्ये सोपजायते ।
श्लाघां गर्हामुभे नोभे तदुपाधीन् प्रचक्षते ॥ १३४ ॥
विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।
अस्त्यसावपराप्यस्ति तुल्यातुल्यविशेषणा ॥ १३५ ॥
सङ्क्षेपेणोच्यते यस्मात् समासोक्तिरियं ततः ।
सैवान्योक्तिरनन्योक्तिरुभयोक्तिश्च कथ्यते ॥ १३६ ॥

तत्र प्रतीयमानसादृश्या श्लाघावती यथा,—

उत्तुङ्गे कृतसंश्रयस्य शिखरिण्युच्चावचग्रावणि
न्यग्रोधस्य किमङ्ग तस्य वचसा श्लाघासु पर्य्याप्यते ।
बन्धुर्वा स पुराकृतः किमथवा सत्कर्मणां सञ्चयो
मार्गे रूक्षविपन्नशाखिनि जनो यं प्राप्य विश्राम्यति ॥

अत्र न्यग्रोधेनैव उपमानेन प्रतीयमानसादृश्यस्य वर्णनीयवदा-

---

उपमानस्य उपमेय प्रतीयते, मनीषिण विद्वास सा समासोक्ति आहु' कथयन्ति ॥ १३३ ॥

प्रतीयमाने इति । सा सादृश्ये प्रतीयमाने गम्यमाने वा वाच्ये अभिधीयमाने सति उपजायते भवति । प्रतीयमानसादृश्या वाच्यसादृश्या च समासोक्ती श्लाघा प्रशसा गर्हा निन्दा उभे न उभे च भजत इति शेष तदेव श्लाघावती प्रतीयमान-सादृश्या, गर्हावती प्रतीयमानसादृश्या श्लाघावती वाच्यसादृश्या गर्हावती वाच्य सादृश्या चेति श्लाघागर्हा उभयवतीति चेति पञ्चविधा नोभयवती चेति षड्विधा समासोक्तिरिति फलित तदुपाधीन् तस्या समासोक्ते' उपाधीन् धर्मान् विशेषान् वक्ष्यमाणरूपानिति भाव प्रचक्षते कथयन्ति बुधा इति शेष ॥ १३४ ॥

विशेष्येति । स समासोक्ति विशेष्यमात्रेण भिन्ना भेदवती अपि तुल्याकार-विशेषणा अस्ति । अपरापि तुल्यातुल्यविशेषणा अस्ति ॥ १३५ ॥

सङ्क्षेपेणेति । यस्मात् सङ्क्षेपेण उच्यते तत तस्मात् हेतो इय समासोक्तिरिति व्युत्पत्त्या लभ्यते । सैव समासोक्ति अनन्योक्ति अन्योक्ति उभयोक्तिश्च कथ्य

उत्तुङ्गे इति । अङ्गेत्यामन्त्रणम् अङ्ग भो उत्तुङ्गे अत्युन्नते उच्चाव विविधप्रस्तरवति शिखरिणि पर्वते कृतसंश्रयस्य प्ररूढस्येति यावत् तस्य

अभिधीयमानसादृश्या श्लाघावती तुल्याकारविशेषणा यथा,

नालस्य प्रसरो जलेष्वपि कृतावासस्य कोषे रुचि:
दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रय:।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रिय:॥

अत्र अम्बुरुहसत्पुरुषयो: परस्परमुपमानोपमेयभावस्य अतिशयप्रसिद्धे: उपमानेनैव श्लेषवत् तुल्यविशेषणपदाभिधीयमानसादृश्यमुपमानमेव अवगम्यते। सेयम् अभिधीयमानसादृश्या श्लाघावती तुल्यविशेषणा नाम समासोक्ति:॥ १४१॥

प्रतीयमानाभिधीयमानसादृश्या श्लाघागर्हावती तुल्यातुल्यविशेषणा यथा,—

उपाध्वं तत् पान्था: पुनरपि सरो मार्गतिलकम्
यदासाद्य स्वेच्छं विलसथ विलीनक्लमभरा:।
इतस्तु क्षाराब्धेर्जरठकमठक्षिप्तपयसो
निवृत्ति: कल्याणी न पुनरवतार: कथमपि॥

---

दृश्य वपु: शरीरम् अहो आश्चर्यं विततं विस्तृतम् अहो ऊर्जितम् बलवत् अहो भारसहश्च भारक्षमश्च॥ १४०॥

नालस्येति। जलेषु तोयेषु मध्ये डलयोरैक्यात् जडेष्विति गम्यते कृत आवास: स्थिति: येन तथाभूतस्यापि यस्य अम्बुजस्य पद्मस्य नालस्य दण्डस्य प्रसर: समुन्नति:, आलस्य प्रसर: न इति गम्यते। जडमध्ये कृतवासस्य आलस्यसम्भव इति भाव:। कोषे कुड्मले धनसञ्चये इति गम्यते रुचि: अनुराग:। दण्डे नालदण्डे दुष्टनिग्रहे इति गम्यते कर्कशता काठिन्यं निर्दयता च। मुखे उपरिभागे वचने च मृदुता कोमलता, मित्रे सूर्ये सुहृदि च महान् प्रश्रय: विनय: प्रीतिरित्यर्थ: इत्यम् आमूलं मूलादारभ्य गुणानां नालस्य प्रसरादीनां संग्रहे समाश्रये व्यसनिता आसक्ति: अनुराग इति यावत् दोषाकरे चन्द्रे दोषाणां दुराचाराणाम् आकर: समूह: तस्मिन्निति गम्यते द्वेषश्च विरोधश्चेत्यर्थ: एषा उक्तरूपा स्थितिर्मर्यादा सदाचार इत्यर्थ: तत्र अम्बुजे श्रिय: शोभाया, लक्ष्म्याश्च वसति: स्थिति: युक्तैव अनुरूपैव॥ १४१॥

उपाध्वमिति। हे पान्था: पथिका:। पुनरपि भूयोऽपि तत् मार्गतिलकम्

अत्र पूर्वार्द्धे अभिधीयमानसादृश्ययोः श्लाघा पश्चिमार्द्धे तु प्रतीयमानसादृश्ययोर्गर्हा अवगम्यते सेयम् उभयवती तुल्यातुल्यविशेषणाभिधीयमानप्रतीयमानसादृश्या समासोक्तिः ॥१४२॥

अन्योक्तिर्द्विधा स्वजातौ जात्यन्तरे च। तयोः स्वजातौ यथा,—

लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः।
बलिरेष स येनास्य भिक्षापात्रीकृतः करः॥

अत्र हरिशब्देन बलिशब्देन वा कश्चित् समानेतिवृत्तः पुंविशेष एव उच्यते, सेयं स्वजातिविषयान्योक्तिः संक्षेपोक्तिरूपत्वात् समासोक्तिरेव ॥ १४३ ॥

जात्यन्तरे यथा,—

पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे।
अप्यसन्नद्धसौरभ्य पश्य चुम्बति कुड्मलम्॥

अत्र भ्रमरशब्देन कश्चित् कामी फुल्लपङ्कजशब्देन कापि प्रौढाङ्गना कुड्मलशब्देन कापि मुग्धाङ्गना अभिधीयते। सेयम् अन्यजातिविषयान्योक्तिः समासोक्तिरेव भवति। अन्योक्ति-

अध्वनो ललाटभूषणभूतमित्यर्थः सरः सरोवरम् उपाध्व सेवध्वम् अवगाहध्वमिति यावत् यत् सरः आसाद्य प्राप्य विलीना गता क्लमभरा, क्लान्तिसमूहा येषां तथाभूता सन्त स्वेच्छं स्वच्छन्दं विलसथ विहरथ। जरठेन अतिस्थविरेण कमठेन कूर्मेण क्षिप्तानि विलोडितानि पयांसि जलानि यस्य तादृशस्य भीषणजलजन्तुशालिन इति भावः इत अस्मात् क्षाराब्धेः लवणसमुद्रात्तु निवृत्तिः विरतिः कल्याणी शुभकरीत्यर्थः कथमपि पुनरत्र अवतारः अववरणम् अवगाहनमिति भाव न कल्याणो कल्याणकर इति शेष। अत्र सज्जनदुर्जनयोः श्लाघा गर्हे गम्येते॥१४२॥

लक्ष्मीति। एषः स बलिः दानवराज येन बलिना लक्ष्म्या पयोधरयोः स्तनयोः उत्सङ्गे मध्ये यत् कुङ्कुमं गन्धचूर्णाङ्गरागविशेषः तेन अरुणितः रञ्जितः अस्य हरेः वामनरूपिणो विष्णोः करः पाणिः भिक्षापात्रीकृतः भिक्षाभाजनं कृत इत्यर्थः ॥ १४३ ॥

पिबन्निति। भ्रमरः फुल्लपङ्कजे विकसितकमले यथाकामं यथेच्छं मधु

शब्देन इह अध्यासविषया तद्भावापत्तिरुच्यते यथेष ब्रह्मदत्त इति। सा द्विधा शुद्धा चित्रा च ॥ १४४ ॥

तयोः शुद्धा यथा,—

सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन् ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम्।
उप प्राकाराग्रं प्रहिणु नयने तर्कय मनाक्
अनाकाशे कोऽयं गलितहरिणः शीतकिरणः॥

अत्र कस्याश्चित् मुखे चन्द्रमसमध्यास्य कश्चिदेवं ब्रूते सा चेयं पूर्वार्द्धे अभिधीयमानतुल्यविशेषणा पश्चिमार्द्धे पुनरनाकाशे कोऽयं गलितहरिण इत्यत्र अतुल्यविशेषणा समासोक्तिरेव अनन्योक्तिः एकस्यैव चाध्यासात् इयं शुद्धेत्युच्यते ॥ १४५ ॥

चित्रा यथा,—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

अत्र अध्यासः पूर्ववद्वैचित्र्यञ्च निगदेनैव व्याख्यातं सेयम् अन-

---

पिबन् अपि असन्नद्धम् अनुपगत सौरभ्य यस्य तथाभूतमपि कुड्मल चुम्बति पश्य अवलोकय ॥ १४८ ॥

सुधेति। सुधायाम् अमृतपाने इति भाव' बद्ध समवेत ग्रास सङ्घात' येषा तथाभूते उपवनचकोरै आरामचकोरपक्षिभि अनुसृताम् अनुगता नव लवलि पाक पक्वलवलिफलमित्यर्थ तस्य प्रणयवतीं तत् सदृशीमिति भाव अच्छा विशदा ज्योत्स्ना चन्द्रिका प्रभामिति भाव किरन् वर्षन् कोऽय गलितहरिण निष्कलङ्क इत्यर्थ शीतकिरण चन्द्र अनाकाशे आकाशभिन्ने देशे वर्त्तते इति शेष उपप्राकाराग्र प्राकाराग्रसमीपे नयने प्रहिणु निक्षिप व्यापारयेत्यर्थ मनाक् ईषत् तर्कय विचारय ॥ १४५ ॥

कमलमिति। अनम्भसि निर्जलदेशे इत्यर्थ कमल पद्म वर्त्तते इति शेष कमले मुखे च कुवलये नीलोत्पले द्वे वर्त्तेते इति शेष तानि कमलकुवलयानि कनकलतिकाया स्वर्णलतायां वर्त्तन्ते इति शेष सा च कनकलतिका सुकुमारा

न्योक्तिः समासोक्तिरेव अनेकाध्यासवैचित्र्यात् चित्रा इति उच्यते ॥ १४६ ॥

उभयोक्तिर्यथा,—

लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥

अत्र अपूर्वेयं लावण्यसिन्धुः इत्यन्योक्तिः यत्र उत्पलानि शशिना सह सम्प्लवन्त इत्यनन्योक्तिः सेयम् उभययोगादुभयोक्तिरपदिश्यते। उपलक्षणञ्च एतत्। तेन अन्या अपि या उपमानोपमेयविषये सङ्क्षेपोक्तिः सापि समासोक्तिरेव भवति ॥ १४७ ॥

यथा,—

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमप्रभा।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतम्
सीतायाः पुरतश्च हन्त शिखिना बर्हाः सगर्हा इव ॥

---

सुकोमला सुभगा वल्लभा अतिप्रीतिकरी चेत्यर्थः का इयम् उत्पातपरम्परा विपत्सहतिरित्यर्थः ॥ १४६ ॥

लावण्येति। अत्र प्रदेशे का इयम् अपरैव अन्यैव लावण्यसिन्धुः लावण्यसरित् अस्तीति शेषः यत्र लावण्यसिन्धौ उत्पलानि कुमुदानि शशिना चन्द्रेण सह सम्प्लवन्ते सन्तरन्ति विहरन्तीत्यर्थः। यत्र लावण्यसिन्धौ द्विरदस्य हस्तिनः कुम्भतटी च गजकुम्भद्वयञ्चेति यावत् उन्मज्जति उन्नत्या विराजते यत्र च लावण्यसिन्धौ अपरे अन्ये कदलिकाण्डमृणालदण्डाः रम्भास्तम्भौ मृणालदण्डौ चेत्यर्थः विलसन्तीति शेषः। कस्याश्चित् नायिकायाः मुखनेत्रस्तनोरुभुजदर्शनविमुग्धस्य कामिन उक्तिरियम् ॥ १४७ ॥

इन्दुरिति। सीतायाः पुरतः अग्रतः इन्दुः चन्द्रः अञ्जनेन कज्जलेन लिप्त इव

अत्र संक्षेपतः सीताशब्दवाच्यस्य मुखादेरवयवसमूहस्य आश्रयत इन्दुरञ्जनेन इव लिप्तो जडितेव मृगीणां दृष्टिः प्रम्लानमिव आरुण्यं विद्रुमस्य श्यामेव हेमकान्तिः परुषा इव कोकिलालापाः सगर्हा इव शिखिनां बर्हा इति उत्प्रेक्षोक्तेः अनुक्तान्यपि तदुपमेयानि मुखादीनि प्रतीयन्ते। सेयमपि संक्षेपोक्तिः समासोक्तिरेव भवति। कः पुनः समासोक्तेः समाध्युक्तेर्वा विशेषः उच्यते। यत्र प्राकरणिके-ऽप्राकरणिको धर्मोऽध्यास्यते सा समाध्युक्तिर्यथा। "असहन्ति व्व कि लिम्मइ पिअअमपच्चक्खदूसणं दिणलच्छी" इति। यत्र पुनः अप्राकरणिके प्राकरणिकधर्मः सा समासोक्तिर्यथा। पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे इति। ननु धर्म्मिणोऽध्यासे समानमिति चेत् न। स त्वं तत्वं कथय भवता को हतस्तत्र पूर्वमित्यादिषु अनाकाशे कोऽयं गलितहरिणः शीतकिरण इत्यादिषु च प्रव्यक्त एव अध्यासविशेषो दृश्यते। एकत्र मनसा अन्यत्र तु वचसेति सोऽयं समाध्युक्तेः समासोक्तेश्च भेदो भवति॥ १४८॥

इति समासोक्त्यलङ्कारनिरूपणम्।

अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा।
द्रव्यं गुणः क्रिया वापि तामुत्प्रेक्षां प्रचक्षते॥ १४९॥

---

मृगीणां दृष्टिः जडितेव जाड्यं गतेव, विद्रुमलता प्रवालवल्ली प्रकर्षेण म्लानः रक्तिमा यस्याः तथाभूतेव, हेम्नः काञ्चनस्य प्रभा श्यामेव मलिनेव, कोकिलवधूकण्ठेषु कलया मधुरेण स्वरविशेषेण पारुष्यं कार्कश्यं प्रस्तुतमिव गृहीतमिव, शिखिनां मयूराणां बर्हाः पिच्छानि सगर्हा इव निन्द्या इव इत्येते आश्चर्य्यसूचकमव्ययम्॥ १४८॥

उत्प्रेक्षां लक्षयति अन्यथेति। अन्यथा अन्यप्रकारेण अवस्थितं वस्तु द्रव्यं गुणः क्रिया वा यस्याम् अन्यथा अन्येन प्रकारेण उत्प्रेक्ष्यते सम्भाव्यते तामुत्प्रेक्षां प्रचक्षते कथयन्ति तदेवमुत्प्रेक्षा द्रव्योत्प्रेक्षा गुणोत्प्रेक्षा क्रियोत्प्रेक्षा चेति त्रिधा भवति॥ १४९॥

तासु द्रव्योत्प्रेक्षा यथा,—

देहस्था दर्पणे यस्य पश्यति प्रतिमामुमा।
अन्यार्द्धार्द्धमिवोत्पन्नमर्द्धनारीश्वरान्तरम्॥

अत्र प्रतिबिम्बरूपेण दर्पणेऽन्यथावस्थितस्य अर्द्धनारीश्वररूप-लक्षणस्य द्रव्यस्य यदपरार्द्धोत्पन्नार्द्ध-नारीश्वरान्तर-रूपेण द्रव्यान्तररूपेण उत्प्रेक्षणं सेयम् उत्प्रेक्षा द्रव्योत्प्रेक्षेति भवन्ति॥ १५०॥

गुणोत्प्रेक्षा यथा,—

पल्लविअं विअ करपल्लवेहिं पप्फुल्लिअं व्व णअणेहिं।
फलिअं विअ पीणपओहरेहिं अज्जाए लावण्णं॥

अत्र करपल्लवादिरूपेण अन्यथावस्थितस्य अङ्गलावण्यलक्षणस्य यदेतत्पल्लवितत्वादिरूपेण अन्यथोत्प्रेक्षणं सेयम् उत्प्रेक्षा गुणोत्प्रेक्षेति भवति॥ १५१॥

क्रियोत्प्रेक्षा यथा,—

सेनागजाः स्वकरपल्लवलेखनीभिः
गण्डस्थलान्मदमसीर्मुहुराददानाः।

---

देहस्थेति। उमा पार्वती देहस्था ईश्वरस्य देहे अर्द्धरूपेण स्थितेत्यर्थः सती दर्पणे प्रतिमाम् अन्यार्द्धार्द्धमिव उत्पन्नम् अतएव अर्द्धनारीश्वरान्तरम् अन्य-प्रकारम् अर्द्धनारीस्वरूपमित्यर्थः वामांशे ईश्वरार्द्धं दक्षिणांशे स्वस्यार्द्धं दर्पणे वैप-रीत्यदर्शनादिति भावः पश्यति अवलोकयति॥ १५०॥

पल्लवितमिव करपल्लवे प्रस्फुटितमिव नयने।
फलितमिव पीनपयोधरैरार्य्याया लावण्यम्॥ स

पल्लवितमिति। आर्य्यायाः माननीयायाः सख्याः देव्याः वा। लावण्यं मुक्ता-फलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते इत्युक्तलक्षणा कान्तिरित्यर्थः कराः एव पल्लवाः तैः पल्लवितमिव सञ्जातपल्लवमिव नयने प्रस्फुटितमिव विकसितमिव पीनाः स्थूलाः पयोधराः स्तनाः तैः फलितमिव सञ्जातफलमिव॥ १५१॥

मन्ये नरेन्द्र ! तव तोयधितीरताली-
पत्रोदरेषु विजयस्तुतिमालिखन्ति ॥

अत्र सेनागजानां गण्डस्थलेभ्यो लेखन्याकारैः करैर्मसीरूपस्य मदपयसो यदादानं यश्च अस्य तीरतालीपत्रोदरेषु महावर्णतया निक्षेपः स उक्तरूपेण अन्यथोत्प्रेक्ष्यते इति सेयम् उत्प्रेक्षा क्रियोत्प्रेक्षा भवति ॥ १५२ ॥

उत्प्रेक्षावयवो यश्च या चोत्प्रेक्षोपमानता ।
मतञ्चेति न भिद्यन्ते तान्युत्प्रेक्षास्वरूपतः ॥ १५३ ॥

तत्र उत्प्रेक्षावयवो यथा,—

अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

अत्र अङ्गुलीभिः केशेषु गृहीत्वा प्रियामुखं चुम्ब्यते सा च लोचने निमीलयतीति प्रायोवादः । तत्र मुखचुम्बनादि-

---

सेनागजा इति । हे नरेन्द्र ! नृपते ! सेनागजा रणहस्तिन इत्यर्थः मुहुः पुनः पुनः निजाः करपल्लवाः शुण्डाविस्तारा एव लेखन्यः ताभिः गण्डस्थलात् स्वात् कपोलदेशात् मदाः दानवारीण्येव मस्यः ता आददानाः गृह्णन्तः सन्तः तोयधेः समुद्रस्य तीरेषु याः ताल्यः तालीवनानि तासां पत्रोदरेषु पत्राभ्यन्तरेषु तव विजयस्तुतिं विजयप्रशस्तिम् आलिखन्ति मन्ये उत्प्रेक्षे अत्र मन्ये इत्युत्प्रेक्षावाचकम् । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षावाचकाः शब्दा इव शब्दोऽपि तादृश इत्युक्तेः ॥ १५२ ॥

उत्प्रेक्षेति । यश्च उत्प्रेक्षावयवः या च उत्प्रेक्षोपमानता, मतञ्च तदाख्य उत्प्रेक्षाविशेषश्चेत्यर्थः तानि उत्प्रेक्षास्वरूपतः उत्प्रेक्षालक्षणादित्यर्थः न भिद्यन्ते न पृथगभिधानं लभन्ते इति भावः ॥१५३॥

अङ्गुलीभिरिति । शशी चन्द्रः अङ्गुलीभिः केशसञ्चयं कुन्तलनिचयमिव मरीचिभिः मयूखैः तिमिरम् अन्धकारं सन्निगृह्य निरस्य कुड्मलीकृतानि मुकुलीकृतानि सरोजानि लोचनानीव यस्य तथाभूतं रजन्या मुखं चुम्बतीव ॥

क्रिया प्रधानमङ्गीभूता प्रतीयते, केशग्रहणाच्चिनिमी लनेन चाङ्गभूते प्रधाने तत्र अङ्गीभूतायाः क्रियायाः उत्प्रेक्षणेनावयवभूता क्रियोत्प्रेक्षिता भवति। यथा हि कुड्मलोल्लसत्सरोजलोचनम् इत्यत्र नोत्प्रेक्षापदम् एवमङ्गुलीमरीचिभिः तिमिरकेशसञ्चय संनिगृह्य इत्यत्रापि तन्न प्राप्नोति। मरीच्यङ्गुलिसनिगृहीततिमिरकेशसञ्चयमित्येव वा वक्तव्य भवति। तत्र योऽयमवयवक्रियायामपि अन्यपदार्थोक्तिद्वितीयावयवक्रियाविलक्षण इव प्रयोगेण पृथक् पदतया वाक्यकल्पः, स इव अस्यापि व्याख्यानपरत्वेन अप्यनुयोज्यमानः कविभिः उत्प्रेक्षावयव इत्युच्यते। अन्ये पुनर्यत्र प्रधानक्रिया नोत्प्रेक्ष्यते अवयवक्रिया तु उत्प्रेक्ष्यते तत्र उत्प्रेक्षावयवं वर्णयन्ति ॥१५४॥

यथा,—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिः
चिन्तासन्ततितन्तुजालनिविड़स्यूतेव लग्ना प्रिया ॥

तेषा मते पूर्वोदाहरणमुत्प्रेक्षावयवो न भवति ॥ १५५ ॥

उत्प्रेक्षोपमा यथा,—

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः।
दग्धादग्धामरण्यानीं पश्यतीव विभावसुः ॥

---

लीनेति। सा प्रिया न अस्माकं चेतसि मनसि लीनेव लयं गतेव, प्रतिविम्बितेव प्रतिफलितेव उत्कीर्णं खोदितं रूपं यस्याः तथाभूतेव चेतोभुवः कामस्य पञ्चभिः विशिखैः शरैः कीलितेव विद्धेव, तथा चिन्तानां मनोरथानां सन्ततिः समूह एव तन्तुजालं सूत्रनिचयः तेन स्यूतेव सीवनं गतेव लग्ना ससक्ता। कथमपि मनसो निष्क्रष्टुं न शक्येति भावः। अत्र प्रधानक्रिया लग्ना नोत्प्रेक्षते ॥ १५४—१५५ ॥

किंशुकेति। विभावसुः अग्निः, किंशुकानां पलाशकुसुमानां व्यपदेशेन छलेन

अत्र व्यपदेशशब्देन किंशुककुसुमानामग्निसादृश्यमभिधाय दर्शनक्रियोत्प्रेक्ष्यत इति सेयम् उत्प्रेक्षोपमा। पूर्वस्मिन्नपि उदाहरणे मरीचिभिः अङ्गुलीभिरिव तिमिरं केशसञ्चयमिव संनिरुद्ध्य इत्युपमानार्थानुप्रवेश उत्प्रेक्षायां द्रष्टव्यः। सेयम् उत्प्रेक्षोपमा चोत्प्रेक्षैव भवति ॥ १५६ ॥

मतं यथा,—

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥

अत्र कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुमिन्दुम् अहं मन्ये इत्यनेन स्वमतद्वारकमुत्प्रेक्षायाः समर्थनं कृतमित्ययं मताभिधान उत्प्रेक्षा या एव प्रकारः ॥ १५७ ॥

इति उत्प्रेक्षालङ्कारनिरूपणम्।

अप्रस्तुतप्रशंसा स्यादस्तोतव्यस्य या स्तुतिः।
कुतोऽपि हेतोर्वाच्या च प्रत्येतव्या च सोच्यते ॥ १५८ ॥

---

सर्वत. समन्तात् तरु त्वचम् आरुह्य दग्धा अदग्धा ता कियती दग्धा कियतीम-दग्धामित्यर्थ अरण्यानी महारण्य पश्यतीव अवलोकयतीव ॥ १५६ ॥

यदिति। चन्द्रान्त. चन्द्रमण्डले यदेतत् वस्त्विति शेष' जलदलवस्य मेघ खण्डस्य लीला विलासं वितनुते धत्ते इत्यर्थ. कृष्णमेघविन्दुरिवाभातीति यावत् लोक तत् शशकः मृगविशेष इति आचष्टे कथयति मा प्रति नो तथा प्रतो भातीति शेष' अह तत् शशक नैव ब्रवीमि इति भाव'। अहन्तु इन्दु चन्द्र तव अरीणा शत्रूणा त्वया निहतानामिति भाव. विरहेण वियोगेन आक्रान्ता' विधु रिता इत्यर्थः याः तरुण्य. युवत्य. तासा कटाक्षा एव उल्काः तासा पात उद्दीपक-त्वेन क्रोधात् निक्षेप इति भाव. तेन यद् व्रणं क्षत दहनमिति यावत् तस्य य. किण' कृष्णवर्णचिह्नविशेषः, स एव कलङ्क. अपयशश्चिह्नविशेष तेन अङ्किता आक्रान्ता आश्रितेत्यर्थ. तनुः कलेवर यस्य तथाभूत मन्ये सम्भावयामि ॥ १५७ ॥

अप्रस्तुतप्रशंसा लक्षयति अप्रस्तुतेति। कुतोऽपि कस्मादपि हेतो. कारणात्

सा च धर्मार्थकामानां प्रायोऽन्यतमबाधया।
स्वाभिप्रायप्रसिद्ध्या च जायमानेह दृश्यते ॥ १५८ ॥

तासु धर्मबाधया वाच्या यथा,—

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः
सत्वानामपि लक्ष्यते विकृतिमच्चित्त भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्येव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः॥

अत्र यथोक्तैर्हेतुभिः स्वाभिप्रायसाधनेन यदिदमीदृग्विनोदः कुतः इति साक्षात् मृगयाभिनन्दनं सेयं वाच्या नाम प्रस्तुतस्तुतिः अहिंसा परमो धर्म इति धर्मं बाधते ॥ १६० ॥

धर्मबाधयैव प्रत्येतव्या यथा,—

---

अस्तोतव्यस्य स्तोतुमनर्हस्य या स्तुतिः प्रशंसन सा अप्रस्तुतप्रशंसा स्यात् सा च वाच्या अभिधीयमाना प्रत्येतव्या प्रतीयमाना च उच्यते कथ्यते। सा च इह अस्मिन् प्रकरणे धर्मार्थकामाना त्रयाणा अन्यतमस्य बाधया व्याघातेन स्वाभिप्रायस्य प्रसिद्ध्या प्रसाधनेन च जायमाना उत्पद्यमाना प्राय बाहुल्येन दृश्यते। तदेव धर्मबाधया वाच्या धर्मबाधया प्रतीयमाना, अर्थबाधया वाच्या अर्थबाधया प्रतीयमाना, कामबाधया वाच्या कामबाधया प्रतीयमाना चेति षड्विधा अप्रस्तुतप्रशंसेति फलितम् ॥ १५८—१५९ ॥

मेद इति। वपु शरीर मेदसा वपातिरेकजनितस्थौल्याना छेदेन अपगमेन श्रमजनितेनेति भाव कृश क्षीणम् उदर यस्य तथोक्तम् अतएव लघु अभारवदित्यर्थ. उत्साहयोग्यम् उद्यमार्हं भवति। सत्त्वाना प्राणिना श्वापदानामिति यावत् चित्त मन भयक्रोधयो सतोः विकृतिमत् विकृत चित्त लक्ष्यते अनुभूयते। इषव शरा, चले चञ्चले धावतीति यावत् लक्ष्ये शरव्ये सत्त्वे इति शेष यत् सिध्यन्ति प्रविशन्तीति भावः स च चललक्ष्यप्रवेश इत्यर्थ धन्विना धनुर्धराणाम् उत्कर्ष महत्त्वमित्यर्थ। अत मृगया व्यसन मिथ्यैव वदन्ति लोका इति शेष ईदृक् एतादृश विनोद आनन्द कुत ? कस्माद् भवतीति शेष मृगयातुल्य विनोदस्थान नास्तीति भावः ॥ १६० ॥

कालाक्खरदुस्सिक्खिअ बालअ रे लग्ग मम कण्ठम्मि।
दोण्ह व णरअणिवासो समअं जइ होइ ता होउ॥

अत्र कालाक्षरदुःशिक्षितेत्यनेन लिपिज्ञानादिभिरधीतधर्म-शास्त्राभिमतरूपकपोगण्डः कोऽपि कयापि अविनयवत्या सोपालम्भ एहि रे कण्ठे लगेति अभियुज्यते। तत्र यदि ते मतमेव कृते नरकः स्यात् स यद्यावयोः सहैव नासौ नरक इति किं तर्हि स्वर्ग इति सोऽयं स्वाभिप्रायसाधनात् महासाहसे नियोगस्तस्येह साक्षादप्रस्तुतस्यास्तोतव्यस्य स्तुतिः प्रतीयते सेयं प्रत्येतव्या नाम अप्रस्तुतप्रशंसा परस्य दारान् मनसापि नेच्छेदिति धर्ममेव बाधते॥ १६१॥

अर्थबाधया वाच्या यथा,—

पङ्गो! वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां
धन्योऽन्ध! त्वं धनमदवतां नेक्षसे यन्मुखानि।
श्लाघ्यो मूक! त्वमपि कृपणं स्तौषि नार्थाशया यः
स्तोतव्यस्त्वं वधिर! न गिरं यः खलानां शृणोषि॥

---

कालाक्षरदुःशिक्षित बालक। रे लग मम कण्ठे।
द्वयोरेव नरकनिवासः स्वमतं यदि भवति तदा भवतु॥ स

कालाक्षरेति। कालिम कृष्णवर्णेन अक्षरेण दुःशिक्षित असुशिक्षित इत्यर्थः तत् सम्बुद्धिः धर्मशास्त्रपाठेन अरसिक इति भाव रे बालक। शिशुवदनभिज्ञ-इत्यर्थं मम कण्ठे लग कण्ठं धृत्वा मामालिङ्गस्व इति भावः। कस्याश्चित् कामुक्या कमपि अधीतधर्मशास्त्रमजातस्त्रीसङ्गं युवकं प्रत्युक्तिरियम्। नन्वेवं कृते परनारी-सङ्गात् नरकं स्यादित्याह द्वयोरिति द्वयोरेव आवयो नरके निवासः भवतीति शेषः यद्येतादृशाचरणे नरकं स्यात् तन्न केवलं तव ममापि भविष्यति तथा सति उभयो रेकत्रावस्थानात् सोऽपि स्वर्गवास एवेति भाव अतः यदि स्वमतं स्वस्य अभीष्टं भवति, तादृशं नरकमिति भाव' तदा भवतु॥ १६१॥

पङ्गो इति। हे पङ्गो। पादविकल। त्वं वन्द्योऽसि प्रशंसनीयोऽसि, यस्त्वम्

अत्र स्तोतव्यानां पङ्ग्वन्धमूकवधिराणां वन्द्यधन्यश्लाघ्यस्तोतव्य-पदैः साक्षादभिनन्दनादियं वाच्या नामाप्रस्तुतप्रशंसाभिमानो-ऽर्थसिद्धिं बाधते ॥ १६२ ॥

अर्थबाधयैव प्रत्येतव्या यथा,—

कामं वनेषु हरिणास्तृणानि खादन्त्ययत्नसुलभानि ।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥

अत्र ते किल पशवो वयं सुधियः इति मृगाणामसाक्षादभि-नन्दनं तेनेयम् अस्तोतव्यानाम् अमीषां वाक्यार्थत्वेन स्तुतिप्रतीतेः प्रत्येतव्या नामाप्रस्तुतप्रशंसा मनस्विनोऽर्थसिद्धिं बाधते ॥१६३॥

कामबाधया वाच्या यथा,—

ण मुअन्ति दीहसासं ण रुअन्ति णं होन्ति विरहकिसिआओ ।
धण्णाओ ताओ जाण बहुवल्लह । वल्लहो ण तुमं ॥

अत्र धन्यास्ता यासां त्वं न वल्लभ इति या इयम् अतिरक्तायाः

साक्षादस्तोतव्यस्तुतिः सेयं वाच्या नाम अप्रस्तुतप्रशंसा तस्या एव कामसिद्धिं बाधते ॥ १६४ ॥

कामबाधयैव प्रत्येतव्या यथा,—

सुहउच्छअञ्जणन्दुल्लहं प्पिदूराहि आणेन्ता ।
उअआरअजरजीअम्पणेन्त ण कआवराहोसि ॥

अत्र पूर्वोक्तास्मदभिप्रायसिद्धा एवं नाम त्वया अस्माकम् उपकृतं येन जीवितमपि हरन्नापराध्यसीति ज्वरम्प्रति यदतिरक्ततया वाक्यान्ते नेह अस्तोतव्यस्य ज्वरस्य स्तुतिः प्रतीयते । सेय प्रत्येतव्या नाम अप्रस्तुतप्रशसा तस्या एव शरीरबाधया सर्वान् अपि कामान् बाधते ॥ १६५ ॥

इत्यप्रस्तुतप्रशसालङ्कारनिरूपणम् ।

विविक्षितगुणोत्कृष्टैर्य यत् समीकृत्य कस्यचित् ।
कीर्त्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ १६६ ॥

---

नारीणा वल्लभो न, ता धन्या' पुण्यवत्य' नार्य्य' दीर्घश्वासं न मुञ्चन्ति न त्यजन्ति न रुष्यन्ति न कुप्यन्ति न विरहेण क्लिष्टाश्च भवन्ति ॥ १६४ ॥

सुखपृच्छक जन दुर्लभमपि दूराद्धि आनयिता ।
उपकारकज्वर । जीव प्रणयन् न कृतापराधोऽसि ॥ सं

सुखेति । हि यत सुख पृच्छतीति सुखपृच्छक' सुखप्रश्नकारक इत्यर्थ त जनं प्रियजनमित्यर्थः दुर्लभमपि दुष्प्रापमपि प्रोषितत्वादिति भाव दुरात् दूरदेशात् आनयिता प्रापक इत्यर्थ पीडाश्रवणेन सत्वरमुपस्थापक इति भावः अतएव हे उपकारक हितकर । ज्वर । त्व जीवं प्राणान् प्रणयन् हरन्नपि न कृतापराध असि नापराद्धोऽसि त्वदाक्रमणात् मे प्राणापगमेऽपि एतस्मिन् काले यत प्रियतम सन्निधौ आनीतवानसि तेन त्वामुपकारक मन्ये न तु प्राणहरणादपराधिनमिति निष्कर्ष । कस्याश्चिद्विरहिण्या उक्ति' ॥ १६५ ॥

तुल्ययोगिता लक्षयति विवक्षितेति । -विवक्षितस्य वक्तुमिष्टस्य गुणस्य उत्कृष्टै उत्कर्षाय समीकृत्य यत् कस्यचित् स्तुतिनिन्दार्थं स्तुत्यर्थ निन्दार्थं वा कीर्त्तन कथन सा तुल्ययोगिता मता ॥ १६६ ॥

अभिधीयमानतुल्यगुणत्वेन स्तुत्यर्था यथा,—

> शेषो हिमगिरिस्त्वञ्च महान्तो गुरवः स्थिराः।
> इमां लङ्घितमर्य्यादां चलन्तीं बिभृथ क्षितिम्॥

अत्र अभिधीयमानमहत्वादिगुणोत्कृष्टाभ्यां शेषाहितुषारशैलाभ्यां सह स्तुत्यर्थं तुल्ययोगेन क्षितिपतेरभिहितत्वात् इयं स्तुत्यर्था तुल्ययोगिता॥ १६७॥

अभिधीयमानतुल्यगुणत्व एव निन्दार्था यथा,—

> सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च।
> क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्॥

अत्र घनारब्धान्यपीत्यादिभिरभिधीयमानतुल्यगुणानां मृगाक्षीसङ्गताना तडिद्विलसितानाञ्च निन्दार्थं तुल्ययोगेन अभिधानात् इयं निन्दार्था तुल्ययोगिता॥ १६८॥

प्रतीयमानतुल्यगुणत्वे स्तुत्यर्था यथा,—

> यमः कुवेरो वरुणः सहस्राक्षो भवानपि।
> बिभ्रत्यनन्यविषया लोकपाला इति श्रुतिम्॥

अत्र यमादयः पञ्च भवन्तो लोकपाला इत्यनुक्तमपि तुल्यवस्तुयोगितयैव स्तुत्यर्थमेषां मिथः सादृश्यं प्रतीयते। सेयं प्रतीयमानतुल्यगुणत्वे स्तुत्यर्था तुल्ययोगिता॥ १६९॥

---

शेष इति हे राजन्नित्यध्याहार्य्यम्। शेषः अनन्तदेवः हिमगिरिः हिमालयः त्वञ्च महान्तः गुरवः स्थिराः अचञ्चलाः सन्तः इमां लङ्घिता अतिक्रान्ता मर्य्यादा स्थितिः यया तादृशीं चलन्तीम् अस्थिरां क्षितिं पृथ्वीं बिभृथ पालयथ॥ १६७॥

सङ्गतानीति। घनं निविडं दृढमित्यर्थः घने मेघे च आरब्धानि उत्पन्नानि मृगाक्षीणां नारीणां सङ्गतानि सङ्गाः तडितां विद्युतां विलसितानि स्फुरितानि च क्षणद्वयं स्वयं न तिष्ठन्ति अतिचपलाः स्त्रियस्तडितश्चेति भावः॥ १६८॥

यम इति। यमः प्रेतराजः कुवेरः धनपतिः वरुणः जलाधिपतिः सहस्राक्षः सुरपतिः भवान् पृथिवीपतिरिति भावः अपि एते पञ्च लोकान् जगन्ति पालय

प्रतीयमानतुल्यगुणत्व एव निन्दार्था यथा,—

राजानमपि सेवन्ते विषमप्युपभुञ्जते ।
रमन्ते च परस्त्रीभिरहो साहसिका नराः ॥

अत्र योऽयं सेवादिर्मानवानां राजविषये स्त्रीषु च वैषम्यहेतुस्तुल्यत्वेन योगः राजादीनां वा कर्मत्वादिरूपतया तत् क्रियाया समावेशः सोऽमीषां मिथः सादृश्यं प्रत्याययन् राजसेवापरस्त्रीरत्योर्विषोपभोगतुल्यतां गमयतीति सेयं प्रतीयमानतुल्यगुणत्वे निन्दार्था तुल्ययोगिता ॥ १७० ॥

अन्ये सुखनिमित्ते च दुःखहेतौ च वस्तुनि ।
स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वे तुल्ययोगिताम् ॥ १७१ ॥

सा स्तुत्यर्था यथा,—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥

अत्र रामस्य राज्याभिषेकवनगमनयोः पितुरादेशेन तुल्यरूपतया स्तुतिः प्रतीयते ॥ १७२ ॥

---

न्तीति लोकपाला इति नास्ति अन्य विषय प्रतिपाद्य यस्या तादृशीम् अनन्यगामिनीमिति [illegible] श्रुति प्रसिद्धि बिभ्रति दधति ॥ १६९ ॥

[illegible]। [illegible] आश्चर्य्य साहसिका सहसाकारिण अविमृश्यकारिण [illegible] नरा: [illegible] सेवन्ते अपि, विषम् उपभुञ्जते अपि परस्त्रीभि' परकीयाभि: नारीभि. रमन्ते च। राजसेवन विषभक्षणं परस्त्रीरमणञ्च साहसिक कार्य्यमिति सर्वथा परिहरणीयमिति भाव ॥ १७० ॥

अन्ये इति। अन्ये अपरे विद्वास. सुखनिमित्ते सुखहेतौ च वस्तुनि विषये स्तुतिनिन्दार्थं सुखनिमित्ते स्तुत्यर्थं दुःखनिमित्ते निन्दार्थमित्यर्थ तुल्यत्वे तुल्यतायां सत्यामित्यर्थ' तुल्ययोगिताम् आहु' कथयन्ति ॥ १७१ ॥

आहूतस्येति। अभिषेकाय राज्ये इति शेष: आहूतस्य आमन्त्रितस्य इत्यर्थ: वनाय वन गन्तुमित्यर्थ' विसृष्टस्य नियुक्तस्य च तस्य रामस्य स्वल्पोऽपि अणुरपि आकारविभ्रम. आकृतिविकृति; मया न लक्षित; नानुभूत. ॥ १७२ ॥

निन्दायां यथा,—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥

अत्र यः परशुना छिनत्ति योऽमुं मधुसर्पिषा सिञ्चति यो वा गन्धमालाभ्याम् अर्च्चयति तं प्रति तुल्यमेव निम्बस्य कटुत्वमिति समासोक्त्या तदुपमेयस्य निन्दा प्रतीयते ॥ १७३ ॥

इति तुल्ययोगितालङ्कारनिरूपणम् ।

दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः ।
स लेशः स्यात्ततो नान्या व्याजस्तुतिरपीष्यते ॥ १७४ ॥

तत्र दोषस्य गुणीभावे लेशो यथा,—

युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥

अत्र या इयम् उत्तरार्द्धे राज्ञो वीर्य्यप्रकर्षस्य स्तुतिः सा कन्यायाः निरन्तरान् भोगान् निर्विविक्षोर्दोषत्वेन प्रतिभासिष्यत इत्यभिप्रेत्य योऽयं विदग्धसख्या राजप्रकोपपरिजिहीर्षया दोषोऽपि गुणरूपेणोक्तः सोऽयं दोषस्य गुणीभावो नाम लेशतोऽल्पतया शनैः अनन्यविदितं उच्यमानो लेश इति उच्यते ॥ १७५ ॥

---

य इति । यश्च जनः परशुना कुठारेण निम्बं निम्बतरुं छिनत्तीति शेषः, यश्च एनं निम्बं मधुसर्पिषा मधुना घृतेन च सिञ्चतीति शेषः यश्च एनं निम्बं गन्धमाल्याभ्याम् अर्च्चयतीति शेषः तस्य सर्वस्य जनस्य स निम्बः कटुरेव ॥ १७३ ॥

लेशं लक्षयति दोषस्येति । दोषस्य यः गुणीभावः गुणत्वेन कीर्त्तनं गुणस्य च यः दोषीभावः दोषत्वेन कीर्त्तनं स लेशः स्यात् व्याजस्तुतिरपि ततः लेशात् अन्या न इष्यते व्याजस्तुतिर्लेशस्य एकपर्य्याय एवालङ्कार इति तात्पर्य्यम् ॥ १७४ ॥

युवेति । एष राजा युवा गुणवान् ऊर्जितः बलवान् अतस्ते तव यो[illegible] यस्य राज्ञः मनः कामोत्सवादपि स्त्रीसङ्गादपीति भावः, रणोत्सवे स इत्यर्थः, सक्तं रतम् ॥ १७५ ॥

गुणस्य दोषीभावो यथा,—

चपलो निर्दयश्चासौ जनः किं तेन मे सखि!।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः॥

अत्र पूर्वार्द्धेन मानपरिग्रहानुगुणं सखीनाम् अग्रतः प्रकाशं प्रतिज्ञाय तदनिर्वाहमाशङ्कमाना तदुपहासं परिजिहीर्षुः दोषाभासं तद्गुणग्राममाह। आगःप्रमार्जनायैव चाटवो येन शिक्षिताः इति। सोऽयं गुणस्य दोषीभावो नाम लेशो भवति। अन्ये पुनः समस्तमेव लेशलक्षणम् आचक्षते। यत्र दोषस्य गुणीभावो गुणस्य च दोषीभाव इति सोऽपि द्विधा समासोक्त्या असमासोक्त्या च॥ १७६॥

तयोः समासोक्त्या यथा,—

गुणानामेव दौरात्म्याद् धुरि धुर्य्यो नियुज्यते।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥

अयमपि प्रकोपभयाल्लेशेनैव उच्यते इति लेशः॥ १७७॥

असमासोक्त्या यथा,—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा।

---

चपल इति। हे सखि। अयं जनः चपलः अस्थिरः निर्दयः निष्ठुरश्च अतः तेन जनेन मे मम किम्? न किमपि प्रयोजनमित्यर्थः। येन आगसः अपराधस्य प्रमार्जनाय अपनयनाय एव चाटवः प्रियवचनानि शिक्षिताः॥ १७६॥

गुणानामिति। धुरं भारं वहतीति धुर्य्यः धुरन्धरः भारवहनक्षम इत्यर्थः गौः महापुरुषश्च गुणानां क्षमत्वादीनां दौरात्म्यात् प्रभावादित्यर्थः अतिरेकादिति भावः, धुरि भारवहनकार्य्ये नियुज्यते नियुक्तः क्रियते अनुरुध्यते च। गलिः अक्षम इति भावः गौः न सञ्जातः किणः भारवहनजनितकलङ्करेखाविशेषः यत्र तादृशः स्कन्धो यस्य तथाभूतः सन् सुखम् अक्लेशं स्वपिति निद्राति॥ १७७॥

अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥

अत्र अपि प्रकोपभयादि पूर्ववत्। अथैष व्यस्तलक्षणत्वेन कस्मान्न लेश इत्युच्यते। दोषगुणीभावस्य अप्रस्तुतस्तुत्या गुणीभावस्य तु व्याजस्तुत्यापहारात्। व्याजस्तुतिरपि द्विधा शुद्धा मिश्रा च॥ १७८॥

तयोः शुद्धा यथा,—

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते।
राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते॥

अत्र शुद्धपरदारापहरणलक्षणनिन्दाव्याजेन स्तुतेर्विहितत्वात् इयं शुद्धा नाम व्याजस्तुतिर्गुण-दोषी-भाव-लक्षणात् लेशान्न पृथक्॥ १७९॥

मिश्रा यथा,—

प्रियोऽसि प्राज्ञोऽसि प्रभुरसि कुलीनोऽप्यसि युवा
युवत्यस्त्वामिच्छन्ति न पतिसुर्वीश। क्षणते।

---

सन्त इति। सन्तः साधवः सच्चरितानां सत्कर्म्मणाम् उदये अनुष्ठाने इत्यर्थः व्यसनिनः व्यापृता इत्यर्थः सर्व्वत्रैव कर्म्मणि जनानाम् अपवादात् निन्दनात् चकिता शङ्किता अतएव प्रादुर्भवन्ती यन्त्रणा उद्वेग इत्यर्थः येषां तथाभूताः सन्तः सदा दुःख जीवन्ति। प्राकृतो जनः सामान्यो जनः अधम इत्यर्थः अव्युत्पन्ना अशिक्षिता मतिः यस्य तथोक्तः अतएव सता कृतेन सत्कार्य्येण न, असता कृतेन असत्कार्य्येण च नैव व्याकुलः तथा युक्तम् अयुक्तं तयोर्विवेकः ज्ञानं तेन शून्यं हृदयं यस्य तथाभूतः सुतरां धन्यः पुण्यवानित्यर्थः॥ १७८॥

पुंस इति। हे राजन्! त्वया पुराणात् पुंसः पुरातनपुरुषात् नारायणादित्यर्थः आच्छिद्य अपहृत्य श्रीर्लक्ष्मी परिभुज्यते सम्भुज्यते। इक्ष्वाकुवंशस्य इक्ष्वाकुकुलभवस्य तव इदं कस्यचित् विशुद्धदारापहरणमिति भावः किं युज्यते? नैव युज्यते इत्यर्थः॥ १७९॥

प्रिय इति। हे उर्व्वीश! पृथिवीपते! त्वं प्रियोऽसि लोकानां प्रीतिकरोऽसि

अतश्चैनाङ्कीर्तिं रघुनहुषमान्धातृमहिषीम्
परास्त्रष्टुं वृद्धामधिगतनयो नार्हति भवान् ॥

अत्र स्तुतिपदमिश्रयैव व्याजगर्हया स्तुतिरिति इयं मिश्रा नाम व्याजस्तुतिर्लेशभेदः ॥ १८० ॥

इति लेशालङ्कारनिरूपणम् ॥

कर्त्रादीनां समावेशः सहान्यैर्यः क्रियादिषु ।
विविक्तस्याविविक्तस्य सहोक्तिः सा निगद्यते ॥ १८१ ॥
वैसादृश्यवती चेयमुच्यमाना मनीषिभिः ।
सहेवादिप्रयोगेषु ससादृश्या च दृश्यते ॥ १८२ ॥

सा कर्तृविविक्तक्रियासमावेशे यथा,—

कोकिलालापमधुराः सुगन्धिवनवायवः ।
यान्ति सार्द्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥

अत्र सुरभिवासरा इति कर्तृपदार्थः केवल एव जनानन्दैः सह वृद्धिप्राप्तिक्रियाया समाविष्ट इति सेयं विविक्तकर्तृक्रियासमावेशा नाम वैसादृश्यवती सहोक्तिः ॥ १८३ ॥

---

इत्यर्थः प्राज्ञः प्रकृष्टज्ञानी असि, प्रभुः निग्रहानुग्रहसमर्थः असि, कुलीनः सत्कुलजातः असि, युवा असि, कति युवत्यः तरुण्यः एवम् इत्थम्भूतगुणशालिनं त्वां पतिं न वृणते नाभिलषन्ति ? अपि तु सर्वा एव वृणते इत्यर्थः । भवान् अधिगतनयः नीतिपरायण इत्यर्थः अतश्च अस्मात् कारणाच्च एनां रघुनहुषमान्धातॄणां महात्मनां पूर्वराजर्षीणामिति भावः महिषीं प्रेयसीमिति भावः वृद्धां स्थविरां महतीञ्च कीर्त्तिं परास्त्रष्टुं परित्यक्तुं न अर्हति न युज्यते ? ॥ १८० ॥

सहोक्तिं लक्षयति कर्त्रादीनामिति । क्रियादिषु अन्यैः सह कर्त्रादीनां विविक्त, विवेकाक्रान्त, अविविक्तः अविवेकाक्रान्तस्य यः समावेशः सङ्गतिः सा सहोक्तिः निगद्यते कथ्यते ॥ १८१ ॥

वैसादृश्यवतीति । इयं सहोक्तिः सहेवादिप्रयोगेषु सत्सु वैसादृश्यवती ससादृश्या सादृश्यवती च मनीषिभिः विद्वद्भिः उच्यमाना कथ्यमाना दृश्यते ॥ १८२ ॥

कोकिलेति । कोकिलानाम् आलापेन रवेण मधुराः मनोहारिणः सुगन्धयः

कर्मणो विविक्तक्रियासमावेशे यथा,—

उम्मेसि पिआइ सम लहवि धुरेण भणसि कीसकिसि अत्ति।
उअरिभरेण अ अणुअ मुञ्चइ वइल्लोवि अङ्गाइम्॥

अत्र सम्बोध्यमानयुष्मदर्थः कर्मतामापन्न उह्यस इति क्रियायां केवल एव प्रियापदार्थेन सह समाविष्टः। सेयं विविक्त-क्रियासमावेशा नाम वैसादृश्यवती सहोक्तिः॥ १८४॥

यत्रानेकोऽपि कर्त्रादिःप्रविविक्तैः क्रियादिभिः।
विविक्तभाव लभते विविक्ता सापि कथ्यते॥ १८५॥

सा कर्तृद्वयस्य पृथक् क्रियासमावेशे यथा,—

वर्द्धते सह पान्थानां मूर्च्छया चूतमञ्जरी।
वहन्ति च समं तेषामसुभिर्मलयानिलाः॥

अत्र चूतमञ्जरीमूर्च्छया सह वर्द्धनक्रियायां मलयानिलाश्च असुभिः सह वहनक्रियायां पृथक् पृथक् विवेकेनैव कर्त्तरि समाविष्टाः। सेयम् अपि विविक्तकर्तृक्रियासमावेशैव वैसा-दृश्यवती सहोक्तिरेव कर्मणोऽपि विवेके द्रष्टव्या॥१८६॥

---

वनवायव येषु तथाभूताः सुरभिवासरा वसन्तदिवसा, जनानाम् आनन्दैः सार्द्धं वृद्धिं यान्ति गच्छन्ति॥ १८३॥

उह्यसे प्रियया सम तथापि धुरीभरस्तेन भणसि किं क्लेशित इति।
उपरि भरेण चानतो मुञ्चति वलीवर्द्दोऽप्यङ्गानि॥ सं

उह्यसे इति। प्रियया समम् उह्यसे धार्य्यसे धृत्वा नीयसे इत्यर्थः तथापि क्लेशितः क्लेशमनुभवन्नित्यर्थः धुरी भर शकटक्लेश इति किं कथ भणसि कथयसि। उपरि भरेण भारवहनस्थित्येत्यर्थः आनत, नम्रीकृतः वलीवर्द्दोऽपि वृषोऽपि अङ्गानि मुञ्चति त्यजति॥ १८४॥

यत्रेति। यत्र अनेकोऽपि बहुसंख्यकोऽपि कर्त्रादिः प्रविविक्तैः प्रभिन्नैः क्रियादिभिः विविक्तभाव पार्थक्यं लभते सापि सहोक्तिरित्यर्थः विविक्ता कथ्यते॥ १८५॥

वर्द्धते इति। चूतमञ्जरी आम्रवल्लरी पान्थानां पथिकानां विरहिणामिति

कर्तॄणामविविक्तकर्तृक्रियासमावेशे यथा,—

धीरेण समं जामा हिअएण समं अणिट्ठिआ उवएसा।
उच्छाहेण सह भुआ वाप्पेण समं गलन्ति से उल्लावा॥

अत्र यामादीनां बहूनां धैर्यादिभिः सह गलनक्रियायाम् एकस्यामेव अविविक्तः समावेशो दृश्यते। सेयम् अविविक्तकर्तृक्रियासमावेशा नाम वैसादृश्यवती सहोक्तिः॥ १८७॥

कर्मणां विविक्तक्रियासमावेशे इवशब्देन सहशब्दस्य स्थाने ससादृश्या यथा,—

धीरं व्व जलसमूहं तिमिणिवहम्मि व सपक्खपव्वअलोअं।
णइसोत्ते व्व तरङ्गे रअणाइ व गरुअगुणसआइ वहन्तं॥

अत्र धैर्येण जलसमूहस्य तिमिनिवहेन सपक्षपर्वतलोकस्य नदीस्रोतोभिस्तरङ्गाणां रत्नैश्च गुरुकगुणशतानां मिथः प्रतीयमानं सादृश्यमिवेन द्योत्यते। सहार्थश्च वाक्यार्थसामर्थ्येन लभ्यते इति सेयं धैर्यादीनां बहूनां वहनक्रियायाम् एकस्यामेव विवेकतः कर्मभूतानाम् आवेशेन अविविक्तकर्मक्रियासमावेशा नाम ससादृश्या सहोक्तिः॥ १८८॥

---

भाव मूर्च्छया सम सह बर्द्धने वृद्धिं गच्छति, मलयानिला दक्षिणवायव. तेषा पान्थानाम् अश्रुभि नयनसलिलै सम वहन्ति च॥ १८६॥

धैर्येण सम यामा हृदयेन समम्ननिश्चिता उपदेशा।
उत्साहेन सह भुजा वाष्पेण सम गलन्ति अस्या उल्लापा॥ सं

धैर्येणेति। अस्या नायिकाया यामा प्रहरा धैर्येण सह अनिश्चिता फलादर्शनात् निश्चयपदवीमप्राप्ता इत्यर्थ उपदेशा गुरुजनादीना सान्त्वनवचनानीति यावत् हृदयेन सम भुजा बाहव कार्श्यवैमुख्यादिति भाव उत्साहेन सह तया उल्लापा आलापा वाष्पेण अश्रुणा सम गलन्ति पतन्ति॥ १८७॥

धैर्यमिव जलसमूह तिमिनिवहमिव सपक्षपर्वतलोकम्।
नदीस्रोतासीव तरङ्गान् रत्नानीव गुरुकगुणशतानि वहन्तम्॥ सं

धैर्यमिति। जलसमूह धैर्यमिव, तिमीना मत्स्यविशेषाणाम् असि मत्स्य

आदिग्रहणाद् गुणसमावेशेऽपि गुणिनः ससादृश्या यथा,—

सह दीर्घा मम श्वासैः इमाः सम्प्रति रात्रयः ।
पाण्डराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥

अत्र रात्रयो दीर्घाः पाण्डराश्च इति दैर्घ्येण पाण्डरत्वगुणयो' अविवेकेन रात्रिषु रात्रीणाञ्च तयोः श्वासै अङ्गैश्च सह समावेशो दृश्यते, सेयम् अविविक्तगुणसमावेशा नाम इवाद्यप्रयोगेऽपि ससादृश्या सहोक्तिः ॥१८९॥

इति सहोक्त्यलङ्कारनिरूपणम् ।

द्रव्यक्रियागुणादीनां क्रियाद्रव्यगुणादिषु ।
निवेशनमनेकेषामेकतः स्यात् समुच्चयः ॥ १९० ॥
इतरेतरयोगो य' समाहारो य उच्यते ।
अन्वाचय इहान्यो यः सोऽपि नान्यः समुच्चयात् ॥१९१॥
द्विपदाश्रयश्च स स्यात् स स्यात् बहुपदाश्रय' ।
उभयाश्रयश्च स स्यात् स स्यादनुभयाश्रय ॥१९२॥

---

स्तिमिनाम शतयोजनमायत । तिमिङ्गिलगिलोऽप्यस्ति तद् गिलोऽप्यस्ति राघव ॥ इत्युक्त । निवह समूह तमिव, सपक्षा' पक्षवन्तः ससहायाश्च पर्वतास्ता लोक सङ्घात त नदीना स्रोतांसि प्रवाहा तानीव तरङ्गान् रवानीव मुक्ता फलादीनीव गुरुकाणि महान्ति गुणाना शतानि वहन्त धावयन्तमित्यन्वय ॥१८८॥

सहेति । सम्प्रति इमा रात्रय मम श्वासै निःश्वासै सह दीर्घा आयता । चन्द्रभूषणा चन्द्रालङ्कृता ता रात्रय ममैव अङ्गै सह पाण्डराश्च पाण्डुवर्णाश्च जाता इति शेष । विरहिण, उक्तिरियम् ॥ १८९ ॥

समुच्चय लक्षयति द्रव्येति । अनेकेषा बहूना द्रव्यक्रियागुणादीना क्रियाद्रव्य गुणादिषु एकत एकस्मिन् निवेशन समुच्चय स्यात ॥ १९० ॥

इतरेति । य इतरेतरयोग अन्योन्ययोग य समाहार समष्टि, य अन्य अपर अन्वाचय इह उच्यते कथ्यते सोऽपि समुच्चयात् अन्य भिन्न अतिरिक्त इत्यथ न ॥ १९१ ॥

द्विपदेति । स समुच्चय द्विपदाश्रय, स्यात्, बहुपदाश्रयः स्यात् । स उभयाश्रय, स्यात्, स अनुभयाश्रयश्च स्यात् ॥ १९२ ॥

त्रयः प्रतिपदं वा स्युः द्योतकैरुत्तरत्र वा ।
पदैः शुद्धाश्च मिश्राश्च तुरीयो द्योतकं विना ॥१९३॥

अत्र द्विपदाश्रयः प्रतिपदाश्रितद्योतकत्वेन द्रव्ययोः क्रियासमुच्चयो यथा,—

निर्यता परिजनेन बोधितः स्फूर्जमानरुचिरुल्लसद्दृशः ।
हारसवलनमांसलोऽधिकं दीपकश्च मदनश्च दिद्युते ॥

अत्र दीपकश्च मदनश्च इति द्वे द्रव्ये प्रतिपद चकारेण एकस्यां दिद्युते इति क्रियायां समुच्चयेन निवेशिते, इति न दिद्युताते इति द्विवचन दीपकमदनौ इति चार्थे द्वन्द्वश्च न भवति ॥१९४॥

द्विपदाश्रय एव उत्तरपदाश्रितद्योतकेन क्रिययोर्द्रव्यसमुच्चयो यथा,—

निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा
कलाशेषा मूर्त्तिः शशिन इव नेत्रोत्सवकरी ।
अवस्थामापन्ना मदनदहनोद्दाहविधुरा
इयं नः कल्याणी रमयति मनः कम्पयति च ॥

---

त्रय इति । त्रय द्विपदाश्रय बहुपदाश्रय उभयाश्रयश्चेति त्रिविधा इत्यर्थः प्रतिपद द्योतकैश्चकारादिभि वा उत्तरत्र उत्तरस्मिन् पदे द्योतकैर्वा स्यु भवेयुः । तुरीय चतुर्थ अनुभयाश्रय इत्यर्थ द्योतक विना पदै शुद्धश्च केवलश्च मिश्रश्च भवतीति शेष ॥ १९३ ॥

निर्यतेति । निर्यता निर्गच्छता गृहादिति शेष परिजनेन सखीजनेनेत्यर्थः बोधित प्रज्वालित ज्ञापितश्च स्फूर्जमाना प्रसरन्ती रुचि आलोक रागश्च यस्य तथाभूत हारस्य सवलनेन रोधनेन मासल प्रवृद्ध इति यावत दीपकश्च उल्लसन्त्यौ दृशौ यस्या तथाभूतायाः मदनश्च कामश्च अधिक दिद्युते रराज ॥ १९४ ॥

निकामेति । निकामम् अत्यर्थं क्षामाङ्गी क्षीणाङ्गी सरसा या कदली तस्या गर्भवत सुभगा सुकोमला कलाशेषा शशिन चन्द्रस्य मूर्त्तिरिव नेत्रोत्सवकरी नयनानन्दकरी मदन एव दहन अग्नि तस्य उद्दाहेन उत्कटदहनेन विधुरा

अत्र रमयति कम्पयति च इति द्वे क्रिये उत्तरपदवर्त्तिना चकारेण एकस्मिन् मनो लक्षणे द्रव्ये कर्मणि समुच्चयेन एककालमेव-निवेशिते, तेनाय अन्वाचयो न भवति ॥१९५॥

बहुपदाश्रयः प्रतिपदाश्रितद्योतकत्वेन गुणाना क्रियासमुच्चयो यथा,—

अप्राकृतस्तु कथमस्तु न विस्मयाय
यस्मिन्नुवास करुणा च कृतज्ञता च।
लक्ष्मीश्च सात्विकगुणज्वलितं च तेजः
धर्मश्च मानविजयौ च पराक्रमश्च ॥

अत्र करुणा च कृतज्ञता च इत्यादयो गुणाः प्रत्येकं बहुपदाश्रयत्वेन चकारेणएकस्याम् उवास इति क्रियायां समुच्चयेन निवेश्यन्ते। तेन गुणेषु बहुवचन न भवति। करुणाकृतज्ञतादीनां द्वन्दसमासश्च न भवति। यस्मिन् इत्यपेक्षायाञ्च अयमेव गुणानां द्रव्यसमुच्चयो भवति ॥ १९६ ॥

बहुपदाश्रय एव उत्तरपदाश्रितद्योतकत्वेन गुणानां क्रियासमुच्चयो यथा,—

रूपमप्रतिविधानमनोज्ञ प्रेमकार्य्यमनपेक्षविकाशि।

---

दारुणा अवस्था दशाम् आपन्ना प्राप्ता इय कल्याणी न अस्माक मनः रमयति प्रीणयति कम्पयति च ॥ १९५ ॥

अप्राकृत इति। यस्मिन् करुणा दया च कृतज्ञता च प्रत्युपकारिता च लक्ष्मीश्च श्रीश्च सात्त्विके सत्त्वातिरेकजनिते गुणे "शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी। ललितौदार्य्यमित्येते सात्त्विका पौरुषा गुणा" इत्युक्ते ज्वलित दीपित तेजश्च प्रतापश्च धर्मश्च मानश्च विजयश्च पराक्रमश्च उवास वसतिस्म स अप्राकृतः असामान्य जनस्तु कथ विस्मयाय चमत्काराय न अस्तु न भवतु ? अपितु चमत्कारायैव भवत्वित्यर्थः ॥ १९६ ॥

रूपमिति। आसा नारीणा नास्ति प्रतिविधान प्रतिरूपकादि, यस्य तादृशम्

चाटु चाकृतकसम्भ्रममासां कार्मणत्वमगमद् रमणेषु ॥

अत्र रूपं प्रेम चाटु च इति बहवो गुणाः उत्तरपदाश्रयेण चकारेण अगमत् इति एकस्यां क्रियायां समुच्चयेन निविश्यन्ते। तेन अगमन् इति बहुवचनं द्वन्द्वो वा न स्यात्। कार्मणत्वम् इत्यपेक्षायां च अयमेव गुणानां जातिसमुच्चयो भवति ॥१८७॥

उभयपदाश्रयः उत्तरपदाश्रितद्योतकत्वेन द्रव्यगुणानां क्रियासमुच्चयो यथा,—

विचिन्त्यमानं मनसाऽपि देहिनां
इदं हि लोकेषु चकास्ति दुर्लभम्।
निशा सचन्द्रा मदिरा च सोत्पला
प्रियानुरागोऽभिनवञ्च यौवनम् ॥

अत्र निशा मदिरा च द्रव्ये अनुरागो यौवनञ्च गुणौ बहुष्वपि पदेषु द्वन्द्वे सत्यपि उत्तरपदाश्रयनिवेशिना चकारेण चकास्ति इत्येकस्यां क्रियायां निविश्यन्ते। तेन चकासति इति बहुवचनं समासश्च न स्यात्। अयमेव च दुर्लभम् इति अपेक्षायां द्रव्यगुणानां गुणसमुच्चयो भवति। तेऽमी त्रयोऽपि शुद्धाः। मिश्रः पुनरुभयपदाश्रयवद् बहुपदाश्रयश्च भवति ॥ १८८ ॥

---

अतएव मनोज्ञं मनोहरं रूपम् अङ्ग नास्ति अपेक्षा लज्जाद्यनुरोध इति यावत् यस्मिन् तद् यथा तथा विकाशेन विस्फुरतीति तथोक्तं प्रेमकार्य्यं प्रणयपूर्वं चेष्टितमित्यर्थः नास्ति कृतकं कृत्रिमं, सम्भ्रमं भयं यस्मिन् तथाभूतं चाटु च प्रियवचनञ्च रमणेषु रतिलीलासु कान्तेषु विदग्धेषु वा कार्मणत्वं कर्मणे हितं कार्मणं तस्य भावः तत्त्वं वशीकरणव्यापारहेतुमिति भावः अगमत् प्राप ॥ १८७ ॥

विचिन्त्यमानमिति। सचन्द्रा चन्द्रालङ्कृता निशा सोत्पला उत्पलशोभिता मदिरा आसवं प्रियायाः प्रिये वा अनुरागः प्रणयः अभिनवं यौवनञ्च इदं हि लोकेषु जगत्सु संसारेष्विति यावत् मनसा विचिन्त्यमानमपि देहिनां दुर्लभं दुष्प्रापं चकास्ति प्रतिभाति ॥ १८८ ॥

यथा,—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥

अत्र आदित्यचन्द्रादयो द्रव्यविशेषाः उत्तरपदनिवेशिना प्रतिपदनिवेशिना च चकारेण जानाति इति एकस्यां क्रियायां निवेश्यन्ते। तेन च बहुवचनाभावे समासाभावे च एष मिश्रः समुच्चयभेदो भवति, अनुभयाश्रयस्तु समुच्चयोऽन्वाचयश्च न भवति। द्वयोरपि दीपकेन विषयापहारात्। तेन इतरेतरयोगसमाहारयोः स उदाह्रियते॥ १९९॥

तत्र इतरेतरयोगो यथा,—

सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु।
गन्तुमुत्थितमकारणतः स्म द्योतयन्ति मदविभ्रममासाम्॥

अत्र उक्तमुपेक्षा उत्थितम् इति एते क्रिया द्रव्यविशेषा इतरेतरयोगेन मदविलासद्योतनक्रियायां निवेश्यन्ते। तेन द्योतयन्ति इति बहुवचनं द्वन्द्वसमासश्च तद्विवक्षायां स्यात्। न च इह द्योतकश्चकारः उत्तरपदे प्रतिपदं विद्यते इति सोऽयम् उभयाश्रयः समुच्चयभेदः॥ २००॥

---

आदित्येति। आदित्यः सूर्यः चन्द्रः अनिलः वायुः अनलः अग्निः द्यौः अन्तरीक्षं भूमिः पृथ्वी आपः जलानि हृदयं मनः यमश्च अहश्च दिनञ्च रात्रिश्च उभे सन्ध्ये च प्रातःसन्ध्या सायंसन्ध्या चेत्यर्थः धर्मश्च नरस्य मानवस्य वृत्तं चरितं जानाति॥ १९९॥

सावशेषेति। सावशेषम् असम्पूर्णमित्यर्थः पदं सुप्तिङन्तं यस्मिन् तथाभूतम् उक्तम् वचनं स्रस्तानि विच्युतानि माल्यानि वसनानि वस्त्राणि आभरणानि च तेषु उपेक्षा अयत्नः, अकारणतः कारणं विनेत्यर्थः गन्तुम् उत्थितम् उत्थानम् आसां नारीणां मदविभ्रमं मद्यपानजनितं विकृतिविशेषं द्योतयन्ति प्रकाटयन्ति॥ २००॥

समाहारो यथा,—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

अत्र यद् वरेषु मृग्यते तत् किं त्रिलोचने व्यस्तमप्यस्ति इति ब्रुवन् वपुर्वयोवसूनां समुदायं समस्तमेव अभिसन्धत्ते। तस्य च आविर्भूतावयवभेदत्वेन इतरेतरयोगः तिरोहितावयवभेदत्वेन समाहारः। स इह यद् इति एकवचनान्तेन नपुंसकेन च कथ्यते। न चेह क्वचिदपि चकारोऽस्ति। सोऽयं अपि अनुभयाश्रयः समुच्चयभेदः। चयोगेऽपि इतरेतरयोगः ॥२०१ ॥

स उत्तरपदयोगेऽपि यथा,—

तत्क्षणं विपरिवर्त्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः।
सा बभूव वशवर्त्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥

अत्र शूलिनः मदस्य च इति उत्तरपदाश्रयेण चकारेण द्वौ द्रव्यविशेषौ वशवर्त्तिनी इति एतस्मिन् गुणपदे यदि इतरेतरयोगेन सन्निवेश्येते तदा विपरिवर्त्तितह्रियोः इत्यादिषु द्वयोरिति पर्य्यन्तेषु द्विवचनम् एकशेषो वा न स्यात्। सोऽयमपि द्विपदाश्रय उत्तरपदाश्रितद्योतकश्च समुच्चयभेदः। एवम्

---

वपुरिति। वपु अङ्ग विरूपाणि विषमाणि अक्षीणि यस्मिन् तथोक्त त्रिनेत्रमित्यर्थ. न कुत्रापि एतादृश विकृतरूप दृश्यते इति भाव' न लक्ष्य जन्म यस्य स अलक्ष्यजन्मा तस्य भाव अलक्ष्यजन्मता निष्कुलतेति भाव. दिगम्बरत्वेन दिग्वसनत्वेन नग्नत्वेनेत्यर्थ. वसु धन निवेदितम् उक्त यदि धनमस्ति तदा कथ नग्नत्वमिति भाव। हे बालमृगाक्षि। मृगशावकनयने। वरेषु जामातृषु यत् मृग्यते अन्विष्यते रूपादिकमिति भाव' तथा चोक्त "कन्या वरयते रूपं माता वित्त पिता श्रुतम्। बान्धवा. कुलमिच्छति मिष्टान्नमितरे जना इति।" त्रिलोचने तत् व्यस्तमपि एकमपीत्यर्थ. किम् अस्ति ? नैवेत्यर्थ. ॥ २०१ ॥

तत्क्षणमिति। सा सुवदना सुमुखी पार्वती तत्क्षणं तस्मिन् क्षणे इत्यर्थः

अपरेऽपि इतरेतरयोगेऽपि च योगा उदाहार्य्याः, समाहारस्तु च योगविषयो विचिन्त्यमानम् इत्यादिना एव उक्तः। अन्वाचयस्तु क्रियाविषय एव उपपद्यते ॥ २०२ ॥

तत्र च उत्तरपदाश्रय एव चकारो भवति यथा,—

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तम्
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीम्
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः ॥

अत्र उर्वीं दर्शय इति उर्वीं कर्मविषयत्वेन क्रियामुपन्यस्य तोयोत्सर्गस्तनितमुखरो मास्म भूः इति तत्कर्त्तरि एव धर्म्मिणि अकर्मक क्रियान्तरमन्वाचीयते। सोऽयं भिन्नकालत्वभिन्नविषयत्वाभ्याम् अन्वाचयः समुच्चयाद्भिन्नो भवति। नन्वेव यदि समुच्चयेऽपि भिन्नविषये क्रिये तुल्यकालमेव प्रयुज्येते, को दोषः स्यात्? न कश्चित्। किन्तु तस्य समुच्चयमुद्रया विषयोऽपहृतः इति न उदाह्रियते ॥ २०३ ॥

समासेऽपि इतरेतरयोगादनुभयाश्रितः समुच्चयभेदो यथा,—

---

विपरिवर्त्तिता विशेषेण परिहत्ति नीता क्रीलज्जा याभ्या तयो [illegible] प्रेम्णो: अतएव शयन शय्या नेष्यतो: प्रापयिष्यतो: द्वयो यूनि: [illegible] च वशवर्त्तिनी वशवदा वभूव ॥२०२ ॥

गच्छन्तीनामिति। तत्र उज्जयिन्या नक्त रात्रौ [illegible] भेद्यानि गाढत्वादिति भाव: तै तमोभि' तिमिरै: रुद्ध: [illegible] यस्य तथाभूते नरपतिपथे राजपथे रमणवसति [illegible] गच्छन्तीनाम् अभिसारिणीनामिति भाव' योषिता नारीणा [illegible] कनकनिकषस्निग्धया सौदामिन्या विद्युता उर्वीं पृथिवीं [illegible] दर्शय प्रकाटय, तोयानां जलानाम् उत्सर्ग वर्षणमित्यर्थ: [illegible] तेन मुखर [illegible] भाव: मास्म भू न भवेत्यर्थ, यत: ता [illegible] भीरव. ॥ २०२ ॥

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

अत्र वागर्थाविव इति परवल्लिङ्गता, सम्पृक्तौ पितरौ इति अत्र योऽयं "पुमान् स्त्रिया" "पिता मात्रा" इति च एकशेषः। तेनैष विशेषलक्षणयोगाद् वक्रोक्तित्वे सति अलङ्कारतां लभते इति न धवखदिरादिषु अतिप्रसङ्गः इति अयमपि समुच्चय भेदः ॥ २०४ ॥

समाहारयोगादपि यथा,—

स्त्रीणां हावैः कृते यत्र निजकार्य्ये मनोभुवा।
अक्षिभ्रुवनिभं न्यस्तं तन्मुखे शरकार्मुकम् ॥

अत्र अपि योऽयम् अक्षिभ्रुव शरकार्मुकम् इति एतयोः "प्राणि-तूर्य्यसेनाङ्गानाम्" इति "वाङ्मनसाक्षिभ्रुव" इति च विशेष-लक्षणयोगः तेन धवखदिरपलाशम् इत्येवमादिषु नातिप्रसङ्गो भवति ॥२०५॥

इति समुच्चयालङ्कारनिरूपणम् ।

विधिनाथ निषेधेन प्रतिषेधोक्तिरत्र या।
शुद्धा मिश्रा च साक्षेपो रोधो नाक्षेपतः पृथक् ॥ २०६ ॥

तत्र विध्याक्षेपः शुद्धो यथा,—

---

वागर्थाविति। वाक् च अर्थश्च ताविव सम्पृक्तौ जगतः पितरौ मातापितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये वाक्यार्थज्ञानाय वन्दे प्रणमामि ॥ २०४ ॥

स्त्रीणामिति। यत्र यस्यां नगर्य्यां स्त्रीणां हावैः विलासविशेषैः निजकार्य्ये जगद्वशीकरणरूपे इति भावः कृते सम्पादिते सति मनोभुवा कामेन तन्मुखे तासां स्त्रीणां मुखे अक्षिभ्रुवनिभं नेत्रभ्रूव्याजं शरकार्मुकं शरौ धनुश्चेत्यर्थः न्यस्तं रचितं न्यासत्वेन स्थापितमित्यर्थः स्वकार्य्यसिद्धौ निष्प्रयोजनत्वादिति भावः ॥ २०५ ॥

आक्षेपं लक्षयति विधिनेति। अत्र अस्मिन् अलङ्कारसन्दर्भे विधिना अथ पक्षान्तरे निषेधेन या प्रतिषेधोक्तिः निषेधवचनं सा शुद्धा मिश्रा चेति द्विविधा आक्षेपः। रोधः तदाख्योऽलङ्कारः आक्षेपतः पृथक् भिन्नः न। आक्षेपपर्य्याय इत्यर्थः ॥ २०६ ॥

गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥

अत्र गच्छ इति अस्य विधिवाक्यस्य ममापि जन्म तत्रैव भूयात् इत्याशिषा अनुकूलतयैव मरणसूचनात् निषेधः क्रियते इति शुद्धोऽयं विध्याक्षेपः॥ २०७॥

मिश्रो यथा,—

अलं विवादेन यथा श्रुतं त्वया तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते॥

अत्र अलं विवादेन इति निषेधेन तथाविधः सोऽस्तु इति विधिना च तन्मतमवस्थाप्य ममात्र भावैकरसं मनः स्थितम् इति विधिना न कामवृत्तिर्वचनीयमीक्षते इति प्रतिषेधेन च यत् पुनराक्षिपति सोऽयं विधिनिषेधाभ्यां विधिमिश्र आक्षेपो भवति॥ २०८॥

निषेधाक्षेपः शुद्धो यथा,—

कुतः कुवलयं कर्णे करोषि कलभाषिणि।।
किमपाङ्गमपर्य्याप्तमस्मिन् कर्मणि मन्यसे॥

---

गच्छेति। प्रवसन्तं नायकं प्रति उक्तिः। हे कान्त। गच्छसि प्रवससि चेत् यदि, गच्छ प्रवस। ते तव पन्थानः शिवाः शुभाः निर्विघ्ना इत्यर्थः, सन्तु भवन्तु, यत्र यस्मिन् देशे भवान् गतः गमिष्यतीत्यर्थः भविष्यत्सामीप्ये क्तः प्रत्ययः। तत्रैव ममापि जन्म उत्पत्तिः भूयात्॥ २०७॥

अलमिति। विवादेन वाक्कलहेन अलं न किमपि प्रयोजनमित्यर्थः। त्वया यथा येन प्रकारेण श्रुतम् आकर्णितं लोकमुखादिति भावः सः हरः तथाविधः तत्प्रकारः तावत् अशेषं सम्यगित्यर्थः अस्तु भवतु। मम मनः अत्र हरे भावो भक्तिरेव एकोऽद्वितीयो रसो रागो यस्य तथाविधं सत् स्थितं निश्चलत्वेनेति भावः। ननु अकार्य्यकरणात् साधुभिर्निन्द्यत एवेत्यत्राह नेति कामवृत्तिः स्वेच्छाचारी जनः वचनीयं निन्दां न ईक्षते न पश्यति विचारयति इत्यर्थः॥ २०८॥

अत्र कुतः कुवलयं कर्णे करोषि इति अस्य निषेधवाक्यस्य किमपाङ्गम् इत्यादिना प्रश्नपरेण अपि निषेधपर्य्यवसायिना वाक्येन समर्थनं क्रियते इति अयं शुद्धो निषेधाक्षेपः ॥ २०९ ॥

मिश्रो यथा,—

सच्चं गरुआ गिरिणो को भणइ जलासआ ण गम्भीरा।
धीरेहिं उवमाउं तहवि हु मह णत्थि उच्छाहो॥

अत्र सत्यं गुरवोऽपि गिरयः इति विधिः, क आह जलाशया न गम्भीरा इति परमताक्षेपः, ताभ्यां गिरीणां गुरुत्वं सागराणाञ्च गाम्भीर्य्यम्। यत् अयम् उत्तरार्द्धेन धीरापेक्षया निषेधति अन्यापेक्षया तत् तदेव विधत्ते। स एष मिश्रो निषेधाक्षेपः। रोधो नाक्षेपतः पृथक् इति उक्तम्। तत्र एतावान् विशेषः।

क्रियास्वुत्तिष्ठमानस्य वारणं कारणेन यत्।
उक्त्या युक्त्या च रोधो य आक्षेपः सोऽयमुच्यते॥ २१०
प्रतिकूलोऽनुकूलश्च विधौ रोधोऽभिधीयते।

---

कुत इति। हे कलभाषिणि मधुरभाषिणि। कर्णे कुवलय नीलोत्पल कुत कस्मात् करोषि? धारयसि? अस्मिन् कर्मणि कर्णभूषणव्यापारे इत्यर्थः अपाङ्ग नयनप्रान्तम् अपर्य्याप्तम् अक्षमं किं मन्यसे?। अपाङ्गेनैव कुवलयकार्य्यकरणात् निष्फल पुनस्तद्धारणमिति भावः ॥ २०९ ॥

सत्य गुरवो गिरयः को भणति जलाशया न गम्भीरा।
धीरैरुपमातुं तथापि खलु मम नास्ति उत्साहः॥

सत्यमिति। गिरयः पर्वता गुरवः महान्तः सत्यम्। जलाशयाः समुद्रा इत्यर्थः गम्भीराः अतलस्पर्शा न इति को जनः भणति कथयति जलाशया गम्भीरा एवेति सत्यमित्यर्थः. तथापि गिरीणा गुरुत्वेऽपि समुद्राणा गम्भीरत्वेऽपि चेत्यर्थः धीरैः मनीषिभिः महानुभावैरित्यर्थः सह उपमातुं तुलयितु तानिति शेषः मम उत्साहः उद्यमः नास्ति खलु न विद्यत एवेत्यर्थः। धीरा गिरीन् समुद्रांश्च गौरवेण गाम्भीर्य्येण च अतिशेरते इति भावः ॥ २१० ॥

निषेधेऽप्युक्तियुक्तिभ्यां द्विप्रकारः स कथ्यते ॥ २११ ॥

तत्र उक्त्या विधौ प्रतिकूलो यथा,—

किं जम्पिएण दहमुह! जम्पिअसरिसं अणिव्वहन्तस्स भरं।
एत्तिअं जम्पिअ सारं णिहणं अस्से वि वज्जधारासु गआ॥

अत्र किमः प्रतिकूलवाचित्वात् वचनवृत्त्या एव जल्पन् दशाननः चित्ररथेन रुद्धः। कारणञ्च वज्रप्रभावकीर्त्तनादिति प्रातिकूल्येन उपन्यस्तम्। सोऽयम् औक्तः प्रतिकूलस्य विध्याक्षेपो रोध इति उच्यते ॥ २१२ ॥

उक्त्यैव विधौ अनुकूलो यथा,—

हन्तुं वि मग्गमाणो हन्तुं तुरिअस्स अप्पणा दहवअणं।
किं इच्छसि काउं से पवअवइ पिअ त्ति विप्पिअं रहुवइणो ॥

अत्र अपि किमः प्रतिषेधवाचित्वाद् वचनवृत्त्या एव दशाननवधाय उत्तिष्ठमानः सुग्रीवो जाम्बवता रुद्धः कारणञ्च पुनः आनुकूल्येनैव उक्तम्। किमेतत् त्वया रघुपतेः प्रियरूपं विप्रियम् उपक्रान्तमिति। सोऽयम् औक्तोऽनुकूलस्य विध्याक्षेपो रोध इति उच्यते ॥ २१३ ॥

---

रोध विशिनष्टि क्रियास्विति। क्रियासु कार्य्येषु उत्तिष्ठमानस्य प्रवर्त्तमानस्य उक्त्या युक्त्या च कारणेन यत् वारणं निषेधः य आक्षेपः सोऽयं रोध उच्यते कथ्यते।

प्रतिकूल इति। रोधः विधौ प्रतिकूल अनुकूलश्च द्विप्रकारः अभिधीयते कथ्यते। निषेधेऽपि उक्तियुक्तिभ्याम् उक्त्या युक्त्या चेत्यर्थः स रोधः द्विप्रकारः कथ्यते ॥ २११ ॥

किं जल्पितेन दशमुख। जल्पितसदृशमनिर्वहतो भरम्।
एतावत् जल्पित्वा सारं निधनमन्येऽपि वज्रधारासु गताः ॥ स

किमिति। हे दशमुख। दशानन। रावण। जल्पितसदृशं वचनानुरूपं भरं कार्य्यभारमित्यर्थः अनिर्वहतः निर्वोढुमशक्नुवतः इत्यर्थः जल्पितेन

विधावेव युक्त्याऽनुकूलः प्रतिकूलस्य यथा,—

गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी ।
निर्गच्छति मुखाद् वाणी मा गा इति करोमि किम् ॥

अत्र यथोक्तम् इति उक्त्वा किं करोमि इति आनुकूल्येनैव आह अत्र किमः प्रश्नार्थत्वेऽपि युक्त्या निषेधार्थत्वं गम्यते। सोऽयं यौक्तोऽनुकूलो यौक्तस्य विध्याक्षेपो रोध इति उच्यते। अयमेव च अस्य वैयात्योक्तिपक्षे यौक्त-प्रतिकूल-विध्याक्षेपो रोधो भवति ॥ २१४ ॥

युक्त्या निषेधे प्रतिकूलो यथा,—

पउरजुआणो गामो महुमासो जोव्वणं पई ठेरो ।
जस्स सुरा साहीणा असई मा होउ कि मरउ ॥

अत्र असती मा भवतु इति यः प्रतिषेधमाह स प्रचुरयुवा

---

निरर्थकेनेति भाव किम्? न किमपि प्रयोजनमित्यर्थ.। अन्येऽपि असुरा इति भाव एतावत् असारं नि सार जल्पित्वा आक्रुश्येति यावत् वज्रधारासु देवराजस्येति शेष निधन पञ्चत्व गता. प्राप्ता ॥ २१२ ॥

हन्तुमपि मार्गमाणो हन्तु त्वरितस्यात्मना दशवदनम् ।
किमिच्छसि कर्तुमस्य प्लवगपते। प्रियमिति विप्रिय रघुपते ॥ स

हन्तुमिति। हे प्लवगपते। वानराधीश्वर। सुग्रीव। हन्तु व्यापादयितुम् अपि मार्गमाण अन्विष्यन् हन्तु विमार्गमाण इति पाठान्तरम्। त्वम् आत्मना स्वय दशवदनं रावण हन्तुं त्वरितस्य त्वरमाणस्य अस्य रघुपते रामस्य प्रिय प्रीतिजननमिति हेतो विप्रियम् अप्रियम् कर्तुं कि कथम् इच्छसि? रघुपते स्वय रावणो हन्तव्य इति कृतप्रतिज्ञस्य त्वया रावणवध. क्रियमाणः प्रीति नोत्पा-दयतीति त्वमस्मादव्यापारात् निवर्त्तस्वेति भाव: ॥२१३॥

गच्छेति। त्व गच्छ इति तव प्रिय वक्तु इच्छामि अभिलषामि किन्तु मम प्रियम् इच्छतीति मत्प्रियैषिणी सती मा गा न गच्छ इति मुखात् वाणी नि.स-रति निर्गच्छति कि करोमि ॥ ॥ २१४ ॥

ग्राम इत्यादि कारणम् उक्त्वा ततः किं म्रियताम् इति प्रातिकूल्येन रुध्यते। तत्र किमः काक्वा सासूयप्रश्नार्थस्य युक्त्या निषेधार्थत्वं गम्यते, सोऽयं यौक्तः प्रतिकूल-निषेधाक्षेपो रोध इति उच्यते ॥ २१५ ॥

युक्त्यैव निषेधेऽनुकूलो यथा,—

कहं मा खिज्जउ मज्झो इमीअ कन्दोट्टदलसरिच्छेहिं ।
अच्छीहि जो ण दीसइ घणत्थणभररुद्धपसरेहिं ॥

अत्र स्तनादिवत् अस्या मध्योऽपि मा क्षीयताम् इति निषेधवादी केनचित् आनुकूल्येन रुद्ध्यते। कथम् अयं मा क्षीयतामिति योऽस्याः कुवलयदलसदृशाभ्यां लोचनाभ्यां घनस्तनरुद्धप्रसराभ्यां न दृश्यते। इयं हि एताभ्यामन्यमीक्षमाणा यथैव न पश्यति सोऽहमिव मध्योऽपि क्षीयमाणो लक्ष्यते। तत्र च किमः प्रश्नार्थत्वे निषेधार्थत्वं गम्यते। सोऽयं यौक्तोऽनुकूलश्च निषेधाक्षेपो रोध इति उच्यते ॥ २१६ ॥

---

प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः ।
जग्धसुरा स्वाधीना असती सा भवतु किं म्रियताम् ॥ स

प्रचुरेति। प्रचुरा बहवः युवानः यत्र तथाविधः ग्रामः मधुमासः वसन्तमासः चैत्रमास इत्यर्थः यौवनं तारुण्यं पतिः स्थविरः वृद्धः । सा स्वाधीना स्ववशा जग्धसुरा पीतमद्या अतः असती दुश्चारिणी भवतु किं अथवा म्रियतां प्राणान् त्यजतु। एतस्यामवस्थायाम् असत्पथावलम्बनं मरणं वा सम्भवतीति भावः ॥ २१५ ॥

कथं मा क्षीयतां मध्योऽस्याः कन्दोट्टदलसदृशाभ्याम् ।
अक्षिभ्यां यत्र दृश्यते घनस्तनभररुद्धप्रसराभ्याम् ॥

कथमिति। अस्या नायिकाया मध्यः मध्यभागः कथं मा क्षीयतां? न क्षयं गच्छतु? क्षीणतां व्रजतु? अपि तु क्षीणतागमोऽस्य उचित एवेति भावः। यत् यत्र कन्दोट्टदलसदृशाभ्यां नीलोत्पलदलसमाभ्यां घनयोः सान्द्रयोः स्तनयोः भरेण उच्छ्रायेण रुद्धः आवृतः प्रसरः व्यापारः ययोः तथाविधाभ्याम् अक्षिभ्यां नयनाभ्यां

निषेधे एव उक्त्या प्रतिकूलोऽनुकूलस्य यथा,—

भ्रुकुटिरारचिता गतमग्रतो हृतमथाननमुक्तमसाधु वा।
इयमति प्रभूता क्रियते बलाद् अकुपितोऽपि हि यत् कुपितो जनः॥

अत्र अकुपितोऽपि कुपितः क्रियते इति योऽयं निषेधाक्षेपरूप उपालम्भः तत्र च भ्रुकुटिरारचिता इत्यादिवैयात्येन प्रतिकूलकारणम् उपन्यस्य सेयम् अतिप्रभूता सोऽयं बलात्कार इति काक्वा वाचनिकमेव उपालम्भम् अभिधत्ते। तेनायम् औक्तः प्रतिकूलस्य निषेधाक्षेपो रोध इत्युच्यते। अयमेव च अस्यापि क्रियासु अवैयात्योक्तिपक्षे स्वरूपाख्यानात् औक्तोऽनुकूलनिषेधाक्षेपो रोधो भवति। यदा तु कारणम् उपन्यस्यापि क्रियासु उत्तिष्ठमानो न रुध्यते तदा आक्षेप एव न रोधः॥ २१७॥

तद् यथा,—

गमिआ कदम्बवाआ दिट्ठं मेहंधआरिअं गअणअलं।
सहिओ गज्जिअसद्दो तह वि हु से णत्थि जीविए आसन्धो॥

---

न दृश्यते न अवलोक्यते। मानिनी महद्भिः सादरमनालोकिता दुःखेन क्षीयन्ते इति गम्यते। एषा नयनाभ्यां य नेक्षते तस्य क्षय एवोचित इति कामिनामाशयः॥ २१६॥

भ्रुकुटीरिति। भ्रुकुटिः भ्रूभङ्गिः आरचिता कृता गतं गमनं प्रवसनमिति यावत् अग्रतः प्राक् हृतं निवारितमित्यर्थः भ्रूभङ्गैरेवेति भावः। अथ भ्रूभङ्गिरचनानन्तरम् असाधु वा निष्ठुरञ्च आननमुक्तं वदननिःसृतम्। अकुपितोऽपि प्रशान्तोऽपि सौम्योऽपीति यावत् जनः बलात् सहसेत्यर्थः यत् कुपितः क्रियते इयम् अतिप्रभुता अतिशयेन प्रभुत्वं स्वाधीनपतिकाया अपराधलेशेऽपि कान्तं प्रतिकोपो जायते किं पुनर्विदेशगमनप्रस्तावे इति भाव॥ २१७॥

गमिताः कदम्बवाता दृष्टं मेघान्तरितं गगनतलम्।
सोढो गर्ज्जितशब्दस्तथापि खल्वस्या नास्ति जीविते आसन्धा॥ स

अत्र कदम्बवातातिवाहनादीनां जीविताध्यवसायहेतूनाम् उपन्यासेऽपि क्रियासु उत्तिष्ठमानो न रुध्यते। कथमयं न जीवति इति किं तर्हि कारणमेव आक्षिप्यते तथापि नास्ति अस्य जीवितेऽध्यवसायः इति। सोऽयम् आक्षेपो एव न रोधः॥ २१८॥

क्रियोद्यतस्यापि वारणे कारणानाम् अन्यपरत्वे रोधो न भवति यथा,—

धनञ्च बहुलभ्यं ते सुखं क्षेमञ्च वर्त्मनि।
न च मे प्राणसन्देहस्तथापि प्रिय! मास्म गाः॥

अत्र यद्यपि यात्रोद्यतः प्रियो रुध्यते प्रभूतार्थलाभादीनां कारणानां गमनपरत्वमेव न निवारणपरत्वम् अतोऽयं न रोधः। किं तर्हि, आक्षेप एव भवति।

इति आक्षेपालङ्कारनिरूपणम्।

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥ २१९॥
स उपन्यस्तवस्तूनां साधर्म्येण च कथ्यते।

---

गमिता इति। कदम्बाना नीपकुसुमाना वाता, वायवः गमिता, अतिवाहिता' सोढा इत्यर्थ गगनतल मेघै अन्तरितम् आच्छन्न दृष्टम् अवलोकितम्। गर्जितशब्द गर्जनध्वनि' सोढ' तथापि अस्या' नायिकाया जीविते आसन्या अध्यवसाय नास्ति खलु? नैव किमित्यर्थ' अपितु अस्त्येवेत्यर्थ' त्वत्प्रतीक्षयेति भाव। दूत्या उक्तिरियम्॥ २१८॥

धनमिति। हे प्रिय। ते तव बहु धन लभ्यञ्च प्राप्यमेवेत्यर्थ, प्रवासगमनादिति भाव वर्त्मनि पथि सुखं क्षेम मङ्गलञ्च भवितेति शेष मे मम प्राणाना सन्देह संशयश्च न च, त्वद्विरहे इति शेष, तथापि मास्मगा न गच्छ॥ २२०॥

अर्थान्तरन्यास लक्षयति ज्ञेय इति। किञ्चन किमपि वस्तु प्रस्तुत्य सङ्कीर्त्य तस्य वस्तुन' साधने दृढीकरणे समर्थस्य योग्यस्य अन्यस्य वस्तुन य न्यास, कीर्त्तन स, अर्थान्तरन्यासः ज्ञेय॥ २१९॥

स इति। स, अर्थान्तरन्यासः विद्वद्भिः उपन्यस्तवस्तुना कीर्त्तितविषयाणा

वैधर्म्येण च विद्वद्भिर्वैपरीत्येन कुत्रचित् ॥ २२० ॥

तेषु साधर्म्येण यथा,—

पयोमुचः परीतापं हरन्त्येते शरीरिणाम् ।
न चात्मलाभो महतां परदुःखोपशान्तये ॥

अत्र परीतापापहरणत्वमस्य जलदाख्यस्य महावस्तुनो न्यसनं विधाय तत्साधनसाधर्म्येणैव तत्साधनत्वम् महापुरुषलक्षणं वस्त्वन्तरम् उपन्यस्यति । सोऽयं साधर्म्येण अर्थान्तरन्यासः ॥ २२१ ॥

वैधर्म्येण यथा,—

प्रियेण सङ्ग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥

अत्र अपि प्रियतमेन स्वयं कान्ताहृदये समारोपितायाः स्रजः प्रेमकारणम् उपन्यस्य जलाविलत्वदोषवत्या अपि यत् अत्यागकारणं तदिह वैधर्म्यद्वारेण प्रतिपादितम् अतो वैधर्म्येण अयम् अर्थान्तरन्यासः ॥ २२२ ॥

---

क्वचित् साधर्म्येण समानधर्मवत्तया क्वचित् वैधर्म्येण विरुद्धधर्मवत्तया क्वचित् वैपरीत्येन विपर्य्ययेन च कथ्यते ॥ २२० ॥

पयोमुच इति । एते पयोमुचः मेघाः शरीरिणां देहिनां परीतापं सन्तापं हरन्ति अपनयन्ति । तथाहि महतां महनीयचरितानां जनानाम् आत्मलाभः जन्म इत्यर्थः परेषां दुःखस्य शान्तये अपनयाय न च नैव ? काकुरत्रानुषञ्जनीय अपि तु परदुःखशान्त्यर्थमेवेत्यर्थः ॥ २२१ ॥

प्रियेणेति । काचित् कान्ता विपक्षस्य सपत्न्याः इति भावः सन्निधौ समक्षं प्रियेण कान्तेन सङ्ग्रथ्य विरचय्य पीवरस्तने घनस्तनशालिनि वक्षसि उपाहितां निहितां जलाविलां जलसिक्तां जलक्रीडावसरे इति भावः स्रजं मालां न जहौ न तत्याज । तथाहि गुणाः उत्कर्षा इति भावः प्रेम्णि हि प्रणये एव वसन्ति तिष्ठन्ति, वस्तुनि विषये न, वस्तुगतोत्कर्षो न गण्यते प्रेमगतावेव गण्येते इति भावः ॥ २२२ ॥

विपर्य्ययेण यथा,—

जो जस्स हिअअदइओ दुक्खं देन्तो वि सो सुहं देइ।

दइअणहदूसिआणं वि वड्ढइ थणआणं रोमञ्चो॥

अत्र साधनसमर्थं वस्तु प्रथमत एव उपन्यस्य पश्चात् तत्साध्यम् अभिहितम् इति विपर्य्यासादयं विपर्य्ययो नाम अर्थान्तरन्यास॥ २२३॥

प्रोक्तो यस्तूभयन्यासोऽर्थान्तरन्यास एव सः।

स प्रत्यनीकन्यासश्च प्रतीकन्यास एव च॥ २२४॥

तेषु उभयन्यासो यथा,—

ते विरला सप्पुरिसा जे अभणन्ता घडन्ति कज्जलावे।

थोअच्चिअ ते वि दुमा जे अमुणिअकुसुमणिग्गमा देन्ति फलं॥

अत्र विद्यमानमपि साध्यसाधनभावम् अप्रतिपाद्य यद् उभयोः वस्तुनो' न्यसन सोऽयम् उभयन्यासः॥ २२५॥

---

यो यस्य हृदयदयितो दु ख दददपि स सुख ं दत्ते।

दयितनखदूषितयो रपि वर्त्त ते स्तनयो रोमाञ्च'॥ स

य इति। यो जन' यस्य जनस्य हृदयदयित, मन प्रीतिकर', स जन' दु ख ं ददद‌पि क्लेशयन्नपि सुख दत्ते जनयतीत्यर्थ' तथाहि दयितस्य कान्तस्य नखै दूषितयो दोष नीतयोरपि चतयोरपीति भाव स्तनयोः रोमाञ्च रोमहर्षः कान्तसङ्गजनितोल्लासादिति भाव वर्त्त ते जायते॥ २२३॥

प्रोक्त इति। यस्तु उभयन्यास प्रोक्त, स, अर्थान्तरन्यास प्रत्यनीकन्यास प्रतीकन्यासश्च कथ्यते इति शेष॥ २२४॥

ते विरला सत्पुरुषा ये अभणन्तो घटन्ते कार्य्यलाभे।

स्तोका एव तेऽपि द्रुमा ये अज्ञातकुसुमनिर्गमा ददति फलम्॥ स०

ते इति। ये अभणन्त' अकथयन्त, सन्त कार्य्यलाभे कार्य्यकरणार्थमित्यर्थः परेषामिति भावः घटन्ते प्रवर्त्तन्ते ते तादृशा इत्यर्थ सत्पुरुषा सज्जना विरला अल्पा.। ये अज्ञात अविदित, लोकैरिति भाव, कुसुमाना निर्गमो येषा

प्रत्यनीकन्यासो यथा,—

विरला उवअरिद्दव्विअ णिरवेक्खा जलहरव्व वट्टन्ति।
खिज्जन्ति ताणं विरहे विरलाव्विअ सरिप्पवाहाव्व॥

अत्र यदिदम् उपकृत्यानपेक्षितप्रत्युपकाराणां गमनं यच्च अकृतप्रत्युपकाराणां तद्विरहेऽवसादनं तद् उभयमपि जलधर-सरित्प्रवाहयोः अन्योऽन्यातिशयितयोः उपन्यस्यमान प्रत्यनीकन्यासो भवति॥ २२६॥

प्रतीकन्यासो यथा,—

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति॥

अत्र विघ्नप्रोत्सारणसमर्थाया बाणमोक्षणलक्षणायाः क्रियायाः प्रथमावयवभूतं ज्याशब्द धनुषो हुङ्कारमिव इति तत्साधमम् उपन्यस्य प्रतीकन्यासनामानम् अर्थान्तरन्यासम् अभिधत्ते॥ २२७॥

इति अर्थान्तरन्यासालङ्कारनिरूपणम्।

---

तथाविधा सन्त फल ददति उत्पादयन्तीत्यर्थं तेऽपि तादृशा अपीत्यर्थ द्रुमा इव लोका एव अल्पा एव॥ २२५॥

विरला उपकृत्यैव निरपेक्षा जलधरा इव वर्त्तन्ते।
क्षीयन्ते तेषा विरहे विरला एव सरित्प्रवाहा इव॥ स

विरला इति। जलधरा इव मेघा इव विरला अल्पा, पुरुषा इति शेष उपकृत्यैव उपकार कृत्वैव जलवर्षणेन धनादिदानेन चेति भाव निरपेक्षा' उदासीना इत्यर्थं वर्त्तन्ते भवन्ति। सरिता नदीना प्रवाहा इव स्रोतासीव विरला अल्पा उपकृता इति भाव जना तेषाम् उपकारिणा विरहे अदर्शने प्रत्युपकाराकरणे इति भाव क्षीयन्ते कृशीभवन्ति दु खमनुभवन्ति चेत्यर्थ॥ २२६॥

केति। बाणस्य शरस्य सन्धाने सयोजने कथा का? न किमपि वक्तव्यमिति भाव स राजा धनुष हुङ्कारेणैव ज्याशब्देनैव मौर्वीनिनादेनैव विघ्नान् यज्ञ-विघातकान् व्यपोहति हि निरस्यति' २२७॥

गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम्।
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते॥
प्रत्येतव्येऽभिधेये च सा विशेषस्य कारणे।
वैकल्यादर्शनेनापि क्वचिदप्युपपद्यते॥ २२८॥

सा गुणवैकल्येन यथा,—

न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः।
तथापि जितमेवाभूदमुना भुवनत्रयम्॥

अत्र अतीक्ष्णेन अकठोरेण च आयुधेन पुष्पधन्वा त्रीणि जगन्ति विजयते इति तस्य प्रभावातिशयः प्रतीयते। सेयं प्रतीयमानविशेषहेतुर्गुणवैकल्यवती विशेषोक्तिः॥ २२९॥

जातिवैकल्येन यथा,—

न देवकन्यका नापि गन्धर्वकुलसम्भवा।
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम्॥

अत्र देवकन्यकात्वाभावेऽपि एषा वेधसोऽपि तपोभङ्गं विधातुम् अलम् इति वर्णनीयायाः रूपातिशयः प्रतीयते। सेयं प्रतीयमानविशेषहेतुर्जातिवैकल्यवती विशेषोक्तिः॥ २३०॥

---

विशेषोक्तिं लक्षयति गुणेति। यत्र विशेषदर्शनाय वैशिष्ट्यप्रदर्शनाय एव गुणाः शुक्लादयः जातिः गोत्वादिका क्रिया पाकादिः आदिग्रहणं वाच्यादिप्रापणयम्। तेषां गुणादीनां वैकल्यदर्शनं वैकल्यप्रतिपादनं सा विशेषस्य उक्तिरिति व्युत्पत्त्या विशेषोक्तिः इष्यते॥२२८॥

नेति। कुसुमं धनुर्यस्य स कुसुमधन्वा कामः तस्य आयुध्यते अनेनेत्यायुधम् अस्त्रं न कठोरं न कठिनं न वा तीक्ष्णं नैव अरुन्तुदमित्यर्थः तथापि अमुना कुसुमधन्वना भुवनानां त्रयं जितमेव पराभूतमेव॥ २२९॥

नेति। एषा नारीत्यर्थः देवकन्यका न, गन्धर्वकुलसम्भवा गन्धर्वी अपि न, तथापि वेधसोऽपि ब्रह्मणोऽपि तपोभङ्गं तपश्चरणव्याघातं विधातुं कर्त्तुम् अलं समर्थेत्यर्थः॥ २३०॥

क्रियावैकल्येन यथा,—

न बद्धा भ्रूकुटिर्नापि स्फुरितो रदनच्छदः।
न च रक्ता भवद्दृष्टिर्जितञ्च द्विषतां कुलम्॥

अत्र भ्रूभङ्गादेरभावेऽपि योऽयं द्विषतां जयस्तेन वर्णनीयस्य प्रतापातिशयः प्रतीयते। सेयं प्रतीयमानविशेषहेतुः क्रियावैकल्यवती विशेषोक्तिः॥ २३१॥

आदिग्रहणाद्द्रव्यवैकल्येन यथा,—

न रथा न च मातङ्गा न हया न च पत्तयः।
स्त्रीणामपाङ्गदृष्टैव जीयते जगतां त्रयम्॥

अत्र रथादेरभावेऽपि जगत्त्रयविजयहेतुः स्त्रीणाम् अपाङ्गावलोकनम् अभिधीयते। सेयम् अभिधेयविशेषहेतुर्द्रव्यवैकल्यवती विशेषोक्तिः॥ २३२॥

द्रव्यस्यापि वैकल्येन यथा,—

एकचक्रो रथो यन्ता विकलो विषमा हयाः।
आक्रामत्येव तेजस्वी तथाप्यर्को जगत्त्रयम्॥

अत्र रथादीनां द्रव्याणाम् एकचक्रत्वादिभिर्वैकल्येऽपि यदेतद्भगवतो भास्करस्य भुवनत्रयाक्रमणं तस्य इह तेजस्विताहेतुः

---

नेति। भ्रुवोः कुटिः भ्रूभङ्गिः न बद्धा न रचिता, देवेनेति शेषः, रदनच्छदः ओष्ठः नापि स्फुरितः नैव स्पन्दितः क्रोधावेशादिति भावः देवस्येति शेषः, दृष्टिश्च रक्ता नाभवत् अत्रापि देवस्येति शेषः तथापि द्विषतां शत्रूणां कुलं जितञ्च परिभूतञ्च॥ २३१॥

नेति। रथा न मातङ्गा हस्तिनश्च न हया अश्वाः न पत्तयः पदातयश्च न सन्तीति सर्वत्र योज्यम्। युद्धसाधनं किमपि नास्तीति भावः तथापि स्त्रीणां कामिनीनाम् अपाङ्गदृष्ट्यैव कटाक्षावलोकनेनैव जगतां त्रयं जीयते पराभूयते॥ २३२॥

एकेति। रथः एकं चक्रं यस्य तथाभूतः, यन्ता सारथिः अरुण इत्यर्थः

अभिधीयते। सेयम् अभिधेयविशेषहेतुर्वैकल्यवद्द्रव्या नाम अपरा विशेषोक्तिः॥ २३३॥

द्रव्यस्य योगायोगाभ्याम् अवैकल्येन अपि क्वचिदेषा विशेषाय अविशेषाय च यथा,—

अयं तया रथक्षोभादंसेनांसो निपीडितः।
एकः कृती शरीरेऽस्मिन् शेषमङ्गं भुवो भरः॥

अत्र अयं तया स्पृष्टोऽसः पुण्यवान् तया च अस्पृष्टं शेषमङ्गं मे निरर्थकम् इति योऽयम् अवैकल्यदर्शनेऽपि विशेषः तेन एषा हेतुमत्यपि हेतुमता विशेष्यमाणा यथोक्ता विशेषोक्तिः भवति। या पुनरिह उर्वशाम् इतो वाक्याद् गुणादिविशिष्टा अवगतिः सा पर्य्यायोक्तिर्न विशेषोक्तिः॥ २३४॥

इति विशेषालङ्कारनिरूपणम्।

क्रियाकारकसम्बन्धिसाध्यदृष्टान्तवस्तुषु।
क्रियापदाद्युपस्कारमाहुः परिकरं बुधाः॥ २३५॥

तेषु क्रियापरिकरो यथा,—

ववसिअणिविइअत्थो सो मारुइ लद्धपच्चआगअहरिसं।

---

* विकलः अपुष्टकलेवरः इत्यर्थः विनतया अकालस्फोटनादिति भावः हया अश्वाः विषमाः सप्तसङ्ख्या इति भावः तथापि एवं सामग्रीवैकल्येऽपीत्यर्थः तेजस्वी अर्कः सूर्य्यः जगतां त्रयं त्रिभुवनम् आक्रामत्येव वशीकरोत्येव॥ २३३॥

अयमिति। तया उर्वश्या अयम् असः स्कन्धः मदीय इति भावः रथस्य क्षोभात् गतिवैषम्यात् अंसेन तदीयेनेति भावः निपीडितः सन्ताडितः, निर्भरं स्पृष्ट इति यावत् अतः अस्मिन् शरीरे एकः स्कन्धरूपोऽंश इति भावः कृती कृतार्थः धन्य इति यावत् तदङ्गस्पर्शादिति भावः शेषः स्कन्धातिरिक्तमित्यर्थः अङ्गं हस्तपदाद्यवयव इत्यर्थः भुवः पृथिव्याः भरः अकिञ्चिदिति भावः। पुरूरवस उक्तिरियम्॥ २३४॥

परिकरं लक्षयति क्रियेति। क्रियादिषु क्रियापदादीनाम् उपस्कारम् उपयोगित्वमित्यर्थः, परिकरं बुधाः कवयः आहुः कथयन्ति॥ २३५॥

सुग्गीवेण उरत्थलवणमालामलिअमहुअरं उवऊढो ॥

अत्र लब्धप्रत्ययागतहर्षम् इत्यनेन उरःस्थलवनमालामृदितमधुकरम् इत्यनेन च मारुतेः उपगूहनक्रियायाः परिकरत्वात् अयं क्रियापरिकरः ॥ २३६ ॥

कारकपरिकरो यथा,—

पडिआअ हत्थसिठिलिअणिरोहा पण्डुरसमूच्छसन्तकवोला।
पेल्लिअवामपओहरविसमुण्णअदाहिणत्थणी जणअसुआ ॥

अत्र हस्तशिथिलितनिरोधा पाण्डुरसमुच्छसत्कपोलेत्यनेन प्रेरितवामपयोधरविषमोन्नतदक्षिणस्तनीत्यनेन च जनकसुता इति च कारकपदस्य परिकरितत्वादयं कारकपरिकरः ॥२३७॥

---

व्यवसायनिवेदितार्थः स मारुतिर्लब्धप्रत्ययागतहर्षम् ।
सुग्रीवेण उरःस्थलवनमालामृदितमधुकरमुपगूढः ॥

व्यवसितेति। व्यवसितं व्यवसायः क्रियाविशेष इत्यर्थः आनन्देन मधुवनभञ्जनमिति भावः तेन निवेदितः ज्ञापितः अर्थः प्रयोजनं सीतान्वेषणं मया कृतमित्येवरूपमिति भावः येन तथाभूतः स मारुतिः वायुतनयो हनुमान् सुग्रीवेण लब्धः प्रत्ययेन हनुमता निश्चितमेव सीता अन्विष्टेति विश्वासेन आगतः उपस्थितः हर्षो यत्र तद् यथा तथा किञ्च उरःस्थले वक्षसि इति भावः या वनमाला वनकुसुमस्रक् तत्र मृदिता दलिता मधुकरा भ्रमराः यस्मिन् तद् यथा तथा उपगूढः आलिङ्गितः अत्रोपगूहनक्रियायाः व्यवसितनिवेदनक्रियादीनामुपयोगित्वमिति क्रियापरिकरः ॥ २३६ ॥

पतिता च हस्तशिथिलितनिरोधा पाण्डुरसमुच्छ्वसत्कपोला ।
प्रेरितवामपयोधरविषमोन्नतदक्षिणस्तनी जनकसुता ॥

पतितेति। पतिता भूमौ स्खलितेत्यर्थः अपि हस्तेन शिथिलितः निरोधः आवरणमित्यर्थः यया सा पाण्डुरं विशदं यथा तथा समुच्छ्वसन्तौ विकसन्तौ कपोलौ यस्याः तथाभूता तथा प्रेरितेन सञ्चालितेन स्पन्दनं नीतेनेत्यर्थः शुभशंसिस्फुरणवतेति भावः वामेन दक्षिणेतरेण पयोधरेण स्तनेन विषमं विलक्षणः उन्नतः दक्षिणः स्तनो यस्याः तथाविधा जनकसुता सीता मारुतिना दृष्टेति क्रिया अध्याहार्या ॥ २३७ ॥

सम्बन्धिपरिकरो यथा,—

उम्मूलिआ ण खुलिआ उक्खिपता ण उज्जुअं ओसरिआ।
णिज्जता ण णिरापा गिरीणं मग्गेण पत्थिआ णइसोत्ता॥

अत्र उद्ध्रियमाणगिरिसम्बन्धिनोऽप्रयोजका अपि नदीप्रवाहा विशेषणैः उपस्कृता इति सम्बन्धिपरिकरोऽयम्॥ २३८॥

साध्यपरिकरो यथा,—

धीरं हरइ विसाओ विणअं जोव्वणमदो अणङ्गो लज्जं।
एक्कतगहिअवक्खो किं ससउ जं ठवेइ वअपरिणामो॥

अत्र गतवयसो न धैर्यं न विनयो न लज्जेति साध्यं विषाद-यौवनमदानङ्गक्रिया-दृष्टान्तैः उपस्कृत इति साध्यपरिकरोऽयम्॥ २३९॥

दृष्टान्तपरिकरो यथा,—

मज्झट्ठिअधरणिहर खिज्जइअ समुद्दमण्डलं उव्वेलं।
रइरहवेअविअलिअ पडिअं विअ उक्कडक्खकोडि चक्कं॥

---

उन्मूलिता न खण्डिता उत्क्षिप्ता न च ऋजुकं प्रसृता।
निर्यान्तो न निरापा गिरीणां मार्गेण प्रस्थिता नदीप्रवाहाः॥

उन्मूलिता इति। गिरीणां पर्वतानां मार्गेण पद्धत्या प्रस्थिताः प्रचलिताः नदीनां प्रवाहाः स्रोतांसि उन्मूलिता निःशेषिता न खण्डिता न खण्डनं प्राप्ताः ऋजुकम् अकुटिलं सारल्यमित्यर्थः यथा तथा न प्रसृता न चलिताः निर्यान्तः निःसरन्तः न निरापाः नाम्भःशून्या इत्यर्थः॥ २३८॥

धैर्यं हरति विषादो विनयं यौवनमदोऽनङ्गो लज्जाम्।
एकान्तगृहीतपक्षः किं शसतु यत् स्थापयति वयःपरिणामः॥

विषादः मानसक्षोभः धैर्यं धीरतां यौवनमदः तारुण्यविकारः विनयं नम्रताम् अनङ्गः कामः लज्जां हरति नाशयति। एकान्तगृहीतपक्षः अतीव पक्षपातीत्यर्थः जन इति शेषः शसतु कथयतु वयःपरिणामः गलितं वयः इत्यर्थः यत् स्थापयति न नाशयतीति भावः तत् किम्? न किमपीत्यर्थः, गलितवयसि धैर्यादिकं न तिष्ठतीति भावः॥ २३९॥

अत्र प्रक्षिप्तमन्दरसमुद्रोदाहरणभूतं रविरथचक्रमुत्कटाक्ष-कोटीति विशेषणेन साम्यसिद्धये परिकरितम् इति दृष्टान्त-परिकरोऽयम् ॥ २४० ॥

वस्तुपरिकरो यथा,—

देवी पुत्रमसूत नृत्यत गणाः! किं तिष्ठतेत्युद्भुजे
हर्षाद्भृङ्गिरिटावुदाहृतगिरा चामुण्डयालिङ्गिते।
पायाद्वो जितदेवदुन्दुभिघनध्वानः प्रवृत्तस्तयोः
अन्योऽन्याङ्गनिपातजर्जरतरस्थूलास्थिजन्मा रवः॥

अत्र चामुण्डाभृङ्गिरिटिपरिष्वङ्गसंघट्टितपरस्परहृदयास्थिजन्मनः शब्दस्य वस्तुतया परिगृहीतस्य देवी पुत्रमसूत इत्यादिभिः परिकरितत्वात् अयं वस्तुपरिकरः॥ २४१ ॥

क्रिया यथा समासेन तथा कृत्तद्धितादिभिः।
विशेष्यते तदाहुस्तं क्रियापरिकरं परम्॥ २४२ ॥

---

मध्यस्थितधरणिधरं खिद्यते च समुद्रमण्डलमुद्वेलम्।
रविरथवेगविगलितं पतितमिवोत्कटाक्षकोटि चक्रम्॥

मध्यस्थितेति। मध्ये स्थितः मन्थनार्थं प्रक्षिप्त इति भावः धरणिधरः पर्वतः मन्दर इति यावत् यस्य तथाभूतम् उद्वेलम् उत्क्रान्ततटं समुद्रमण्डलं रवेः सूर्यस्य रथवेगात् विगलितं प्रभ्रष्टम् उत्कटा उत्तुङ्गा अक्षकोटिः मध्यस्थितावयवविशेषो यस्य तादृशं चक्रमिव पतितं खिद्यते आलोड्यते इत्यर्थः॥ २४० ॥

देवीति। देवी गौरी पुत्रं स्कन्दमिति भावः असूत प्रसूतवती हे गणाः। प्रमथ-वर्गाः नृत्यत नृत्यं कुरुत किं कथं तिष्ठत स्थितिं कुरुत? निरुत्साहैः वेति भावः। इति इत्थं हर्षात् आनन्दात् उदाहृता उक्ता गीः वाक् यया तथाभूतया चामु-ण्डया देव्या उद्भुजे नर्त्तनाय उद्धृतबाहौ भृङ्गिरिटौ भृङ्गिणि आलिङ्गिते आश्लिष्टे सति जिता देवदुन्दुभीनां घनाः ध्वानाः रवाः येन तथाभूतः तयोः चामुण्डाभृङ्गि-रिटयोः अन्योन्यस्य अङ्गयोः निपातेन आश्लेषजनितेनेति भावः जर्जरतरेभ्यः अतिजर्जरेभ्यः स्थूलेभ्यः अस्थिभ्यः कङ्कालेभ्यः जन्म यस्य तथाभूतो रवः शब्दः वः युष्मान् पायात् रक्षतु॥ २४१ ॥

क्रियेति। क्रिया समासेन यथा विशिष्यते विशिष्टा क्रियते कृत्तद्धितादिभिः

तत्र कृता तादर्थ्येन यथा,—

गेहाद् याता सरितमुदक हारिका नाजिहीषे
मङ्क्षामीति श्रयसि यमुनातीरवीरुद्गृहाणि।
गोसन्दायी विशसि विपिनान्येव गोवर्द्धनाद्रेः
न त्वं राधे! दृशि निपतिता देवकीनन्दनस्य?॥

अत्र तुमन्ण्वुलौ क्रियाया क्रियार्थायाम् इत्यादिभिः उपपद-भूतापि क्रियैव विशिष्यते। तेन अयम् अपरः क्रियापरिकरो भवति। एवं लक्षणादिषु शत्रादिभिः अपि द्रष्टव्यम्॥ २४३॥

तद् यथा अव्ययेन,—

सलीलमासक्तलतान्तभूषण समासजन्त्या कुसुमावतसकम्।
स्तनोपपीड नुनुदे नितम्बिना घनेन कश्चिज्जघनेन कान्तया॥

अत्र स्तनाभ्याम् उपपीडयन्त्या य नुनुदे इत्यर्थात् क्रियाविशेषण-मेव एतदिति अयमपि क्रियापरिकरो भवति। एव यथाविधि अनुप्रयोगादिषु द्रष्टव्यम्॥ २४४॥

---

सया विशिष्यते त कृत्तद्धितादिभि कृतविशेषमित्यर्थः परम् अन्य क्रियापरिकरम् आहु कथयन्ति बुधा इति शेष ॥ २४२ ॥

गेहादिति। हे राधे। त्व देवकीनन्दनस्य कृष्णस्य दृशि दृष्टिपथे न निपतिता? अपि तु निपतितैव इत्यर्थ। यत उदक हारिका जलाहरणार्थिनी सती अलुक् समास.। गेहात् भवनात् सरित यमुनाम् इत्यर्थ याता गता सती न आजिहीषे नागच्छसि, मङ्क्षामि अवगाहिष्ये इति उक्तेति शेष यमुनाया तीरेषु वीरुद्गृहाणि लतागृहाणि श्रयसि प्रविशसि, तथा गोसन्दायी गोभ्य तृणादिदाना-यिनीति यावत् तच्छलेनेति भाव गोवर्द्धनाद्रे गोवर्द्धनगिरे विपिनानि वनानि विशसि॥ २४३॥

सलीलमिति। सलीलम् आसक्त लग्न लतान्तेषु लताग्रेषु भूषणम् अलङ्कार-विशेष यस्मिन् तद् यथा तथा कुसुमावतसक पुष्पकर्णभूषण समासजन्त्या परि-दधानया इत्यर्थः घनेन सान्द्रेण नितम्बिना प्रशस्तनितम्बशालिना जघनेन कटि-पुरोभागेन उपलक्षणे तृतीया। तादृशनितम्बिनघनवत्येति भाव कान्तया कश्चित् प्रिय इत्यर्थ. स्तनोपपीड यथातथा नुनुदे सन्ताडित इत्यर्थ॥ २४४॥

तेन क्रियायाः क्वचित् आन्तरविशेषणयोगाद् व्यङ्ग्यत्वं भवतीत्यपि व्याख्यातम्। यथा,—

शय्यन्ते हतशायिकाः पथि तरुच्छायानिषण्णाध्वगैः
श्रीकण्ठायतनेषु धार्मिकजनैरास्यन्त उष्ट्रासिकाः।
शून्ये तत्र निकुञ्जशाखिनि सखि। ग्रीष्मस्य मध्यन्दिने
सज्जानां दयिताभिसारणविधौ रम्यः क्षणो वर्त्तते॥

अत्र उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इति अमूभ्यां सामान्यविशेषोपचरितरूपो भावात्मा ण्वुलैव प्रत्याय्यते स आख्याताभ्यां सामान्यरूपेण ण्वुलन्ताभ्या विशेषरूपेण बहुवचन च इह कुत्सातिशयार्थम्। या हि नाम उष्ट्रस्य कुत्सावत्यो बहुप्रकारवत्यो वत्सःसु आसिका याश्च हतानाम् अतिशयवत्यः ता तथाभूता एव भूयस्यः शायिकाः प्रतीतास्ताभिर्विशेषरूपाभिः इयम् आसिका शायिका च उपमानोपमेय सम्बन्धजनितभेदाभेदपरिग्रहात् लकारेण अपि बहुत्वेनैव प्रत्याय्यते। तेन उष्ट्रासिका इव असनानि हतशायिका इव शयनानि क्रियन्ते भवन्तीति वाक्यार्थो भवति। सोऽय यथोक्तक्रियापरिकरः॥ २४५॥

---

शय्यन्ते इति। हे सखि। ग्रीष्मस्य निदाघस्य मध्यन्दिने मध्याह्ने पथि मार्गे तरुच्छायासु वृक्षच्छायासु निषण्णा स्थिता अध्वगा' पथिकाः ते हतशायिका हताना व्यापादिताना शायिका, शयनानीत्यर्थ' शय्यन्ते आश्रयन्ते यथा व्यापादिता' जना' विपर्य्यस्तभावेन भूमौ लुठन्ति तथा पथिकाः तरुतलेषु लुठन्तीति भाव, धार्म्मिकजनैः धर्म्मार्जनार्थमागतैरिति भाव श्रीकण्ठस्य शिवस्य आयतनेषु मन्दिरेषु उष्ट्रासिका उष्ट्रस्येव कुब्जोपवेशनानि आस्यन्ते क्रियन्ते इत्यर्थ, दयितस्य प्रियस्य अभिसारणविधौ अभिगमनव्यापारे सज्जाना शून्ये जनरहिते तत्र निकुञ्जशाखिनि लतादिवेष्टिते वृक्षतले इत्यर्थ, निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे इत्यमरः रम्य मनोहरः क्षणः समयः वर्त्तते उपतिष्ठते॥ २४५॥

क्वचित् पुनर्बाह्यमपि कृत् रूपं कृदर्थरूपं वा क्रियाविशेषणं भवति यथा,—

शत वारानुक्तः प्रियसखि ! वचोभिः स परुषैः
सहस्रं निर्धूतः पदनिपतितः पार्ष्णिहतिभिः ।
कियत् कृत्वा बद्धाः पुनरिह न वेद्मि भ्रुकुटयः
तथापि क्लिश्नन् मां क्षणमपि न धृष्टो विरमति ॥

अत्र वारानिति वारशब्दः कृदन्तः वारसङ्ख्यायाः कृत्वसुजिति कृत्वसुच् कृदर्थः तौ इमौ द्वावपि आवृत्तिरूपेण क्रियाविशेषणं भवत । नन्वेवम् उष्ट्रासिकादीना वारादीनाञ्च क्रियाविशेषण-त्वात् कर्मतेव नपुंसकलिङ्गतापि प्राप्नोति । यथा मृदु पचति प्रशस्त पठतीति उच्यते । त्रिधा खलु क्रियाविशेषण भवति वाह्यमाभ्यन्तर वाह्याभ्यन्तरञ्च । तत्र वाह्य कर्मरूपं वारादि, आभ्यन्तरं विशेषरूपम् उष्ट्रासिकादि, वाह्याभ्यन्तर गुणरूपं मृद्वादि । तेषु वाह्य सोऽयम् इत्यभिधायाः सम्बन्धादभेदोपचा-रेण अविचलितस्वरूपमेव प्रधान विशिषत् कथमिव स्वलिङ्ग जह्यात् । आभ्यन्तरन्तु विशेषापरिग्रहादाविष्टलिङ्गसङ्ख्यं कथमिव अन्यलिङ्गं गृह्णीयात् । वाह्याभ्यन्तरन्तु गुणत्वात् स्वलिङ्गविरहे गुणवचनानाम् आश्रयतो लिङ्गवचनानीति विशेष्यलिङ्गग्राह्यमेव भवति ॥ २४६ ॥

---

शतमिति । हे प्रियसखि । स धृष्ट निर्लज्ज इत्यर्थ' परुषै कटुभि वचोभि' वाक्यै शत वारान् उक्त कथित निर्भर्त्सित इति यावत् पदनिपतित चरणतल-पतितोऽपि पार्ष्णिहतिभि पार्ष्णिप्रहारै सहस्र वारानिति शेष निर्धूत निरा' कृत । पुन किञ्च इह अस्मिन् धृष्टे भ्रुकुटय कियत् कृत्व कतिवारानित्यर्थ. बद्धा इति न वेद्मि न जानामि, तथापि मा क्लिश्नन् अनुसरन्निति भावः क्षण-मपि न विरमति न निवर्त्तते ॥ २४६ ॥

तद्धितकृत्वसुच उक्तः। थालादिना उच्यते। यथा,—

अकृतकवलारम्भैर्भूयोभयस्थगितेक्षणाः
किमपि वलितग्रीवं स्थित्वा मुहुर्मृगपङ्क्तयः।
गगनमसकृत् पश्यन्त्येतास्तथाश्रुघनैर्मुखैः
निपतति यथा शृङ्गाग्रेभ्यो भ्रमन्नयनोदकम्॥

अत्र आद्यः प्रकारवचने थाल्। अनेकवारानित्यर्थे असकृदिति तद्धितेन, पश्यन्तीति क्रियया, वलितग्रीवमिति समासेन, किमपीति नाम्नाऽव्ययेन, स्थित्वेति क्त्वा, मुहुरिति कृदर्थे वीप्सया च क्रियाविशेषणेन सह विशेषयति। द्वितीयस्य यथा, भ्रमन्नयनोदकं निपततीति शतृलक्षितया पतनक्रियया तमेव अर्थमनुसन्दधानः पूर्वक्रियाया एव विशेषणं भवति। सोऽयं कृत्तद्धितसमासाव्ययानां सन्निपातेऽपि क्रियापरिकरे यथा तथा इत्येतयोः प्राधान्यात् तद्धितेनैव उपदिश्यते। एतेन तद्-यदोर्विपर्ययस्तद्विशेषणयोगश्च व्याख्यातः॥ २४७॥

तद् यथा,—

जह जह णिसासमप्पइ तह तह वेपइदतरङ्गपडिमापडिअं।
किआअव्वविमूढ वेवइ हिअअं उअहिणो ससिबिम्ब व्व॥

---

अकृतेति। एता मृगपङ्क्तयः मृगकदम्बकानि भूयोभयेन अतिभयेन स्थगिते निश्चले इत्यर्थः ईक्षणे नेत्रे यासां तथाभूताः सत्यः किमपि कथमपि वलिता व्यापारिता ग्रीवा यस्मिन् तद् यथा तथा मुहुः पुनः पुनः स्थित्वा स्थितिं विधाय अकृतं कवलानामारम्भः यैः तथाभूतैः ग्रासव्यापारविरतैरिति यावत् अश्रुघनैः बाष्पपूर्णैरिति यावत् मुखैः वदनैः असकृत् पुनः पुनः तथा गगनम् अन्तरीक्षं पश्यन्ति निरीक्षन्ते यथा शृङ्गाग्रेभ्यः भ्रमत् निर्गलत् नयनोदकं नेत्रजलं निपतति। अत्र तथा यथेति च प्रकारवचने थाल्प्रत्ययः॥ २४७॥

यथा यथा निश्वासमर्पयति तथा तथा वेपिततरङ्गप्रतिमापतितम्।
किं कर्त्तव्यविमूढं वेपते हृदयमुदधेः शशिबिम्बमिव॥

अत्र यथा तथेति क्रियाविशेषणयोरपरमपि विशेषणं वीप्सा भवति। सोऽयम् एवं प्रकारः क्रियापरिकरो द्रष्टव्यः ॥२४८॥

क्रियाविशेषणं कैश्चित् सम्बोधनमपीष्यते।
सम्बन्धिभिः पदैरेव लक्ष्यन्ते लक्षणादयः ॥२४९॥

तेषु सम्बोधनपरिकरो यथा,—

धर्मस्योत्सववैजयन्ति। मुकुटस्रग्वेणि! गौरीपतेः
त्वां रत्नाकरपत्नि। जह्नुतनये! भागीरथि! प्रार्थये।
त्वत्तोयान्तशिलानिषण्णवपुषस्त्वद्वीचिभिः प्रेङ्खतः
त्वन्नाम स्मरतस्त्वदर्पितदृशः प्राणाः प्रयास्यन्ति मे॥

अत्र भागीरथीति सम्बोधनपदं धर्मस्योत्सववैजयन्तीत्यादिभिः परिष्क्रियते। तत्र यथाकथञ्चिदपि उच्यमानोऽर्थः क्रियाविशेषणं नातिक्रामतीत्ययमपि क्रियापरिकरः॥ २५०॥

---

यथा यथा निश्वासम् अर्पयति निश्वसितीत्यर्थः तथा तथा उदधेः समुद्रस्य वेपितेषु तरङ्गेषु ऊर्म्मिषु प्रतिमया प्रतिबिम्बेन पतितं शशिबिम्बमिव हृदयं किङ्कर्त्तव्यविमूढम् इतिकर्त्तव्यतापराङ्मुखं सत् वेपते कम्पते॥ २४८॥

क्रियेति। कैश्चित् विद्वद्भिरिति शेषः सम्बोधनमपि क्रियाविशेषणम् इष्यते। तस्य लक्षणादयः सम्बन्धिभिः सम्बन्धयुक्तैः पदैः लक्ष्यन्ते अनुभूयन्ते॥ २४९॥

धर्मस्येति। धर्मस्य उत्सवे उद्घोषणव्यापारविशेषे वैजयन्ती पताका तत्सम्बुद्धिः। गौरीपतेः हरस्य मुकुटस्रक् किरीटपुष्पमाला तद्रूपेत्यर्थः वेणी प्रवाहः यस्याः तत्सम्बुद्धिः। हरशिरश्चारिणीत्यर्थः रत्नाकरस्य समुद्रस्य पत्नी तत्सम्बुद्धिः। हे जह्नुतनये जह्नुमुनिकन्ये। पुरा जह्नुर्नाम कश्चित् राजर्षिस्तपस्यन् भगीरथेनानीयमानां गङ्गां स्व पूजोपकरणं स्रोतसा प्लावयन्तीमालोक्य गण्डूषेण पपौ। ततो भगीरथाराधनप्रीतः पुनस्तां पीतां गङ्गां जानुविदारणेन उदरात् निःसारयामासेति पुराणवार्त्ता अतएवास्याः जाह्नवीत्वमिति भावः हे भागीरथि। गङ्गे। त्वां प्रार्थये याचे। किमित्याह तव तोयस्य अन्तः प्रान्तदेशे या शिला तस्यां निषण्णं वपुः शरीरं यस्य तथाभूतस्य तव वीचिभिः तरङ्गैः प्रेङ्खतः स्पन्दमानस्य तव नाम

लक्षणपरिकरो यथा,

महाप्रथिम्ना जघनस्थलेन सा महेभकुम्भोच्चकुचेन वक्षसा।
मुखेन दीर्घोज्ज्वललोलचक्षुषा वयस्य! कान्ता कथय क्व वर्त्तते?॥

अत्र जघनस्थलादीनि लक्षणानि महाप्रथिम्नेत्यादिभिः परिष्क्रियन्ते सोऽयं लक्षणपरिकरः॥ २५१॥

हेतुपरिकरो यथा,—

त्वया जगन्ति पुण्यानि त्वयाऽपुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे॥

अत्र प्रथमतृतीयपादयोः त्वया त्वयेति हेतू द्वितीयचतुर्थपादाभ्यां परिष्क्रियेते सोऽयं हेतुपरिकरः॥ २५२॥

सहार्थपरिकरो यथा,—

अनेन यूना सह पार्थिवेन रम्भोरु! कच्चिन्मनसो रुचिस्ते।
शिप्रातरङ्गानिलकम्पितासु विहर्त्तुमुद्यानपरम्परासु?॥

---

स्मरत चिन्तयत' त्वयि अर्पिते दृशौ येन तथाभूतस्य मे मम प्राणाः प्रयास्यन्ति निर्गमिष्यन्ति॥ २५०॥

महेति। हे वयस्य! मित्र! सा कान्ता महान् प्रथिमा पृथुत्वं विस्तारो यस्य तादृशेन अतिविस्तारिणेत्यर्थः जघनस्थलेन कटिपुरोभागेन नितम्बभागेन वा महेभस्य महागजस्य कुम्भौ इव उच्चौ उन्नतौ कुचौ यत्र तथाभूतेन वक्षसा वक्षस्थलेन तथा दीर्घे आयते उज्ज्वले लोले चञ्चले चक्षुषी यत्र तथाविधेन मुखेन उपलक्षणे तृतीया क्व कुत्र वर्त्तते तिष्ठति॥ २५१॥

त्वयेति। त्वया जगन्ति पुण्यानि पवित्राणि, त्वयि जनानाम् उक्तयः प्रवादाः अपुण्याः अपवित्राः कुत्सापूर्णा इत्यर्थः। त्वया लोकाः प्रजाः नाथवन्तः आश्रयवन्तः स्वामिपुत्रप्रभावादिति भावः त्वम् अनाथा अनाश्रया सती वननिवासनादिति भावः विपत्स्यसे म्रियसे। सीतामुद्दिश्य रामस्योक्तिरियम्॥ २५२॥

अनेनेति। हे रम्भोरु! अनेन पुरतः परिदृश्यमानेनेति भावः यूना तरुणेन पार्थिवेन राज्ञा सह शिप्रा नाम नदी तस्याः तरङ्गानिलैः ऊर्मिवातैः कम्पितासु

अत्र अनेनेति सहार्थो युना पार्थिवेनेति च पदाभ्यां परि-
च्छिद्यते सोऽयं सहार्थपरिकरः ॥ २५३ ॥

तादर्थ्यपरिकरो यथा,—

इन्दीवरश्यामतनुर्नृपोऽय त्व रोचनागौरशरीरयष्टिः ।
अन्योऽन्यशोभापरिवृद्धये वां योगस्तडित्तोदयोरिवास्तु ॥

अत्र अन्योऽन्यशोभापरिवृद्धये इति तादर्थ्यार्थः शेषपदार्थैः
परिच्छिद्यते सोऽय तादर्थ्यपरिकरः ॥ २५४ ॥

उपपदपरिकरो यथा,—

प्रत्यक्षवस्तुविषयाय जगद्धिताय विश्वस्थितिप्रलयसम्भवकारणाय ।
सर्वात्मने विजितकोपमनोभवाय तुभ्य नमस्त्रिभुवनप्रभवे शिवाय ॥

अत्र नमस्तुभ्यम् इत्युपपदार्थः समस्तपदैः परिच्छिद्यते
सोऽयम् उपपदपरिकरः ॥ २५५ ॥

उपमारूपकादीना शब्दार्थोभयभङ्गिभिः ।
साधर्म्योत्पादनं यत् तमन्ये परिकरं विदुः ॥ २५६ ॥

---

सञ्चालितासु न तु छिन्नोन्मूलितास्विति भाव एतेन शैत्यमान्द्ये उक्ते । उद्यानपर-
म्परासु उपवनश्रेणीषु विहर्त्तु रन्तु ते तव मनस चित्तस्य रुचिः अनुरागः
कच्चित् ? ॥ २५३ ॥

इन्दीवरेति । अय नृप राजा इन्दीवर नीलोत्पल तद्वत् श्यामा तनुर्यस्य
तथाभूत । त्व रोचनावत् गौरी शुभ्रा शरीरयष्टि यस्या तथाभूता । अतः
वा युवयो तडित्तोयदयो विद्युन्मेघयोरिव योग सम्मेलनम् अन्योऽन्यशोभापरि-
वृद्धये परस्परशोभावर्द्धनाय अस्तु भवतु ॥ २५४ ॥

प्रत्यक्षेति । प्रत्यक्षाणि परिदृश्यमानानि वस्तूनि पृथिव्यादयः विषया मूर्त्तयः
यस्य तथाभूताय पृथिवीजलवायुवह्निवियच्चन्द्रसूर्य्ययजमानमूर्त्तये इत्यर्थ जगता
हिताय हितकारिणे विश्वेषा स्थिति पालन प्रलय संहार सम्भव सृष्टि तेषा
कारण हेतु तस्मै त्रैगुण्यमयाय इत्यर्थ सर्वात्मने विश्वस्वरूपाय विजित कोपेन
मनोभव येन तथाभूताय त्रिभुवनप्रभवे त्रिलोकस्वामिने शिवाय तुभ्य नम ॥२५५॥

उपमेति । उपमारूपकादीना शब्दार्थोभयभङ्गिभि, शब्दभङ्गिभि अर्थभङ्गिभिः

तत्र स शब्दकृत उपमायां यथा,—

कहं कहं वि रएइ पश्चं मग्गं पुलएइ छेज्जमाविसइ।
चोरव्व कई अत्थं लद्धुं दुक्खेण ठाणेण णिव्वहइ॥

अत्र पदमार्गच्छेद्यैः शब्दैः भिन्नार्थैः अभिन्नार्थविरचनादिक्रियानिवेशिभिः कविचोरयोः अप्रसिद्धम् औपम्यं साधितमिति शाब्दोऽयम् औपम्यपरिकरः॥ २५७॥

अर्थकृतो रूपके यथा,—

विदए गअणसमुद्दे दिअसे सूरेण मन्दरेण व्व महिए।
णीअइ मइरव्व संज्झा तिस्सा मग्गेण अमुअकलसो व्व ससी॥

अत्र गगने समुद्रत्वेन निरूपिते सूर्य्यसन्ध्याशशिभिर्मन्दरमदिराऽमृतकलशैश्च मथनादिक्रियानिवेशिभिः अर्थैः परस्परोपमानात् साधर्म्यम् उत्पादितमित्यर्थोऽयं रूपकपरिकरः॥ २५८॥

---

शब्दार्थभङ्गिभिः इत्यर्थं यत् साधर्म्योत्पादनं सादृश्यजननम् अन्ये कवय इति शेषः तं परिकरं विदुः जानन्ति॥ २५६॥

कथं कथमपि रचयति पदं मार्गं प्रलोकयति छेद्यमाविशति।
चौर इव कविरर्थं लब्धुं दुःखेन स्थानेन निर्वहति॥

कथमिति। कविः कवयिता चौर इव अर्थं प्रतिपाद्यवस्तु धनञ्च लब्धुं प्राप्तुं कथं कथमपि अर्थसङ्गतिपरत्वेन भयेन चेति भावः पदं सुप्तिङन्तं पादविक्षेपञ्च रचयति प्रयुङ्क्ते करोति च। मार्गं रीतिविशेषमित्यर्थः पन्थानञ्च प्रलोकयति अनुसरति पश्यति च। छेद्यं छिद्यते विशिष्यते अनेनेति छेद्यं छन्दोविशेषमिति यावत् सन्धिच्छेदनयोग्यं स्थानञ्च आविशति आश्रयति दुःखेन अर्थचिन्ताजनितेन राजदण्डजनितेन चेति भावः स्थानेन अवस्थानेन निर्वहति कालं नयति इत्यर्थः॥ २५७॥

वितते गगनसमुद्रे दिवसे सूर्य्येण मन्दरेणेव मथिते।
नीयते मदिरेव सन्ध्या तस्या मार्गेण अमृतकलस इव शशी॥

वितते इति। वितते विस्तृते गगने समुद्र इव तस्मिन् दिवसे सूर्य्येण मन्द-

उभयकृतस्य विरोधश्लेषो यथा,—

रइमुणालाहरणो णलिणिदलत्थइअपीवरत्थणअलसो।
वहइ पिअसङ्गमम्मि मअणाअप्पपसाहणं जुवइजणो॥

अत्र प्रियसङ्गमेऽपि मदनाकल्पप्रसाधनं भवतीति विरुद्धार्थयोः साधर्म्योत्पादनाय जले क्रीडतो युवतिजनस्य यथोक्तविशेषणाभ्यां शब्दतोऽर्थतश्च उपस्कारः कृत इति उभयकृतोऽयं विरोधश्लेषपरिकरः। एवमलङ्कारान्तरेष्वपि द्रष्टव्यम् ॥२५९॥

एकावलीति या सापि भिन्ना परिकरान्न हि।
त्रिधा सापि समुद्दिष्टा शब्दार्थोभयभेदतः॥ २६० ॥

तत्र शब्दैकावली यथा,—

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमत गहनम्।
हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी॥

अत्र हरिमिव हरिमिव हरिमिवेति शब्दैकावल्या

---

रेणेव मन्थनदण्डभूतेन तदाख्यपर्वतभेदेनेव मथिते विलोडिते सति मदिरेव वारुणीव सन्ध्या तथा तस्या सन्ध्याया मार्गेण अमृतकलस इव सुधाकुम्भ इव शशी चन्द्र. नीयते जनै अधिगम्यते इत्यर्थ ॥ २५८॥

रतिमृणालाभरणो नलिनीदलस्थगितपीवरस्तनकलस ।
वहति प्रियसङ्गमेऽपि मदनाकल्पप्रसाधनयुवतिजन ॥

युवतिजन रत्यर्थं मृणालम् आभरण यस्य तथाभूत तथा नलिनीदले पद्मपलाशे स्थगितौ आच्छादितौ स्तनौ कलसाविव येन तथाविध जलक्रीडायामिति भाव अतएव प्रियसङ्गमेऽपि कान्तसहवासेऽपि मदनस्य कामस्य आकल्प भूषणं मृणालादिरिति भाव, विरहसन्तापशान्त्यर्थमिति भाव तेन प्रसाधन देहस्य अलङ्करण वहति धत्ते ॥ २५९॥

एकावली लक्षयति एकावलीति। या एकावली नाम अलङ्कार सापि परिकरात् भिन्ना पृथक् नहि नेव इत्यर्थ । सापि एकावली शब्दार्थोभयभेदत शब्दभेदात् अर्थभेदात् शब्दार्थभेदाच्च त्रिधा त्रिप्रकारा शब्दैकावली अर्थैकावली शब्दार्थैकावलीत्यर्थ, समुद्दिष्टा कथिता ॥ २६० ॥

विभिन्नार्थया पय: कर्मकारकम् उपस्क्रियते सा इयं शब्दैकावली परिकरस्यैव भेद: ॥ २६१ ॥

अर्थैकावली यथा,—

किमिति कवरी यादृक् तादृग् दृशौ किमकज्जले
न खलु लिखिता: पत्नावल्य: किमद्य कपोलयो:।
अयमयमयं किञ्च क्लास्यत्यसंस्मरणेन ते।
प्रियसखि! सखीहस्तन्यस्तो विलासपरिच्छद: ॥

अत्र अयमयमयमिति सर्वनामपरामृश्यमाणया प्रागुपन्यस्तकारणभूतया ततोऽन्यया वा तथाविधया अर्थैकावल्या परिच्छद इति कर्तृकारकम् अभिन्नार्थ इव परिष्क्रियते। सेयम् अर्थैकावली परिकरस्यैव भेद: ॥ २६२ ॥

उभयैकावली यथा,—

अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया।

---

पर्वतेति। पयोष्णी गङ्गा पय सलिलं पर्वतभेदि पर्वत भित्त्वा निर्गच्छत् पवित्र विशुद्ध पापध्वंसकरञ्च अन्यत्र पर्वतभेदी गिरिविदारी य पवि वज्रं तेन त्रायते रक्षतीति पर्वतोपद्रवात् जगदिति भाव. तम्। पुरा पक्षवन्त पर्वता आसन् ते च समये समये उत्पत्य यत्र देशे पतन्ति स्म त देशमुत्सादयामास। तदवलोक्य त्रिलोकीपति इन्द्र. वज्रेण तेषां पक्षान् चिच्छेद तत प्रभृति ते स्थावरा जाता इति पुराणवार्त्ता। नरकस्य निरयस्य कुम्भीपाकादे पापजनितस्येति भाव: अन्यच्च तदाख्यासुरस्य जैत्रं ध्वंसकरम्। वज्ञमत वज्ञजनाद्दत गहन निबिडं सान्द्रमित्यर्थं अन्यत्र वरवी मतङ्गा हस्तिन तान् हन्तीति तथोक्तम् अतएव हरिमिव इन्द्रमिव हरिमिव विष्णुमिव हरिमिव सिंहमिव वहति दधाति पश्यत अवलोकयत ॥ २६१ ॥

किमिति। हे प्रियसखि। कवरी केशपाश यादृक् पूर्वं यथा विरचितेत्यर्थ तादृक् तदवस्थेत्यर्थं किमिति अलङ्कृता कथमित्यर्थ। दृशौ नयने अकज्जले कज्जलरहिते किम् किमर्थमित्यर्थ अद्य कपोलयो. गण्डयो पत्रावल्य पत्रलता न खलु नैव लिखिता: रचिता. किम् कथम्? सखीना हस्तै. न्यस्त. विर-

अहमपि न तया न तया वद राजन् ! कस्य दोषोऽयम् ॥

अत्र अम्बास्नुषा स्मदर्थलक्षणैः अर्थैः तद्वाचिभिः सर्वनामभिः शब्दैः एकावलीक्रमेण मिथोऽनुस्यूतैः मिथोऽनुस्यूते एव तुष्यतीति क्रियाहेतुर्मया इत्यादिभिः परिष्क्रियते । सेयम् उभयग्रन्थित्वादुभयैकावलीपरिकरस्यैव भेदः ॥ २६३ ॥

इति परिकरालङ्कार निरूपणम् ।

क्रियाजातिगुणद्रव्यवाचिनैकत्रवर्त्तिना ।
सर्ववाक्योपकारश्चेद्दीपकं तन्निगद्यते ॥
अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरावली ।
सम्पुटं रसना माला चक्रवालञ्च तद्भिदाः ॥ २६४ ॥

तेषु क्रियावाचिना आदिदीपकं यथा,—

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥

अत्र चरन्तीति क्रियया द्वयोः अपि वाक्ययोरादिपदस्थया

---

चित अर्पितो वा अयम् अयम् अय परिदृश्यमान इत्यथ ते तव विलासपरिच्छद विभ्रमालङ्करणम् असंस्करणेन संस्काररहितेन क्लाम्यति म्लिनीभवति किञ्च किमयञ्च ? ॥ २६२ ॥

अम्बेति । अम्बा माता मया करणेन न, स्नुषया पुत्रवध्वा मद्भार्य्ययेत्यर्थ न तुष्यति । सापि मद्भार्य्येत्यर्थं अम्बया मात्रा न मत्रा न तुष्यतीति सम्बन्ध । अहमपि तया मात्रा न तया स्नुषया भार्य्ययेत्यर्थं तुष्यामीति विभक्तिव्यत्ययेन अन्वय । हे राजन् । अयम् अस्माक परस्परासन्तोष इत्यर्थं कस्य दोष ? वद । दुरदृष्टपरिपाकोऽयमिति भाव ॥ २६३ ॥

दीपक लक्षयति क्रियेति । एकत्र वर्त्तिना एकस्थानस्थितेन क्रियागुणजातिद्रव्यवाचिना क्रियावाचिना गुणवाचिना जातिवाचिना द्रव्यवाचिना चेत्यर्थ चेत् यदि सर्वेषा वाक्यानाम् उपकारम् उपयोग भवतीति शेष तत् दीपक निगद्यते कथ्यते । अर्थावृत्त्यादय अष्टौ तस्य दीपकस्य भिदा भेदा ॥ २६४ ॥

चरन्तीति । ते तव दन्तिन गजा चत्वार अम्भोधय तेषा वेला तटानि उद्यानानि उपवनानि तेषु कुन्दभास कुन्दकुसुमकान्तय गुणा शौर्य्यदयादयश्च

एव उपकार: क्रियते इति आदिदीपकम् इदं क्रियाविषयम् उच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम् ॥ २६५ ॥

जातिवाचिना आदिदीपकं यथा,—

पवनो दक्षिण: पर्णं जीर्णं हरति वीरुधाम्।
स एव च नताङ्गीनां मानभङ्गाय कल्पते ॥

अत्र पवन इत्यादिपादे जातिपदं तेन आदिदीपकम् इदं जातिविषयम् उच्यते। एवं मध्यान्तयोरपि द्रष्टव्यम् ॥२६६॥

गुणवाचिना आदिदीपकं यथा,—

श्यामला: प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभि:।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभि: ॥

अत्र श्यामला इत्यादिपादे गुणपदं तेन आदिदीपकम् इदं गुणविषयम् उच्यते। एव मध्यान्तयोरपि द्रष्टव्यम् ॥२६७॥

द्रव्यवाचिना आदिदीपकं यथा,—

विष्णुना विक्रमस्थेन दानवानां विभूतय:।
क्वापि नीता: कुतोऽप्यासन्नानीता दैवतर्द्धय:।

---

चक्रवालाद्रिकुञ्जेषु लोकालोकपर्वतकुञ्जदेशेषु चरन्ति राजन्ते इत्यर्थ। आसमुद्र-क्षितिविजयित्वादिति भाव' लोकालोकश्चक्रवाल इत्यमर। राजविषया रति-र्भावोऽयम्। प्रचादिपदीभूतया चरन्तीति क्रियया वाक्ययोरन्वय इति क्रिया विषय दीपकम् ॥ २६५ ॥

पवन इति। दक्षिण' दक्षिणदेशादागत: पवन: मलयवायुरित्यर्थ वीरुधा लताना जीर्णं शुष्क पत्र हरति पातयतीत्यर्थ.। स एव पवन एव नताङ्गीना यौवनभरेणेति भाव: नारीणा मानभङ्गाय प्रणयकोपशान्तये इत्यर्थ' कल्पते प्रभवति ॥ २६६ ॥

श्यामला इति। दिश प्रावृषेण्याभि वार्षिकीभि' जीमूतपङ्क्तिभि मेघ कदम्बै, भुवश्च भूतलानि च सुकुमाराभि मृदुलाभि नवशाद्वलराजिभि नवतृण-श्रेणिभि. श्यामला' श्यामवर्णा' भवन्तीति शेष. ॥ २६७ ॥

विष्णुनेति। विक्रमे पराक्रमे त्रिपादक्रमणे च तिष्ठतीति तथोक्तेन विष्णुना

अत्र विष्णुना इत्यादि पादे द्रव्यपदं तेन आदिदीपकम् इदं द्रव्यविषयम् उच्यते। एव मध्यान्तयोरपि द्रष्टव्यम् ॥ २६८ ॥

अर्थावृत्तिर्यथा,—

हृष्यति चूतेषु चिरं तुष्यति वकुलेषु मोदते मरुति।
इह हि मधौ कलकूजिषु पिकेषु च प्रीयते कामी ॥

अत्र हृष्यति तुष्यति मोदते प्रीयते इत्येतैः पदैः स एवार्थ आवर्त्तमानः सर्ववाक्यानि दीपयति सेयम् अर्थावृत्तिर्दीपकस्य भेदः ॥ २६९ ॥

पदावृत्तिर्यथा,—

उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम्।
यूनामुत्कण्ठयत्यद्य मानसं मकरध्वजः ॥

अत्र उद्ग्रीव करोति उत्कण्ठावन्तं करोतीति अर्थयोः उत्कण्ठयतीति पदम् आवर्त्तमानं वाक्यद्वयमपि दीपयति सेयं पदावृत्तिर्दीपकस्य भेदः ॥ २७० ॥

उभयावृत्तिर्यथा। जय देव! भुवनभावन! जय भगवन्!
निखिलवरद! निगमनिधे!।

---

वामनरूपिणेति यावत् दानवाना वलिप्रभृतीना विभूतय सम्पद त्रिलोकाधिपत्यानीत्यर्थ' क्वापि नीता क्षय गमिता इत्यर्थ देवताना इन्द्रादीना ऋद्धय सम्पद कुतोऽपि आनीता आसन् अभवन् ॥ २६८ ॥

हृष्यतीति। कामी जन इह अस्मिन् मधौ वसन्ते चूतेषु आम्रेषु विकसितेष्विति भाव हृष्यति हर्षं प्राप्नोति वकुलेषु विकसितेष्विति भाव चिर सतत तुष्यति मरुति वायौ वहतीति भाव मोदते उल्लसति पिकेषु कोकिलेषु कलकूजिषु मधुर रुवत्सु प्रीयते प्रीतिमनुभवति च ॥ २६९ ॥

उत्कण्ठयतीति। मेघाना माला श्रेणि कलापिना मयूराणा वृन्द समूहम् उत्कण्ठयति उद्ग्रीव करोति। मकरध्वज काम अद्य मेघोदये इति भाव यूनां तरुणाना प्रोषितानामिति शेष मानसम् उत्कण्ठयति प्रियार्थमिति भाव ॥ २७० ॥

जय रुचिरचन्द्रशेखर!
जय मदनान्तक! जयादिगुरो! ॥

अत्र जयेत्यर्थः शब्दश्च आवर्त्तमानः सर्ववाक्यानि दीपयति सेयम् उभयावृत्तिर्दीपकस्य भेदः ॥ २७१ ॥

आवली यथा,—

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः
त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणता बिभ्रति गिरम्।
न विद्मस्तत्तत्वं वयमिह हि यस्त्वं न भवसि ॥

अत्र पूर्वार्द्धे त्वमिति शब्दार्थयोः प्रथमावृत्तिः प्रथमपादस्थया असीति क्रियया दीप्यते। ततः तृतीयपादे त्वयीति रूपान्तरेण युष्मदर्थ आवर्त्तमानः क्रियान्तरेण सम्बध्यते। चतुर्थपादे तु पुनरपि तेनैव रूपेण अस्त्यर्थेन भवतिना सम्बध्यत इति। सेयं वृत्तीनाम् आवृत्तिरावलीति दीपकस्यैव भेदो भवति ॥ २७२ ॥

---

जयेति। हे भुवनभावन। जगत्कारण। देव। जय सर्वोत्कर्षेण वर्त्तस्व, हे भगवन्। निखिलवरद। सर्वाभीष्टप्रद। निगमनिधे। श्रुतिप्रतिपाद्यरत्न। जय। हे रुचिरचन्द्रशेखर। उज्ज्वलचन्द्रचूड। जय हे मदनान्तक। कामशत्रो। जय हे आदिगुरो। जय ॥ २७१ ॥

त्वमिति। त्वम् अर्कः सूर्य्यः त्व सोमः चन्द्र', त्व पवन वायु, त्व हुतवह अग्नि', त्वम् आपः जल त्व व्योम आकाशम् उ भोः त्वं धरणि' पृथ्वी त्वम् आत्मा यजमानश्च असि सूर्य्याद्यष्टमूर्त्तिस्त्व भवसीत्यर्थः परिणताः स्थविराः पुरातना परिमितानिति यावत् विद्वास इत्यर्थ. त्वयि एवम् इत्य परिच्छिन्ना परिच्छेदविषयिणी गिर वाच बिभ्रति दधति प्रयुञ्जते इत्यर्थ' वयम् इह ससारे त्व यत् न भवसि तत् तत्त्व न विद्म. न जानीम. सर्वजगन्मयस्त्वं न केवलम् अर्काद्यष्टमय इति भाव: ॥ २७२' ॥

सम्पुटं यथा,—

णवपल्लवेसु लोलइ घोलइ विडवेसु चलइ सिहरेसु।
थवइ थवएसु चलणे वसन्तलच्छी असोअस्स॥

अत्र नवपल्लवे इत्यादीनि अशोकस्येति लोलतीत्यादीनि वसन्तलक्ष्मीरिति पदे द्रव्यवाचिनी सम्पुटक्रमेण मिथः सम्बध्यमाने मिथः सम्बध्यान्येव दीपयतः। तदेतत् सम्पुट नाम दीपकस्य भेदः॥ २७३॥

रसना यथा,—

सलिल विकाशिकमल कमलानि सुगन्धिसन्द्रानि।
मधुलीनालिकुलाकुलमलिकुलमपि मधुररणितमिह॥

अत्र रसनाक्रमेण मिथः सग्रथितानि सलिल विकाशि-कमलमित्यादीनि वाक्यानि इहेति अन्तस्थितेन अधिकरण-वाचिना द्रव्यदीपकेन दीप्यन्ते तदेतद् रसनादीपक नाम आदिदीपकभेदः॥ २७४॥

माला यथा,—

इमिणा सरएण ससी ससिणा वि णिसा णिसाइ कुमुअवणम्।
कुमुअवणेण अ पुलिण पुलिणेण अ सोहइ हसउलम्॥

---

नवपल्लवेषु लोलति घूर्णते विटपेषु चलति शिखरेषु।
तिष्ठति स्तवकेषु चलने वसन्तलक्ष्मीरशोकस्य॥

अशोकस्य तरो वसन्तलक्ष्मी, वासन्ती शोभा चलने सञ्चरणे नवेषु पल्लवेषु लोलति विकसति विटपेषु शाखासु घूर्णते, शिखरेषु अग्रभागेषु चलति स्फुरति स्तवकेषु कुसुमगुच्छेषु तिष्ठति॥ २७३॥

सलिलमिति। इहास्मिन् सरसि इति भाव, सलिल जल विकासीनि कम-लानि यस्मिन् तथोक्त कमलानि पद्मानि सुगन्धीनि मधुभिर्मकरन्दै सान्द्राणि सम्पूर्णानि। मधु लीने सक्ते अलिकुले, भ्रमरवृन्दे आकुल व्याप्तम्। अलि-कुलमपि मधुर मनोहर' रणित गुञ्जन यस्य तथाभूतम्॥ २७४॥

अत्र मालाक्रमेण परस्परग्रथिताः कर्त्तारो हेतवश्च शशि-प्रभृतयः शोभन्ते इति क्रियया दीप्यन्ते तदेतत् मालादीपकं नाम दीपकस्य भेदः ॥

कः पुनरस्य पूर्वस्माद् विशेषः पूर्वत्र वृत्तिच्छिन्नं रसनायां सर्वत्र इह तु स्वतन्त्रं मालापुष्पवत् पदं पदेन युज्यमानं क्रियादिभिः सम्बध्यत इति ततोऽयं भिद्यते ॥ २७५ ॥

चक्रवालं यथा,—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद् यत् समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलम्
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्त्या च लोकत्रयम् ॥

अत्र संग्रामाङ्गणमागतेन भवता चापे समारोपित इति भावलक्षणाक्षिप्तस्य भावविशेषस्य द्वितीयपादे कारकवीप्सया यत् सङ्क्षेपेण अभिधानं तदेतत् चक्रवालाद्रिणा इव माला-दीपकेन विस्तरवता वेष्टितम् इदं चक्रवालं नाम दीपकस्य भेदः ॥ २७६ ॥

इति दीपकालङ्कारनिरूपणम् ।

---

अनया शरदा शशी शशिनापि निशा निशया कुमुदवनम् ।
कुमुदवनेन च पुलिन पुलिनेन च शोभते हंसकुलम् ॥

अनया उपस्थितयेत्यर्थः शरदा शशी चन्द्रः, शशिनापि निशा रात्रिः निशया कुमुदवनम् उत्पलवनं कुमुदवनेन च पुलिनं सैकतदेशः पुलिनेन च हंसकुलं शोभते । रसनायां सविशेषणं मालायान्तु निर्विशेषणमित्युभयोर्भेदः ॥ २७५ ॥

संग्रामेति । हे देव । भवता संग्रामाङ्गणं रणभूमिम् आगतेन प्राप्तेन चापे धनुषि समारोपिते ज्यामधिरोपिते सति येन येन सहसा यत् यत् समासादितं प्राप्तं तत् आकर्णय शृणु कोदण्डेन धनुषा शरा बाणाः समासादिता इति लिङ्ग-वचनव्यत्ययेनान्वयः । शरैः अरीणां शत्रूणां शिरः समासादितम् । तेन अरि-शिरसापि भूमण्डलं समासादितम् । तेन भूमण्डलेन त्वं समासादित इति

शब्दस्य यदि वार्थस्य द्वयोरप्यनयोरथ।
भणनं परिपाट्या यत् क्रमः स परिकीर्त्तितः॥ २७७॥

तत्र शब्दपरिपाटिर्द्विधा पदतो वाक्यतश्च।

तयोः आद्या यथा,—

तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः।
जीयन्ते वल्लकीकुन्दस्रगिन्दीवरसम्पदः॥

अत्र आलापस्मितदृष्टिभिः पदार्थैः वल्लकीकुन्दस्रगिन्दीवर-सम्पदः पदार्था जीयन्ते इति शब्दपरिपाट्या भणनं सोऽयं पदतः शब्दपरिपाटि क्रमः॥ २७८॥

वाक्यतो यथा,—

इन्दुर्मूर्द्ध्नि शिवस्य शैलदुहितुर्वक्रो नखाङ्कः स्तने
देयाद्वोऽभ्युदयं द्वयं तदुपमासालम्बमानं मिथः।
स्वादः प्रणवेन यस्य ललता कार्य्यैकतायां तयोः
ऊर्द्ध्वाधरविचिन्तितेन च हृदि ध्यातस्वरूपेण च॥

अत्र इन्दुर्मूर्द्ध्नि शिवस्य शैलदुहितुर्वक्रो नखाङ्कः स्तने

---

लिङ्गव्यत्ययेनान्वयः त्वया पृथिवीराज्यं प्राप्तमिति भावः भवता च अतुला निरुपमा कीर्त्तिः यशः समासादितेति लिङ्गव्यत्ययेनान्वयः। कीर्त्त्या च लोकत्रयं त्रिजगत् समासादितमित्यन्वयः॥ २७६॥

क्रमं लक्षयति शब्दस्येति। शब्दस्य यदि वा अथवा अर्थस्य अथापि अनयोः द्वयोः शब्दार्थयोः परिपाट्या क्रमेण यत् भणनं कथनं स क्रमः परि-कीर्त्तितः॥ २७७॥

तस्या इति। तस्याः कान्तायाः प्रवृद्धाः प्रकर्षेण वृद्धिं गताः लीलाः विलासाः यासु तथाभूताभिः आलापस्मितदृष्टिभिः आलापे वचने स्मिते मृदुहसिते दृष्टिभिः अवलोकनविशेषैः वल्लकी वीणा कुन्दस्रक् माध्यकुसुममाला इन्दीवराणि नीलोत्पलानि तेषां सम्पदः सौभाग्यानि जीयन्ते पराभूयन्ते॥ २७८॥

इन्दुरिति। शिवस्य मूर्द्ध्नि शिरसि इन्दुः चन्द्रः शैलदुहितुः पार्वत्याः स्तने वक्रः अर्द्धचन्द्राकार इति भावः नखाङ्कः नखक्षतचिह्नं तत् द्वयम् इन्दुनखाङ्कद्वयं

इति च अन्यार्थवाचिनौ शब्दसमुदायौ क्रमेण ऊर्द्धद्वारविचिन्तितेन च हृदि ध्यातस्वरूपेण चेति वाक्यार्थद्वयवाचिभ्यां शब्दसमुदायाभ्यां संबध्येते सोऽयं वाक्यतः शब्दपरिपाटि क्रमः। अर्थपरिपाटिर्द्विधा कालतो देशतश्च ॥ २७९ ॥

तयोराद्या यथा,—

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धम्
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषम्
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥

अत्र हस्ते लीलाकमलमलकं बालकुन्दानुविद्धम् इत्याद्यर्थानां शरदादिकालक्रमेण भणनं सोऽयं कालतोऽर्थपरिपाटि क्रमः ॥ २८० ॥

---

मिथः परस्परम् उपमा साटृश्यम् आलम्बमानं दधानं सत् वः युष्मभ्यम् अभ्युदयम् अभ्युन्नतिं देयात् ददातु। यस्य द्वयस्य तयोः शैलदुहितृशिवयोः कायैकताया शरीरैकतायाम् अर्द्धनारीश्वरत्वे इत्यर्थः लसता राजता ऊर्द्धद्वारविचिन्तितेन ब्रह्मरन्ध्रविभाविनेन हृदि चित्ते ध्यातस्वरूपेण चिन्तितरूपेण प्रणवेन ओङ्कारेण सवाद साटृश्य भवतीति शेष ॥ २७९ ॥

हस्ते इति। यत्र अलकायां वधूनां नारीणां हस्ते लीलाकमलं क्रीडापद्मं शरल्लक्षणमेतत् अलके चूर्णकुन्तले बालकुन्दैः अभिनवकुन्दकुसुमैरित्यर्थः अनुविद्धम् अनुवेध भावे क्तप्रत्ययः। बालकुन्दैरलका अलङ्क्रियन्ते इति भावः. हेमन्तलक्षणमेतत्। आनने वदने लोध्रप्रसवरजसा लोध्रपुष्पपरागेण श्रीः कान्तिः पाण्डुता शुभ्रता नीता प्रापिता शिशिरलक्षणमेतत्। चूडापाशे शिखाबन्धने नवकुरवकं तदाख्यकुसुमं वसन्तलक्षणमेतत्। कर्णे चारु मनोज्ञं शिरीषं तदाख्यकुसुमं ग्रीष्मलक्षणमेतत् सीमन्ते तव उपगमेन आविर्भावेन जायते इति तथोक्तं वार्षिक-

द्वितीया यथा,—

पायाद्वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको
यस्याकस्मिकवर्द्धमानवपुषस्तिग्मद्युतेर्मण्डलम्।
मौलौ रत्नरुचि श्रुतौ परिलसत् ताड़ङ्ककान्ति क्रमात्
जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमम्॥

अत्र त्रिविक्रमतनोर्वैकुण्ठस्य प्रवृद्धिसमये क्रमेणैव मौलि-श्रुतिवक्षः उदरलक्षणेषु शरीरदेशेषु भास्वन्मण्डलस्य चूड़ा-रत्नताड़ङ्ककौस्तुभनाभ्यम्बुजैः योऽयम् औपम्यलाभः सोऽयं देशतोऽर्थपरिपाटिक्रमः। उभयपरिपाटिर्द्विधा शब्द-प्रधाना अर्थप्रधाना च॥ २८१॥

तयोराद्या यथा,—

पङ्कअं पङ्किहिं वहेलिअं कुवलअं खित्तं हृदहिं
वालिहिं विम्बं विविल्लिओ पत्तिओ चन्दु णहहिम्।
करणअणाहरवअणेहिं तहिं लीलावइहिं
णिअसिप्पिहिं विहसिअ ठिआइं पआवइं॥

---

मित्यर्थः नीप कदम्बकुसुममित्यर्थः एतेन युगपत् सर्वर्त्तुसम्वृद्धिसद्भावोऽभि-हित॥ २८०॥

पायादिति। रचिता कृता त्रिविक्रमतनु त्रिलोकव्यापि शरीर येन तथाभूतः बलिच्छलनायामिति भाव स दैत्यान्तक हरि व युष्मान् पायात् रक्षेत्। तिग्मा तीक्ष्णा द्युतिर्यस्य तस्य सूर्य्यस्येत्यर्थः मण्डल विम्बं क्रमात् आकस्मिक सहसा वर्द्धमान वृद्धिं गच्छत् वपु शरीर यस्य तथाभूतस्य यस्य दैत्यान्तकस्य मौलौ शिरसि रत्नस्येव रुचि कान्तिर्यस्य तथाभूत रत्नवदाभासमानमित्यर्थ श्रुतौ कर्णे परिलसन्ती राजमाना ताडङ्कस्य अलङ्कारविशेषस्य कान्तिर्यत्र तथाविध ताडङ्कवत् शोभमानमित्यर्थ. वक्षसि कौस्तुभाभ कौस्तुभमणिवत् विराजमानमित्यर्थः उदरे नाभीसरोजोपम नाभिपद्मसदृशं भवतीति शेष.॥ २८१॥

पङ्कअ इति।

पङ्कज पङ्के अवहेलिला कुवलय चित्र ह्रदे।
वक्त्रा विम्ब विकीर्य्य पर्य्यस्तश्चन्द्रो नभसि।

अत्र पङ्कजकुवलयबिम्बीफलचन्द्रमसां करनयनाधरवदनैः यथासंख्यं पराजय इति शब्दपरिपाट्यैव पङ्कजानि पङ्के न्यस्तानि, कुवलयानि ह्रदे क्षिप्तानि, बिम्बं वृन्ते प्रकीर्णम्, चन्द्रो नभसि निरस्त इति आधाराणामुपर्युपरिभावः क्रियाणां च त्यागतारतम्यमित्यर्थपरिपाटिः न्यग्भवति सोऽयं शब्दप्रधानोभयपरिपाटिक्रमः ॥ २८२ ॥

अर्थप्रधाना यथा,—

गङ्गे ! देवि ! दृशा पुनीहि यमुने ! मातः ! पुनर्दर्शनम्
सम्प्रश्नोऽस्तु पितः ! प्रयाग ! भगवन् न्यग्रोध ! मां ध्यास्यसि ।
त्वं हारासिलतावतंसविपुलस्थूलांसवक्षोभुजम्
पुंभावं भवतामवन्तिनगरीनाथं दिदृक्षामहे ॥

अत्र गङ्गायमुनाप्रयागन्यग्रोधतत्पुंभावावन्तिनगरीनाथलक्षणानामर्थानां मुख्यक्रमेण देवि दृशा पुनीहि मातः पुनर्दर्शनं पितः संप्रश्नो भगवन् मां ध्यास्यसीति मुख्यक्रमेणैव

---

करनयनाधरवदनैः तैरिह लीलावतीभि-
र्निजशिल्पे विहसं स्थिताभिः प्रजापतिम् ॥

इह जगति निजशिल्पे स्वसृष्टौ प्रजापतिं स्रष्टारं विहस्य असम्यक्कारित्वेनेति भावः स्थिताभिः लीलावतीभिः विलासिनीभिः तैः प्रसिद्धैरित्यर्थः करनयनाधरवदनैः करेण नयनेन अधरेण वदनेन चेत्यर्थः पङ्कजं पद्मं पङ्के अवहेलिता हेलया निक्षिप्येत्यर्थः ह्रदे सरसि कुवलयं नीलोत्पलं क्षिप्तं पातितम् । तथा वल्ल्या लतायाः बिम्बं तदाख्यं फलं विकीर्य्य विक्षिप्य नभसि आकाशे चन्द्रः पर्यस्तः प्रक्षिप्तः ॥ २८२ ॥

गङ्गे इति । हे गङ्गे ! देवि ! दृशा नेत्रेण पुनीहि पवित्रं कुरु, हे मातः ! यमुने पुनर्दर्शनम् अस्त्विति शेषः । हे पितः ! प्रयाग ! सम्प्रश्नः सम्भाषणमित्यर्थः त्वयेति शेषः अस्तु भवतु । हे भगवन् ! न्यग्रोध ! अक्षयवट इत्यर्थः मां ध्यास्यसि चिन्तयिष्यसि स्मरिष्यसीत्यर्थः । हारश्च असिलता च अवतंसः अलङ्कारः ययोः तथाभूतौ विपुलौ विशालौ स्थूलांसौ स्थूलस्कन्धौ वक्षोभुजौ यस्य तथाभूतम् अतएव भवतां

संभ्रमभङ्गिवचोविशेषैरभ्यर्च्य भवतामेव पुंभावमवन्तिनगरीनाथं दिदृक्षामह इति येयमभ्यर्थनाभङ्गिस्वार्थपरिपाटिः कृता तस्याञ्च गङ्गे यमुने प्रयाग न्यग्रोधेति हारासिलतावतंसविपुलवक्षःस्थूलांसेति च शब्दपरिपाटी परस्परमुपमानोपमेयभूते न्यभवतः। सोऽयम् अर्थप्रधानोभयपरिपाटि क्रमः॥ २८३॥

इति क्रमालङ्कारनिरूपणम्।

मिषं यदुक्तिभङ्गिर्यावसरो यः स सूरिभिः।
निराकाङ्क्षोऽथ साकाङ्क्षः पर्य्याय इति गीयते॥२८४॥

तेषु निराकाङ्क्षं मिषं यथा,—

मया विमुक्ता वहिरेव वल्लकी व्रजेदवश्यायकणैस्तु सार्द्रताम्।
द्रुतं तदेनां करवै निचोलके कयाचिदेवं मिषतो विनिर्ययै॥

अत्र कयाचिदेवं मिषतो विनिर्ययै इति उदर्काभिधानेन आकाङ्क्षा निराकृतेति निराकाङ्क्षमेतत् मिषं नाम पर्य्यायभेदः॥ २८५॥

---

पुंभावं पुरुषभावं त प्रसिद्धम् अवन्तिनगरीनाथं महाकालाख्यं हरमित्यर्थः दिदृक्षामहे द्रष्टुमिच्छाम। गङ्गादेवी यत्र हाररूपेण स्थिता यमुनाया कृष्णवर्णत्वात् असिरूपेण स्थिति। प्रयागस्य विपुलवक्षस्थलत्वेन न्यग्रोधस्य तादृशस्थूलत्वेन स्थितिरिति चतुर्णामेव महापुरुषसन्निवेशेन पुंभाव इति सर्वेषामेव युष्माकमेकत्र दर्शनाभिलाष इति भावः॥ २८३॥

पर्य्यायं लक्षयति। मिषमिति यत् मिषं व्याजः, या उक्तिभङ्गिः वचनभङ्गिः यश्च अवसरः सः सूरिभिः विद्वद्भिः निराकाङ्क्षः साकाङ्क्षश्च द्विविधः पर्य्यायः तदाख्योऽलङ्कारभेद इति गीयते कीर्त्त्यते॥ २८४॥

मयेति। मया वल्लकी वीणा वहिरेव विमुक्ता परित्यक्ता, अतः सा वल्लकी अवश्यायकणैः शिशिरविन्दुभिः आर्द्रता व्रजेत् गच्छेत् तत् तस्मात् एनां वल्लकीं

तदेव साकाङ्क्षं यथा,—

दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥

अत्र कयाचिदेवं मिषतो विनिर्यये इति वदुदकानभिधानात् साकाङ्क्षमेतत् मिषं नाम पर्य्यायस्य भेदः ॥२८६॥

निराकाङ्क्षोक्तिभङ्गिः यथा,—

राजन् ! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे ! भोजय मां कुमार ! कुशलं, नाद्यापि किं भुज्यते ? ।
इत्थं नाथ ! शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य वेश्मवलभीष्वेकैकमाभाषते ॥

अत्र अनया उक्तिभङ्ग्या शून्यीकृतारिनगरस्य नरपतेः कश्चित् प्रतापं वर्णयति । तत्र वाक्यस्य अपरिपूर्णत्वेन निराकाङ्क्षत्वात् निराकाङ्क्षेयमुक्तिभङ्गिः ॥ २८७ ॥

साकाङ्क्षा यथा,—

---

द्रुत शीघ्रं निचोलके प्रावरणवसने करवे स्थापयामीत्यर्थ कयाचित् नार्य्या एव मिषत' व्याजात् विनिर्यये गृहात् निर्गत सङ्केतस्थानप्राप्त्यर्थमिति भाव ॥ २८५ ॥

दशतीति । असौ परभृत' कोकिल: सहकारस्य आम्रस्य मञ्जरीं दशति खण्डयति अहं तं वारयिष्यामि ताडयिष्यामि युवाभ्या स्वैर स्वच्छन्दम् आस्यता स्थीयताम् ॥ २८६ ॥

राजन्निति । हे राजन् ! राजसुता राजकन्या मा न पाठयति, देव्य' राजमहिष्य अपि तूष्णी स्थिता' न किञ्चित् ब्रुवते इति भाव, हे कुब्जे । मा भोजय, हे कुमार । राजपुत्र । कुशल मङ्गलं ? तवेति शेष' अद्यापि कि कथ न भुज्यते त्वयेति शेष । हे नाथ ! हे देव । तव अरिभवने शत्रुनृपतिगृहे अध्वगै' पथिकै' पञ्जरात् मुक्त शुक' वेश्मवलभीषु गृहगोपानसीषु चित्रस्थान् आलेख्यनिहितान् राजप्रभृतीन् अवलोक्य इत्थमनेन प्रकारेण एकैक प्रत्येकम् आभाषते आलपति ॥ २८७ ॥

शान्त्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिम्
क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षराम्।
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यतेऽशिष्यते
नागैः रागिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति द्यामिति॥

अत्र अनया उक्तिभङ्ग्या ब्रह्माद्यस्तसमयेऽपि अनस्तमितस्य भगवतो महेश्वरस्य प्रभावो वर्ण्यते। तत्र च यदीयां लिपिं क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षरामित्यनेनैव वाक्येन अस्मिन् आकाङ्क्षा उत्ताप्यते। सा च विश्वं स्रक्ष्यतीत्यस्मिन् ईदृशो ब्रह्मणश्च चतुर्युगसहस्रान्ते दिनमेकम् इति मानेन एष वर्षशतजीवी विश्वं स्रक्ष्यति ब्रह्मेति ज्ञाप्यते। कपालञ्च अस्य भगवतो भूषणं भविष्यति। वक्ष्यति क्षितिम् इति अस्मिन् ईदृशो ब्रह्मणामयं वर्षशतेन एकं दिनमिति मानेन एष पुरुषायुषजीवी क्षितिं वक्ष्यति विष्णुरिति ज्ञाप्यते कपालञ्च अस्य भगवतो भूषा भविष्यतीति। एवमपामीशिष्यत इत्यादिषु वरुणवायुकामयमेन्द्रविषयत्वेन योजनीयम्। सेयम् अनेकप्रकारेण ब्रह्मादीनां साक्षानदभिधानेन साकाङ्क्षोक्तिभङ्गिः॥ २८८॥

अवसरो निराकाङ्क्षो यथा,—

---

शान्त्यै इति। जगता पत्यु' शिवस्य कपालदाम शवशिरोमाला व युष्माक शान्त्यै मङ्गलाय अस्तु भवतु गणा' प्रमथाः नातिप्रसिद्धानि नातिविशदानि अक्षराणि यस्या तथाविधा विश्वं जगत् स्रक्ष्यति ब्रह्मा भूत्वेति भाव' क्षिति पृथ्वी वक्ष्यति विष्णुर्भूत्वेति भाव' अपा जलाना ईशिष्यते प्रभविष्यति वरुणो भूत्वेति भावः नागै' भुजङ्गै अशिष्यते भोक्ष्यते वायुर्भूत्वेति भाव' रागिषु विषयवासनावत्सु रंस्यते विहरिष्यति, कामो भूत्वेति भाव' जगत् अत्स्यति भक्षयिष्यति, यमो भूत्वेति भाव' द्या स्वर्गं निर्वेक्ष्यति इन्द्रो भूत्वेति भाव. इति एव रूपा यदीया यत्सम्बन्धिनी लिपि वर्णावलि क्वापि क्वापि पदश. विभक्त्यन्तरूपेण पठन्ति उच्चारयन्ति॥ २८८॥

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवार्दितः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत् पुरः ॥
क्व नु ते हृदयङ्गमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥

अत्र इति यानि रतेः परिदेविताक्षराणि तैराकृष्टहृदयस्य मधोः योऽयम् आत्मदर्शनाय प्रस्तावः सोऽयं न किञ्चन काङ्क्षतीति निराकाङ्क्षोऽयमवसरः पर्य्यायस्य भेदः ॥ २८८ ॥

साकाङ्क्षो यथा,—

अज्ज वि वालो दामोअरो त्ति इअ जम्पिए जसोआए ।
कण्हमुहपेसिअच्छं णिहुअं हसिअं वअवहूए ॥

अत्राद्यापि बालो दामोदर इति कृतप्रस्तावनस्य कृष्णस्य वक्त्रे विन्यस्तलोचनया तद्रहस्यवेदिन्या व्रजवधूमतल्लिकया यदेतन्निभृतं हसितं तत् तवाम्बा बालं त्वां ब्रूते त्वं तु मातृश्रीभि र्निधुवनविदग्धाभिः दिवानिशं यमुनाकुञ्जोदरेषु विह-

---

अथेति। अथ परिदेवनानन्तर मधु' वसन्तः दिग्धशरैरिव विषाक्तबाणैरिव विषाक्ते दिग्धलिप्तकावित्यमरः तैः परिदेविताक्षरैः, विलापवचनैः हृदये अर्द्दितः विद्ध सन् आतुरा व्याकुला वियोगविधुरामित्यर्थः रतिं कामपत्नीम् अभ्युपपत्तुम् अनुग्रहीतु पुरः अग्रतः आत्मानं स्वस्वरूपम् अदर्शयत् दर्शयामास प्रकाशयामासेत्यर्थ ।

क्वेति। हे नाथ। कुसुमैः आयोजित विरचित कार्मुकं धनुर्येन तथाविधः ते तव हृदयङ्गमः मनोरञ्जन इत्यर्थः सखा बन्धु मधुर्वसन्तः क्व नु? कुत्र खलु वर्त्तते इति शेष, सोऽपि वसन्तोऽपि उग्ररुषा तीव्रकोपेन पिनाकिना हरेण सुहृद्गता सुहृदा त्वया गता प्राप्ता ता गति हरकोपानलभस्मरूपामित्यर्थः न खलु गमित ? किं प्रापितः ?। न खलु प्रश्नार्थमव्ययम् ॥ २८९ ॥

अद्यापि बालो दामोदरोऽस्तीति च जल्पिते यशोदया ।
कृष्णमुखप्रेषिताक्ष निभृतं हसितं व्रजवध्वा ॥

रसीत्यादिना अर्थजातेन साकाङ्क्षमिति साकाङ्क्षोऽयमवसरः पर्य्यायस्य भेदः ॥२९०॥

इति पर्य्यायालङ्कारनिरूपणम् ।

विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा ॥२९१॥
सा च प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्पते ।
न हि द्रव्यस्य जाते र्वा भवत्यतिशयः क्वचित् ॥२९२॥
प्रभावातिशयो यश्च यश्चानुभवनात्मकः ।
अन्योन्यातिशयो यश्च तेऽपि नातिशयात् पृथक् ॥२९३॥
अलङ्कारान्तराणामप्येकमाहुः परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥२९४॥

तत्र गुणातिशयेन महत्त्वातिशयो यथा,—

---

दामोदर' कृष्ण अद्यापि वाल शिशु इति यशोदया जल्पिते कथिते सति व्रजवध्वा व्रजाङ्गनया कयाचिदिति शेष कृष्णस्य मुखे प्रेषिते निहिते अक्षिणी यत्र तद् यथा तथा निभृतं गूढ हसितम् ।

व्रजवधूमतल्लिकया व्रजाङ्गनासु मध्ये प्रशस्तया प्रधानव्रजाङ्गनयेत्यर्थ । मतल्लिका मतचिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनीत्यमर ॥ २९० ॥

अतिशयोक्ति लक्षयति विवक्षेति । लोकसीमाम् अतिवर्त्तते इति तथोक्ता अलौकिकीत्यर्थ या विशेषस्य उत्कर्षस्य विवक्षा वक्तुमिच्छा, असौ अतिशयोक्तिः स्यात् सा च अलङ्कारेषु मध्ये उत्तमा उत्कृष्टा सर्वश्रेष्ठा इत्यर्थ ॥ २९१ ॥

साचेति । साच अतिशयोक्ति प्राय वाहुल्येन गुणानाञ्च क्रियाणाञ्च उपकल्पते सम्भवतीत्यर्थ, द्रव्यस्य जातेर्वा अतिशय' क्वचित् नहि नैव भवति ॥ २९२ ॥

प्रभावातिशय इति । यश्च प्रभावस्य अतिशय यश्च अनुभवनात्मक अनुभवस्वरूप यश्च अन्योन्यातिशय' परस्परोत्कर्ष तेऽपि अतिशयात् अतिशयोक्त्यलङ्कारात् न पृथक् नातिरिक्ता इत्यर्थ ॥ २९३ ॥

अलङ्कारेति । वागीशै' वाक्पतिभि कविभिरित्यर्थ, महिता पूजिता आदृतामित्यर्थ इमाम् अतिशयाह्वयाम् उक्तिम् अतिशयोक्तिमित्यर्थ अलङ्कारान्तराणाम् अन्येषामलङ्काराणाम् एकम् अद्वितीयम् परायण परम् आश्रयम् आहु कथयन्ति बुधा इति शेष, ॥ २९४ ॥

अहो विशालं भूपाल ! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥

अत्रैवं यशोराशेरशक्यमानस्याप्यतिशयोक्त्या विशेषविवक्षा। येन त्रिभुवनोदरमपि सङ्कीर्णमाशङ्क्यते। सोऽयं महत्त्वातिशयो नाम अतिशयभेदः ॥ २९५ ॥

तनुत्वातिशयो यथा,—

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये ! तव ।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्त्तते ॥

अत्रैवं मध्यस्य लोकसीमातिक्रमेण तानवातिशयविवक्षा येन तदस्ति नास्तीति वा संदिह्यते। सोऽयं तनुत्वातिशयो नाम अतिशयभेदः ॥२९६॥

कान्त्यतिशयो यथा,

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥

अत्रैवं चन्द्रालोकस्य लोकसीमातिक्रमेण बाहुल्योत्कर्षविवक्षा येन तस्मिन् समानाभिहारेणाभिसारिका अपि न लक्ष्यन्ते। सोऽयं कान्त्यतिशयो नाम अतिशयभेदः। अथास्य पिहितात् को विशेषः ?उच्यते,पिहिते चन्द्रातपस्य उत्कर्षेणाभिसारिका-

---

अहो इति। हे भूपाल। राजन्। अहो आश्चर्यं भुवनत्रितयोदरं त्रिभुवनाभ्यन्तरं विशालम् अतिमहदित्यर्थः यत् यस्मात् ते तव यशोराशिः मातुं परिच्छेत्तुम् अशक्योऽपि अत्र भुवनत्रितयोदरे माति पर्य्याप्नोति ॥ २९५ ॥

स्तनयोरिति। हे प्रिये। तव स्तनयोः जघनस्य कटिपुरोभागस्यापि मध्ये मध्यं कटिभाग इत्यर्थः अस्ति नास्तीति मे मम सन्देहः संशयः अद्यापि न निवर्त्तते नापगच्छतीत्यर्थः ॥ २९६ ॥

मल्लिकेति। मल्लिकानां माला मल्लिकामालं तद्धारिण्यः तत्धारिण्य इत्यर्थः सर्वाङ्गीनानि सर्वाङ्गव्याप्तानि आर्द्राणि चन्दनानि यासां तथाभूताः तथा क्षौमवत्यः

तिरस्कारो विवच्यते इह तु अभिसारिकातिरस्कारेण चन्द्रातपोत्कर्ष इति ॥ २९७ ॥

प्रभावातिशयो यथा,

तं दइआहिसाणं जम्मिं वि अंगंवि राहवेण ण णिहिदं ।
सीआपरिमरिसेण व उठेति णवो णिरन्तर रोमञ्चो ॥

अत्र दयिताभिज्ञानस्य योऽय रोमाञ्चक्रियाविशेषः स क्रियातिशयस्यैव भेदः प्रभावातिशय उच्यते ॥२९८॥

अनुभावातिशयो यथा,

विमलिअरसाअलेण वि विसहरवइणा अदिट्ठमूलच्छेदं ।
अप्पत्ततुङ्गसिहरं तिहुअणहरणपवड्ढिएण वि हरिणा ॥

अत्र रसातलमपि मृद्नता शेषेणापि च यस्य मूलं न दृष्टं त्रिभुवनमप्युल्लङ्घयता हरिणापि न तुङ्गशिखराणि प्राप्ता-

---

श्वेतपट्टवसना इत्यर्थ अभिसारिका कान्तार्थं सङ्केत गच्छन्त्यो नायिका' कान्तार्थिनी तु या याति सङ्केत साभिसारिकेत्यमर ज्योत्स्नाया चन्द्रिकाया न लक्ष्यन्ते न विभाव्यन्ते ॥ २९७ ॥

तद दयिताभिज्ञानं यस्मिन्नप्यङ्गे राघवेण न निहितम् ।
सीतापरिमर्षेणेव उदेति नवो निरन्तर रोमाञ्च ॥

तत् दयिताया' कान्ताया' सीताया अभिज्ञायते अनेनेति अभिज्ञान शिरोरत्नादिरूपमिति भाव' यस्मिन् अपि अङ्गे राघवेण रामेण न निहित धृतम् किन्तु सीतापरिमर्षेणेव सीताङ्गस्पर्शेनेव यत्स्पर्शेनेति भाव निरन्तर नव नूतन' रोमाञ्च उदेति आविर्भवतीत्यर्थ ॥ २९८ ॥

विमर्दितरसातलेनापि विषधरपतिना अदृष्टमूलच्छेदम् ।
अप्राप्ततुङ्गशिखर त्रिभुवनहरणप्रवर्द्धितेनापि हरिणा ॥

विमर्दित विशेषेण दलित परिदर्शितमिति भाव रसातलं पातालं येन तथाभूतेनापि विषधरपतिना शेषनागेन न दृष्ट मूलस्य तलस्य छेद अवसान यस्य त तथा त्रिभुवनहरणाय त्रैलोक्यहरणाय बलि छलयित्वेति भावः

नीति यदेतल्लोकसीमातिक्रमेण विशेषव्यवस्थया पर्वतानुभावभणनं सोऽयमनुभूयमानमाहात्म्यातिशयस्यैव भेदोऽनुभावातिशय उच्यते ॥ २९९ ॥

अन्योन्यातिशयो यथा,

रणदुज्जओ दहसुहो सुरा अवज्झा अ तिहुअणस्स इमे ।
पडइ अणत्थोतिफुडं विहीसणेण फुडिआहरं णीससिअं ॥

अत्र दशास्यः समरे न जीयते सुराश्चामरत्वान् न वध्यन्ते । तयोश्च परस्परं संघट्टक्रियातिशयात् त्रिभुवनमपि क्षयं यास्यतीति येयमन्योन्यातिक्रियातिशयभणनाल्लोकसीमातिक्रमेण विशेषविवक्षा । सोऽयं क्रियातिशयो नामातिशय एवान्योन्यातिशय उच्यते ॥ ३०० ॥

इति अतिशयोक्त्यलङ्कारनिरूपणम् ।

श्लेषोऽनेकार्थकथनं पदेनैकेन कथ्यते ।
पदक्रियाकारकैः स्याद्भिन्नाभिन्नैः स षड्विधः ॥३०१॥

तेषु भिन्नपदो यथा,

---

प्रवर्द्धित तेन धृतविराटमूर्त्तिनेत्यर्थः हरिणापि विष्णुनापि न प्राप्तानि तुङ्गानि उन्नतानि शिखराणि शृङ्गाणि यस्य तथाविधम् ॥ २९९ ॥

रणदुर्जयो दशमुखः सुरा अवध्याश्च त्रिभुवनस्येमे ।
पतति अनर्थोऽतिस्फुट विभीषणेन स्फुरिताधर निश्वसितम ॥

रणदुर्ज्जय इति । दशमुख रावण रणेषु सङ्ग्रामेषु दुर्ज्जय जेतुमशक्य इमे सुरा देवाश्च त्रिभुवनस्य अवध्या बद्धुमशक्या । सुतरा अतिस्फुट प्रकाशमित्यर्थः. अनर्थ अमङ्गल पतति वर्त्तते देवराक्षसविद्वेषस्य चिरेणापि अनुपशाम्यत्वादिति भाव अत विभीषणेन जगदुपशमकामेनेति भावः स्फुरित स्पन्दितः अधरः यस्मिन् तद् यथा तथा निश्वसितम् दुःखेन दीर्घनिश्वासस्त्यक्त इत्यर्थः ॥ ३०० ॥

श्लेष लक्षयति । श्लेष इति एकेन पदेन सुप्तिङन्तेन यत् अनेकार्थाना कथन स श्लेष. कथ्यते। स श्लेष भिन्नै अभिन्नैश्च पदक्रियाकारकै पदै क्रियाभि कारकैश्च षड्विध स्यात् तथा च भिन्नपदश्लेष. भिन्नक्रियाश्लेषः भिन्न-

दोषाकरेण संबध्नन् नक्षत्रपथवर्त्तिना।
राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते॥

अत्र प्रदोषो रात्रेः प्रथमः यामः किमिति प्रियारहितं मां न बाधते इति उक्तेर्युक्तिमाह इत्थमनुभूयमानेन प्रकारेण राज्ञा संबध्नन् कीदृशेन दोषाकरेण नक्षत्रपथवर्त्तिनेति। यो हि दोषाणामाकरेण राजमार्गातिगामिना च राज्ञा प्रकृष्टदोषः संबध्यते सोऽप्रियमवश्यं बाधते एव। तदत्र पूर्वस्मिन् प्राकरणिकेऽर्थे द्वितीयोऽर्थोऽप्राकरणिकः पदभेदेन उपश्लिष्यमाणो भिन्नपदश्लेषापदेशमासादयति॥२०२॥

अभिन्नपदो यथा,—

असावुदयमारूढ़ः कान्तिमान् रक्तमण्डलः।
राजा हरति लोकस्य हृदयं मृदुभिः करैः॥

अत्र अयमुदीयमानश्चन्द्रमा लोकस्य हृदयं हरतीत्युक्तेर्युक्तिमाह राजानुरक्तमण्डल उदयी मृदुकरः कान्तिमानिति। यो ह्येव भूतो राजा सोऽवश्यं लोकस्य हृदयहारी

---

कारकश्लेष पदश्लेष अभिन्नपदश्लेष अभिन्नक्रियाश्लेष अभिन्नकारकश्लेषश्चेति षट्प्रकार इत्यर्थ ॥ २०१ ॥

दोषाकरेणेति। दोषाणां हिंसादीनाम् आकर उत्पत्तिस्थान तेन अन्यत्र दोषा रात्रि तस्या कर यद्वा तस्या करा किरणा यस्य तेन चन्द्रेणेत्यर्थ। क्षत्राणा क्षत्रियाणा पथि राजधर्मे इत्यर्थं न वर्त्तते इति तथोक्तेन राजनीतिलङ्घनपरेणेति यावत् अन्यत्र नक्षत्रपथे आकाशमार्गे वर्त्तते चरतीति तथोक्तेन राज्ञा नृपतिना अन्यत्र चन्द्रेणेत्यर्थ सवध्नन् सम्बन्ध गच्छन् प्रदोष प्रकृष्टदोष पुरुष अन्यत्र रजनीमुख प्रदोषो रजनीमुखमित्यमर। रात्रिर्वा अप्रिय द्वेष्य प्रियारहितञ्च मा किं कथम् इत्थम् अनेन प्रकारेण न बाधते न पीडयति? अपितु पीडयत्येवेत्यर्थ ॥ २०२ ॥

असाविति। उदयम् उदयाचलम् अभ्युन्नतिञ्च आरूढ, प्राप्त, कान्तिमान्

भवति। अत्रापि च प्रकारणिकेऽर्थेऽप्राकरणिक उपश्लिष्यमाण पदानामभेदेनाभिन्नपदश्लेषो भवति ॥ २०३ ॥

भिन्नक्रियो यथा,—

मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः॥

अत्राकर्ण्यन्ते श्लिष्यन्ते चेति क्रियापदद्वितयस्य प्राधान्यतः समुच्चयेन उपात्तस्य मधुरा इत्यादिभिः श्लिष्टपदैः कोकिलागिर इत्यसितेक्षणा इति वा विशेष्यैकपदवर्जं पर्यायतः सम्बन्धो भवति। तद्यथा आकर्ण्यन्ते काः कोकिलागिरः कीदृश्यः मधुराः रागवर्धिन्यः कोमलाः। पुनरपि किम्भूताः आसितेक्षणाः आसिते उपवेशिते निश्चलीकृते अन्तःप्रमोदानुभावादीक्षणे याभिस्तास्तथा सर्वोऽपि हि मधुरं शब्दमाकर्णयन् निश्चलाक्षो भवति। श्लिष्यन्ते च काः असितेक्षणाः हरिणचक्षुषः किम्भूताः मदकलाः कोकिलागिरः कोमलाः रागवर्धिन्यो मधुरा इति। सोऽयं द्वयो र्विभिन्नक्रिययो र्भिन्नार्थैकरूपाणां पदार्थानामुपश्लेषो भिन्नक्रियः श्लेष उच्यते ॥ २०४ ॥

अभिन्नक्रियो यथा,—

स्वभावमधुराः स्निग्धाः शंसन्त्यो रागमुल्बणम्।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियान्॥

अत्र कर्षन्तीत्येतस्यां क्रियायां दृशां दूतीनाञ्च श्लिष्टपदत्वेन-

---

प्रभावान् सुन्दराकृतिश्च रक्ता रक्तवर्णं नवोदये इति भाव मण्डल विम्बं यस्य तथाभूत अनुरक्तप्रजश्च राजा चन्द्र नृपतिश्च मृदुभिः कोमलै अन्यत्र सुखप्रदेयैरल्पैर्वा करै, किरणै राजग्राह्यभागैश्च लोकस्य जगत, प्रजावर्गस्य च हृदय चित्त हरति रञ्जयति ॥ २०३ ॥

मधुरा इति। मधुरा मनोहारिण्य रागवर्द्धिन्य' अनुरागवर्द्धनपरा, कोमला, मृदुला, कोकिलाना परभृताना गिर' रवा' आकर्ण्यन्ते श्रूयन्ते मदकलाः मदेन उल्लासेन मृदुमन्दभाषिण्य असितेक्षणा, नीलोत्पलाक्ष्यः कामिन्य, इति शेष.। श्लिष्यन्ते आलिङ्ग्यन्ते च। कामिभिरिति शेष. ॥ २०४

आवेशादयमभिन्नक्रियो नाम श्लेषविशेषः। प्रथमयोरस्य वा को विशेष इति चेत् तत्रैकस्यैव प्राकरणिकत्वमत्र तु द्वयोरपीति। अयञ्च भिन्नकारकयोरपि भवति ॥ ३०५ ॥

भिन्नकारको यथा,—

गति वेणी च नागेन वपुरूरू च रम्भया।
ओष्ठौ पाणी प्रवालैश्च तस्यास्तुल्यत्वमाययुः॥

अत्रैकस्मिन् पक्षे धर्मधर्मिणोरभेदोपचारान्नागगति र्गृह्यते। तत्र गतेर्वेण्याश्च नागेन हस्तिना अहिना च तुल्यत्वं वपुरूर्वोश्च रम्भया कदल्या अप्सरोभिश्च तुल्यत्वमोष्ठयोः पाण्योश्च प्रवालैः विद्रुमैः नवपल्लवैश्च वर्णनीययोः श्लेषप्रभावात् लभ्यते। सोऽयमनेककर्तृकत्वाद्भिन्नकारक इति श्लेषो भवति ॥ ३०६ ॥

अभिन्नकारको यथा,—

कृष्णार्ज्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि! ॥

अत्र हे कलभाषिणि कस्य ते दृष्टि विश्वास्या भवति इत्युक्ते युक्तिमाह कृष्णार्ज्जुनानुरक्तापि कर्णावलम्बिनीति

---

स्वभावेति। कान्ताभि प्रेषिता प्रहिता स्वभावेन मधुरा मनोहारिण्य स्निग्धा' स्नेहवर्षिण्य उल्वणम् उत्कट रागम् अनुराग प्रसन्त्य, प्रकटयन्त्यः दृश' दृष्टय दूत्यश्च प्रियान् कर्षन्ति आकृष्य नयन्तीत्यर्थ'।

स्वभावेति। स्वभावेन प्रकृत्या मधुरा मनोहारिण्य स्निग्धा' स्नेहवर्षिण्य उल्वणम् उत्कट राग प्रणय प्रसन्त्य प्रकटयन्त्य' कान्ताभि रमणीभि' प्रियान् कान्तान् प्रति प्रेषिता प्रहिता दृश' दृष्टय दूत्यश्च कर्षन्ति आकृष्य नयन्ति कान्तानिति शेष ॥ ३०५ ॥

गतिरिति। तस्या कान्ताया गति पदविक्षेप वेणी केशपाशश्च नागेन हस्तिना भुजङ्गेन च, वपु शरीरम् ऊरू च रम्भया तदाख्यया सुरसुन्दर्य्या कदलिस्तम्भेन च ओष्ठौ पाणी च प्रवालैः विद्रुमै' पल्लवैश्च तुल्यत्व साम्यम् आययु प्रापु ॥ ३०६ ॥

कृष्णेति। हे कलभाषिणि मधुरवादिनि। ते तव दृष्टि, कृष्णार्ज्जुनानुरक्तापि

याहिं कृष्णार्जुनेन अनुरज्यते कथं सा कर्णपक्षपातिनी भवति याचैवम् उभयगता तस्या को विश्वसितीति स चायमेककर्तृकत्वादभिन्नकारक इति श्लेषो भवति ॥ २०७ ॥

इति श्लेषालङ्कारनिरूपणम् ।

स्वाभिप्रायस्य कथनं यदि वाप्यन्यभावना ।
अन्यापदेशो वा यस्तु त्रिविधं भाविकं विदुः ॥ २०८ ॥
मते चास्माकमुद्भेदो विद्यते नैव भाविकात् ।
व्यक्ताव्यक्तोभयाख्याभिस्त्रिविधः सोऽपि कथ्यते ॥ २०९ ॥

तत्र भाविकभेदेषु स्वाभिप्रायकथनं यथा,—

ण विज्जइ दुग्गिज्झिआ दिट्ठम्मि जस्सिं भिउडिआ
जत्थ ण अ व्वाहारओ घिप्पइ आहसत्तए विच्छुहइ ।
अहिणन्ददे जत्थ ण सोवदंसिआ
तं मे कहहु माण जइ मे इच्छहु जीअणम् ॥

---

कृष्णा कृष्णवर्णे अर्जुने पार्थे अनुरक्तापि अनुरागिण्यपि कर्णावलम्बिनी राधेयानुधाविनी अतः कस्य जनस्य विश्वसनीयत्वं सतीत्वेन प्रत्यययोग्यत्वं याति प्राप्नोति ? नैवेत्यर्थः । इत्यमापाततो विरोधः । ते दृष्टिः कृष्णा असिता अर्जुना धवला अनुरक्ता अनुरागवर्षिणी कर्णावलम्बिनी आकर्णकृष्टेति तत्परिहार ॥२०७॥

भाविकं लक्षयति स्वाभिप्रायस्येति । स्वस्य अभिप्रायस्य आशयस्य कथनम् प्रकटनं यदि वा अथवा अन्यस्य अप्रकृतस्य भावना उत्थापना वा यः अन्यस्य अप्रकृतस्य अपदेशः छलं तत् त्रिविधं त्रिप्रकारं भाविकं तदाख्यमलङ्कारं विदुः जानन्ति ॥ २०८ ॥

मतेति । अस्माकं मते च भाविकात् उद्भेदः प्रकटनम् अभिप्रायादेरिति भावः, नैव भिद्यते नैव पृथग्भवतीत्यर्थः उद्भेदः भाविकश्चैकार्थे इति भावः सः उद्भेदः अपि व्यक्ताख्यया अव्यक्ताख्यया व्यक्ताव्यक्ताख्यया च त्रिविधः कथ्यते ॥ २०९ ॥

न विद्यते दुर्ग्राह्यादृष्टे यस्मिन् भ्रूकुटिका
यत्र न च व्याहारो गृह्यते आहसति विक्षुभ्यते ।
अभिनन्दते यत्र न सोपदर्शिता
तं मे कथय मानं यदि मे इच्छसि जीवनम् ॥

नेति । दुर्ग्राह्यं ग्रहीतुमशक्यं वाह्यव्यापारविशेषेण दुर्ज्ञेयं इत्यर्थः अतएव

अत्र भ्रूभङ्गेदासम्भाषणप्रियतमावक्षेपणरूपान् प्रत्यनभि-मतप्रतिपादनरूपस्याभिप्रायस्य कथितत्वादिदं स्वाभिप्राय-कथनं नाम भाविकम् ॥ ३१० ॥

अन्यभावना यथा,—

दसणवलिअं दढकं पि अघणं दीहरं सुपरिणाहम्।
होइ ह घरे साहीणं मुसलं धणाण महिलाणम् ॥

अत्र मेढ्रभावनया मुसलरूपस्योक्तत्वादिदमन्यभावनाभि-धानं भाविकम् ॥ ३११ ॥

अन्यापदेशो यथा,—

आसाइओ णाएण जत्तिओ विअ विहीणओ।
घस्सरविसहो एण्हिं रक्खिज्जइ गहवइ च्छेत्तदम् ॥

अत्र परच्छेत्रस्य घस्सरवृषनिवारणापदेशेन चिरात् परि-ज्ञात उपपतिर्वार्यते। तदिदमन्यापदेशाख्यं भाविकम् ॥ ३१२ ॥

उद्भेदेषु व्यक्तो यथा,—

---

अदृष्टे दर्शनायोग्ये अननुमेये इति भावः यस्मिन् माने भ्रूकुटिका भ्रूभङ्गिः न विद्यते यत्र च माने व्याहारः उक्तिः वचनमित्यर्थः न च गृह्यते नाववुध्यते इत्यर्थः, आहसति सम्यक् हसति अथच विक्षुभ्यते विशेषेण क्षोभं प्राप्नोति सन्तप्यते इत्यर्थः यत्र माने उपदर्शिता सखीभिः सनिबन्धं प्रबोधितेत्यर्थः, न अभिनन्दते न सन्तुष्यति तम् अस्याः मानं कथय ब्रूहि यदि मे मम जीवितम् इच्छसि। सखीं प्रति कस्यचित् मानवत्याः प्रियस्य प्रोष्यागतस्योक्तिरियम् ॥ ३१० ॥

दर्शनवलितं दृढमपि घनं दीर्घं सुपरिणाहम्।
भवति गृहे स्वाधीनं मुसलं धन्यानां महिलानाम् ॥

दसणेति। दृढं कठिनमपि दर्शनवलितं दृष्टिप्रियमित्यर्थः, घनं सान्द्रं दीर्घम् आयतं सुपरिणाहं सुविशालं मुषलं धन्यानां पुण्यवतीनां महिलानां गृहे स्वायत्तम्। अत्र मुषलमित्यनेन मेढ्रभावना उत्थाप्यते। स्वाधीनमित्यनेन महि-लानां स्वाधीनपतिकात्वं प्रतीयते ॥ ३११ ॥

आसादितो नागेन यान्तिक इव विहीनकः घस्मरवृषभ इह रक्ष्यते गृहपतिक्षेत्रं।

मन्तेसि मह्नु मह पणअं सन्दाणेसि तिदसेस ! पाअवरअणम् ।
पअटेसि सुद्धसहावं सम्भावेसि सुरणाह ! जाव अलीअम् ॥

अत्र मायाविनो महेन्द्रस्याभिप्रायः सत्यं केन व्यक्तमेव उद्भिन्न इति व्यक्तोऽयम् उद्भेदः ॥ २१३ ॥

अव्यक्तो यथा,—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

अत्र वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्याक्षेपवता प्राकरणिकोदाहरणेन यद्यपि दूत्या दुश्चेष्टितं निर्भिन्नं तथापि न पूर्ववद्व्यक्तमित्यव्यक्तोऽयम् उद्भेदः ॥ २१४ ॥

उभयरूपो यथा,—

अम्लानोत्पलकोमले सखि ! दृशौ नीलाञ्जनेनाञ्चिते
कर्पूरच्छुरणाच्च गण्डफलके सम्वेल्लितः पाण्डिमा ।
श्वासाः सन्तु च कन्दुकभ्रमिभुवः किन्तु प्रभावाहिनामङ्गानां कृशिमानमुत्कटममुं को नाम नोत्प्रेक्षते ॥

---

मन्त्रयसि मधु मम प्रणय सदानयसि त्रिदशेश पादपरत्नम् ।
प्रकटयसि शुद्धस्वभाव सम्भावयसि सुरनाथ । यावदलीकम् ॥

निःशेषेति । हे मिथ्यावादिनि अलीकभाषिणि । हे बान्धवजनस्य अज्ञातपीडागमे । बान्धवजनपीडानभिज्ञे । दूति । तव स्तनतट स्तनोपरिभाग' निःशेष सम्यक् च्यूत भ्रष्ट' चन्दन यस्मात् तथोक्तम् । अधरः निर्मृष्ट. निःशेष यथा तथा विलुप्तः रागः ताम्बूलचर्वणजनित लौहित्य यस्य तथाभूतम् । नेत्रे दूरम् अत्यन्तम् अनञ्जने अञ्जनरहिते विलुप्तकज्जले इत्यर्थ' इयं तन्वी कोमला तनुः अङ्ग पुलकिता रोमाञ्चिता । अतः त्वम् इतः अस्मात् मत्सकाशादित्यर्थ. वापी सरोवर स्नातु' गतासि तस्य अधमस्य मत्प्रियस्येति भावः आक्षेपोक्तिरियम् अन्तिक समीप न पुन' नैव गतासीत्यनुषङ्ग. ॥ २१२ २१४॥

अम्लानेति । हे सखि । अम्लाने म्लानिमप्राप्ते उत्पले इव कोमले मृदुले दृशौ नेत्रे नीलाञ्जनेन नीलकज्जलेन अञ्चिते अलङ्कृते । गण्डफलके कपोलदेशे

अत्र दृशो म्लानता गण्डयोः पाण्डुरत्वं श्वासानां दैर्घ्यमि-त्युत्कण्ठाचिह्ननिह्नवाय योऽयमविनयवत्या नीलाञ्जनादिप्रयोगस्तस्य तत्त्वाभ्युपगमेऽपि अङ्गानां क्लशिमानम् उत्कटममुं को नाम नोत्प्रेक्षत इति योऽय सखीव्याहारः तेन तदभिप्राय उद्भिन्नोऽनुद्भिन्नश्च भवति इति उभयरूपोऽयमुद्भेदः॥ ३१५॥

तेऽमी त्रयोऽप्युद्भेदा भाविकात् न भिद्यन्ते।

इति भाविकालङ्कारनिरूपणम्।

संसृष्टिरिति विज्ञेया सर्वालङ्कारसङ्करः।
सा तु व्यक्ता तथाऽव्यक्ता व्यक्ताव्यक्तेति च त्रिधा॥ ३१६॥
तिलतण्डुलवद्व्यक्ता च्छायादर्शवदेव च।
अव्यक्ता चीरजलवत् पांशुपानीयवच्च सा॥ ३१७॥
व्यक्ताव्यक्ता च संसृष्टि र्नरसिंहवदिष्यते।
चित्रवर्णवदन्यस्मिन्नानालङ्कारसङ्करे॥ ३१८॥

व्यक्ता तिलतण्डुलवद् यथा,—

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम्।
तदादाय करैरिन्दु र्लिम्पतीव दिगङ्गनाः॥

---

कर्पूरच्चूरणात् कर्पूरलेपनात् पाण्डिमा पाण्डुत्व सवेल्लित सङ्क्रामितश्च। श्वासानि श्वासमरुत. कन्दुकभ्रमिभुवः कन्दुक क्रीडनक गोलवस्तु तस्य भ्रमि घूर्णन तस्मात् भवतीति तथोक्ताः सन्तु भवन्तु च। किन्तु को जन' प्रभावाह्निना लावण्यशालिनाम् अङ्गानाम् उत्कटम् अत्यन्तम् अमु' क्लशिमान क्लशत्व न उत्प्रेक्षते न सम्भावयति नाम प्राकाश्ये। अङ्गकार्श्यं स्फुटमेव प्रतीयते इति निष्कर्ष॥ ३१५॥

संसृष्टि लक्षयति। सर्वेषाम् अलङ्काराणा सङ्कर सम्मेलन संसृष्टि इति विज्ञेया वेद्या। सा तु संसृष्टि व्यक्ता स्फुटा तथा अव्यक्ता अस्फुटा, व्यक्ताव्यक्ता स्फुटास्फुटा चेति त्रिधा त्रिप्रकारा भवति॥ ३१६॥

तिलेति। व्यक्ता तिलतण्डुलवत् तिलयुक्ततण्डुलमिव छायादर्शवच्च प्रतिबिम्ब-दर्पणवच्च भवतीति शेषः। अव्यक्ता सा संसृष्टि चीरजलवत् दुग्धमिश्रितसलिलमिव, पांशुपानीयवच्च कर्दमाक्तजलवदित्यर्थ. भवतीति शेष'॥ ३१७॥

व्यक्ताव्यक्ता च संसृष्टि नरसिंहवत् नृसिंहाकृतिरिव तथा अन्यस्मिन् नाना-लङ्काराणा बहूनाम् अलङ्काराणा सङ्करे सम्मेलने चित्रवर्णवत् इष्यते॥ ३१८॥

अत्र उत्प्रेक्षाद्वय रूपकद्वयञ्च तिलतण्डुलवत् सङ्कीर्य्यते ॥ २१९ ॥

व्यक्तैव च्छायादर्शवद्यथा,—

निर्मलेन्दु नभो रेजे विकचाब्जं बभौ सरः ।
परं पर्य्यश्रुवदनौ मम्लतु र्भ्रातरावुभौ ॥

अत्र आदर्शच्छायेव हेत्वलङ्कारे रामलक्ष्मणमुखयोरिन्दुपद्मौपम्येन सदृशाऽसदृशव्यतिरेको दृश्यते ॥ २२० ॥

अव्यक्ता चीरजलवद् यथा,—

चीरक्षालितचन्द्रेव नीलीधौताम्बरेव च ।
टङ्कोल्लिखितसूर्य्येव वसन्तश्रीरदृश्यत ॥

अत्रोपमोत्प्रेक्षे चीरनीरवन्मिश्रे संसृष्टे न व्यज्येते ॥२२१॥

अव्यक्तैव पांशूदकवद् यथा,—

कृष्णार्ज्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि ! ॥

---

पिनष्टीति । उदधि समुद्र तरङ्गाणाम् ऊर्म्मीणाम् अग्रे. अग्रभागे फेनमेव चन्दन पिनष्टीव पिष्ट करोतीव । इन्दुश्चन्द्र करै हस्त किरणैश्च तत् फेन चन्दनम् आदाय आकृष्य दिश एव अङ्गना स्त्रियः लिम्पतीव लिप्ता. करोतीव ॥ २१९ ॥

निर्मलेति । निर्मलः स्वच्छः इन्दु चन्द्रः यस्मिन् तथाभूत नभः आकाश रेजे शुशुभे । विकचानि प्रस्फुटानि कमलानि यस्मिन् तथाविध सर सरोवर बभौ रराज । पर किन्तु उभौ भ्रातरौ रामलक्ष्मणौ पर्य्यश्रु अश्रुपरीत वदन ययो तथाभूतौ रुदन्तावित्यर्थः सीतावियोगादिति भाव. मम्लतुः म्लानता प्रापतुः ॥ २२० ॥

चीरेति । वसन्तस्य श्री शोभा चीरेण क्षालित धौत. चन्द्र यस्या तथाभूतेव नील्या नीलीरागेण धौत क्षालितम् अम्बरम् आकाश वसनञ्च यस्या तथाविधेव तथा टङ्केन शाणयन्त्रविशेषेण उल्लिखितः उद्घृष्टः सूर्य्य. यस्या तथाविधेव अदृश्यत आलोकि ॥ २२१ ॥

कृष्णेति व्याख्यात प्राक् ॥ २२२ ॥

अत्र पांशूदकयोरिव मृत्पिण्डे श्लेषविरोधयोः अव्यक्तयोरिव व्याजस्तुतावङ्गभावोऽवगम्यते ॥ ३२२ ॥

व्यक्ताव्यक्ता नरसिंहवद् यथा,—

रजोभिस्तुरगोत्कीर्णैर्गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥

अत्र नरसिंहजाताविव सिंहनरशरीरभागयोः परिवृत्तालङ्कारहेतूपमयोः अङ्गभावो व्यक्ताव्यक्तरूपः परस्फुरन् उपलभ्यते ॥ ३२३ ॥

व्यक्ताव्यक्तैव चित्रवर्णवद् यथा,—

मयूरारावमुखरां प्रावृष सतडिल्लताम्।
महाटवीमिवोल्लङ्घ्य तोयानि मुमुचु र्घनाः ॥

अत्र पटावयवस्थानां नीलादीनामिव पटावयव्याश्रिते चित्रवर्णे श्लेषरूपकोपमार्थश्लेषाणां पदपदार्थाश्रयाणां शरद्वर्णनवाक्याश्रयिणि समाध्यलङ्कारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः प्रतीयते ॥ ३२४ ॥

चतुर्विंशतिरित्येताः क्रमेणोभयसंश्रयाः।
काव्यालङ्कृतयः प्रोक्ता यथावदुपमादयः ॥ ३२५ ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते
सरस्वतीकण्ठाभरणे उभयालङ्कारविवेचनो
नाम चतुर्थः परिच्छेदः।

---

रजोभिरिति। तुरगा अश्वा, तै उत्कीर्णानि उत्क्षिप्तानि तै रजोभि रेणुभि घनसन्निभै मेघतुल्यै गजै हस्तिभिश्च व्योम आकाश भुवस्तलमिव भूमिमिव तथा भूतल व्योमेव आकाशमिव कुर्वन् ययावित्यनेनानुषङ्गः ॥ ३२३ ॥

मयूरेति। घना मेघा मयूराणाम् आरावेण नादेन मुखरा वाचाला ता सतडिल्लता विद्युल्लतासमेता प्रावृष वर्षर्त्तुं महाटवीमिव महारण्यमिव उल्लङ्घ्य अतिक्रम्य तोयानि जलानि मुमुचु तत्यजु ॥ ३२४ ॥

चतुरिति। इत्येवम् एता उभयसंश्रया शब्दार्थगता चतुर्विंशति उपमादय काव्यालङ्कृतय काव्यालङ्कारा यथावत् प्रोक्ता कथिता ॥ ३२५ ॥

इति पण्डितकुलपतिना श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण विरचिता
सरस्वतीकण्ठाभरणस्य चतुर्थ परिच्छेदव्याख्या।

# पञ्चमः परिच्छेदः ।

रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते ।
योऽर्थस्तस्यान्वयात् काव्यं कामनीयत्वमश्नुते ॥ १ ॥
विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु ।
आत्मसम्यग् गुणोद्भूतेरेको हेतुः प्रकाशते ॥ २ ॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव चेदशृङ्गारी नीरसं सर्वमेव तत् ॥ ३ ॥
पश्यति स्त्रीति वाक्ये हि न रसः प्रतिभासते ।
विलोकयति कान्तेति व्यक्तमेव प्रतीयते ॥ ४ ॥
कन्ये ! कामयमानं मां त्वं न कामयसे कथम् ।

---

छात्राणां सुखबोधाय श्रीजीवानन्दशर्मणा ।
पञ्चमाख्ये परिच्छेदे व्याख्येयं क्रियते मया ॥

रस इति । रसः अभिमानः अहङ्कारः शृङ्गार इति एवं पर्यायः यः अर्थः वस्तुविशेषः, तस्य अन्वयात् सङ्गात् काव्यं कमनीयत्वं रम्यताम् अश्नुते प्राप्नोति ॥ १ ॥

विशिष्टेति । जन्मिनां शरीरिणां सामाजिकानामिति यावत् अन्तरात्मसु अन्तःकरणेषु विशिष्टात् विलक्षणात् अदृष्टात् शुभकर्मजनितभाग्यादित्यर्थः जन्म उत्पत्तिर्यस्य तथाविधः अयं रस इत्यर्थः आत्मनः स्वस्य सम्यग् गुणानां दया-दाक्षिण्यादिसदाचाराणाम् उद्भूतेः उत्पत्तेः एकः अद्वितीयः हेतुः कारणं प्रकाशते प्रतिभाति । रसिका हि शिष्टाः सुविनयसम्पन्ना भवन्तीति दृश्यते ॥ २ ॥

शृङ्गारीति । चेद् यदि कविः काव्ये काव्यरचनायां शृङ्गारी रसवान् भवतीति शेषः तदा जगत् रसमयम् आनन्दमयमिति भावः, जातम् । स एव कविः अशृङ्गारी अरसिकः चेत् यदि भवति सर्वमेव जगत् नीरसं निरानन्दमिति भावः भवतीति शेषः ॥ ३ ॥

पश्यतीति । स्त्री पश्यतीतिवाक्ये रसः नहि नैव प्रतिभासते प्रतिभाति कान्ता विलोकयतीति वाक्ये तु व्यक्तमेव स्पष्टमेव प्रतीयते रसः, इति शेषः ॥ ४ ॥

इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते ॥ ५ ॥
काम कन्दर्पचाण्डालो मयि वामाक्षि ! निर्दयः।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६ ॥
नवोऽर्थः सूक्तिरग्राम्या श्रव्यो बन्धः स्फुटा श्रुतिः।
अलौकिकार्थयुक्तिश्च रसमाहर्तुमीशते ॥ ७ ॥
वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्।
सर्वानुग्राहिणीं तासु रसोक्तिं प्रतिजानते ॥ ८ ॥
भावो जन्मानुबन्धोऽथ निष्पत्तिः पुष्टिसङ्करौ।
ह्रासाभासौ शमः शेषो विशेषः परिपोषवान् ॥ ९ ॥
विप्रलम्भोऽथ सम्भोगस्तच्चेष्टास्तत्परीष्टयः।

---

कन्ये इति। हे कन्ये। त्व कामयमान त्वा प्रति कामुकमित्यर्थ मा कथ न कामयसे नाभिलषसि इत्येव ग्राम्य अविदग्धप्रयोज्य इति भाव. अयम् अर्थात्मा अर्थस्वरूप वैरस्याय रसप्रातिकूल्यायेत्यर्थ एव कल्पते प्रभवति। तस्मादेव विधोऽर्थो न प्रयोज्य इति भावः ॥ ५ ॥

कामनिति। हे वामाक्षि। कुटिलनयने। चारुनयने। वा। कन्दर्प एव चाण्डालः मयि विषये काम निर्दय निष्ठुर। दिष्ट्या भाग्येन त्वयि निर्मत्सर विद्वेषरहित। त्वा न क्लिश्नातीति भाव.। इत्येवम् अग्राम्य विदग्धप्रयोज्य. अर्थ रसावह रसोत्पादहेतुरित्यर्थः ॥ ६ ॥

नव इति। नव नूतन केनचिदरचितपूर्व इति यावत् अर्थ प्रतिपाद्यवस्तु अग्राम्या विदग्धोचिता सूक्ति. शोभना वाक्, श्रवणयोग्य. बन्ध रचना, स्फुटा सुव्यक्ता श्रुति श्रवणयोग्यार्थ, अलौकिकस्य लोकातीतस्य अर्थस्य वस्तुन युक्ति. योगश्च एते रसम् आहर्तुम् उद्भावयितुम् ईशते प्रभवन्ति ॥ ७ ॥

वक्रोक्तिरिति। वक्रा कुटिला भावान्तरसवलितेत्यर्थ, उक्ति वचन रसस्य शृङ्गारादेरुक्ति प्रकटन स्वभावस्य उक्तिश्च एतत् त्रिविध वाङ्मय शास्त्र काव्यमिति यावत्। तासु त्रिविधासु मध्ये सर्वानुग्राहिणी सर्वेषा प्रीणनीं रसोक्ति प्रतिजानते प्रतिज्ञया निबध्नन्ति विद्वास इति शेष ॥ ८ ॥

भाव इति। भाव २ जन्मानुबन्ध ३ निष्पत्ति. ४ पुष्टिः ५ सङ्करः ६ ह्रासः ७ आभास. ८ शम. ९ शेष. १० विशेष, ११ परिपोष. १२ विप्रलम्भ, १३ सम्भोगः

निरुक्तय: प्रकीर्णानि प्रेमाण: प्रेमपुष्टय: ॥ १० ॥
नायिका नायकगुणा: पाकाद्या: प्रेमभक्तय: ।
नानालङ्कारसंसृष्टे: प्रकाराश्च रसोक्तय: ॥ ११ ॥
चतुर्विंशतिरित्युक्ता रसान्वयविभूतय: ।
स्वरूपमासां यो वेद स काव्यं कर्त्तुमर्हति ॥ १२ ॥
आलम्बनविभावेभ्य: स्वेभ्य: स्वेभ्य: समुन्मिषन् ।
रसो रत्यादिरूपेण भाव इत्यभिधीयते ॥ १३ ॥
रति र्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चाष्टौ स्थायिभावा: प्रकीर्त्तिता: १४ ॥
स्तम्भस्तनूरुहोद्भेदो गद्गद: स्वेदवेपथू ।
वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्विका मता: ॥ १५ ॥
स्मृति र्वितर्कश्चोत्कण्ठा चिन्ता चपलता मति: ।

---

१४ तयो: विप्रलम्भसम्भोगयो: चेष्टा, १५ तयो: परीष्टय १६ निरुक्तय, १७ प्रकीर्णानि, १८ प्रेमाण १९ प्रेमपुष्टय २० नायिकानायकगुणा: २१ पाकाद्या २२ प्रेमभक्तय: २३ नानालङ्कारसंसृष्टे. प्रकारा २४ रसोक्तय । इति चतुर्विंशति: रसाश्रया विभूतय रससम्पद. उक्ता य आसा विभूतीना स्वरूप वेद जानाति स काव्य कर्त्तुम् अर्हति शक्नोति ॥ ९—१२ ॥

आलम्बनेति । स्वेभ्य: स्वेभ्य निजेभ्यो निजेभ्य: आलम्बनविभावेभ्य रसोद्गमहेतुभ्य: नायिकादिभ्य. रत्यादिरूपेण समुन्मिषन् समुद्रेक गच्छन् रस. शृङ्गारादि: भाव इति अभिधीयते उच्यते ॥ १३ ॥

रत्यादीनाह । रतिरिति । रत्यादय: अष्टौ स्थायिभावा. काव्यस्य आरम्भात् समाप्तिपर्य्यन्त स्थितिशीला इत्यर्थ प्रकीर्त्तिता. कथिता ॥ १४ ॥

सात्विकानाह स्तम्भ इति । स्तम्भ. निश्चलत्व तनूरुहोद्भेद: रोमाञ्च गद्गद. अस्पष्टा वाक्, स्वेद: घर्म्म:, वेपथु कम्प, वैवर्ण्य वर्णान्यथाभाव अश्रु नेत्रजल प्रलय. मोह: प्रलयो नष्टचेष्टतेत्यमर. । इति अष्टौ सात्त्विका भावा: मता कथिता. ॥ १५ ॥

गर्वः स्रेहो धृति व्रींडाऽवहित्य मूढता मदः॥ १६॥
हर्षामर्षावसूयेर्ष्या विषादो दैन्यमुग्रता।
त्रासः शङ्का गदो ग्लानिरुन्मादः सम्भ्रमः श्रमः॥ १७॥
निर्वेदो जाड्यमालस्य निद्रा सुप्तं प्रबुद्धता।
इति भावास्त्रयस्त्रिंशद्विज्ञेया व्यभिचारिणः॥ १८॥
चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः।
रसत्व प्रतिपद्यन्ते प्रवृद्धाः स्थायिनोऽत्र ते॥ १९॥
रजस्तमोभ्यामस्पृष्टं मनः सत्वमिहोच्यते।
निर्वृतयेऽस्य तद्योगात् प्रभवन्तीति सात्विकाः॥ २०॥
विशेषेणाभितः काये स्थायिनं चारयन्ति ये।
अनुभावादिहेतूंस्तान् वदन्ति व्यभिचारिणः॥ २१॥
जनित्वा ये न जायन्ते तेऽथ वा व्यभिचारिणः।

---

व्यभिचारिण आह स्मृतिरित्यादि। स्मृत्यादय त्रयस्त्रिंशद्भावा, व्यभिचारिण विज्ञेया॥ १६—१८॥

चिरमिति। अत्र काव्ये ते स्थायिन' रत्यादय प्रवृद्धा' परिपुष्टा' सन्त चित्ते मनसि चिरम् आसमाप्तेरिति यावत अवतिष्ठन्ते स्थिति कुर्वन्ति अनुबन्धिभि पोषकै अनुबध्यन्ते पुष्टिं नीयन्ते तथा रसत्व प्रतिपद्यन्ते प्राप्नुवन्ति॥ १९॥

रज इति। इह अस्मिन् प्रकरणे रजस्तमोभ्या रजोगुणतमोगुणाभ्याम् अस्पृष्टम् असम्बद्ध मन सत्त्वम् उच्यते कथ्यते। अस्य मनस, निर्वृतये सुखाय प्रीतिलाभायेत्यर्थ तेषा स्तम्भादीना योगात् समुद्भावादित्यर्थः प्रभवन्ति जायन्ते इति हेतो सात्त्विका सत्त्वोद्रेकसमुद्भवा इत्यर्थ भवन्तीति शेष'॥ २०॥

विशेषेणेति। काये काव्यशरीरे ये भावा स्थायिन रत्यादि विशेषेण अतिशयेनेत्यथ अभित समन्तात् सर्वतोभावेनेत्यर्थ सञ्चारयन्ति प्रसारयन्ति, अनुभावादीना हावभावादीनाम्। उद्बुद्ध कारणै स्वै स्वैर्बहिर्भाव प्रकाशयन्। लोके य कार्य्यरूप सोऽनुभाव काव्यनाट्ययो॥ क पुनरसावित्याह। उक्ता स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजा। तद्रूपा' सात्त्विका भावास्तथा चेष्टाः परा अपीति दर्पणकारोक्तानां भावाना हेतून् कारणानि तान् व्यभिचारिण, वदन्ति॥ २१॥

स्मृत्यादयो हि प्रेमादौ भवन्ति न भवन्ति च ॥ २२ ॥
रतौ सञ्चारिणः सर्वान् गर्वस्नेहौ धृतिं मतिम् ।
स्थास्नूनेवोद्धतप्रेयःशान्तोदात्तेषु जानते ॥ २३ ॥
संस्कारपाटवादिभ्योऽनुभावं वा निजाश्रये ।
सञ्चारिणं वा जनयन् सात्त्विकं वा स जायते ॥ २४ ॥
उद्दीपनविभावेभ्यः स्मृतिर्हेतौ पटीयसि ।
अनुबन्धोऽनुभावादेरनुबन्धः स कथ्यते ॥ २५ ॥
विभावस्यानुभावस्य सात्त्विकव्यभिचारिणोः ।
संयोगे तस्य निष्पत्तिमात्रं निष्पत्तिरिष्यते ॥ २६ ॥

---

जनित्वेति । अथवा ये जनित्वा उत्पद्य न जायन्ते न चिरं तिष्ठन्तीति भावः ते व्यभिचारिणः । हि यतः स्मृत्यादयः व्यभिचारिणः प्रेमादौ भवन्ति उत्पद्यन्ते तथा न भवन्ति न उत्पद्यन्ते च कदाचित् भवन्ति कदाचित् न भवन्तीत्यर्थः ॥ २२ ॥

रताविति । रतौ सर्वान् स्मृत्यादीन् सञ्चारिणः व्यभिचारिणः किन्तु उद्धता उत्कटा प्रेयासः प्रियतमाः ये शान्तोदात्ताः धीरोदात्ताः नायकभेदाः तल्लक्षणमुक्तं दर्पणे । अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः । स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः । इति । तेषु गर्वस्नेहौ धृतिं मतिम् एतान् स[ञ्चारि]णः स्थास्नून् स्थितिशीलान् जानते विदन्ति बुधा इति शेषः ॥ २३ ॥

संस्कारेति । स रसः निजाश्रये स्वाश्रयकाव्ये इत्यर्थः संस्कारो वासना तस्य पाटवादिभ्यः प्रभावादिभ्यो हेतुभ्यः अनुभावं पूर्वोक्तं हावभावादिं वा सञ्चारिणं स्मृत्यादिं वा सात्त्विकं स्तम्भस्वेदादिं वा जनयन् उद्भावयन् जायते उदेति । स इत्यत्र नेति पाठः प्रामादिकः ॥ २४ ॥

उद्दीपनेति । उद्दीपनविभावेभ्यः उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये इत्युक्तलक्षणेभ्यः चन्द्रचन्दनादिभ्यः स्मृतिर्हेतौ स्मरणकारणे पटीयसि अतिप्रवृद्धे सतीत्यर्थः अनुभावादेः अनुबन्धः अनुगमः जायते इति शेषः । सः अनुबन्धः कथ्यते येन प्रकारेणानुगमो भवतीत्यर्थः तदुच्यते ॥ २५ ॥

विभावस्येति । विभावस्य आलम्बनोद्दीपनरूपस्य अनुभावस्य हावभावादेः सात्त्विकव्यभिचारिणोः प्रागुक्तयोः संयोगे सम्मेलने ; तस्य रसस्य निष्पत्तिमात्रम् उद्भवमात्रं भवतीति शेषः. निष्पत्तिः समुद्रेकः इत्यर्थः. इष्यते काम्यते ॥ २६ ॥

विषयाश्रयसंस्कारगुणप्रकृतिपाटवैः।
उद्दीपनातिशयैश्चास्य प्रकर्षः पुष्टिरुच्यते ॥ २७ ॥
तुल्यकालबलोत्पत्तिहेतौ भावान्तरोदये।
संसर्गस्तस्य यस्तेन सङ्करः स निगद्यते ॥ २८ ॥
रसान्तरतिरस्काराद‌न्यद्रागाच्च तस्य यः।
भवत्यपचयो वृद्धे स्तद्ह्रासं तं प्रचक्षते ॥ २९ ॥
हीनपात्रेषु तिर्य्यक्षु नायकप्रतियोगिषु।
गौणेष्वेव पदार्थेषु तमाभासं विजानते ॥ ३० ॥
बलवत्सूपजातेषु प्रतिकूलेषु हेतुषु।
सर्वात्मना समुच्छेदः प्रशमस्तस्य वर्ण्यते ॥ ३१ ॥

---

विषयेति। विषयाणा प्रतिपाद्यवस्तूना ये आश्रयाः नायकादय' तेषा संस्कारा वासनाविशेषा गुणाः धैर्य्यगाम्भीर्य्यादय' प्रकृतय. स्वभावा' तासा पाटवानि प्रभावा' तै दीपनानाम् उद्दीपनभावानाम् अतिशयै' समुद्रेकैश्च अस्य निष्पन्नमात्रस्य रसस्य प्रकर्षः उत्कर्ष पुष्टि' उच्यते कथ्यते ॥ २७ ॥

तुल्येति। तुल्ये कालबले उत्पत्तिहेतू यस्य तथाभूते भावान्तरस्य अन्यस्य भावस्य उदये उद्रेके तस्य रसस्य यः ससर्ग', तेन ससर्गेण स रसः सङ्कर' निगद्यते कथ्यते ॥ २८ ॥

रसान्तरेति। रसान्तरेण अपरेण रसेन तिरस्कारात् व्यवधानात् अन्यरागात् अन्यस्य भावविशेषस्य उद्रेकाच्च तस्य मूलस्य रसस्य यः वृद्धे' उत्कर्षस्य अपचयः हानि भवति त तस्य ह्रास प्रचक्षते प्रवदन्ति ॥ २९ ॥

हीनेति। हीनपात्रेषु नीचनायकादिषु तिर्य्यक्षु पक्षिसर्पादिषु नायकप्रतियोगिषु प्रतिनायकेष्वित्यर्थ तथा गौणेषु अप्रधानेषु पदार्थेषु पात्रेष्वित्यर्थ तं रसम् आभास निकृष्टमिति भाव' विजानते विदन्ति ॥ ३० ॥

बलवदिति। बलवत्सु प्रबलेषु प्रतिकूलेषु विरोधिषु हेतुषु कारणेषु उपजातेषु सम्भवत्सु तस्य रसस्य सर्वात्मना सर्वप्रकारेण समुच्छेदः विरति. प्रशमः वर्ण्यते कथ्यते ॥ ३१ ॥

आश्रयात् प्रकृतेर्वापि संस्कारस्थैर्यतोऽपि वा ।
योऽस्यात्यन्तमविच्छेदः स शेष इति शब्द्यते ॥ ३२ ॥
शृङ्गाराद्या रसा ये च ये च शान्तोद्धतादयः ।
ये च रत्यादिभेदास्तान् विशेषानस्य मन्वते ॥ ३३ ॥
विभावश्चानुभावश्च सञ्चारी चान्वयश्च यः ।
ये च लीलादयो यूनां परिपोषः स कीर्त्यते ॥ ३४ ॥
आश्रयो यस्य रत्यादिः प्रेमादिरुपजायते ।
विषयो यत्र योषादौ सोऽस्य जन्माधिगच्छति ॥ ३५ ॥
आलम्बनविभावः स ज्ञानकारणमुच्यते ।
तेनादरादिरूपेण संस्कारस्तेन जायते ॥ ३६ ॥

---

आश्रयादिति। आश्रयात् आलम्बनात् नायिकादेः वापि अथवा प्रकृतेः प्रकरणात् अपि वा किंवा संस्कारस्य प्रागुक्तस्य स्थैर्यतः स्थायित्वादित्यर्थः अस्य रसस्य यः अत्यन्तम् सातत्येन अविच्छेदः अविरतिः स शेष इति शब्द्यते कथ्यते ॥ ३२ ॥

शृङ्गाराद्या इति। ये च शृङ्गाराद्या रसाः ये च शान्तोद्धतादयः धीरोद्धतादयः, ये च रत्यादीनां भेदाः विशेषाः तान् सर्वान् अस्य शेषस्य प्रागुक्तस्य विशेषान् मन्वते जानन्ति कवय इति शेषः ॥ ३३ ॥

विभाव इति। यः विभावः आलम्बनोद्दीपनरूपश्च अनुभावश्च हावभावादिरूपः सञ्चारी धृत्यादिरूपश्च अन्वयः, ये च, यूनां नायिकानायकानां लीलादयः, स परिपोषः कीर्त्यते ॥ ३४ ॥

आश्रय इति। यस्य जनस्य यत्र योषादौ नायिकादौ प्रेमादिः आश्रयः रत्यादिः विषयः प्रतिपाद्यश्च उपजायते भवति सः जनः अस्य परिपोषस्य जन्म उत्पत्तिम् अधिगच्छति जानाति ॥ ३५ ॥

आलम्बनेति। स आलम्बनविभावः ज्ञानस्य बोधस्य रसविषयस्येति भावः कारणं हेतुः उच्यते। तेन तेन आदरादिरूपेण अन्यतः सः संस्कारः समावेशः आश्रयादेः आलम्बनादेः गुणेन प्रभावेण अन्यतः अन्येन प्रकारेण च पटुः उज्ज्वलः अभ्यस्य पुनः पुनराहतः जायते भवति। तत्प्रबोधाय तस्य संस्कारस्य प्रबोधाय उद्रेकाय माल्यम् ऋतुः वसन्तादिः इन्दूदयः चन्द्रोदयः इत्यादयः ते प्रसिद्धाः

अन्यतः पटुरभ्यस्त आश्रयादेर्गुणेन सः।
तत्प्रबोधाय माल्यर्तुचन्दनेन्दूदयादयः॥ ३७॥
उद्दीपनविभावास्ते स तैः स्मरति वाञ्छति।
द्वेष्टि प्रयततेऽवैति मन्यते वक्ति चेष्टते॥ ३८॥
तेऽनुभावास्तदा ये स्युः स्वेदरोमोद्गमादयः।
हर्षामर्षादयो ये च ज्ञेयाः सञ्चारिणोऽत्र ते॥ ३९॥
स्मृतीच्छायत्नजन्मानो मनोवाक्कायसंश्रयाः।
विलासा ये वरस्त्रीणां ज्ञेया लीलादयस्तु ते॥ ४०॥
लीला विलासो विच्छित्ति विंभ्रमः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विव्वोको ललितं तथा॥ ४१॥
विहृतं क्रीडितं केलिरिति स्त्रीणां स्वभावजाः।
हेलाहावादयश्चान्ये ज्ञेयाः स्त्रीपुंसयोरपि॥ ४२॥
उपसङ्ख्यानमेतेषामनुभावेषु मन्यते।

---

उद्दीपनविभावाः प्रभवन्तीति शेषः। सः सस्कारः तदाश्रयो नायकादिर्वा तैः उद्दीपनविभावैः स्मरति स्मृतिमनुभवति वाञ्छति अभिलषति, द्वेष्टि, प्रयतते, अवैति अवबुध्यते मन्यते वक्ति चेष्टते॥ ३६—३८॥

ते इति। ये स्वेदरोमोद्गमादयः घर्मरोमाञ्चादयः, ते तदा तस्मिन् काले सस्कारसमये अनुभावाः स्युः भवेयुः। ये च हर्षामर्षादयः, ते अत्र रसे सञ्चारिणः व्यभिचारिणः ज्ञेयाः॥ ३९॥

स्मृतीति। स्मृतिः स्मरणम् इच्छा अभिलाषः यत्नः प्रवृत्तिविशेषः तेभ्यः जन्म उत्पत्तिः येषां तथोक्ताः वरस्त्रीणां नायिकानां मनोवाक्कायसंश्रयाः मानसाः वाचिकाः कायिकाश्च ये विलासाः भावविशेषाः ते तु लीलादयः ज्ञेयाः वेदितव्याः॥ ४०॥

तानाह लीलेति। लीलादयः द्वादश स्त्रीणां स्वभावजाः नैसर्गिकाः भवन्तीति शेषः। अन्ये हेलाभावादयः स्त्रीपुंसयोरपि उभयोरेव दम्पत्योः ज्ञेयाः॥ ४१—४२॥

उपसङ्ख्यानमिति। एतेषां हेलादीनाम् अनुभावेषु यथाङ्गावानुभूतिस्था

पश्चाद्भावानुभूतिभ्यां स्मरणाद्यनुभाववत् ॥ ४३ ॥
स्मृत्यादयोऽनुभावाश्च भावाः सञ्चारिणश्च ये ।
नाट्येऽनुक्रियमाणास्ते नटैरभिनयाः स्मृताः ॥ ४४ ॥
भावो यदा रति र्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥ ४५ ॥
पूर्वानुरागो मानश्च प्रवासः करुणश्च सः ।
पुरुषस्त्रीप्रकाण्डेषु चतुःकाण्डः प्रकाशते ॥ ४६ ॥
प्रागसंकेतयो र्यूनोरभिलाषः प्रवर्त्तते ।
सङ्कल्परमणीयोऽनुराग' स प्राच्य उच्यते ॥ ४७ ॥
अहेरिव गतिः प्रेम्णः स्वभावकुटिलेति सः ।
अहेतो र्नैति नेत्युक्ते र्हेतो र्वा मान उच्यते ॥ ४८ ॥

---

स्मरणाद्यनुभाववत् स्मृत्यादीननुभावानिव उपसङ्ख्यानसुपलक्षण मन्वते जानन्ति बुधा इति शेषः। यथा स्मृत्यादय' अनुभावा सञ्चारिणश्च तथा हावादयोऽपि सञ्चारिणः अनुभावाश्च भवन्तीति भाव' ॥ ४३ ॥

स्मृत्यादय इति। ये स्मृत्यादयः अनुभावा' सञ्चारिणश्च भावाः ते नाट्ये नटै कुशीलवैः अनुक्रियमाणा' अभिनया. स्मृता' उक्ता' ॥ ४४ ॥

भाव इति। यदा रतिर्नाम भाव' प्रकर्षम् औत्कण्ठ्यम् अधिगच्छति प्राप्नोति अभीष्टम् प्रियम् नाधिगच्छति न प्राप्नोति च तदा स विप्रलम्भ' उच्यते कथ्यते ॥ ४५ ॥

पूर्वेति। स विप्रलम्भ' पुरुषस्त्रीप्रकाण्डेषु उत्तमनायिकानायकेषु पूर्वानुरागः मान प्रवासः करुणश्चेति चतु'काण्ड' चतुर्विध इत्यर्थ सन् प्रकाशते ॥ ४६ ॥

प्रागिति। प्राक् पूर्वम् असङ्केतयो' सङ्केतरहितयो यूनो स्त्रीपुंसयो सहसा य' अभिलाषः अन्योन्यानुरागः प्रवर्त्तते प्रभवति सङ्कल्पेन वासनाविशेषेण रमणीय स अनुरागः प्राच्य. पूर्व इत्यर्थ. पूर्वराग इति यावत् उच्यते कथ्यते ॥ ४७ ॥

अहेरिति। प्रेम्णः प्रणयस्य गति' प्रसरः अहेरिव सर्पस्येव स्वभावेन कुटिला वक्रा इति हेतो' स विप्रलम्भः अहेतो' हेतु विना न इति न इति एव न एव न इति परस्परस्य विसंवादेन उक्तेर्वा हेतोः मान. उच्यते ॥ ४८ ॥

देशान्तरादिभि र्यूनो र्व्यवधानं चिराय यत् ।
नवेऽनुरागे प्रौढे वा प्रवासः सोऽभिधीयते ॥ ४९ ॥
लोकान्तरगते यूनि वल्लभे वल्लभा यदा ।
भृशं दुःखायते दीना करुणः स तदोच्यते ॥ ५० ॥
रतिरिष्टसंप्राप्तौ पुष्टः सम्भोग उच्यते ।
सोऽपि पूर्वानुरागादेरानन्तर्याच्चतुर्विधः ॥ ५१ ॥
न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागोऽनुषज्यते ॥ ५२ ॥
स्त्रीपुंसयो र्विप्रलम्भे वैचित्त्याकल्पनादयः ।
चेष्टाविशेषाः सम्भोगे चुम्बनालिङ्गनादयः ॥५३॥

---

देशेति । नवे नूतने प्रौढे प्रवृद्धिं गते वा अनुरागे सति देशान्तरादिभि र्यूनोर्दम्पत्यो चिराय दीर्घकालमित्यर्थः यद्व्यवधानं विच्छेदः, स प्रवासः अभिधीयते कथ्यते ॥ ४९ ॥

लोकेति । यूनि तरुणे वल्लभे प्रिये लोकान्तरगते मृते सति वल्लभा कान्ता यदा दीना दुःखिनी सती भृशमतिशयेन दुःखायते दुःखमनुभवति तदा स करुण उच्यते । अत्र लोकान्तरगते इत्यत्र पुनः प्राप्य इति वक्तव्यम् अप्राप्ये तु करुण एव रस इति बोध्यम् ॥ ५० ॥

रतिरिति । रतिरनुराग एव इष्टस्य प्रियजनस्य सम्प्राप्तौ सत्यां पुष्टः प्रवृद्धः सम्भोग उच्यते । स सम्भोगोऽपि पूर्वानुरागादेः पूर्वरागमानप्रवासकरुणानामित्यर्थः आनन्तर्यात् अनन्तरभवत्वात् चतुर्विधः पूर्वरागानन्तरसम्भोगः मानानन्तरसम्भोगः प्रवासानन्तरसम्भोगः करुणानन्तरसम्भोगश्चेत्यर्थः ॥ ५१ ॥

नेति । सम्भोगः विप्रलम्भेन विना पुष्टिम् उत्कर्षं न अश्नुते न प्राप्नोति हि यतः वस्त्रादौ कषायिते कषायेण रक्ते सति भूयान् समुज्ज्वल इत्यर्थः रागः वर्णविशेषः अनुषज्यते वर्द्धते इत्यर्थः ॥ ५२ ॥

स्त्रीति । विप्रलम्भे सति स्त्रीपुंसयोः दम्पत्यो वैचित्त्येन विकृतचित्तत्वेन आकल्पनादयः विविधाः सङ्कल्पविशेषाः जायन्ते इति शेषः । सम्भोगे सति चुम्बनालिङ्गनादयः चेष्टाविशेषा भवन्ति ॥ ५३ ॥

विप्रलम्भेऽभियोगाद्यैः सम्भोगे साध्वसादिभिः ।
मिथः परीक्षा याः प्रेम्णो निर्दिष्टास्ताः परीष्टयः ॥५४॥
विप्रलम्भादिशब्दानां लोकसिद्धेषु वस्तुषु ।
प्रकृत्यादिविभागेन विनिवेशात् निरुक्तयः ॥ ५५ ॥
संश्रुत्य विप्रलम्भार्थान् गृधिवञ्च्योः प्रलम्भने ।
इत्यादिज्ञापकात् ज्ञेयः प्रपूर्वो वञ्चने लभिः ॥ ५६ ॥
अदानञ्च प्रतिश्रुत्य विसंवादनमेव च ।
कालस्य हरणं चाहुः प्रत्यादानञ्च वञ्चनम् ॥ ५७ ॥
पूर्वानुरागपूर्वेषु विप्रलम्भेषु तत्क्रमात् ।
विशेषद्योतकेनेह व्युपसर्गेण सूच्यते ॥ ५८ ॥

---

विप्रलम्भे इति । विप्रलम्भे अभियोग दूतीप्रेषणादिव्यापार' आद्य मुख्य' येषा तथाविधै चेष्टाविशेषै तथा सम्भोगे साध्वसादिभि त्रासादिभि' प्रेम्ण प्रण यस्य या मिथ परस्पर परीक्षा, परिदर्शनानि ता, परीष्टय निर्द्दिष्टा कथिता ॥ ५४ ॥

विप्रलम्भेति । विप्रलम्भादिशब्दानां प्रागुक्ताना लोकसिद्धेषु लौकिकेषु वस्तुषु विषयेषु प्रकृत्यादिविभागेन प्रकृत्यादीना धातूपसर्गादीना विभागेन विवेकेन विनिवेशात् प्रयोगात् निरुक्तय अर्था उक्ता इति शेष ॥ ५५ ॥

संश्रुत्येति । गृधिवञ्च्योः गृधिधातो वञ्चिधातोश्च प्रलम्भने अर्थे इत्यादिज्ञापकात् ज्ञानकारणात् लिङ्गात् विप्रलम्भार्थान् संश्रुत्य श्रवणविषयीकृत्य प्रपूर्वो लभि' लभधातुः वञ्चने अर्थे ज्ञेय वेदितव्य ॥ ५६ ॥

अदानञ्चेति । प्रतिश्रुत्य कटाक्षावलोकनादिभिः सम्भोगमङ्गीकृत्येत्यर्थ अदान तदकरणमित्यर्थ विसंवादन विरुद्धाचरण कालस्य हरण क्षेपण तथा प्रत्यादान पुनर्ग्रहणम् एतच्चतुर्विध भाव विप्रलम्भेषु चतुर्षु क्रमेण आहुरिति निष्कर्ष' ॥५७॥

पूर्वेति । पूर्वानुरागपूर्वेषु पूर्वरागप्रभृतिषु विप्रलम्भेषु विशेषद्योतकेन विशिष्टार्थज्ञापकेन व्युपसर्गेण विनामकोपसर्गेण इह अस्मिन् प्रकरणे क्रमात् तत् पूर्वोक्तम् अदानादिक सूच्यते बोध्यते ॥ ५८ ॥

प्रतिश्रवो हि पूर्वानुरागे वक्रेक्षितादिभिः।
अभीष्टालिङ्गनादीनामदानं ह्रीभयादिभिः॥ ५९॥
माने निवारणं तेषां विसंवादनमुच्यते।
अयथावत् प्रदानं वा व्यलीकस्मरणादिभिः॥ ६०॥
प्रवासे कालहरणं व्यक्तमेषां प्रतीयते।
प्रोष्यागतेष्विहैतानि कान्ताः कान्तेषु युञ्जते॥ ६१॥
प्रत्यादानं पुनस्तेषां करुणे को न मन्यते।
स्वयं दत्तानि हि विधिस्तानि तत्रापकर्षति॥ ६२॥
प्रलम्भेत्यत्र यदि वा वञ्चनामात्रवाचिनि।
विना समासे चतुराश्चतुरोऽर्थान् प्रयुञ्जते॥ ६३॥

---

प्रतिश्रव इति। हि यतः पूर्वानुरागे वक्रेक्षितादिभिः कुटिलदर्शनादिभिः अभीष्टालिङ्गनादीनां प्रतिश्रवः अङ्गीकरणं तथा ह्रीभयादिभिः लज्जासाध्वसादिभिः अदानं तदकरणम्॥५९॥

माने इति। तेषाम् अभीष्टालिङ्गनादीनां निवारणम् अनाचरणमित्यर्थः व्यलीकस्मरणादिभिः अप्रियकार्य्यस्मरणादिभिः अयथावत् अनौचित्येनेत्यर्थः, प्रदानं वा अभीष्टालिङ्गनादीनामिति भावः विसंवादनम् उच्यते कथ्यते॥ ६०॥

प्रवासे इति। एषां चतुर्णां विप्रलम्भानां मध्ये प्रवासे प्रवासाख्ये विप्रलम्भे कालहरणं व्यक्तं स्पष्टं प्रतीयते बुध्यते। प्रोष्य आगतेषु प्रवासात् प्रतिनिवृत्तेषु कान्तेषु कान्ताः कामिन्यः इह प्रकरणे एतानि आलिङ्गनादीनि वा युञ्जते कुर्वन्ति॥ ६१॥

प्रत्यादानमिति। को जनः करुणे करुणाख्ये विप्रलम्भे तेषाम् अभीष्टालिङ्गनादीनां प्रत्यादानं पुनर्ग्रहणं न मन्यते न जानाति? अपि तु सर्व एव मन्यते इत्यर्थः। हि यतः विधिर्दैवं स्वयम् आत्मना दत्तानि तानि अभीष्टालिङ्गनादीनि तत्र करुणे अपकर्षति हरतीत्यर्थः॥ ६२॥

प्रलम्भेति। यदि वा वञ्चनामात्रवाचिनि केवलवञ्चनार्थप्रतिपादके प्रलम्भ इत्यत्र प्रपूर्वकलम्भधातौ चतुराः कवयः विना व्युपसर्गेण समासे कृते चतुरः अर्थान् पूर्वरागमानप्रवासकरुणानित्यर्थः, प्रयुञ्जते व्यवहरन्ति॥ ६३॥

विविधश्च विरुद्धश्च व्याविद्धश्च क्रमेण सः ।
विनिषिद्धश्च पूर्वानुरागादिषु विषज्यते ॥ ६४ ॥
पूर्वानुरागे विविध वञ्चनं व्रीडितादिभिः ।
माने विरुद्धं तत् प्राहुः पुनरीर्ष्यायितादिभिः ॥ ६५ ॥
व्याविद्धं दीर्घकालत्वात् प्रवासे तत् प्रतीयते ।
विनिषिद्धन्तु करुणे करुणत्वेन गीयते ॥ ६६ ॥
रागोऽनु सह पश्चाद्वानुरूपोऽनुगतोऽपि वा ।
यूनोरपूर्वः पूर्वानुरागशब्देन शब्द्यते ॥ ६७ ॥
राजते रञ्जतेर्वापि रागः करणभावयोः ।
घञान्यकारके भावे नलोपेन नियम्यते ॥ ६८ ॥
मान्यते प्रेयसा येन यं प्रियत्वेन मन्यते ।
मनुते वा मिमीते वा प्रेममानः स कथ्यते ॥ ६९ ॥

---

विविधश्चेति । स विप्रलम्भ पूर्वानुरागादिषु क्रमेण विविधश्च विरुद्धश्च व्याविद्धश्च विनिषिद्धश्च विषज्यते प्रयुज्यते ॥ ६४ ॥

पूर्वेति । पूर्वानुरागे वञ्चन विप्रलम्भ' व्रीडितादिभि' लज्जाभयादिभि' विविध बहु प्रकारम् । माने तत् वञ्चन पुनरीर्ष्यायितादिभि' विरुद्ध प्रतीपतया परिणत प्राहु' बुधा इति शेष । प्रवासे तत् वञ्चन दीर्घकालत्वात् बहुकाल-वर्त्तित्वात् व्याविद्धं विशेषेण व्याहतत्वेन परिणत प्रतीयते । करुणे तत् करुण-त्वेन नितरा शोकजनकत्वेन विशेषेण निषिद्ध निषिद्धतया परिणतम् ॥ ६५-६६ ॥

राग इति । पूर्वानुरागशब्देन यूनो' दम्पत्योः राग अनुशब्दयोगेन सह पश्चाद्वा अनुरूपो वा अनुगतो वा अतएव अपूर्वः अतीव चमत्कारी सन् शब्द्यते कथ्यते ॥ ६७ ॥

राग इति । राजतेः राजधातो करणभावयो' करणे वाच्ये भावे वाच्ये चेत्यर्थः राग रागशब्द इत्यर्थ घञा घञ् प्रत्ययेन, वापि अथवा रञ्जधातो अन्य-कारके कर्तृभिन्ने कारके भावे च घञा नलोपेन नियम्यते साध्यते इत्यर्थ ॥६८॥

मान्यते इति । येन प्रेममानेन हेतुना प्रेयसा प्रियतमेन मान्यते माननीया

महाभाष्यकृतः कोऽसावनुमान इति स्मृतेः।
ल्युडन्तोऽपि न पुंलिङ्गो मानशब्दः प्रदुष्यति ॥ ७० ॥
यत्राङ्गना युवानश्च वसन्ति न वसन्ति च।
स प्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते ॥ ७१ ॥
चिन्तोत्कण्ठादिभिश्चेतो भृशं वासयतीह यः।
प्रवासयति वा यूनः स प्रवासो निरुच्यते ॥ ७२ ॥
प्रपूर्वको वसि र्ज्ञेयः कारितान्तःप्रमापणे।
तूष्णीं प्रवासयेदेनमिति वृद्धानुशासनात् ॥ ७३ ॥
अभूतोत्पादनायां कृञ् दृष्टः कुरु घटं यथा।
दृष्टश्चोच्चारणे चोरङ्कारमाक्रोशतीतिवत् ॥ ७४ ॥

---

क्रियते इत्यर्थ प्रेयसीति शेष। य प्रेममान प्रियत्वेन प्रीतिविषयत्वेन मन्यते मनुते मिमीते वा जानातीत्यर्थ स प्रेममान कथ्यते ॥ ६९ ॥

ननु कथ मिमीते इति। माधातो ल्युटि मानशब्द पुलिङ्ग इत्याशङ्क्याह महेति कोऽसावनुमान इति महाभाष्यकृत स्मृते स्मरणात् महाभाष्ये प्रयोगादित्यर्थ ल्युडन्तोऽपि पुलिङ्गो मानशब्द न प्रदुष्यति। न दोषमावहतीत्यर्थ ॥ ७० ॥

यत्रेति। यत्र अङ्गना कान्ता वसन्ति तिष्ठन्ति, युवानश्च न वसन्ति न तिष्ठन्ति स प्रवास प्रतीपार्थेन प्रतिकूलार्थेन प्रशब्देन कथ्यते ॥ ७१ ॥

चिन्तेति। इहास्मिन् ससारे य चिन्तोत्कण्ठादिभि चेत चित्त भृशमतिशयेन वासयति आच्छादयति आकुलयतीत्यर्थ वा यून तरुणान् प्रवासयति देशान्तरं नयतीत्यर्थ स प्रवास निरुच्यते कथ्यते ॥ ७२ ॥

प्रपूर्वक इति। प्रपूर्वक वसि वसधातु एन जन तूष्णीं मौनभावेन स्थितमिति यावत् दुःखेनेति भाव प्रवासयेत् देशान्तर नयेत् इति वृद्धाना पण्डितानाम् अनुशासनात् कारित जनितम् अन्त प्रमापणम् आन्तरी वध तस्मिन् अर्थे इति शेष ज्ञेय बोध्य ॥ ७३ ॥

अभूतेति। कृञ् धातुरिति शेष अभूतस्य अजातस्य उत्पादनाया जनने अर्थे दृष्ट यथा घट कुरु। तथा उच्चारणे अर्थे च दृष्ट चोरङ्कारमाक्रोशतीतिवत् अय चौर इति शब्दमुच्चार्य रौतीत्यर्थः इति वत् दृष्ट, निरूपित इत्यर्थ ॥७४॥

दृष्टोऽवस्थापनेऽस्मानमितः कुरु यथोच्यते।
अभ्यञ्जनेऽपि च यथा पादौ मे सर्पिषा कुरु॥ ७५॥
मूर्च्छाविलापौ कुरुते कुरुते साहसे मनः।
करोति दुःखं चित्तेन योऽसौ करुण उच्यते॥ ७६॥
भुजिः पालनकौटिल्याभ्यवहारानुभूतिषु।
भुनक्ति भुग्नो भुङ्क्तेऽन्नं भुङ्क्ते सुखमितीष्यते॥ ७७॥
समीचीनार्थः संपूर्वात्ततो घञ्प्रत्यये सति।
भावे वा कारके वापि रूप सम्भोग इष्यते॥ ७८॥
स पालनार्थः पूर्वानुरागानन्तर उच्यते।
उत्पन्ना हि रतिस्तस्मिन्नानुकूल्येन पाल्यते॥ ७९॥
स मानानन्तरं प्राप्तः कौटिल्यार्थं विगाहते।
स्वतोऽपि कुटिलं प्रेम किमु मानान्वये सति॥ ८०॥

---

दृष्ट इति। अवस्थापने अर्थे दृष्ट' कृञ् इति पूर्वेणान्वयः यथा अस्मान शिलास् इत' अस्मिन् कुरु अवस्थापयेत्यर्थ' यथा इति उच्यते कथ्यते। अभ्यञ्जनेऽपि विलेपने अर्थं दृष्ट इति शेषः यथा मे मम पादौ चरणौ सर्पिषा घृतेन कुरु विलेपयेत्यर्थ.॥ ७५॥

मूर्च्छेति। य' मूर्च्छाविलापौ कुरुते जनयतीत्यर्थः साहसे सहसा क्रियमाणे विषभक्षणोद्बन्धनादाविति भाव मन. कुरुते, चित्तेन मनसा दु ख करोति असौ करुण उच्यते॥ ७६॥

भुजिरिति। भुजिर्भुजधातुः पालनकौटिल्याभ्यवहारानुभूतिषु इष्यते। पालने यथा भुनक्ति पृथिवी राजेति शेष'। कौटिल्ये यथा भुग्न कुटिल इत्यर्थ। अभ्यवहारे वा अन्न भुङ्क्ते। अनुभूतौ यथा सुख भुङ्क्ते इति॥ ७७॥

समीचीनार्थ इति। समीचीनार्थ. सपूर्वात् तत तस्मात् भुजिधातो' भावे वाच्ये वा कारके वापि वाच्ये घञ्प्रत्यये सति रूप सम्भोग इष्यते॥ ७८॥

स इति। पूर्वानुरागानन्तर. पूर्वरागात् अनन्तरभावीत्यर्थ. स सम्भोग पालनार्थ उच्यते। हि यत. तस्मिन् सम्भोगे उत्पन्ना रतिः आनुकूल्येन अनुगतत्वेन पाल्यते॥ ७९॥

स इति। स सम्भोग' मानात् अनन्तरं प्राप्तः कौटिल्यार्थं वक्रभाव विगाहते

